# राजतरङ्गिणी।

## ॥ प्रथमस्तरङ्गः ॥

भूषाभोगिफणारत्नरोचि सिचयचारवे। नमः प्रलीनमुक्ताय हरकल्पमहीरुहे।
भालं वह्निशिखाङ्कितं दधदधिश्रोत्रं वहन् सम्भृतक्रीडत्कुण्डलिजृम्भितं जलधिजच्छायाच्छकण्ठच्छविः।
वक्षोविभ्रदहीनकञ्चुकचितं बद्धाङ्गनार्द्धस्य वो भागः पुङ्गवलक्ष्मणोऽस्तु यशसे वामोऽथ वा दक्षिणः।
वन्द्यः कोऽपि सुधास्यन्दास्कन्दी स सुकवेर्गुणः। येन याति यशःकायः स्थैर्य्यं स्वस्य परस्य च।
कोऽन्य. कालमतिक्रान्तं नेतुं प्रत्यक्षतां क्षमः। कविप्रजापतींस्त्यक्त्वा रम्यनिर्म्माणशालिनः।
न पश्येत् सर्व्वसंवेद्यान् भावान् प्रतिभया यदि। तदन्यद्दिव्यदृष्टित्वे किमिव ज्ञापकं कवेः।
कथादैर्घ्यानुरोधेन वैचित्र्येऽप्यप्रपञ्चिते। तदत्र किञ्चिदस्त्येव वस्तु यत्प्रीतये सतां।
श्लाघ्यः स एव गुणवान् रागद्वेषवहिष्कृतः। भूतार्थकथने यस्य स्थेयस्येव सरस्वती।
पूर्व्वैर्ब्बद्धं कथावस्तु मयि भूयो निबध्नति। प्रयोजनमनाकर्ण्य वैमुख्यं नोचितं सतां।
दृष्टं दृष्टं नृपोदन्तं बद्ध्वा प्रमयमीयुषां। अर्व्वाक्कालभवैर्व्वार्त्ता यत्प्रबन्धेषु पूर्य्यते।
दाक्ष्यं कियदिदं तस्मादस्मिन् भूतार्थवर्णने। सर्व्वप्रकारस्खलिते योजनाय ममोद्यमः।
॥ युगलकं ॥ विस्तीर्णाः प्रथमे ग्रन्थाः स्मृत्यै संक्षिपतो वचः। सुव्रतस्य प्रबन्धेन च्छिन्ना राजकथाश्रयाः
या प्रयामगमन्नैति सापि वाच्यप्रकाशने। पाटवं दुष्टवैदुष्यतीक्ष्णा सुव्रतभारती।
केनाप्यनवधानेन कविकर्म्मणि सत्यपि। अंशोऽपि नास्ति निर्दोषः क्षेमेन्द्रस्य नृपावलौ।
दृग्गोचरं पूर्व्वसूरिग्रन्था राजकथाश्रयाः। मम त्वेकादश गता मतं नीलमुनेरपि।
दृष्टैश्च पूर्व्वभूभर्त्तृप्रतिष्ठावस्तुशासनैः। प्रशस्तिपट्टैः शास्त्रैश्च शान्तोऽशेषभ्रमक्लमः।
द्वापञ्चाशतमाम्नायभ्रंशाद्यान्नास्मरन्नृपान्। तेभ्यो नीलमताद्दृष्टं गोनर्द्दादिचतुष्टयं।
बद्धा द्वादशभिर्ग्रन्थसहस्रैः पार्थिवावलि.। प्राक्क्षमाशतिना येन हेलाराजद्विजन्मना।
तन्मतं पद्ममिहिरो दृष्ट्वाशोकादिपूर्व्वगान्। अष्टौ लवादीन्नृपतीन् स्वस्मिन् ग्रन्थे न्यदर्शयत्।
॥ युगलकं ॥ येऽप्यशोकादयः पञ्च श्रीच्छविल्लाकरोऽब्रवीत्। तान् द्वापञ्चाशतो मध्यात् श्लोकर

आशोकादभिमन्योर्ये प्रोक्ताः पञ्च महीभुजः। ते द्वापञ्चाशतो मध्यादेव लब्धाः पुरातनैः।
इयं नृपाणामुल्लासे ह्रासे वा देशकालयोः। भैषज्यभूतसंवादि कथा युक्तोपयुज्यते।
संक्रान्तप्राक्तनानन्तव्यवहारः सुचेतसः। कस्येदृशो न सन्दर्भो यदि वा हृदयङ्गमः।
क्षणभङ्गिनि जन्तूनां स्फुरिते परिचिन्तिते। मूर्द्धाभिषेकः शान्तस्य रसस्यात्र विचार्य्यतां।
तदमन्दरसस्यन्दसुन्दरेयं निपीयतां। श्रोत्रशुक्तिपुटैः स्पष्टमत्र राजतरङ्गिणी।
पुरा सती सरःकल्पारम्भात् प्रभृति भूरभूत्। कुक्षौ हिमाद्रेरर्णोभिः पूर्णा मन्वन्तराणि षट्।
अथ वैवस्वतीयेऽस्मिन् प्राप्ते मन्वन्तरे सुरान्। द्रुहिणोपेन्द्ररुद्रादीनवतार्य्य प्रजासृजा।
कश्यपेन तदन्तःस्थं घातयित्वा जलोद्भवं। निर्ममे तत्सरो भूमौ कश्मीरा इति मण्डलं।
॥ युगलकं ॥ उद्दतस्तन्निष्यन्दद्दण्डकुण्डातपत्रिणा। यत् सर्व्वनागाद्देशेन नीलेन परिपाल्यते।
गुहोन्मुखी नागमुखी पीतभूरिपया रुचिं। गौरी यत्र वितस्तात्वं याताप्युज्झति नोचितां।
शङ्खपद्ममुखैर्नागैर्नानारत्नावभासिभिः। नगरं धनदस्येव निधिभिर्यन्निषेव्यते।
यत्तार्क्ष्यभीत्या प्राप्तानां नागानां गुप्तये ध्रुवं। प्रसारितभुजं पृष्ठे शैलप्राकारलीलया।
भुक्तिमुक्तिफलप्राप्तिः काष्ठरूपमुमापतिं। पापसूदनतीर्थान्तर्यत्र संस्पृशतां भवेत्।
सन्ध्यादेवी जलं यस्मिन् धत्ते निःसलिले गिरौ। दर्शनं पुण्यपापानामन्वयव्यतिरेकयोः।
स्वयम्भूर्यत्र हुतभुक् भुवोगर्भात् समुन्मिषन्। जुह्वतां प्रतिगृह्णाति ज्वालाभुजवनैर्हविः।
देवीभेडगिरेः शृङ्गे गङ्गोद्भेदशुचौ स्वयं। सरोऽन्तर्दृश्यते यत्र हंसरूपा सरस्वती।
नन्दिक्षेत्रे सुरावासप्रासादे द्युचरार्पिताः। अद्यापि यत्र व्यज्यन्ते पूजाचन्दनबिन्दवः।
आलोक्य शारदां देवीं यत्र संप्राप्यते क्षणात्। तरङ्गिणी मधुमती वाणी च कविसेविता।
चक्रभृद्विजयेशादिकेशवेशानभूषिते। तिलांशोऽपि न यत्रास्ति पृथ्वशास्तीर्थैर्वहिष्कृतः।
विजीयते पुण्यबलैर्बलैर्यत्तु न शस्त्रिणां। परलोकात्ततो भीतिर्यस्मिन्निवसतां परं।
शीतस्नानस्पृहाः शीते स्रस्ततीरास्सदारवे। यादोविरहिता यत्र निम्नगा निरुपद्रवाः।
असन्तापहृतां जानन् यत्र पित्रा विनिर्म्मिते। गौरवादिव तिग्मांशुर्धत्ते ग्रीष्मेऽप्यतीव्रतां।
विद्यावेश्मानि तुङ्गानि कुङ्कुमं सहिमं पयः। द्राक्षेति यत्र सामान्यमस्ति त्रिदिवदुर्लभं।
त्रिलोक्यां रत्नसूः श्लाघ्या तस्यां धनपतेर्हरित्। तत्र गौरीगुरुः शैलो यत्तस्मिन्नपि मण्डलं।
तत्र कौरवकौन्तेयसमकालभवान् कृता। आगोनर्दात् स्मरन्तिस्म न द्वापञ्चाशतं नृपान्।
तस्मिन् काले भुवं तेषां कुछैनः काश्यपीभुजां। कर्त्तारः कीर्त्तिकायस्य नाभूवन् कविवेधसः।

ध्याय } येषां निषेव्य महोजसां जलधिरसना मेदिन्याशीदसावकुतोभया। स्मृतिमपि न ते यान्ति क्ष्मापा विना
प्रकृतिमहते कुर्म्मस्तस्मै नमः कविकर्म्मणे।
शतपदा येऽपि श्रियं लेभिरे येषामप्यवसन् पुरा युवतयो गेहेम्वहयश्रिकाः। तंलोकोऽयमवैति लोकति
शेऽप्यजातानिव भातः सत्कविष्टत्य किं स्तुतिशतैरन्धं जगत् त्वां विना।

अष्टपञ्चाशदधिकामद्व्यशतद्वाविंशतिं नृपाः। अपीपलंस्ते काश्मीरान् गोनर्दाद्याः कलौ युगे।
भारतं द्वापरान्तेऽभूद्वार्त्तयेति विमोहिताः। केचिदेतां मृषा तेषां कालसङ्ख्यां प्रचक्रिरे।
॥ युगलकं ॥ लब्धाधिपत्यसङ्ख्यानां वर्षान् सङ्ख्याय भूभुजां। भुक्तात् कालात् कलेः शेषो नास्त्येवं तद्विवर्ज्जितात्।
शतेषु षट्सु सार्द्धेषु त्र्यधिकेषु च भूतले। कलेर्गतेषु वर्षाणामभवन् कुरुपाण्डवाः।
लौकिकेऽब्दे चतुर्विंशे शककालस्य सांप्रतं। सप्तत्यात्यधिकं यातं सहस्रं परिवत्सराः।
प्रायस्तृतीयगोनर्दादारभ्य शरदां तदा। द्वे सहस्रे गते त्रिंशदधिकञ्च शतत्रयं।
वर्षाणां द्वादशशती षष्टिः षड्भिश्च संयुता। भूभुजां कालसङ्ख्यायां तद्वापञ्चाशतो मताः।
ऋक्षादृक्षं शतेनाब्दैर्यासु चित्रशिखण्डिषु। उचारे संहिताकारैरेवं दत्तोऽत्र निर्णयः।
आसन् मघासु मुनयः शासति पृथ्वीं युधिष्ठिरे नृपतौ। षड्दिकपञ्चद्वियुतः शककालस्तस्य राज्यस्य।
काश्मीरेन्द्रः स गोनर्दो वेलाद्गङ्गादुकूलया। दिशा कैलासहासिन्या प्रतापी पर्य्युपास्यत।
विहाय देशं शेषाहेर्विषाश्लेषभयादिव। भूर्गोनर्दमतल्पाद्दे भेजे तस्य भुजे स्थितिं।
साहायकार्थमाहूतो जरासन्धेन बन्धुना। समं रुरोध कंसारेर्मथुरां पृथुभिर्बलैः।
तेनोपकूलं कालिन्द्याः स्कन्धावारं निवेशता। यादवीहसितैः सार्द्धं योधानां मीलितं यशः।
एकदा सर्व्वतो भग्नाः स्वसैनास्त्रातुमुद्यनः। तं संररोध योद्धारं सङ्गरे लाङ्गलध्वजः।
तयोस्तुल्यौजसोर्युद्धे चिराय करवर्त्तिनी। मञ्चौ विजयसन्देहे वरणस्रगजयश्रियः।
अथ शस्त्रचतैरङ्गैरालिलिङ्ग रणाङ्गने। भुवं काश्मीरको राजा यादवस्तु जयश्रियं।
गतिं प्रवीरसुलभां तस्मिन् सुचरिते गते। श्रीमान्दामोदरो नाम तत्सूनुरभृत चितिं।
भोगयोगोर्ज्जितं राज्यं प्राप्तवानपि भूपतिः। ध्यायन् पितृवधं मानी नोपलेभे स निर्वृतिं।
अथोपसिन्धु गान्धारैः सम्बे कन्यास्वयम्वरे। निमन्त्र्य शुश्रावानीतान् वृष्णीन्दर्पोष्णदोर्द्रुमः।
ततस्तस्यातिसम्भारात्तानदूरस्थितान् प्रति। याचाभङ्गजिनीवाजिरेणुरस्तनभस्तला।
तदाहवे विवाहोल्का निष्प्रतिस्म पतिम्वरा। आसीत्तद्युपुरश्रेणी गान्धारेषु स्वयम्वरः।
तदाक्रान्तासुहृच्चक्रः स चक्रायुधसङ्गरे। चक्रधाराध्वना धीरश्चक्रवर्त्ती दिवं ययौ।
अन्तर्व्वत्नीं तस्य पत्नीं तदा यदुकुलोद्वहः। राज्ये यशोवतीं नाम द्विजैः कृष्णोऽभ्यषेचयत्।
तस्मिन् काले स्वसचिवान् सासूयान् विन्यवीवरत्। इमं पौराणिकं श्लोकमुदीर्य्य मधुसूदनः।
काश्मीराः पार्व्वती तत्र राजा ज्ञेयो हरांशजः। नावज्ञेयः स दुष्टोऽपि विदुषा भूतिमिच्छता।
पुंसां निर्गौरवा भोज्ये इव याः स्त्रीजनेदृशः। प्रजानां मातरं तास्तामपश्यन्देवतामिव।
अथ वैजनने मासि सा देवी दिव्यलक्षणं। निर्दग्धस्यान्वयतरोरङ्कुरं सुषुवे सुतं।
तस्य राज्याभिषेकादिविधिभिः सह सम्भृताः। द्विजेन्द्रैर्निरवर्त्यन्त जातकर्मादिकाः क्रियाः।
स नगेन्द्रश्रिया सार्द्धं लब्धवान् बालभूपतिः। नाम गोनर्द इत्येवं नप्ता पैतामहं क्रमात्।
आस्तां बालस्य सन्नद्धे द्वे धात्र्यौ तस्य इद्धये। एका पयःप्रस्त्रविणी सर्व्वसम्पत्प्रसूः परा।

तस्यावन्ध्यप्रसादत्वं रचनाः पितृमन्त्रिणः । पार्श्वगेभ्यो ददुर्वित्तमनिमित्तक्षितेष्वपि ।
अबुद्धा ननु तिष्ठन्त्यसावाख्यकं शिशोर्वचः । कृतागसमिवात्मानममन्यन्ताधिकारिणः ।
पितुः सिंहासनं तेन क्रामता बालभूभुजा । नोत्कण्ठा पादपीठस्य लम्बमानांघ्रिणा कृता । ८०
तच्चामरमरुल्लोलकाकपक्षं नृपासने । विधाय मन्त्रिणोऽकुर्वन् प्रजानां धर्म्मधर्य्यं ।
इति काश्मीरको राजा वर्त्तमानः स शैशवे । साहायकाय समरे न निन्ये कुरुपाण्डवैः ।
आम्नायभ्रंशान्निर्नष्टनामकृत्यास्ततः परं । पञ्चत्रिंशन्महीपाला मग्ना विस्मृतिसागरे ।
अथाभवल्लवोनाम भूपालो भूमिभूषणं । वेलव्रधोदकूलायाः प्रीतिपात्रं जयश्रियः ।
यस्य सेनानिनादेन जगद्दौःस्थित्यदायिना । निन्यिरे वैरिणश्चित्रं दीर्घनिद्राविधेयतां ८५
तेन षोडशभिर्लक्षैर्विहीनाश्मसवेश्मनां । कोटिं निष्पाद्य नगरं लोलोरं निरमीयत ।
दत्वाग्रहारं लेदर्य्यां लेवारं द्विजपर्षदे । स धामनिन्द्यशौर्य्यश्रीरारोह महाभुजः ।
कुशेशयाख्यस्तत्पुत्रः प्रतापकुशलः कुशः । कुरुहाराग्रहारस्य दाताभूत्तदनन्तरं ।
ततस्तस्य सुतः प्राप रिपुनागकुलान्तकः । धुर्य्यः शौर्य्याश्रयः श्रीमान् खगेन्द्रः पार्थिवेन्द्रतां ।
खागिखुनमुषयोः कर्त्ता मुख्याग्रहारयोः । हरदामषितैः कृत्यैः कीर्त्तांल्लोकान् क्रमाद्ययौ । ९०
अनर्घमहिमा दीर्घमघवत्तावहिष्कृतः । अथ साश्चर्य्यचर्य्योऽभूत् सुरेन्द्रस्तत्सुतो नृपः ।
शतमन्युः शान्तमन्योर्गोत्रभिद्गोत्ररक्षिणः । लेभे यस्य सुरेन्द्रस्य सुरेन्द्रो नोपमानतां ।
दरद्देशान्तिके कृत्वा सौरकाख्यं स पत्तनं । श्रीमान् विहारं विदधे नरेन्द्रभवनाभिधं ।
तेन स्वमण्डले ऽखण्डयशसा पुण्यकर्म्मणा । विहारः सुकृतोदारे निर्म्मितः सौरसाभिधः ।
तस्मिन्निःसन्ततौ राज्ञि प्रशान्तेऽन्यकुलोद्भवः । बभार गोधरो नाम सभूधरवरान्धरां । ९५
गोधरो हस्तिशालाख्यमग्रहारमुदारधीः । स प्रदाय द्विजन्मभ्यः पुण्यकर्म्मा दिवं ययौ ।
तस्य सूनुः सुवर्णाख्यस्ततोऽभूत् स्वर्णदोऽर्थिनां । सुवर्णमणिकुल्यायाः कराले य प्रवर्त्तकः ।
तत्सूनुर्जनको नाम प्रजानां जनकोपमः । विहारमग्रहारञ्च जालोराख्यञ्च निर्ममे ।
शचीनरस्तस्य सूनुः क्षितिं क्षितिशचीपतिः । ततः श्रीमान् क्षमाशीलो ररक्षाक्षतशासनः ।
राजाग्रहारयोः कर्त्ता शमांगासाशनारयोः । सोऽभूदपुत्रः सुत्रामविष्टरार्द्धसमाश्रयी । १००
प्रपौत्रः शकुनेस्तस्य भूपतेः प्रपितृव्यजः । अथावहदशोकाख्यः सत्यसन्धो वसुन्धरां ।
यः शान्तवृजिनो राजा प्रपन्नो जिनशासनं । शुष्कलेत्र वितस्तात्रौ तस्तार स्तूपमण्डलैः ।
धर्म्मारण्यविहारान्तर्वितस्तात्र पुरेऽभवत् । यत्कृतं चैत्यमुत्सेधावधि प्राप्यक्षमेक्षणं ।
स षण्णवत्या गेहानां लक्षैर्लक्ष्मीसमुज्ज्वलैः । गरीयसी पुरीं श्रीमांश्चक्रे श्रीनगरी नृपः ।
जीर्णं श्रीविजयेशस्य विनिवार्य्य सुधामयं । निष्कल्मषेणाश्ममयः प्राकारो येन कारितः । १०५
सभायां विजयेशस्य समीपे च विनिर्म्ममे । शान्तावसादः प्रासादावशोकेश्वरसंज्ञितौ ।
म्लेच्छैः सञ्छादिते देशे स तदुच्छित्तये नृपः । तपः सन्तोषिताल्लेभे भूतेशात् सुकृती सुतं ।

सोऽयोऽभूज्जलौकोऽभूद्भूलोकसुरनायकः। यो यशःश्रद्धया शुद्धं व्यधाद्ब्रह्माण्डमण्डलं।
यस्य दिव्यप्रभावस्य कथाः श्रुतिपथं गताः। आश्चर्य्याश्चर्य्यतां यान्ति नियतं द्युसदामपि।
कोटिवेधिनि सिद्धे हि सरसे हाटकार्पणैः। आसीत् सुषिरतां कर्त्तुं हेमाण्डस्य ध्रुवं क्षमः। ११०
संक्रान्त्याम्भःप्रविष्टेन तेन नागसरोऽन्तरं। तारुण्यं फणिकन्यानां निन्ये संभोगभव्यतां।
तत्कालप्रबलप्रेक्षबौद्धवादिसमूहजित्। अवधूतोऽभवत् सिद्धस्तस्य ज्ञानोपदेशकृत्।
विजयेश्वरनन्दीशक्षेत्रज्येष्ठेशपूजने। तस्य सत्यगिरो राज्ञः प्रतिज्ञा सर्व्वदाऽभवत्।
ग्रामे ग्रामे स्थितैर्म्लेच्छैर्धावनं प्रतिषिद्धवान्। स्कन्धेनावहत्तुं सततं नागः कोऽपि सुहृत्तया।
स रुद्धवसुधान् म्लेच्छान्निर्व्वास्याखर्व्वविक्रमः। जिगाय जैत्रयात्राभिर्म्महीमर्णवमेखलां। ११५
स तत्रोज्जूटितस्तेन म्लेच्छाच्छादितमण्डलः। स्थानमुज्जूटडिम्बन्तज्जनैरद्यापि गद्यते।
जित्वोर्व्वीं कन्यकुब्जाद्यां तत्रत्यं स न्यवेशयत्। चातुर्व्वर्ण्यं निजे देशे धर्म्यांश्च व्यवहारिणः।
यथावद्वृद्धिमप्राप्तं व्यवहारधनादिभिः। सामान्यदेशवद्राज्यं तावदस्मिन् हि मण्डले।
धर्म्माध्यक्षो धनाध्यक्षः कोषाध्यक्षश्च्चमूपतिः। दूतः पुरोधा दैवज्ञः सप्त प्रकृतयोऽभवन्।
॥ युगलकं ॥ कर्म्मस्थानानि धर्म्याणि तेनाष्टादश कुर्व्वता। ततः प्रभृति भूपेन कृता यौधिष्ठिरी स्थितिः। १२०
स विक्रमप्रभावाभ्यां समुपार्ज्जितया श्रिया। विदधे वारवालादीनग्रहारानुदग्रधीः।
द्वारादिषु प्रदेशेषु प्रभावोग्रागुदग्रया। ईशानदेव्या तत्पत्न्या मातृचक्राणि चक्रिरे।
श्रुतनन्दिपुराणः स व्यासान्तेवासिनो नृपः। सेवनं सोदरादीनां नन्दीशस्पर्द्धया व्यधात्।
प्रतिष्ठां ज्येष्ठरुद्रस्य श्रीनगर्य्यां वितन्वता। तेन नन्दीशसंस्पर्द्धा न मेने सोदरं विना।
विस्मारितो नित्यकृत्यं कार्य्यव्यग्रतयैकदा। विदूरसोदरजलाप्लावनालाभदुर्मनाः। १२५
अपश्यन्निर्ज्जलात् स्थानादकस्मादुत्थितं पयः। स सोदराविसम्वादि वर्णस्वादादिभिर्गुणैः।
॥ युग्मं ॥ प्रादुर्भूते ततस्तस्मिंस्तीर्थे कृतनिमज्जनः। स नन्दिरुद्रस्पर्द्धायां मानी पर्य्याप्तमासदत्।
तेन जातु परीक्षार्थं निक्षिप्तः सोदरान्तरे। सपिधानाननः स्वर्णभृङ्गारः सुषिरोदरः।
दिनद्वयेन सार्द्धेन श्रीनगर्य्युद्भवाम्भसः। उन्मग्नः स महीभर्त्तुस्तस्य चिच्छेद संशयं।
नूनं नन्दीश एवासौ भोक्तुं भोगानवातरत्। दृष्टादृष्टक्रियासिद्धिर्न भवेत्तादृगन्यथा। १३०
राज्ञस्तस्य कदाचित्तु व्रजतो विजयेश्वरं। ययाचे काचिदबला भोजनं मार्गमध्यगा।
यथेष्टमशनं दातुं ततोऽनेन प्रतिश्रुते। व्यष्टुणोदिक्षता भूत्वा सा नृमांसाश्रयां स्पृहां।
स सत्त्वहिंसाविरतस्तस्यै दातुं स्वविग्रहात्। अनुज्ञां प्रददौ भोक्तुं यदा सैवं तदाब्रवीत्।
बोधिसत्त्वोऽसि भूपाल कोऽपि सत्त्वोर्ज्जितव्रतः। कारुण्यं प्राणिषु दृढं यस्येदृक्तो महात्मनः।
बौद्धभाषामजानानो माहेश्वरतया नृपः। को बोधिसत्त्वो यं भद्रे मां वेत्सीति जगाद तां। १३५
पुनर्ब्बभाषे सा भूपं श्रोतव्यं मत्प्रयोजनं। अहन्नूत्थापिता बौद्धैः क्रोधादिप्रकृतैस्त्वया।
लोकालोकाद्रिपार्श्वस्थास्तामस्याः कृत्तिका वयं। बोधिसत्त्वैकशरणाः काङ्क्षन्त्यस्तमसः क्षयं।

लोके भगवतो लोकनाथादारभ्य केचन। ये जन्तवो गतक्लेशान् बोधिसत्वानवेहि तान्।
सागसेऽपि न कुप्यन्ति क्षमया चोपकुर्वते। बोधिं स्वस्यैव नेच्छन्ति ते विश्वधरणोद्यताः।
विहारध्वंसनिर्घोषैस्तन्निद्रः प्रेरितः खलैः। पुरा भवान् व्यधात् क्रोधाद्विहारोद्दलनं यदा।
महाशक्यः स नृपतिर्न शक्यो बाधितुं त्वया। तस्मिन्दृष्टे तु कल्याणि भविता ते तमःचयः।
अस्मद्गिरा प्रेरणीयो विहारकरणाय सः। दत्ता स्वदेहसंभारं त्वया मलिनितः खलैः।
तस्मिन् कृते न जायेत विहारच्छेदवैशसं। तस्य तत्प्रेरकाणाञ्च प्रायश्चित्तं कृतं भवेत्।
क्रुद्धैर्बौद्धैरनुध्याता त्वद्वधाय प्रधाविता। अनुदिष्टा समाहूय बोधिसत्वैस्तदेत्यहं।
॥ कुलकं ॥ तस्मात् सत्वातिरेकस्ते मिषादेवं परीक्षितः। क्षीणपापाय सम्पृक्ता स्वस्ति ते साधयाम्यहं।
कृतप्रतिश्रवे राज्ञि विहारकृतये पुनः। प्रहर्षोत्फुल्लनयना कृत्यादेवी तिरोदधे।
अथ कृत्याश्रमे कृत्वा विहारं वसुधाधिपः। तत्रैव क्षीणतमसं कृत्यादेवीमनन्दयत्।
विधाय सोऽश्मप्रासादं नन्दिक्षेत्रे क्षमापतिः। भूतेशाय समं कोषैः पूजां रत्नमयीं ददौ
चीरमोचनतीर्थान्तर्गव्यरात्रं तपस्यता। ब्रह्मासननिविष्टेन ध्याननिष्पन्दमूर्त्तिना।
राज्ञा कनकवाहिन्याः सुचिरात् पुण्यकर्मणा। नन्दीशस्पर्शनोत्कण्ठा तेनानीयत कुण्ठतां।
स्त्रादोदयान्नृत्यगीतवर्णे नर्त्तितुमुत्थितं। प्रददौ ज्येष्ठरुद्राय स्वावरोधवधूशतं।
भुक्त्वैश्वर्यं स पर्यन्ते प्रतिष्ठं चीरमोचनं। पत्न्या समं ययौ राजा सायुज्यं गिरिजापतेः।
अथाशोककुलोत्पन्नो यद्वान्याभिजनोद्भवः। भूमिं दामोदरो नाम जुगोप जगतीपतिः।
श्रद्धा जाज्वलितस्वाधिर्माहेश्वरशिखामणेः। अद्यापि श्रूयते यस्य प्रभावो भुवनाद्भुतः।
हरप्रसादमात्रेण सचरित्रानुरागिणा। सबन्ध सुखिना सख्यं येन वैश्रवणः स्वयं।
कुवेरदव योराज्ञामग्र्यः स्वाज्ञाविधायिनः। आदिश्य गुह्यकान् दीर्घं गुरुसेतुमबन्धयत्।
सूदे दामोदरीये यत्तस्याधीत् स्वकृतं पुरं। सेतुना तेन तत्रेच्छन् कर्त्तुं सोऽम्भःप्रतारणं।
हितं लोकोत्तरं किञ्चिच्चिकीर्षोरुन्नतात्मनः। रोहन्ति हा धिक् प्रत्यूहा मितपुण्यतया नृणां।
स हि कारयितुं यच्चैयततेऽस्य स्वमण्डले। दीर्घानस्मयान् सेद्धुं तोयविप्लवशान्तये।
तपोविभूतयश्चिन्त्या द्विजानामुग्रतेजसां। तादृशामपि ये कुर्युः प्रभावस्य विपर्ययं।
दायादादिवलेनैष्टा दृष्टा भूयः समुत्थिता। श्रीविप्रावयया राज्ञामपुनःसम्भवा पुनः।
आहार्यमुत्थितः स्नातुं द्विजैः कैश्चिद्बुभुक्षितैः। प्राक् स्नानाद्भोजनं राजा स कदाचिद्याच्यत।
यियासुना वितस्तान्तर्यदा तेनावधीरितं। तदा प्रभावात्ते तस्य तां धुनीमयतो व्यधुः।
सेयं वितस्ता दृष्ट्वेनां भोजयास्मान् स तैरिति। उक्तोऽपि मायाविहितामशासीत् सरिदाकृति।
भोज्यं ददानि नास्नातो विप्राः सर्पत साम्प्रतं। तेनेत्युक्तास्तमशपंस्ततः सर्पो भवेति ते।
अशेषमेकेनैवाह्ना श्रुत्वा रामायणं तव। शापस्य शान्तिर्भवितेत्यूचिरे ते प्रसादिताः।
स दामोदरसूदान्तर्धावन् दूरमुदन्यया। शापोष्णश्यामधूमेन जनैरद्यापि लक्ष्यते।

अथाभवन् स्वनामाङ्कपुरत्रयविधायिनः। हुष्कजुष्ककनिष्काख्यास्त्रयस्तत्रैव पार्थिवाः।
स विहारस्य निर्माता जुष्को जुष्कपुरस्य यः। जयस्वामिपुरस्यापि शुद्धधीः स विधायकः।
ते तुरुष्कान्वयोद्भूता अपि पुण्याश्रया नृपाः। शुष्कलेत्रादिदेशेषु मठचैत्यादि चक्रिरे। १७०
प्राज्ये राज्यक्षणे तेषां प्रायः काश्मीरमण्डलं। भोज्यमास्ते च बौद्धानां प्रव्रज्योर्जिततेजसां।
ततो भगवतः शाक्यसिंहस्य परनिर्वृतेः। अस्मिन् सह लोकधातौ सार्द्धं वर्षशतं ह्यगात्।
बोधिसत्त्वश्च देशेऽस्मिन्नेकभूमीश्वरोऽभवत्। स तु नागार्जुनः श्रीमान् षडर्हद्वनसंश्रयी।
अथ निष्कण्टको राजा कण्टकोत्सापहारदः। अभीर्वभूवाभिमन्युः शतमन्युरिवापरः।
स्वनामाङ्कं शशाङ्काङ्कशेखरं विरचय्य सः। परार्ध्यविभवं श्रीमानभिमन्युपुरं व्यधात्। १७५
चन्द्राचार्यादिभिर्लब्ध्वादेशं तस्मात्तदागमं। प्रवर्त्तितं महाभाष्यं स्वञ्च व्याकरणं कृतं।
तस्मिन्नवसरे बौद्धा देशे प्रबलतां ययुः। नागार्जुनेन सुधिया बोधिसत्त्वेन पालिताः।
ते वादिनः पराजित्य वादेन निखिलान् बुधान्। क्रियां नीलपुराणोक्तामच्छिन्दन्नागमद्विषः।
मण्डले विप्लुताचारे विच्छिन्नबलिकर्मभिः। नागैर्जनक्षयश्चक्रे प्रभूतहिमवर्षिभिः।
हिमान्यां बौद्धबाधाय पतन्त्यां प्रतिवत्सरं। शीते दार्वाभिसारादौ षण्मासान् पार्थिवोऽवसत्। १८०
तदा प्रभावः कोऽप्यासीद्बलिहोमविधायिनः। नानश्यन् यद्वशादिमा बौद्धाश्च निधनङ्गताः।
नीलमुद्दिश्य देशस्य रक्षितारं महेश्वरं। काश्यपश्चन्द्रदेवाख्यस्तपस्तेपे ततो द्विजः।
तस्य प्रत्यक्षतां यातो नीलस्तुहिनविप्लवं। न्यवारयत् जगादापि स्वपुराणविधिं पुनः।
आद्येन चन्द्रदेवेन शमितो यक्षविप्लवः। द्वितीयेन तु देशेऽस्मिन् दुःसहो भिक्षुविप्लवः।
राजा तृतीयगोनर्दः प्राप्तराज्यस्तदन्तरे। यात्रायागादि नागानां प्रावर्त्तयत पूर्ववत्। १८५
राज्ञा प्रवर्त्तिते तेन पुनर्नीलोदिते विधौ। भिक्षवो हि सदोषाश्च सर्वतः प्रशमं ययुः।
काले काले प्रजापुण्यैः सम्भवन्ति महीभुजः। यैर्मण्डलस्य क्रियते दूरोत्सन्नस्य योजनं।
ये प्रजापीडनपरास्ते विनश्यन्ति सान्वयाः। नष्टन्तु ये योजयेयुस्तेषां वंशानुगाः श्रियः।
इत्येतत् प्रतिवृत्तान्तं देशेऽस्मिन् वीक्ष्य लक्षणं। भाविनां भूमिपालानां प्राज्ञैर्ज्ञेयं शुभाशुभं।
नवोक्तवर्त्तो देशं तस्य वंशैरियं मही। सिद्धैः प्रवरसेनाद्यैश्चिरं भुक्ता सुकर्मभिः। १९०
गोनर्दान्वयिनामाद्यः स रघूणां रघुर्यथा। नृपतिः काश्यपीं वर्षान् पञ्चविंशतिमन्वशात्।
वर्षषष्टिं सषण्मासैः षड्भिर्वर्षैर्विवर्ज्जितां। विभीषणाभिधोऽरक्षत् क्षितिं गोनर्दनन्दनः।
इन्द्रजिद्रावणाख्यौ तौ पितापुत्रौ नृपौ क्रमात्। पञ्चत्रिंशत्सहार्द्धाश्च वर्षास्त्रिंशच्चयोर्ययुः।
बिन्दुरेखाच्छविर्यस्य दृष्टा आश्चर्यशंसिनी। स रावणस्य पूजार्थं लिङ्गं भाति वटेश्वरः।
चतुःशालमठस्यान्तः कृतायादायि भूभुजा। वटेश्वराय निखिलं तेन काश्मीरमण्डलं। १९५
पञ्चत्रिंशतमब्दानां क्ष्मां बुभोज महाभुजः। रावणश्रोणिभृत्सूनुः सार्धमन्यो विभीषणः।
किन्नरापरनामाथ किन्नरैर्गीतविक्रमः। विभीषणस्य पुत्रोऽभून्नरनामा नराधिपः।

सदाचारोऽपि स नृपः प्रजाभाग्यविपर्य्ययैः। व्यधाद्विपयदोषेण महानर्थपरम्परां।
विहारे निवसन्नेककिन्नरग्रामवर्त्तिनि। तस्य योगवलात् कोऽपि श्रमणोऽपाहरत् प्रियां।
विहाराणां सहस्राणि तत्कोपान्निर्ददाह सः। अजिग्रहच्च तद्ग्रामान् द्विजैर्मध्यमठाश्रयैः।
स्फुद्वापणं राजपथैर्नौयानोज्ज्वलनिम्नगं। स्फीतपुष्पफलोद्यानं स्वर्गस्येवाभिधान्तरं।
दिग्जयोपार्जितैर्व्वित्तैर्जितवित्तेशपत्तनं। वितस्तापुलिने तेन नगरं निरमीयत।
॥ युगलकं ॥ तत्रैकस्मिन् किलोद्याने स्वच्छस्वादुजलाश्रितः। आसीत् सुश्रवसो नाम्नो नागस्य वसतिः सरः।
कदाचित्तस्य दूराध्वक्लान्तो मध्यदिने युवा। छायार्थी तत् सरःकच्छं विशाखाख्योऽविशद्विजः।
सच्छायपादपतले समीरैः शमितक्लमः। शनैर्जलमुपस्पृश्य भोक्तुं सक्तून् प्रचक्रमे।
तान् पाणौ गृह्णतैवाथ तेन तीरविहारिभिः। पूर्व्वमाकर्षितो हंसैः शुश्रुवे नूपुरध्वनिः।
निर्गते मञ्जरीकुञ्जादपश्यत् पुरतस्ततः। कन्ये नीलनिचोलिन्यौ स केचिच्चारुलोचने।
कर्णिकापद्मरागाञ्जनालनीलायितस्पृशा। मनोज्ञधवलापाङ्गे तनीयोऽञ्जनरेखया।
हारिनीवाञ्चलैर्मन्दमारुतान्दोलनाकुले। सनाथांसयुगे रूपपताकापल्लवैरिव।
॥ तिलकं ॥ ते शशाङ्काननें दृष्ट्वा शनैरभ्यर्णमागते। विरराम शनारब्धात् मुग्धः क्रीडजडीकृतः।
भुञ्जाने कच्छगुच्छानां शिम्बीरम्बुजलोचने। ते पुनर्दृष्टवानग्रे किञ्चिद्व्यापारितेक्षणः।
आकृतेर्हा धिगीदृश्या भोज्यमेतदिति द्विजः। ध्यायन् कृपार्द्रः सम्मान्य स ते सक्तूनभोजयत्।
उपनिन्ये च सङ्गृह्य पुटकैश्चाटुशीतलैः। तयोः पानाय पानीयं सरसः स्वच्छशीतलं।
आचान्ते शुचितां प्राप्ते कृतासनपरिग्रहे। ततश्च वीजयन् पर्णतालवृन्तैरभाषत।
भवत्यो पूर्व्वसुकृतैः कैश्चित् सम्प्राप्तदर्शनः। चापलाद्विप्रसुलभात् प्रष्टुमिच्छत्ययं जनः।
कल्याणिनीभ्यां कतमा पुण्या जातिः परिष्कृता। क्लुप्त वा क्लान्तमेतादृग्विरसं येन भुज्यते।
एका तमूचे विद्धावामस्य सुश्रवसः सुते। स्वादुभोज्यमप्राप्य किमीदृग्व्याप्यभुज्यते।
पित्रा विद्याधरेन्द्राय प्रदातुं परिकल्पिता। इरावत्यहमेषा मे चन्द्रलेखा यवीयसी।
पुनर्द्विजोऽभ्यधादेवं नैष्किञ्चन्यं किमस्ति वः। ताभ्यामवादि तातोऽत्र हेतुर्वेत्ति स पृच्छ्यतां।
ज्येष्ठेऽत्र कृष्णपादश्यां याचार्यै तत्र कस्य तं। आगतं चूडया तोयस्यन्दिन्या ज्ञास्यसि ध्रुवं।
द्रष्टव्यावामपि तदा तदभ्यर्णकृतस्थिती। इत्युक्त्वा फणिकन्ये ते क्षणादास्तां तिरोहिते।
क्रमात् प्रवृत्ते सोऽत्र नटचारणसङ्कुलः। प्रेक्षिलोकसमाकीर्णस्तत्र यात्रामहोत्सवः।
द्विजोऽपि कौतुकाकृष्टः पर्य्यटन् रङ्गमञ्जसा। कन्योक्तचिह्नज्ञातस्य नागस्यान्तिकमाययौ।
पार्श्वस्थिताभ्यां कन्याभ्यां पूर्व्वमावेदितोऽथ सः। द्विजन्मने व्याजहार स्वागतं नागनायकः।
ततः कथान्तरे क्वापि पृष्टः कारणमापदां। जगाद तं द्विजन्मानं निःश्वस्य श्वसनाशनः।
अभिमानवतां सद्भ्युक्तायुक्तविवेकिनां। युज्यते वन्ध्यभाग्यानां दुःखानामप्रकाशनं।
परदुःखसमाकर्ण्य स्वभावसुजनो जनः। उपकारासमर्थत्वात् प्राप्नोति पदव्यथां।

वृत्तिं स्वां बहु मन्यते हृदि शुचं धत्तेऽनुकम्पोक्तिभिर्य्यकं निन्दति धीरतां मितमतिः कुर्व्वन् स्तुतीरात्मनः ।
गर्ह्योपायनिषेवणं कथयति स्वार्थं वदन् व्यापदं श्रुत्वा दुःखमरुन्तुदं वितनुते पीडां जनः प्राकृतः ।
अतएव विवक्षूणां यावदायुरसमानपि । दीर्घाणि सुखदुःखानि दहत्यन्ते चितानलः ।
कः स्वभावगभीराणां लक्षयेद्वहिरापदं । बालापत्येन भृत्येन यदि सा न प्रकाश्यते ।
तदस्मिन्नेतयोर्म्बाल्यादस्तुनि व्यक्तिमागते । तवाग्रे गोपनं साधो न ममाप्युपपद्यते ।
त्वयाप्यसङ्कुलितार्थाय निसर्गसरलात्मना । ईषत्प्रयासः कल्याणिन् क्रियतां यदि शक्यते ।
योऽयं तरुतले मुण्डचूडालो दृश्यते व्रती । अमुना शस्यपालेन कान्दिशीकाः कृता वयं ।
अभुक्ते मान्त्रिकैरन्ने नवे नागेन भुज्यते । अयं नास्ति च तत्तेन समयेन हता वयं ।
क्षेत्राणि रक्षत्येतस्मिन् दृष्ट्वापि फलसम्पदं । भोक्तुं नैव समर्थाः स्मः प्रेताइव सरिज्जलं ।
तथा कुरु यथा भ्रश्येत् समयादेष नैष्ठिकः । योग्या प्रतिक्रिया विप्रोऽयमप्युपकर्तृषु ।
स तथेति ततो नागमुक्त्वा यत्नपरो द्विजः । अचिन्तयद्दिवारात्रौ शस्यपालस्य वञ्चनां ।
गूढं तस्य वहिःक्षेत्रकुटीगर्भकृतस्थितेः । पच्यमानान्नभाण्डान्तर्नवान्नं न्यक्षिपत्ततः ।
भुञ्जान एव तत्तस्मिन् क्षणादेव जहार सः । अहीन्द्रः खरकासारवर्षी स्फीतां फलश्रियं ।
तस्य व्युत्क्रान्तदारिद्र्यः सरसोऽभ्यर्णमागतं । कृतोपकारमन्येद्युर्निजोर्वीमनयद्द्विजं ।
स तत्र पितुरादेशात् कन्याभ्यां विहितार्हणः । अमर्त्यसुलभैर्भोगैरतोष्यत दिने दिने ।
कालेन सर्व्वानामन्त्र्य स्वां भुवं गन्तुमुद्यतः । प्रतिश्रुतं वरं नागं चन्द्रलेखामयाचत ।
सम्बन्धायोग्यमपि तं कृतज्ञत्ववशंवदः । संविभेजे स भुजगः कन्यया च धनेन च ।
एवं नागवरावाप्तश्रियस्तस्य द्विजन्मनः । महान्नरपुरे कालस्तैस्तैर्नित्योत्सवैर्ययौ ।
भुजगेन्द्रतनूजापि तं पतिं पतिदेवता । अतोषयत् परार्थ्यश्रीः शीलाचारादिभिर्गुणैः ।
तस्यां कदाचित् सौधाग्रस्थितायां प्राङ्गणाद्वहिः । आतपायोज्झितं धान्यं बुभुजे विहरन् हयः ।
तं वारयितुमाहूता भृत्या नासन् गृहे यदा । शिञ्जानमञ्जुमञ्जीरा सा तदावातरत् स्वयं ।
एकहस्तधृतावेगस्रस्तनीवींशुकान्तया । तया पाणिसरोजेन धावित्वा सोऽथ ताडितः ।
भोज्यमुत्सृज्य यातस्य फणिस्त्रीस्पर्शतस्ततः । सौवर्णी पाणिमुद्राङ्के तुरगस्योदपद्यत ।
तस्मिन् काले नरो राजा चारैस्तां चारुलोचनां । श्रुत्वा द्विजवधूं तस्यां प्रागेवाङ्कुरितस्मरः ।
तस्य धावन्तमुन्मत्तमन्तःकरणवारणं । वलान्नियमितुं नासीदपवादभयाङ्कुशः ।
तस्मिन्नुद्वृद्धरागाग्निविस्रब्धे भूपतेः पुनः । उवाह हयवृत्तान्तो दृप्तवातानुकारितां ।
चक्रे पर्य्यस्तमर्य्यादः सरलांगुलिशोभिना । सकाञ्चनकराङ्केन शशाङ्केनेव वारिधिः ।
व्रीडानिगडनिर्मुक्तो दूतैराकूतशंसिभिः । तामुपच्छन्दयन् सोऽथ सुन्दरीमुदवेजयत् ।
सर्व्वोपायैरसाध्यास्य विप्रस्तत्पतिरर्थ्यसौ । तेनायाच्यत लुब्धेन रागान्धानां कुतस्त्रपा ।
अथ निर्भर्त्सनां तस्मादपि प्राप्तक्लमकृत् । हठेन हर्तुं तां राज्ञा समादिश्यन्त सैनिकाः ।

तैर्ग्रहाये कृतास्कन्दो भिंगित्यान्यिन वर्त्मना । धाणार्थी नागभवनं सशालिः प्राविशद्द्विज ।
ताभ्यामभ्येत्य वृत्तान्ते ततस्तस्मिन् निवेदिते । क्रोधान्ध. सरसस्तस्मादुज्जगाम फणीश्वरः ।
उद्गर्ज्ज्ज्जिह्मजीमूतजनितध्वान्तसन्ततिः । सघोराशनिवर्षेण ददाह सपुरं नृपं । २६०
दग्धप्राण्यङ्गविगलद्वसास्रकुल्वहवाहिनी । मयूरचन्द्रकाढ्येव वितस्ता समपद्यत ।
शरणाय प्रविष्टानां भयाचक्रधरान्तिकं । मुहूर्त्ताग्निरदह्यन्त सहस्राणि शरीरिणां ।
मधुकैटभयोर्मेदः प्रागूर्व्वीरिव चक्रिणं । दग्धानां प्राणिनां तत्तदा सर्व्वाङ्गमस्पृशत् ।
स्वसा सुश्रवसो नागी रमण्याख्याद्रिगह्वरात् । साहायकायाश्मराशीन् समादाय तदा ययौ ।
सयोजनाधिके शेषे मार्गस्यारात् सहोदरं । कृतकार्य्यं निशम्याश्मवर्षं ग्रामेषु तत्यजौ । २६५
योजनानि ततः पञ्च जाता ग्रामधरा शिला । सा रमण्याटवीत्यद्याप्यस्ति स्थूलशिलाविला ।
घोरं जनचयं कृत्वा प्रातः सानुशयोऽप्यहिः । लोकापवादनिर्व्विण्ण स्थानमुत्सृज्य तद्ययौ ॥
दुग्धाब्धिधवलं तेन सरोदूरगिरौ कृतं । अमरेश्वरयात्रायां जनैरद्यापि दृश्यते ।
श्वशुरानुग्रहान्नागीभूतस्यापि द्विजन्मनः । जामातृसर इत्यन्यत्तत्र च प्रथितं सरः ।
प्रजानां पालनव्याजान्निःशङ्कक्षयकारिणः । अकस्मादन्तका. केचित् सम्भवन्ति तथाविधाः । २७०
अद्यापि तत्पुरं दग्धं शुभ्रीभूतञ्च तत्सरः । उपचक्रधरं दृष्ट्वा कथेयं स्मर्य्यते जनैः ।
राज्ञां रागः कियान्नाम दोषः स्वल्पदृशां मते । तत्तस्य तेन संवृत्तं यन्नाभूत्क्वापि कस्यचित् ।
सतीदैवतविप्राणामप्येकस्य प्रकोपतः । श्रुतो हि प्रतिवृत्तान्तं त्रैलोक्यस्यापि विप्लवः ।
चत्वारिंशतमब्दान् स मासैस्त्रीनं त्रिभि. समं । भुवं भुक्त्वा चितिंद्दृष्ट्या दुर्णयेन क्षयं ययौ ।
अप्यल्पकालसन्दृष्टप्राकाराट्टालमण्डलं । तत् किन्नरपुरं लेभे गन्धर्व्वनगरोपमां । २७५
एकस्तु तनयस्तस्य वैचित्रात् कर्म्मणां गते. । स्वधात्रा विजयक्षेत्रं नीत. प्राणैर्न तत्यजे ।
राजा सिद्धाभिधः सोऽथ तथा निःशेषितं जनं । नवीचकार जलदो दावदग्धमिवाचलं ।
इति वृत्तं महाश्चर्य्यं तस्य पित्रं महामतेः । संसारासारताज्ञेन प्राप पुण्योपदेशतां ।
भोगयोगेन मालिन्यं नेतुं मध्यगतोऽपि सः । न शक्यतेस्म पङ्केन प्रतिमेन्दुरिवामल ।
दर्पज्वरोग्रभूपालमध्ये निध्यायतोऽनिशं । सुधाहृतिकलामौलिं तस्थ्योल्लाघतोयथौ । २८०
गणितं गुणिना तेन मणीस्तृणमिवोज्भ्रता । खण्डेन्दुमण्डनार्चायां मण्डनत्वमखण्डितं ।
राज्ञस्तस्यैव राजश्री परलोकानुगाभवत् । यस्तामयोजयद्भूतो धर्म्मेणाव्यभिचारिणा ।
षष्टिमब्दान् प्रशास्योर्व्वीमासन्नानुचरान्वित. । आरुरोह सदेहोऽसौ लोकान्धशिशिखामणेः ।
अत्यानरं समाश्रित्य प्रययुः शोचनीयतां । तत्सुतन्तु समालम्ब्य प्रभुं भुवनवन्द्यतां ।
यात्याश्रित. किल समाश्रयणीयलभ्यां निन्द्यां गतिं जगति सर्व्वजनार्चितां वा । २८५
मच्छत्यधस्तृणगुणः श्रितकूपयन्त्रः पुष्पाश्रयी सुरशिरोभुवि रूढिमेति ।
सिद्धः सिद्धः सदेहोऽयमिति शब्दं सुरादिवि । प्रोद्घोषयन्तो व्यनयन् पटहं सप्तवासरान् ।

उत्पलाक्ष इति ख्यातिं पेशलाचतया गतः। तत्सूनुस्त्रिंशतं सार्द्धान् वर्षाणामन्वशान्महीं।
तस्य सूनुर्हिरण्याक्षः स्वनामाङ्कं पुरं व्यधात्। क्ष्मां सप्तत्रिंशतं वर्षान् सप्त मासांश्च भुक्तवान्।
हिरण्यकुल इत्यस्य हिरण्याक्षस्य चात्मजः। षष्टिं षष्टिं च मुकुलस्तत्सूनुरभवत् समाः।
अथ म्लेच्छगणाकीर्णे मण्डले चण्डचेष्टितः। तस्यात्मजोऽभून्मिहिरकुलः कालोपमो नृपः।
दक्षिणां सान्तकामाशां स्पर्द्धया जेतुमुद्यता। यन्मिषादुत्तरहरिद्भाराण्यमिवान्तकं।
सान्निध्यं यस्य सैन्यान्तर्हन्यमानाशनोत्सुकान्। अजानन् गृध्रकाकादीन् दृष्ट्वाग्रे धावतो जनाः।
दिवारात्रं हतप्राणिसहस्रपरिवारितः। योऽभद्भूपालवेतालो विलासभवनेष्वपि।
बालेषु करुणा स्त्रीषु घृणा वृद्धेषु गौरवं। न बभूव नृशंसस्य यस्य घोराकृतेर्व्रतः।
स जातु देवीं सम्वीतसिंहलांशुककञ्चुकां। हेमपादाङ्कितकुचां दृष्ट्वा जज्वाल मन्युना।
सिंहलेषु नरेन्द्राङ्घ्रिमुद्राङ्कः क्रियते पटः। इति कञ्चुकिना पृष्टेनोक्तो यात्रामधात्तत।
तत्सेनाकुम्भिदानाम्भोनिम्नगाकृतसङ्गमः। यमुनालिङ्गनप्रीतिं प्रपेदे दक्षिणार्णवः।
स सिंहलेन्द्रेण समं संरम्भादुदपाटयत्। चिरेण चरणस्पृष्टप्रियालोकनजां रुषं।
दूरात्तत्सैन्यमालोक्य लङ्कासौधैर्निशाचराः। भूयोऽपि राघवोद्योगमाशङ्क्य प्रचकम्पिरे।
स तत्रान्यं नृपं दत्वा तीव्रशक्तिमपाहरत्। पटं यमुषदेवाख्यं मार्त्तण्डप्रतिमाङ्कितं।
व्यावृत्य चोलकर्णाटलाटादींश्च नरेश्वरान्। सिन्धुरानिव गन्धेभो गन्धेनैव व्यधारयत्।
तस्मिन् प्रयाते प्राप्तेभ्यः शशंसुस्तत्पराभवं। नगर्यो नरनाथेभ्यस्त्रुट्यदट्टालमेखलाः।
काश्मीरं द्वारमासाद्य श्वभ्रभ्रष्टस्य दन्तिनः। श्रुत्वा सत्रासजं रावं तोषरोमाञ्चितोऽभवत्।
तदाकर्णनसंरम्भे सहर्षोऽथ विरुद्धधीः। शतमन्यद्गजेन्द्राणां हठेन निरलोठयत्।
स्पृष्टोऽङ्गानि यथा वाचं कीर्त्तनं पापिनां तथा। सन्दूषयेदतो नोक्ता तस्यान्यापि नृशंसता।
कोवेत्त्यद्भुतचेष्टानां कृत्यं प्राकृतचेतसां। धर्मं सुकृतसम्प्राप्तिहेतोः सोऽपि यदाददे।
श्रीनगर्यां हि दुर्बुद्धिर्विदधे मिहिरेश्वरं। होलाडायां समिहिरपुराख्यं पृथुपत्तनं।
अग्रहारान् जगृहिरे गान्धारब्राह्मणास्तत.। समानशीलास्तस्यैव ध्रुवं तेऽपि द्विजाधमाः।
भगिनीवर्गसम्भोगनिर्लज्जाम्लेच्छवंशजाः। स्नुषासङ्गतिसक्ताश्च दारदाः सन्ति पापिन.।
वस्तुभावैस्तया भाट्टा भार्य्याविक्रयकारिणः। परोपभोगितास्तेषां निर्लज्जास्तर्हि योषितः।
मेघागमः फणिभुजं प्रथितान्धकारः प्रीणाति हंसममलोजलदात्ययश्च।
प्रीते. समानरुचितैव भवेन्नितान्तं दातुः प्रतिग्रहकृतश्च परस्परस्य।
स वर्षसप्ततिं भुक्त्वा भुवं भूलोकभैरवः। भूरिरोगार्दितवपुः प्राविशज्जातवेदसं।
सोऽयं त्रिकोटिहा मुक्तो यः स्वात्मन्यपि निर्घृणः। देहत्यागेऽस्य गगणादुच्चचारेति भारती।
इत्यूचुर्ये मते तेषां स एव परिहारदः। खण्डयन्तीतघृणतामग्रहारादिकर्मभिः।
आक्रान्ते दारदैर्भोट्टैर्म्लेच्छैरशुचिकर्मभिः। विनष्टधर्मे देशेऽस्मिन् पुण्याचारप्रवर्त्तनं।

आर्य्यदेशान् स मेध्याप्य यतनोद्दारुणं तपः। संकल्प्य स्वपुरोद्दं प्रायश्चित्तक्रियां व्यधात्।
अतएवाग्रहाराणां सहस्रं प्रत्यपादयत्। गान्धारदेशजातेभ्यो द्विजेभ्यो विजयेश्वरे।
खुरखङ्गाभिधेन्वादिपूर्वे यः फलके तदा। वह्निप्रदीप्ते सहसा पर्य्यन्ते स्वां तनुं जहौ। १२०
इत्येतस्मिन्नानाम्नाये केचिदव्यभिचारिणि। प्राज्ञः पुरुषसिंहस्य क्रौर्य्यन्तस्याविगर्हितं।
॥ कुलकं ॥ ये नागेन रुषा प्लुष्टे नगरे प्राभवन् खशाः। तेषां नाशाय वृत्तान्तं पूर्व्वोक्तं जगदुः परे।
अवतारयतस्तस्य चन्द्रकुल्याभिधां नदीं। अश्मक्योन्मूलनामध्ये शिलाभूद्विघ्नकारिणी।
ततः कृततपाः स्वप्ने देवैरुक्तः स भूपतिः। यथाः शिलायां बलवान् यक्षश्चार्य्यत्र तिष्ठति।
साध्वी स्पृशति चेदेनां निरोद्धुं नच शक्नुयात्। ततोऽपरेद्युः स्वप्नोक्तं शिलायान्तेन कारितं। १२५
तासु तासु कुलस्त्रीषु यथेष्टमास्थयाचलत्। चन्द्रवत्याख्यया स्पृष्टा कुलाख्या सा महाशिला।
कोटित्रयं नरपतिः क्रुद्धस्तेनागसा ततः। सपतिभ्रातृपुत्राणामवधीत् कुलयोषितां।
इयं चान्यमते ख्यातिः श्रयते तथ्यतः पुन.। अभव्या सनिमित्तापि प्राणिहिंसा गरीयसी।
एवं क्षुद्रोऽपि यद्राजा सम्भूय न हतोजनैः। तत्कर्म्म कारयद्भिस्तद्दैवतैरेव रक्षितः।
प्रजापुण्योदयैर्क्षीणैश्चिरात्तस्मिन् क्षयं गते। एकस्तत्प्रभवः पौरैः सदाचारोऽभ्यषिच्यत। १३०
तत्रापि पूर्व्वसंस्काराशुक्तता सन्दधे जनैः। श्मशानविहिते लीलावेश्मनीव नृपासदे।
अतिसन्तापदाज्जातः सजनाह्लादकोऽभवत्। जलौघो जलदश्यामात्तापात्ययदिनादिव।
लोकान्तरादिवायातं मेने धर्म्मं तदा जनः। अभयञ्च परावृत्तं प्रवासाद्गहनादिव।
स वकेशं वकः श्वभ्रे वकवत्यापगां तया। कृत्वा पुरं परार्ध्यश्रीर्लवणोत्साभिधं व्यधात्।
तत्र त्रिषष्टिर्व्वर्षाणां स त्रयोदशवासरान्। अभ्यशाद्गत भूपेन तेन पृथ्वी प्रशासता। १३५
अथ योगेश्वरी काचिद्भट्टाख्या रजनीमुखे। कृत्वा कान्ताकृतिं काम्यामुपतस्थे विशाम्पतिं।
तया मनोहरैस्तैस्तैर्व्वचनैर्लुप्तस्मृतिः। स यागोत्सवमाहात्म्यं द्रष्टुं हृष्टो न्यमन्त्र्यत।
पुत्रपौत्रशतोपेतः प्रातस्तत्र ततो गतः। चक्रवर्त्ती तया निन्ये देवीचक्रोपहारतां।
कर्म्मणा तेन सिद्धाया व्योमाक्रमणसूचकं। जानुमुद्राद्वयं तस्या दृषत्यद्यापि दृश्यते।
देव. शतकपालेशो मातृचक्रं शिला च सा। खेरे मठेषु तद्वार्त्तां स्मृतिमद्यापि गच्छति। १४०
देव्या कुलतरोः कन्दः क्षितिनन्दोऽवशेषितः। ततस्तस्य सुतस्त्रिंशद्वत्सरानन्वशान्महीं।
द्वापञ्चाशतमब्दान् क्ष्मां द्वौ च मासौ तदात्मजः। अपासीद्वसुनन्दाख्यः प्रख्यातस्मरशास्त्रकृत्।
नरः षष्टिं तथा सूनुस्तावतोऽक्षश्च तत्सुतः। वर्षानष्टद्विभूश्राभं योऽक्षवालमकारयत्।
जुगोप गोपादित्योऽथ क्ष्मां सदीपां तदात्मजः। वर्णाश्रमप्रत्यवेक्षाद्दर्शितादियुगोदयः।
इखोलखागिकाहाडिं ग्रामे स्कन्दपुराभिधान्। शमाङ्गादिमुखांश्चाग्रहारान् यः प्रत्यपादयत्। १४५
ज्येष्ठेश्वरं प्रतिष्ठाप्य गोपाद्रावार्य्यदेशगाः। गोपाग्रहारान् कृतिना येन स्वीकारिता द्विजाः।
भूधीरवाटिकायां यो निर्म्मांस्य लशुनाशिनः। वासटायां व्यधात् विप्रान्निशाचारविवर्ज्जितान्।

अन्यांश्चानीय देशेभ्यः पुण्येभ्योवचिकादिषु । पावनानग्रहारेषु ब्राह्मणान् स न्यरोपयत् ।
उत्तमो लोकपालोऽयमिति तस्य प्रशस्तिषु । यः प्राप्तवान् विना यज्ञं चचमे न पशुक्षयं ।
सपड्दिनां वर्षषष्टिं पालयित्वा स मेदिनीं । भोक्तुं पुण्यपरीपाकं लोकान् सुकृतिनामगात् ।
गोकर्णस्तत्सुतः चौणीं गोकर्णेश्वरकृद्ददे । अष्टपञ्चाशतं वर्षांस्त्रिंशत्यब्दां विवर्ज्जितान् ।
सूनुर्नरेन्द्रादित्योऽस्य खिङ्खिलान्याभिधोऽभवत् । भूतेश्वरप्रतिष्ठानामचयिण्याश्च कारकः ।
दिव्यानुग्रहभागुग्राभिधो यस्य गुरुर्व्यधात् । उग्रेशं मातृचक्रञ्च प्रभावोदयविग्रहः ।
भूत्वा षट्त्रिंशतं वर्षान् शतं चाब्दां विभुर्भुवः । सदीर्घैरनघान् लोकानासदत् सुकृतैः कृती ।
युधिष्ठिराभिधानोऽभूदथ राजा तदात्मजः । यः सूक्ष्माचतया लोकैः कथितोऽन्धयुधिष्ठिरः ।
तेन क्रमागतं राज्यं सावधानेन शासता । अनुजज्ञे मितं कालं पूर्व्वभूपालपद्धतिः ।
काले कियत्यपि ततो यात्यभाग्यवशादसौ । सिषेवे श्रीमदचीणो यत्किञ्चन विधायितां ।
नान्वग्रहीदनुग्राह्यान्न सञ्जग्राह धीमतः । न प्रवृत्तोपचाराणां प्रागिवाधीत् प्रियङ्करः ।
दुर्व्विदग्धपर्षदा साकं निर्व्विशेषं सभाजितैः । परिजह्रे स दुर्ज्ञातो जाततेजोवधैर्बुधैः ।
सर्व्वत्र समदृष्टित्वं गुणोऽयं खलु योगिनः । अकीर्त्तिहेतुः स महान्दोषस्तु पृथिवीपतेः ।
नयद्भिर्गुणतां दोषान् दोषतांश्च गुणान् विटैः । स लुप्तप्रतिभश्चक्रे शनकैस्तोजितोपमः ।
वाङ्मर्मच्छेदिनो दीर्घनर्मधर्मश्लकया विटैः । अनीश्वरोचिता तस्य क्रीडापि भयदाभवत् ।
पुरो मिथ्यागुणग्राही परोक्षे दोषदर्शकः । असुखितादरोऽभूत् सोऽभक्तेभ्योऽनुजीविनां ।
मनागनवधानेन स्खलतस्तस्य भूपतेः । इत्थं राज्यस्थितिरगादचिरेण विसूत्रतां ।
उपेक्षितास्य निर्द्रोहैरयतन्ना जितात्मनः । अथ लब्धबलास्तस्य नाशाय द्रोहिमन्त्रिणः ।
प्रभोः सङ्कोचिताशैस्तैस्तरद्भिर्निरवग्रहं । राज्यं जिहीर्षवो भूपाश्चक्रिरे भूम्यनन्तराः ।
तदनु प्राणिताः सर्व्वे तेते नानादिगाश्रयाः । आसन् राज्यामिषं प्राप्तुं श्येना इव ससम्भ्रमाः ।
अथोत्पन्नभयो राजा न शशाक निजस्थितिं । व्यवस्थापयितुं यन्त्रच्युतां कारुः शिलामिव ।
चिरक्षुब्धे क्षमाभर्त्तुस्तस्मिन् राज्ये विसंष्ठुले । उपायोऽस्य स्थिनैर्हेतुर्नैकः कस्य न पप्रथे ।
दृष्टदोषान् स्थितिं प्राप्तो हन्यादस्मानसंशयं । विचिन्त्येति न सामास्य जगृहुर्निजमन्त्रिणः ।
अथ निरुरुधुस्ते सन्नद्धाबलैर्नृपमन्दिरं । व्यवहितजनाक्रन्दं भेरीरवैरतिभैरवैः ।
मदकरिघटाकेतुच्छायानिरुद्धरविप्रभा भवनवलभी सन्तन्वन्तो दिवापि तमोवृताः ।
तैर्गन्तुं स्वभुवो निवारितरणैर्दत्तेऽवकाशे ततस्त्यक्तश्रीर्नगरान्तरात्स नृपतिस्तात्पर्य्यतो निर्ययौ ।
आजानेयरजोङ्गरागललनाप्रस्थानसन्दर्शनक्षुभ्यत्पौरजनाश्रुलाजकणिकाकीर्णेन राजाध्वना ।
राज्याच्युतस्य बहुशः परिवाररामाः कोशादि तस्य रिपवो भजतो विजह्रुः ।
उर्व्वीरुहो विगलितस्य नगेन्द्रशृङ्गादक्षीफलादिरभसादिव गण्डशैलाः ।

रम्यैः शैलपथैर्व्रजन् श्रमवशाच्छायां श्रितः शाखिनामासीनः प्रचलायितेन सुमहद्दुःखं विसस्मार सः ।
दूरात्पामरफुत्कृतैः श्रुतिपथप्राप्तैः प्रबुद्धस्त्वभूद्दृष्टैर्निर्झरवारिभिः सहमनाः श्वभ्रे निमज्जन्निव ।
नानावीरुत्तृणपरिमलैरुग्रगन्धा वनोर्व्यो रम्भाचीरप्रतिहतशिलाः पिच्छिलाश्चाद्रिकुल्याः ।
क्रान्त्वा श्रान्तैर्बिसकिसलयच्छायमुग्धाङ्गलेखैरत्युत्सङ्गं निहिततनुभिर्मूर्छितं तस्य दारैः ।
पर्य्यस्ताद्रितटाद्विलोक्य सुचिरं दूरीभवन्मण्डलं द्रागामन्त्रयितुं जहत्सु नृपतेर्दारेषु पुष्पाञ्जलीन् ।
चीराणीष्टविकीर्णपक्षतिनमच्चुण्डं स्वनीडस्थितैः सावेगं गिरिकन्दरासु पततां द्वन्द्वैरपि क्रन्दितं ।
स्तनयुगवलनद्धस्रस्तमूर्द्धांशुकानां चिकुरचनविलोलं वीक्ष्य दूरात् स्वदेशं ।
अवहत रुदतीनां भालविन्यस्तहस्तं पथि नृपवनितानामश्रुभिर्निर्झराम्भः ।
प्रीतिस्थैर्य्यैरुचितवचनाचित्रयाशोककान्त्या निर्व्याजाज्ञाग्रहणगुरुभिस्तस्य तैश्चोपचारैः ।
तस्य स्नेहादुपगतवतो राज्यविभ्रंशदुःखं मन्दीचक्रुः स्वभुवि सुजना भूपतेर्भूमिपालाः । ३७०

इति श्रीकाश्मीरकमहामात्यचम्पकप्रभुसूनोः कह्लणस्य कृतौ राजतरङ्गिण्यां प्रथमस्तरङ्गः ।

चतुर्दशाधिकं वर्ष सहस्रं नववासराः । मासाश्च विगतास्त्वस्मिन्नष्टाविंशति राजसु ॥

---

## ॥ अथ द्वितीयस्तरङ्गः ॥



विहितमज्जगोः शृङ्गाग्राभ्यां धनुर्घटितं तथा नरकरदिनोर्दंष्ट्राग्राभ्यां गणं प्रतिमष्टकृतः ।
द्विविधघटनावाञ्छ्याना निधेरुचिता विभोर्जयति ललनापुंभागाभ्यां शरीरविनिर्मितिः ॥
भूयोराज्यार्जनोद्योगस्तेनात्यज्यत भूभुजा । जरसा शमिवाण्या च कर्णमूलमनाश्रया ।
अनयद्दिनयोदात्तः समं स्वविषयेण तान् । विषयान् वशिनामग्र्य स तान् पश्चापि विस्मृतिं ।
धावन्नाज्येच्छया दुर्गागलिकायां स्वमन्त्रिभिः । कालेन स्थापितो बद्धैत्यभ्यधायि तु कैरपि ।
अथ प्रतापादित्याख्यस्तैरानीय दिगन्तरात् । विक्रमादित्यभूभर्त्तुर्ज्ञातिरत्राभ्यषिच्यत ।
शकारिर्विक्रमादित्य इति सम्भ्रममाश्रितैः । अन्यैरत्रान्यथालेखि विसंवादि कदर्थितं ।
इदं स्वभेदविधुरं हर्षादीनां धराभुजां । कश्चित्कालमभूद्राज्यं ततःप्रभृति मण्डलं ।
असपूर्व्वापि तेनोर्व्वी सपूर्व्वेव महीभुजा । लालिता हृदयज्ञेन पत्या नववधूरिव ।
भुक्त्वा द्वात्रिंशतं वर्षान् भुवं तस्मिन्दिवं गते । जलौकास्तत्सुतो भूमेर्भूषणं समपद्यत ।
पितुरेव समं कालं वृद्धिहेतोः स दिद्युते । विषुवत्पूर्णशीतांशुरिव शीतेतरार्चिषः ।
अथ वाकपुष्टया सार्द्धं देव्या दिव्यप्रभावया । भुवन्तत्प्रभवोऽभुञ्जत्तुञ्जीनो रञ्जयन् प्रजाः ।
दम्पतीभ्यामियं ताभ्यामभूष्यत वसुन्धरा । गङ्गामृगाङ्कखण्डाभ्यां जटाभूरिव धूर्जटेः ।
मण्डलं साध्वधत्तान्तौ नानार्थवमनोरमं । शतद्रुदापयोवाहौ माहेन्द्रमिव कार्म्मुकं ।
चक्राते च महाभागौ विभ्रमाभरणं भुवः । तुञ्जेश्वरं हरावासं कतिकाख्यञ्च पत्तनं ।
कश्चिन्मारवराज्यान्तः स्थाने चण्डातपोज्ज्वले । तत्प्रभावेण फलितं वृक्षैस्तत्पणरोपितैः ।
नाट्यं सर्व्वजनप्रेक्ष्यं यश्चक्रे स महाकविः । द्वैपायनमुनेरंशस्तत्काले चन्द्रकोऽभवत् ।
तयोः प्रभावमाहात्म्यजिज्ञासार्थमिवोद्यता । प्रजास्तु दुःसहा जातु व्यापद्दैवी व्यजृम्भत ।
पाकोन्मुखशरच्छालिच्छन्ने केदारमण्डले । मासि भाद्रपदेऽकस्मात् पपात तुहिनं महत् ।
तस्मिन् विश्वचयोद्युक्तकालाट्टहसितोपमे । न्यमज्जन् शालयः सार्कं प्रजानां जीविताशया ।

अथासीत् क्षुत्परिक्षामजनप्रेतकुलाकुलः। प्राकारो निरयस्येव घोरो दुर्भिक्षविभ्रमः।
पत्नीप्रीतिं सुतस्नेहं पितृदाक्षिण्यमातुरः। कुक्षिम्भरिः क्षुदुत्तप्तो विसस्माराखिलो जनः।
क्षुत्तापाद्विस्मरन् लज्जामभिमानं कुलोन्नतिं। अशनाहंक्रियाघाती लोकोऽलक्ष्मीकटाक्षितः।
क्षामं कण्ठगतप्राणं याचमानं सुतं पिता। सुतो वा पितरं त्यक्त्वा चकार स्वस्य पोषणं।
स्नाय्वस्थिशेषे बीभत्से स्वदेहेऽहंक्रियावतां। अभूद्भोज्यार्थिनां युद्धं प्रेतानामिव देहिनां।
रुक्षाभिभाषी क्षुत्क्षामो घोरो दिक्षु क्षिपन्। एक एको जगज्जीवैरियेष स्वात्मपोषणं।
तस्मिन् महाभये घोरे प्राणिनामतिदुःसहे। ददृशे लोकनाथस्य तस्यैव करुणार्द्रता।
निवारितप्रतीहारः सरलौषधिशोभिनः। दर्शनेनैव दीनानामलक्ष्मीक्लममच्छिनत्।
सपत्नीको निजैः कोषैः सञ्चयैर्मन्त्रिणामपि। क्रीतान्नः स दिवारात्रं प्राणिनः समजीवयत्।
अटवीषु श्मशानेषु रथ्यास्ववसथेषु च। क्षुत्क्षामः क्ष्माभुजा तेन नहि कश्चिदुपेक्ष्यत।
अतो निःशेषितधनः क्षीणान्नां वीक्ष्य मेदिनीं। क्षपायामेकदा देवीमेवमूचे सुदुःखितः।
देव्यस्मदपचारेण ध्रुवं केनापि दुस्तरा। जाता निरपराधानां जनानां व्यापदीदृशी।
धिङ्मामधन्यं यस्याग्रे लोकोऽयं शोकपीडितः। पश्यन्नशरणामुर्वीमनुपाह्यो विपद्यते।
प्रजा निःशरणा एता अन्योन्यं बान्धवोज्झिताः। अरक्षिता भयेऽमुष्मिन् किं कार्यं जीवितेन मे।
यथा कथञ्चिल्लोकोऽयं दिनान्येतानि यत्नतः। मयातिवाहितः सर्व्वे नच कोऽपि व्यपद्यत।
अतिक्रान्तप्रभावेयं कालदौरात्म्यपीडिता। निष्किञ्चनाद्य सञ्जाता पृथिवी गतगौरवा।
तदिमाः सर्व्वतो मग्ना दारुणे व्यसनार्णवे। उपायः कतमस्तावत् समुद्धर्त्तुं क्षमः प्रजाः।
निरालोको हि लोकोऽयं दुर्दिनग्रस्तभास्करः। कालरात्रिकुलैर्व्विश्वक्परीत इव वर्त्तते।
हिमसङ्घातदुर्लङ्घ्यक्षितिभृद्रुद्धनिर्गमाः। बद्धद्वारकुलायस्थखगवद्विवशा जनाः।
शूराश्च मतिमन्तश्च विद्यावन्तश्च जन्तवः। कालदौरात्म्यतः पश्य जाता निहतयोग्यताः।
ग्रामाः काञ्चनपुष्पकुड्मलकुलच्छन्ना न काः क्ष्मातले सौजन्यामृतवर्षिभिस्तिलकितं सेव्यैर्न किं मण्डलं।
पन्थानः सुचिरोपचाररुचिरैर्व्याप्ता न कैः संस्तुतैस्तेषामत्र न सन्ति निष्कुतगुणाः कालेन ये मोहिताः।
तदेष गलितोपायो जुहोमि ज्वलने तनुं। नतु द्रष्टुं समर्थोऽस्मि प्रजानां नाशमीदृशं।
धन्यास्ते पृथिवीपालाः सुखं ये निशि शेरते। पौरान् पुत्त्रानिव पुरः सर्व्वतो वीक्ष्य निर्वृतान्।
इत्युक्त्वा करुणाविष्टो मुखमाच्छाद्य वाससा। निपत्य तल्पे निःशङ्कं रुरोद पृथिवीपतिः।
निर्व्वातनिमितैर्द्दीपैरुन्नीतैः कौतुकादिव। वीक्षमाणाय तं देवी जगाद जगतीभुजं।
राजन् प्रजानां कुरुते कोऽयं मतिविपर्य्ययः। येनेतरस्येव स्थैरमधीरोचितमीहसे।
यदसाध्यानि दुःखानि छेत्तुं न प्रभविष्णुता। तन्महीपाल महतां महत्त्वस्य किमङ्कनं।
क शक्रः कतमः स्रष्टा वराकः कतमो यमः। सत्यव्रतानां भूपानां कर्त्तुं शासनलङ्घनं।
पत्यौ भक्तिव्रतं स्त्रीणामद्रोहो मन्त्रिणां व्रतं। प्रजानुपालनेऽनन्यकर्मता भूभृतां व्रतं।

उत्तिष्ठ प्रतिनामस्य क्क विपर्य्येति मद्वचः । प्रजापाल प्रजानान्ते नास्त्येव क्षुत्कृतं भयं।
इति संरम्भतः प्रोक्ते तयानुध्याय देवताः । प्रतिगेहं गतप्राणः कपोतनिवहोऽपतत् ।
प्रातस्तन्नृपतिर्व्वीक्ष्य व्यरंसीन्मरणोद्यमात् । प्रजाश्च प्रत्यहं प्राप्तैः कपोतैर्जीवितं दधुः ।
वस्त्वन्तरं किमपि तत् साध्वी नूनं ससर्ज्ज सा । जनताजीवितावाप्त्यै न कपोतास्तु तेऽभवन् ।
तादृशं नहि निर्व्याजप्राणिकारुण्यशालिनां । हिंसया धर्म्मचर्य्यायाः शक्यं चापि कलङ्कनं ।
अभवन्निर्म्मलं व्योम देवीकृत्यैः सह क्रमात् । सार्कं भूपालशोकेन दुर्भिक्षं च शमं ययौ ।
सा भूतिविभवोदग्रमग्रहारं द्विजन्मनां । सती कनीमुषश्चक्रे रामुषं चापकल्मषा ।
वर्षैः षट्त्रिंशता शान्ते पत्या विरहजो ज्वरः । तत्यजे ज्वलनज्वालाजालिनप्रच्छदे तया ।
सा यत्र शुचिचारित्रा विपन्नं पतिमन्वगात् । स्थानं जनैस्तदाक्रष्टाटवीत्यद्यापि गद्यते ।
चारुचारित्रया तत्र तया सत्रेऽवतारिते । नानापथागतानाथसार्थैरद्यापि भुज्यते ।
आभ्यामभ्यधिकं कर्त्तुं शक्तिः कस्येति निश्चितं । विचिन्त्यारोचकी धाता नापत्यं निर्म्ममे तयोः ।
वेधाः परां धुरमुपैति परीक्षकाणामिक्षोः फलप्रजननेन कृतश्रमो यः ।
विस्तारितोद्धुरमुदारमयोग्यता तु तस्मादुदेत्य किमिवाभ्यधिकं विदध्यात् ।
दीर्घदुर्दिननष्टार्कराड्भ्रान्तात्मापचारतः । ज्ञात्वा राज्यमिषाद्देहं सा चकारेति केचन ।
ततोऽन्यकुलजो राजा विजयोऽष्टावक्षत् समाः । पत्तनेन परीतं यश्चकार विजयेश्वरं ।
सुतो महीमहेन्द्रस्य जयेन्द्रस्तस्य भूपतेः । क्ष्मामाजानुभुजो राजा बुभोजाथ प्रथुप्रथः ।
अलोलकीर्त्तिकल्लोलदुकूलवलनोज्ज्वलां । बभार यद्भुजस्तम्भो जयश्रीशालभञ्जिकां ।
तस्याभूदद्भुतोदन्तभवभक्तिविभूषितः । राज्ञस्सन्धिमतिर्नाम मन्त्री मतिमतां वरः ।
नास्त्युपायः स संसारे कोऽपि योऽपिहितुं क्षमः । भूपालमत्तकरिणामेषां चपलकर्णतां ।
ख्यातश्रुतमतिः सन्धः सोऽप्यसुकृतीति यद्विटैः । तस्मिन्नीर्ष्याचिरं देवस्तेनताड्यत भूभुजा ।
निवारितप्रवेशोऽथ सकोपशमहेतुकं । निनाय हृतसर्व्वस्वं यावदायुर्दरिद्रतां ।
तस्य भूपतिविद्वेषग्रीष्मोष्मपरिशोषिणः । आप्यायं राजपुरुषा वार्त्तयापि न चक्रिरे ।
गिरं गभीरो गृह्णाति क्ष्माभृद्यावत्तदग्रगाः । उक्तानुवादिनस्तावद्ग्राम्यं प्रतिरवा इव ।
स तु राजविरुद्धत्वदारिद्र्याभ्यां न विव्यथे । गतप्रत्यूहया प्रीतः प्रज्ञया हरसेवया ।
अथ भाव्यर्थमाहात्म्यात् पप्रथे प्रतिमन्दिरं । राज्यं सन्धिमतेर्भावीत्यश्रुतापि सरस्वती ।
नाचोदिता वाक् चरतीत्याप्तेभ्यः श्रुतवान्नृपः । ततः सम्भूतसन्त्रासः कारावेश्मनि तं व्यधात् ।
तत्र तस्योपनिगडैः पीडिताङ्गैर्व्विशुष्यतः । पूर्णोऽभूद्दशमो वर्षो भूपतेश्चायुषोऽवधिः ।
निष्पुत्रः स महीपालो मुमूर्षुर्दाहमाददे । रोगात्यया पीडया च चिन्तया च तदीयया ।
ऊष्मायमाणे विद्वेषवह्निना ज्वलतानिशं । न विना तद्वधं मेने भवितव्यंप्रतिक्रियां ।
भाव्यर्थस्य बुधाः कुर्य्युरुपायं स्थगनाय यं । स एवापादनं द्वारं ज्ञेयं दैवेन कल्पितं ।

दग्धाङ्गारकदम्बके विलुठतः स्तोकोन्मिषत्तेजसो वेधा वह्निकणस्य शक्तिमतुलामाधातुकामो हठात्।
तन्निर्व्वापणमिच्छतः प्रतनुते पुंसः समीपस्थिते सन्तापद्रुतभूरिसर्पिषि घटे पानीयकुम्भभ्रमं।
अथ राजाज्ञया क्रूरैर्वधकर्म्माधिकारिभिः। निशि सन्धिमतिः शूले समारोप्य विपादितः।
प्रोतशूले श्रुते तस्मिन् शोकशङ्कुर्महीपतेः। निरगाद्रोगभग्नस्य पूर्व्वं पश्चात्तु जीवितं।
सप्तत्रिंशतिवर्षेषु यातेष्वस्मिन्निरन्वये। प्रशान्तभूमिपालाभूत् कतिचिद्दिवसानि भूः।
अथ सन्धिमतिं बुद्धा तथा व्यापादितं गुरोः। ईशानाख्यस्य हृदयं विवशं वशिनोऽप्यभूत्।
शिरीष इव संसारे सुखोच्छेद्ये मनीषिणां। हन्ता नृशंसस्तद्वृन्तमिवैकमवशिष्यते।
स श्मशानभुवं प्रायादनाथस्येव शुष्यतः। कर्त्तुं विनयिनस्तस्य सोचितामन्त्यसत्क्रियां।
तत्रास्थिशेषमद्राक्षीत्स्पृश्यमानं वृकादिकैः। शूलमूलावबद्धास्थिखण्डावष्टम्भनिश्चलं।
समीरणसमाकीर्णैः सुषिरन्ध्राग्रनिर्गतैः। ध्वनितैरनुशोचन्तमिवावस्थां तथाविधां।
हा वत्स द्रष्टुमीदृक्त्वं जीवाम्यद्येति वादिना। तस्याकृष्यत शूलान्तः प्रोतं तेनाथ कीकसं।
वेष्टिताङ्घ्रिः शिरःशीर्णैस्तत्कचैर्धूलिधूसरैः। अनैषीत्तं स्वकं कालं वारयन् भाषतो वृकान्।
उचितां सत्क्रियां कर्त्तुं ततस्तस्य समुद्यतः। भाले विधातृलिखितं श्लोकमेतमवाचयत्।
यावज्जीवं दरिद्रत्वं दशवर्षाणि बन्धनं। शूलस्य पृष्ठे मरणं पुनाराज्यं भविष्यति।
पादत्रयस्य दृष्टार्थे श्लोकस्यासीत् स योगवित्। द्रष्टव्ये तुर्य्यपादार्थे प्रत्यये कौतुकान्वितः।
अचिन्तयच्च संभ्रान्तः कथमेतद्भविष्यति। उवाच च विधेः शक्तिमचिन्त्यां कलयंश्चिरं।
तत्तत्कर्म्मव्यतिकरकृतः पारतन्त्र्यानुरोधात् सन्नाः सर्व्वे व्यवसितदृढोन्मूलनाय प्रयत्नात्।
चित्रं तत्राप्युदयति विधेः शक्तिरत्यद्भुतेयं यन्माहात्म्याद्विविधघटनासिद्धयो निर्निरोधाः।
मणिपूरपुरे पार्थं निहतं समजीवयत्। फणिकन्याप्रभावेण सर्व्वाश्चर्य्यनिधिर्विधिः।
द्रोणपुत्रास्त्रनिर्दग्धं मातुर्गर्भे परीक्षितं। जीवयन् कृष्णमाहात्म्याद्धाता धुर्य्योऽधिकारिणं।
कथं भस्मीकृतं दैत्यैर्नागांस्तार्क्ष्येण भक्षितान्। पुनर्जीवयितुं को वा दैवादन्यः प्रगल्भते।
इत्युक्त्वा भाविनोऽर्थस्य द्रष्टुं सिद्धिं समुद्यतः। तत्रैव बद्धवसतिः कङ्कालं स ररक्ष तं।
अथार्द्धरात्रे निर्निद्रस्तथैवाद्भुतचिन्तया। धूपाधिवासमीशानो घ्रातवान् दिव्यमेकदा।
प्रचण्डवादनादण्डोद्घृष्टघण्टाघटाकृतैः। खट्वाङ्गडमरुनिर्घोषैर्घर्घरं श्रुतवान् ध्वनिं।
उद्घाटिततमोरिः स ततः पितृवनावनौ। दर्शयन् योगिनीस्तेजःपरिवेषान्तरस्थिताः।
तासां संभ्रममाकर्ण्य कङ्कालं स्वापवाहितं। ईशानस्तां श्मशानोर्व्वीं धृतासिशङ्कितो ययौ।
अथापश्यत्तरुच्छन्नः शायितं मण्डलान्तरे। सन्धीयमानसर्व्वाङ्गं कङ्कालं योगिनीगणैः।
उन्मदस्मरसंयोगवाञ्छासम्पदेवताः। वीराम्नाभात् समन्विष्य कङ्कालं तमपाहरन्।
एकमेकं स्वमङ्गञ्च विनिधाय क्षणादथ। कुतोऽप्यानीय पुंलक्ष्मपूर्णाङ्गं तं प्रचक्रिरे।
अथ पुर्य्यष्टकभ्राम्यदनाश्रमान्यविग्रहं। योगेनाकृष्य योगिन्यस्तत्र सन्धिमतेर्दधुः।

ततः सुप्तोत्थित इव प्रभुर्दिव्यविलेपनः। समभुज्यत ताभिः स यथेच्छं चक्रनायकः।
ईशानस्तस्य देवीनां वितीर्णाङ्गहृतिं पुनः। क्षपायां चोद्यमानायां चकितः पर्य्यशङ्कत।
नदंस्तद्रक्षया धीरः स च तत् स्थानमाययौ। तत्र योगेश्वरीचक्रं विप्रमन्त्रैरधीयत।
अथाश्रूयत वाक्यासां माभूदीशान भीस्तव। नास्त्यङ्गहानिरस्माकं हृते चास्मिन्न वञ्चना।
अस्मद्वराद्दिव्यवपुः सन्धितः सन्धिमानसौ। आर्य्यनामार्य्यराजाख्यः ख्यातो भुवि भविष्यति।
ततो दिव्याम्बरः स्रग्वी दिव्यभूषणभूषितः। ववन्दे सन्धिमान् भक्त्या प्राप्तपूर्व्वस्मृतिर्गुरुं।
ईशानोऽपि तमालिङ्ग्य स्वप्नेष्वपि सुदुर्लभं। भूमिकामाललम्बे कामिति को वक्तुमर्हति।
असारस्य विचित्रस्य संसारं ध्यायतोर्मिथः। विवेकविशदा तत्र प्रावर्त्तत तयोः कथा।
अथ वार्त्तां विदित्वेमां कुतोऽपि नगरौकसः। सवालवृद्धाः सामात्यास्तमेवोद्देशमाययुः।
पूर्व्वाकृतिविसंवादाद्भ्रमोनायं स इत्यथ। तेनाच्छिद्यत संशयिनिखिलान् पृच्छतां वचः।
अर्थानां शासितुं राष्ट्रं पौराणामपराजकं। सोऽन्वमन्यत कृच्छ्रेण निस्पृहः शासनाद्गुरोः।
प्रापय्योपवनोपान्तं तं दिव्याकृतिशोभिनं। सद्व्यं स्नापयामासुरभिषेकाम्बुभिर्द्विजाः।
नवराजोचिताचारे न स शिक्षामपेक्षत। दृष्टकर्म्मा समस्तास्तु निस्तुषाः प्रक्रिया व्यधात्।
स राजोचितनेपथ्यः पौराशीर्घोषशोभिनीं। सौधाग्निषक्तलाजवर्षां ससैन्यां प्राविशत् पुरीं।
तस्मिन् विरजसि प्राज्यमाक्रामति नृपासनं। आचक्राम प्रजा व्यापन्न दैवी न च मानुषी।
प्राहरन् हृदयं तस्य शृङ्गाररहितविभ्रमाः। नितम्बिन्यो वनभुव शमिनो ननु योषितः
वनप्रसूनसम्पर्कपुण्यगन्धैस्तपस्विनां। कर्पूरधूपसुरभिः करैः स्पृष्टः स पिप्रिये।
भूतेशवर्द्धमानेशविजयेशानपश्यतः। नियमो राजकार्य्येषु तस्याभूत् प्रतिवासरं।
हरायतनसोपानचालनाम्भःकणाञ्चितैः। संस्पृष्टः पवनैः सोऽभूदानन्दास्यन्दविग्रहः।
पूर्व्वपूजापनयने निराडम्बरसुन्दरः। तेनैव द्रष्टुमज्ञायि स्नपितो विजयेश्वरः।
लिङ्गपीठलुठत्स्नानकुम्भाम्भःक्षोभभूर्ध्वनिः। शयानस्याप्यभूत्तस्य वल्लभो वल्लकीध्वनिः।
तापसैर्भस्मरुद्राक्षजटाजूटाङ्कितैर्वभौ। तस्य माहेश्वरी पर्षदिव भूमिपतेः सभा।
शिवलिङ्गसहस्रस्य प्रतिष्ठाकर्म्मणि प्रभोः। प्रतिज्ञा प्रत्यहं तस्य नाभूद्विघटिता क्वचित्।
प्रमादात्तदनिष्पत्तौ शिलामुत्कीर्य्य कल्पिता। सहस्रलिङ्गी तद्भृत्यैः सर्व्वतोऽद्यापि दृश्यते।
तासु तासु स वापीषु लिङ्गव्याजादरोपयत्। स पुण्यपुण्डरीकाणां जन्मनेऽचपरम्पराम्।
स्थाने स्थाने जलान्तस्थ वज्रसंख्यैर्निवेशितैः। अनयन्नर्म्मदाभङ्गिं शिवलिङ्गैस्तरङ्गिणीं।
प्रतिलिङ्गं महाग्रामाः प्रत्यपाद्यन्त तेन ये। पर्य्यटामय तद्भोगः कालेनान्तर्द्धिमागतः।
अकरोत् स महाहर्म्यैर्महालिङ्गैर्महावृषैः। महात्रिशूलैर्महतीं महामाहेश्वरो महीं।
कृत्वा सन्धीश्वरं देहसन्धानपितृकानने। ईशानस्य गुरोर्नाम्ना व्यधादीशेश्वरं हरं।
खेदाख्य भीमां देवीश्च देशांस्तान्यान् पदे पदे। समठप्रतिमालिङ्गैर्हर्म्यैर्निन्ये सृहार्घतां।

स्वयं भूभिश्च तीर्थैश्च पूतं भक्तिविभूषितः। स एव भोक्तुमशासीत् प्राज्यः काश्मीरमण्डलं।
स्नातस्य निर्झराम्भोभिः पुष्पलिङ्गार्च्चनोत्सवैः। राज्ञस्तस्य वनोर्वीषु मासः पुष्पाकरो ययौ।
स चातिरम्यः काश्मीरो ग्रीष्मस्त्रिदिवदुर्लभः। हिमलिङ्गार्च्चनैः प्रायाद्वनान्तेषु कृतार्थतां।
फुल्लाब्जखण्डरुद्धाशाः प्राप्य पुष्करिणीतटीः। लक्ष्मीसखः स खण्डेन्दुचूडाध्यानपरोऽभवत्।
नीलोत्पलवतीर्वापीरगस्त्योदयनिर्विषाः। अवगाह्य हरार्च्चाभिः शरदं निर्विवेश सः।
सार्द्धं तपोधनैस्तैस्तैर्भजतो जागरोत्सवान्। तस्याभूवन् भुवोभर्त्तुरमोघामाघरात्रयः।
अत्यद्भुतं राज्यलाभमित्थं सफलयन् कृती। पञ्चाशतं त्रिवर्षोनामत्यकामत् स वत्सरान्।
समव्यसनिनस्तस्य राज्यकार्य्याण्यपश्यतः। तस्मिन् काले प्रकृतयो विरागं प्रतिपेदिरे।
अन्वैष्यत नृपस्ताभिः कश्चिद्राज्याय प्रभुश्च्युते। राजपुत्त्रोजिगीषुश्च श्रीमान् यौधिष्ठिरे कुले।
जुगोप गोपादित्याख्यः काश्मीरेन्द्रजिगीषया। युधिष्ठिरप्रपौत्त्रं हि गान्धाराधिपतिस्तदा।
वसन्नपास्तसाम्राज्यः स तत्र तनयं क्रमात्। अवाप लक्षणैर्दिव्यैरमोघं मेघवाहनं।
स तत्र पितुरादेशाद्वैष्णवान्वयजन्मनः। राज्ञः प्राग्ज्योतिषेन्द्रस्य ययौ कन्यास्वयम्वरे।
तत्र तं वारुणं छत्रं छायया राजसन्निधौ। भेजे वरस्रजा राजकन्यका चाम्रुतप्रभा।
तेन तस्य निमित्तेन वृद्धिमागामिनीं जनाः। अजानन्नम्बुवाहस्य पाश्चात्येनेव वायुना।
राज्ञा हि नरकेणैतद्वरुणादुष्णवारणं। आनीतमकरोच्छायां न विना चक्रवर्त्तिनं।
तमन्तिकं पितुः प्राप्तं पत्न्या लक्ष्म्या च संश्रितं। भुवा निमन्त्रयामासुर्मन्त्रिणोवंश्ययोग्यवान्।
अथार्य्यराजो विज्ञाय स्वराज्यं भेदजर्ज्जरं। प्रतिचक्रे न शक्तोऽपि तस्थौ तत्यक्तुमुत्सुकः।
अचिन्तयच्च सत्यं मे सम्प्रीतोऽद्भुतभावनः। सिद्धिविघ्नानमून् दीर्घानपाकर्त्तुं समुद्यतः।
छत्ये बहूनि निष्पाद्य श्रमात् कौसीद्यमाश्रयन्। प्राप्तयोवाप्यवेगोदिष्ट्या मोहितोऽस्मि न निद्रया।
स्वकुले त्यजता लक्ष्मीं विरक्तां बन्धकीमिव। हठनिर्वासनव्रीडा दिष्ट्या नासादिता मया।
शैलूषस्येव मे राज्यं रङ्गेऽस्मिन् वलातचिरं। निर्व्यूढावपि वैराग्यं दिष्ट्या न प्रेचकागता।
दिष्ट्या सदैव वैमुख्यमुच्चैरुद्घोषयन् श्रियः। त्यागच्चणेन भीतोऽस्मि विकत्थनइवाहवे।
इति सञ्चिन्तयन्नन्तः सर्व्वत्यागोन्मुखो नृपः। मनोराज्यानि कुर्व्वाणो दरिद्रइव पिप्रिये।
अन्येद्युः प्रकृतीः सर्व्वाः सन्निपत्य सभान्तरे। ताभ्यः प्रत्यर्पयन्न्यासमिव राज्यं सुरक्षितं।
उज्झितं स्वेच्छया तस्य प्रयत्नेनापि नाशकन्। तं स्वीकारयितुं कश्चित् फणीन्द्रमिव कञ्चुकं।
अर्घ्याग्निमुपादाय सोऽथ प्रायादुदङ्मुखः। धौतवासा निरुष्णीषः पद्भ्यामेव प्रजेश्वरः।
तस्य पादार्पितदृशो व्रजतोमानिनः प्रभोः। पश्चान्तं जग्मुः पौरा निःशब्दस्वदस्रवः।
सवितर्थादितगव्यूतिरुपविश्य तरोरधः। जनमेकैकमुद्वाष्पं न्यवर्त्तयत सान्त्वयन्।
पथि शिखरिणां मूले मूले विलम्ब्य गतश्रमाम् मितपरिकरोगच्छन्पूर्द्धं क्रमात् समदृश्यत।
गदमयशुधाः सम्पूर्ण्याधेयंजम् स निजापदाप्तद इव विनिर्यातः सोके. हतानुगमोजसे.।

नि शेषं निकटात् सलोकमटवीमध्ये निरुध्यत्पदं शोकावेशवशाप्यगद्गदपदं संमान्य चोत्सार्य्य च।
भूजलकुपरिरोधमर्म्मरमरुन्निद्राणसिद्धाध्वगश्रेणीमौलिमणिप्रभोज्ज्वलगुहागेहं जगाहे वनं। १००
अथ वनसरसीतटद्रुमाध.पुटकघटोदरसंभृताम्बुपूरां। वसतिमकृत वासरावसाने शुचितरुपल्लवकल्पितोचतल्पां।
शृङ्गाश्रसक्षितातपाः शवलितच्छायाभुवः शाद्वलैरुत्फुल्लामलमल्लिकाततमिलत्पुञ्जजल्लीजनाः।
सध्यानावनशालरेणुरणितोन्मिश्रैः प्रपाताम्बुभिः श्रान्तं दृक्पथमागतास्तमनयन्निद्रामदूराद्रयः।
रिरसितैः पदे पदे स प्रतिभटतां पटहध्वनेर्दधानैः। श्रमनुत रटितैश्च कर्क्करेटाः परिगलितां गमनोन्मुखत्त्रियामाम्।
चुर्व्विधिवदुपास्य पूर्व्वसन्ध्यामासन्ने नलिनसरस्यपास्तनिद्रः। क्ष्मापालः परिचितसोदराम्बुतीर्थं नन्दीशाध्युषितमवाप
भूतभर्त्तुः।
नन्दिक्षेत्रे त्रिभुवनगुरोः सोऽप्यतस्तत्र यावत्तस्थौ तावत् स्वयमभिमतावाप्तये जायते स्म। १०५
भस्मस्मेरः सुघटितजटाजूटबन्धोऽक्षसूत्री रुद्राक्षाङ्कोऽजरठमुनिभि सस्पृहं वीक्ष्यमाणः।
भ्राम्यच्छीकण्ठदत्तप्रनजनितमहासत्क्रियो भैक्षहेतोर्भिक्षाधानोद्यतास्तु प्रतिमुनिनिलयं संभ्रमात्तापसीषु।
हृच्चैर्भिक्षाकपाले शुचिफलकुसुमश्रेणिभिः पूर्य्यमाणे मान्यो वैराग्ययोगेऽप्यनुपतनपरप्रार्थनालाघवोऽभूत्॥ १०८
राजानः॥ ६ ॥ आदितः राजानः॥ ४४ ॥ ग्रन्था आदितः॥ ५४२ ॥
इति श्रीकाश्मीरिकमहामात्यचम्पकप्रभुसूनोः कह्लणस्य कृतौ राजतरङ्गिण्यां द्वितीयस्तरङ्गः॥
शतद्वये वत्सराणामष्टभिः परिवर्जिते। अस्मिन् द्वितीये व्याख्याताः षट् प्रख्यातगुणा नृपाः॥



# तृतीयतरङ्गः ॥



मुग्धेभाजिनमस्य कुम्भकुहरे मुक्ताः कुचाग्रोचिताः किं भालज्वलनेन कज्जलमतः स्त्रीकार्य्यमक्ष्णोः कृते ।
संधाने वपुरर्द्धयोः प्रतिवदन्नेवं निषेधेऽर्थिनः कर्त्तव्ये प्रिययोत्तरानुसरणाद्युक्तो हरः पातु वः ।
अथाप्तसत्पृथुश्लाघमानिन्युर्मेघवाहनं । गान्धारविषयं गत्वा सचिवाधिष्ठिताः प्रजाः ।
रक्तप्रजस्य भूभर्त्तुः पश्चाल्लोकानुरञ्जनं । तस्याज्ञायि जनैर्धौतचाम चालनसन्निभं ।
स पुनर्ब्बोधिसत्त्वानामपि सत्त्वानुकम्पिना । चर्य्यामुदात्तचरितैरत्यशेत महाशयः ।
तस्याभिषेक एवाज्ञां धारयन्तोऽधिकारिणः । सर्व्वतो मारमर्य्यादापटहानुदघोषयन् ।
कल्याणिना प्राणिवधे तेन राज्ञा निवारिते । निष्पापां प्रापितां वृत्तिं स्वकोषात् शौनिकादयः ।
तस्य राज्ये जिनस्येव मारविद्वेषिणः प्रभोः । क्रतौ घृतपशुः पिष्टपशुर्भूतबलावभूत् ।
स मेघवननामानमग्रहारं विनिर्म्ममे । स युष्टग्रामकृत् पुण्यज्येष्ठो मेघमठं तथा ।
भोगाय देशभिक्षूणां वल्लभाऽस्यामृतप्रभा । विहारमुच्चैरमृतभवनाख्यमकारयत् ।
देश्यैकदेशाल्लोनाम्न. प्राप्तस्तस्याः पितुर्गुरुः । स्तुत्या तद्भाषया शेक्तो लोस्तोन्यास्तूपकार्य्यकृत् ।
चक्रे नडवने राज्ञी यूकदेव्यभिधा वधूः । विहारमद्भुताकारं सपत्नीस्पर्द्धयोद्यता ।
अर्द्धे यस्मिन्नधः शिक्षाचारास्तत्रार्पितास्तया । अर्द्धे गार्हस्थ्यगर्ह्याश्च सस्त्रीपुत्त्रपशुश्रियः ।
अथेन्द्रदेवीभवनमिन्द्रदेव्यभिधा व्यधात् । विहारं सचतुःशालं स्तूपं भूपप्रियापरा ।
अन्याभिः खादनाम्नाम्ममुखाभिर्निजाख्यया । देवीभिस्तस्य सहिता विहारा बहवः कृताः ।
अर्व्वाक्कालोद्भवस्यापि राज्यकालोऽस्य भूपतेः । न्यक्कृतादिनृपोदन्तैर्वृत्तान्तैरद्भुतोऽभवत् ।
स वहिर्व्विहरं जातु भूभृद्गोतैरुदीरितं । चौरश्चौरोऽयमित्याराद् अशृणोत् क्रन्दितध्वनिं ।
यः कोऽत्र बध्यतां चौर इत्युक्ते तेन सक्रुधा । सर्व्वासामाक्रन्दितध्वानो नच चौरोऽव्यभाव्यत ।
पुनर्दिनैर्दिनैस्तस्य निर्गतस्याधलमतः । अभवन्नभयार्थिन्यो दिवा दिव्यप्रभा स्त्रियः ।
ताः संश्रुतेप्सितास्तेन रुद्धाश्वेन कृपालुना । अभ्यभाषन्त सीमन्तपुञ्जिताञ्जलयो वचः ।

देव दिव्यप्रभावेण भुवने भवता धृते । अपरस्माद्भयं जातु कस्य स्यात् करुणानिधे ।
तदानीं तोयदा भूत्वाच्छादयन्तो नभस्तलं । अकाण्डकरकापातशङ्किभिः कर्षकैर्भिया ।
पक्कशालिवनस्फीतिरक्षाक्षुभितमानसैः । नागास्तत्कोपसंरम्भभूमिं ते गमिताः प्रभो ।
तेऽस्माकं पतयश्चौरश्चौर इत्यार्त्तभाषितं । श्रुत्वा देवेन बध्यन्तामित्यवादि यदा क्रुधा ।
तदा त्वदाज्ञामात्रेण न्यपतन् पाशवेष्टिताः । प्रसादः क्रियतां तेषामस्मत्करुणयाधुना ।
॥ चतुर्भिः कुलकं ॥ तदाकर्ण्याब्रवीद्राजा प्रसादविशदाननः । सर्व्वे ते बन्धनान्नागास्त्यज्यन्तामिति सस्मितः ।
तया तस्याज्ञया राज्ञो नागा विधुतबन्धनाः । प्रणम्य चरणौ तूर्णं प्रययुः सपरिग्रहाः ।
अथ ग्राहयितुं भूपानाज्ञां हिंसानिवृत्तये । स दिग्जयाय निर्व्याजधर्म्माचर्य्यो विनिर्ययौ ।
अभूतभीतजनताविलक्षणश्लाघ्यविक्रमः । स्पृहणीयो जनस्यापि त्वदीयविजयोद्यमः ।
प्रभावविजितान् कृत्वा सोऽहिंसादीक्षितान्नृपान् । अर्णसां पत्युरभ्यर्णमवापावर्णवर्जितः ।
तत्र तालीवनच्छायासुखविश्रान्तसैनिकः । युक्तिं द्वीपान्तराक्रान्त्यै क्षणमन्तर्व्यचिन्तयत् ।
अथ वेलावनोपान्तात्तेनार्त्ताक्रन्दितध्वनिः । मेघवाहनराज्येऽपि हतोऽयमिति शुश्रुवे ।
तप्तायःशङ्कुनेवान्तर्व्रणितस्य द्रुतं ततः । सञ्चारिणातपत्रेण स जातो वसुधामगात् ।
अपश्यदथ केनापि चण्डिकायतनाग्रतः । नरं शवरसेनान्या हन्यमानमधोमुखं ।
अनात्मज्ञ धिगेतत्ते कुकर्म्मेति महीभुजा । तर्ज्जितः स भयादेव शवरस्तं व्यजिज्ञपत् ।
शिशुर्मुमूर्षुर्मे राजन्नयं रोगार्द्दितः सुतः । कर्म्मैतद्दैवतैरुक्तमस्य श्रेयोलवावहं ।
उपहारनिरोधेन सद्यएष विपद्यते । बन्धुवर्गमशेषञ्च विद्धि तज्जीवजीवितं ।
अरण्यगहनाल्लम्बमनाथं देव रक्षसि । बहुलोकाश्रयं बालं कथमेतमुपेक्षसे ।
अथाभ्यधान्महात्मा स वचोभिः शवरस्य तैः । बध्यस्य दृष्टिपातैश्च विक्लवैर्व्विवशीकृतः ।
किरात कातरो मा भूः स्वयं संरक्ष्यते मया । बहुबन्धुस्तव सुतो बाध्योऽप्ययमबान्धवः ।
उपहारीकरोम्येष चण्डिकायै स्वविग्रहं । मयि प्रहर निःशङ्कं जीवत्वेतज्जनद्वयं ।
तदद्भुतमहासत्त्वचित्तोदात्तत्वविस्मितः । उन्मिषद्रोमहर्षस्तं ततः स शवरोऽभ्यधात् ।
अतिकारुण्यमिषतस्तवायं पृथिवीपते । कश्चिन्मतिविपर्य्यासप्रकारो हृदि रोहति ।
त्रैलोक्यजीवितेनापि यो रक्ष्यो हेलयैव तं । पृथिवीभोगसुभगं कथंकारमुपेक्षसे ।
न मानं न यशो नार्थान्न दारांश्च बान्धवान् । न धर्म्मं न सुतान् भूपा रक्षन्ति प्राणतृष्णया ।
तत् प्रसीद प्रजानाथ मा वधेऽस्मिन् कृपां कृथाः । शिशुरप्येष प्रजाश्चैता जीवन्तु त्वयि जीवति ।
उपाजिहीर्षुरात्मानं दन्तद्योतार्घडम्बरैः । अर्घयन्निव चामुण्डामथोवाच स पार्थिवः ।
सदाचारसुधास्वादे के भवन्तो वनौकसः । जाङ्गलीमज्जनप्रीतिं न जानन्ति मरुस्थिताः ।
ध्रुवापायेन कायेन क्रीणतः कीर्त्तिमव्ययां । मनोभीष्टं प्रसाढुं ते मूढ रुद्धोऽयमाग्रहः ।
मा वोचः किञ्चिदपरं सहर्त्तुं चेत् घृणा तव । न किं निजकृपाणोऽसि शक्तः प्रक्रान्तसिद्धये ।

इत्युक्त्वा स स्वयं देहमुपहर्त्तुं समुद्यतः। खण्डनाय स्वमुण्डस्य विकोषं शस्त्रमाददे। ५०
ततः प्रहर्त्तुकामस्य तस्य द्युकुसुमैः शिरः। करश्च दिव्यवपुषा रुद्धः केनाप्यजायत।
अथापश्यत्तथाभूतः कञ्चित् दिव्याकृतिं पुरः। न चण्डिकां न तं वध्यं न किरातं न दारकं।
स तं दिव्यस्तदावादीन्मां त्वं सत्ववशीकृतं। विद्धि मध्यमलोकेन्द्र वरुणं करुणानिधे।
यदेतत् त्वामुपास्तेऽद्य छत्रं तस्मात्पुरात्पुरा। महाबलोऽहरद्रौमः पुत्रः स्वसुरसत्व।
रसातलैकतिलकं माहात्म्यवदिदं विना। उपद्रवाः प्राणहराः पौराणां नः पदे पदे। ५५
तदिदं प्राप्तुकामेन त्वदौदार्य्यं परीक्षितं। करुणामय मायेयं निरमायि मयेदृशी।
त्वदादिर्यो व्यधाज्जन्तून् व्यसून् वसुकुलात्मजः। प्रायश्चित्तममारेण चरसीव तदेनसः।
भयस्पृहाजनकयोर्धरणीधरणोचिते। शेषदेहे विषोद्गारफणारत्नौघयोरिव।
तमःप्रकाशावहयोस्तेजः क्रान्तदिगन्तरे। उषर्बुधे धूमजालज्वालापल्लवयोरिव।
क्षमाप्यायक्रियाभाजो रुद्धतेजस्विमण्डले। प्रावृट्पयोदच्छन्नेऽह्नि सन्तापासारयोरिव। ६०
द्वयोरालोकितं चित्रं जन्मैकस्मिन् महाकुले। तस्य त्रिकोटिहन्तुश्च तवाहिंसस्य च प्रभोः।
॥ चतुर्भिः कुलकं॥ नसः सम्राडथैवं स वदतो यादसां प्रभोः। चकार पूजां स्तोत्रेण कृत्येन च कृताञ्जलिः।
तञ्च सम्प्रति गृह्णन्तं प्रणयादुष्णवारणं। जगाद गुणिनामग्र्यो वरुणं धरणीधरः।
कल्पद्रुमाद्य सन्तश्च नार्हन्ति श्रमशोषिकां। अर्थिनां प्रार्थिताः पूर्वे फलन्त्यन्ये स्वयं यतः।
अवालम्बिष्यतच्छत्रं कथं न पुण्यपुण्यतां। तत्प्रार्थयिष्यत न चेदार्त्तोपकृतये भवान्। ६५
वदान्यः सन्निभागिभ्यः पूर्वं कुर्य्यादनुग्रहं। छाययाप्याययन् दद्यात् फलान्यपि महीरुहः।
तदेवं विहितोदात्तसन्निभागाभिचोदितः। जनोऽयं भगवन् किञ्चिदरं प्रार्थयते परं।
वशीकृतेयं पृथिवी कृत्स्ना भवदनुग्रहात्। जेतुं द्वीपान् कथ्यतान्तु युक्तिः पाथोधिलङ्घने।
इत्यर्थ्यमानोऽकथयत् भूमिपालं जलेश्वरः। तितीर्षा भवति स्तम्भं नीयतेऽम्भो मयाम्बुधेः।
ततो महान् प्रसादोऽयमित्युक्ते पृथिवीभुजा। तिरोबभूव भगवान् वरुणः सोष्णवारणः। ७०
अन्येद्युर्विस्मयस्मेरैर्बलैः सीमन्तयन् जलं। प्रभावस्तम्भितजलं प्रोत्ततार स वारिधिं।
गुणरत्नाकरः शैलं सरत्नाकरशेखरं। नानारत्नाकरं सैन्यैरारुरोहाथ रोहणं।
तत्र तालीतरुवनच्छायाध्यासितसैनिकं। प्रीत्या लङ्काधिराजस्तमुपतस्थे विभीषणः।
समागमः स शुशुभे नरराक्षसराजयोः। वन्दिनादाश्रुतान्योन्यप्रथमालापसम्भ्रमः।
अथ रक्षःपतिर्लङ्कां नीतावहरणं चितैः। अमर्त्यसुलभाभिस्तं विभूतिभिरुपाचरत्। ७५
यदामीत्यपिशिताशा इत्यन्वर्थं नाम रक्षसां। तदा तदाज्ञाग्रहणे प्रापि तद्रूढिमन्दतां।
रक्षः शिरःप्रतिच्छन्दैः स्थिरप्रणतिसाक्षिकैः। सनाथशिखरान् प्रादात् तस्मै रक्षःपतिर्ध्वजान्।
पारादारिनिधेः प्राप्ताः काश्मीरेष्वधुनापि ये। राज्ञां यात्रासु निर्यान्ति ख्याताः पारध्वजाः पुरः।
इत्यमाराक्षसयुतं प्राणिदिशां निपिष्य सः। समण्डलं प्रति कृती न्यवर्त्तत नराधिपः।

ततः प्रभृति तस्याज्ञा सार्व्वभौमस्य भूपतेः। हिंसाविरतिरूपा सा न कैश्चिदुदलङ्घ्यत।
क्षुद्रैरप्यादिभिर्नाप्सु सिंहाद्यैर्गहने न च। न श्येनप्रमुखैर्व्योम्नि तद्राज्ये जन्तवो हताः।
अतिक्रामति कालेऽथ कोऽपि शोकाकुलो द्विजः। पुत्रं गतासुमादाय द्वारि चक्रन्द भूपतेः
दुर्गया प्रार्थितं राजन्नुपहारं विनैष मे। अनन्यसन्ततेः सूनुर्ज्वरेणाद्य विपद्यते।
यद्यहिंसाग्रहेणेमं क्षितिपाल न रक्षसि। एतद्विपत्तौ तत्कोऽन्यो निमित्तं प्रतिभाति मे
निर्णयो वर्णगुरुणा त्वयैवैष प्रदीयतां। ब्राह्मणस्य पशोर्व्वा स्यात् प्राणानां कियदन्तरं।
तपस्विनपि ये जघ्नुर्ब्राह्मणप्राणलब्धये। हा मातस्तेऽधुना भूमेः प्रजापालास्तिरोहिताः।
इति ब्रुवति साक्षेपं शोकरूक्षाक्षरं द्विजे। आपन्नार्त्तिहरो राजा चिरमेवं व्यचिन्तयत्।
न वध्याः प्राणिन इति प्रागेवास्मि समकल्पयं। विप्रार्थमपि किं कुर्य्यां स प्रतिज्ञातविप्लवं
निमित्तीकृत्य मामद्य विपद्येत द्विजो यदि। तत्राप्यत्यन्तपापीयानर्थः संकल्पविप्लवः।
नैति मे संशयभ्रान्तमेकपक्षावलम्बनं। समभेदावर्त्तपतितं प्रस्खलन्मिव मानसं।
तत् स्वदेहोपहारेण दुर्गां तोषयता मया। प्रतिज्ञया समं न्याय्यं रक्षितुं जीवितं द्वयोः।
इति सञ्चिन्त्य सुचिरं देहदानोद्यतो नृपः। श्वः प्रियं तव कर्त्तास्मीत्युक्त्वा विप्रं व्यसर्जयत्
क्षपायां क्ष्मापतिमथ समुपाहर्त्तुमुद्यतं। निषिध्य दुर्गा व्यधित प्रकृतिस्थं द्विजात्मजं।
इत्याद्यद्यतनस्यापि चरितं तस्य भूपतेः। पृथग्जनेषु सम्भाव्यं वर्णयन्तस्त्रपामहे।
अथवा रचनानिस्त्रिंशविमर्शेण वर्त्मना। प्रस्थितान्ननुरुन्धन्ति श्रोतृचित्तानुवर्त्तनं।
तस्मिन्नस्तं गते भुक्त्वा क्ष्मां चतुस्त्रिंशतं समाः। अनादित्यमिवाशेषं निरालोकमभूज्जगत्
अथ क्ष्माभृद्बभूव क्ष्मां श्रेष्ठसेनस्तदात्मजः। प्राज्ञः प्रवरसेनं यं तुञ्जीनं चाब्रुवन् जनाः।
दोस्तम्भसम्भृतासक्तौ कृपाणमणिदर्पणे। सङ्क्रान्तेवोन्मुखी यस्य भुवनश्रीर्व्यभाव्यत।
समाष्टचक्रं निर्माय यः पूर्व्वं प्रवरेश्वरं। पुण्या पुराणाधिष्ठाने प्रतिष्ठा विविधा व्यधात्।
स्वहाङ्गनमिव सौणीं गत्यन्तवर्त्तिनीं। त्रिगर्त्ताख्यं ग्रामषट्कं प्रवरेशाय यो ददौ।
ईशो नृपाणां निःशेषक्ष्माकेदारकुटुम्बिनां। स समास्त्रिंशतं भूभृन्निस्त्रिंशाश्रयोऽभवत्।
हिरण्यतोरमाणाख्यौ व्यधत्तामथ तत्सुतौ। साम्राज्ययुवराजत्वभाजौ रञ्जनं क्षितेः।
बालाहतानां प्राचुर्य्यं विनिवार्य्य समञ्जसम्। तोरमाणेन दीनाराः स्वाहताः सम्प्रवर्त्तिताः
मामवज्ञाय राज्ञैव क्रमादेतेन वल्गितं। इति तं पूर्व्वजो राजा क्रोधनो बन्धने व्यधात्।
चिरं स्थितिप्रकाण्डस्तस्य तस्याञ्जनाभिधा। ऐक्ष्वाकस्यात्मजा राज्ञी वज्रेन्द्रस्याभूत् गुर्व्विणी।
आसन्नप्रसवा भर्त्रा सत्रपं तेन बोधिता। सुतं प्रविष्टा प्रासोष्ट कुलालनिलये क्वचित्।
स कुम्भकारगेहिन्या काकेव पिकशावकः। पुत्रीकृतो राजपुत्रः पर्य्याप्तं पर्य्यवर्द्धत।
जनयित्वा कुलाल्याय रक्षित्वा विदितोऽभवत्। रक्षस्तैर्भुजङ्गस्य प्रच्छन्नइव सेवधिः।
पौत्रः प्रवरसेनस्य गिरामातुर्नृपात्मजः। पैतामहेन नाम्नैव कुलाल्या ख्यापितोऽभवत्।

वर्द्धमानस्तु सम्पर्कं न सेहे सहवासिनां। तेजस्विमैत्री रसिकः शिशुः पद्म इवाम्भसां।
तं कुलीनैश्च शूरैश्च विद्याविद्भिश्च दारकैः । अभीतमेव ददृशुः क्रीडन्तं विस्मयाकुलाः।
स्वच्छन्दस्त्वात्युदारोजा राजा चक्रे स दारकैः । मृगेन्द्रशाव क्रीडद्भिर्वने बालमृगैरिव।
संविभेजे ऽनुजग्राह वशी चक्रे च सोऽर्भकान्। अराजोचितमाचारं नैव किञ्चिदसेवत।
भाण्डादि कर्तुं मृत्पिण्डं कुम्भकारैः समर्पितं। स्वीकृत्य चक्रिरे तेन शिवलिङ्गपरम्परा ।
तथा साश्चर्य्यचर्य्ये स क्रीडन् जातु व्यलोकयत। मातुलेन जयेन्द्रेण सादरं चाभ्यनन्द्यत।
आवेद्यमानं शिशुभिस्तं जयेन्द्रोऽयमित्यसौ। भूपालवत्सावहेलं पश्यन्नन्वग्रहीदिव।
सम्भाव्य सत्त्वावष्टम्भात्तमसामान्यवंशजं। सादृश्याद्भगिनीभर्त्तुर्भागिनेयमशङ्कत।
सत्वरस्तर्कजिज्ञासारसेनानुससार तं। प्राप्तस्तद्गृहमौत्सुक्यात् स्वसारञ्च व्यलोकयत्।
सा स चान्योन्यमुन्मन्यू पश्यन्तौ भ्रातरौ चिरात्। निःश्वासात् द्विगुणोष्माणि मुक्तश्रूण्यमुञ्चतां ।
कुलाल्यादारको मातः कावेताविति पृष्टवान्। अकथ्यतेत्थं वत्सैषा माता ऽयं मातुलश्च ते।
पितुर्वैरस्येन सक्रोधं तं कालापेक्षया क्षमं। शिक्षयित्वा जयेन्द्रोऽथ कार्य्यशेषाय निर्ययौ ।
उत्पित्सोत्पादनासक्ते तस्मिन् भ्रात्रा यदृच्छया। बन्धान्मुक्तानृतरणिस्तारमाणोऽस्तमाययौ।
निवार्य्य मरणोद्योगं मातुर्निर्वेदखेदितं। ययौ प्रवरसेनोऽथ तीर्थौत्सुक्याद्दिगन्तरं।
रक्षित्वा दशमासोना. क्ष्मामेकत्रिंशतं समा । तस्मिन् क्षणे हिरण्योऽपि शान्तिं निःसन्ततिर्ययौ।
तत्रानेहस्युज्जयिन्यां श्रीमान् हर्षापराभिध । एकच्छत्रश्चक्रवर्त्ती विक्रमादित्य इत्यभूत्।
भूपमद्भुतसौभाग्य श्रीर्वैदूरभमाऽभजत्। विहाय हरिबाहुं स चतुरस्सागरांश्च यं।
लक्ष्मीं कृत्वोपकरणं गुणा येन प्रवर्द्धिते। श्रीमत्सु गुणिनोऽद्यापि तिष्ठन्त्युद्धतकन्धराः ।।
म्लेच्छोच्छेदाय वसुधां हरेरवतरिष्यतः । शकान्विनाश्य येनादौ कार्य्यभारो लघु कृत.।
नानादिगन्तराख्यातं गुणवत्सुलभं नृपं। तं कविर्मातृगुप्ताख्य सभास्थानस्थमासदत्।
स गम्भीरस्य भूभर्तुरनुभावं गुणाद्भुतं। विविधास्थानसंघट्टलस्याभ्यूह्य व्यचिन्तयत्।
सोऽयमासादित पुण्यै क्षोणिपालो गुणिप्रिय । परभागोपरम्भाय पूर्व्वेऽमुष्य महीभुज ।
अस्मिन् राजनि तत्त्वज्ञे सूरिभि सम्भृतश्रुतैः।नाञ्जलिर्दीयते जातु मानाय च गुणाय च।
भङ्ग्याशुभिन्दिदधती स्वाभिप्रायप्रकाशनं। वैदग्ध्यं बन्ध्यतां नैति बुद्धिः कुलवधूरिव।
खिलीकृतखलालापे युक्तायुक्तविवेकरि। नायाति सेव्यमानेऽस्मिन् स्वगुणोऽनर्थकारितां।
अनाप्नुवद्भिः सावद्यदुर्विद्यसमपीषिकां। जीवन्मरणमत्रायं गुणिभिर्नानुभूयते।
सम्भावनानुसारेण प्रवृत्तोऽस्मादिवेकिन । शोच्यते नाश्रितोच्छ्रायं प्रीतिदायो महाशये.।
दहन् यथा गुणं शान्तमुचितप्रतिपत्तिभि । अन्तरज्ञ समस्तानामयमुत्साहवर्द्धनः।
सेवया हृत्कष्टस्य दाक्षिण्यात्पादनश्रम । अस्य यो न स भृत्यानां हिमाद्रौ हिमविक्रय ।
मिथ्याख्यातगुणो नाशो नामात्य कलहप्रिय । असत्यसन्ध स्वैरो वा नास्तानेऽस्य महीपतेः। •

सदैवातापिनोऽन्योन्यं नर्मोक्ता मर्मभेदिनः। अन्यप्रवेशासहनाः संहतानास्य सेवकाः।
छन्दानुवर्त्तिनामेष निजविज्ञानवन्दिनाम्। सर्व्वज्ञंमन्यतान्धानां मुखप्रेक्षी न पार्थिवः।
अनेन सह सञ्जातः संलापो विपुलोदयः। लभ्यते नान्तरा च्छेत्तुं दुर्जातैर्जातु दुर्जनैः।
सर्व्वदोषोज्झितं सेव्यं नृपमेवमिमं मम। समासादयतः पुण्यैरदूरे स्वार्थसिद्धयः।
गम्भीरस्य गुणज्ञस्य स्थिरबुद्धेस्य पार्थिवः। एष क्षेपभयं त्यक्त्वा निषेव्यः प्रतिभाति मे।
नचाप्रसङ्गनमादाय रञ्जितादन्यराजवत्। भ्राम्यतो भूतलेऽमुष्मिन् सेव्योऽन्यः प्रतिभाति मे।
इति सञ्चिन्त्य सुदृढं स नवामिव तां सभां। नानुरञ्जन्नचास्ते स्म गुणिगोष्ठीषु मध्यगः।
मृदुपूर्व्व गुणानेव दर्शयन्तं विशाम्पतिः। विशिष्टयोग्यताज्ञप्त्यै विवेदाराधनोन्मुखं।
अचिन्तयच्च नायं स्याद्गुणिमात्रं महाशयः। उदात्तं सत्क्रियार्हत्वं वदत्यस्य गभीरता।
इति सञ्चिन्त्य राज्ञापि ज्ञातुं तस्यान्तरं मतेः। नाक्रियन्त परीक्षार्थं यथावल्लाभसत्क्रियाः।
स तेनानुपचारेण तमुदात्ताशयं नृपं। स्वीकर्त्तारं विदन्धीमान् सिषेवे प्रीतिमाश्रितः।
क्रमोपचीयमानेन सेवाभ्यासेन धीमतः। तस्य नोद्वेगमगमत् स्वकायइव पार्थिवः।
नातीव स्वल्पया स्थित्या नातीवाप्यथ दीर्घया। शरन्निशाचरणेनेव राजा निन्ये प्रसन्नतां।
नर्म्मभिर्गर्मचेटानां द्वाःस्थानां विक्रियाक्रमैः। मिथ्यास्तवैर्व्विटानाञ्च न स क्षोभमनीयत।
प्रसन्नालापसम्प्रीतो च्छायाग्रहइवाचलः। प्रतिस्पर्द्धीव च क्रुध्यन्नावज्ञायामभूत् प्रभोः।
वीक्षणं राजदासीनां राजदिष्टैस्सहासनम्। राजाग्रे च कथां नीचैः कालविच्चाचचार सः।
स्वभावाद्राजपुरुषैः सजनैराजनिन्दकैः। नाप्तप्रभोरुपालम्भो लेभे पैशुन्यजीविभिः।
वदद्भिरादरात् स्थैर्य्यैकश्लाघ्यत्वं प्रभोः। निन्ये सोऽस्माद्भयैर्यस्य सेवोत्साहासहिष्णुभिः।
अन्योत्कर्षानपि वदन् प्रसङ्गेन निराग्रहः। स्वविद्याद्योतकस्सोऽभूत् सभ्यानां हृदयंगमः।
एवं स सेवमानस्तमुद्योगेन वलीयसा। अनिर्व्विण्णो मातृगुप्तः षड्टुनव्यवाहयत्।
अथ तं क्षामसर्व्वाङ्गं धूसरं जीर्णशाटकं। वहिर्व्वातु विनिर्यातो राजा वीक्ष्य व्यचिन्तयत्।
वैदेशिको निःशरणो गुणवान् वान्धवोज्झितः। दार्ढ्यञ्जिज्ञासुना कष्टं सोऽयमायासितो मया।
कोऽस्याश्रयः किमशनं कानि प्रावरणानि वा। इत्येतदर्थं विमूढेन मया हन्त न चिन्तितम्।
वसन्नेनेव न मया शोभयाद्यापि योजितः। शीतवातातपैः शुष्यन् सोऽयं पुरुषपादपः।
अस्य ग्लानस्य भैषज्यं निर्व्विण्णस्य विनोदनं। श्रान्तस्य वा श्रमच्छेदं कोविदध्यादसंपदः।
नाशे चिन्तामणिं दध्यां नामृतं वा निषेवितः। मया यदयमेतावद्भ्रमामूढेन परीक्ष्यते।
तदमुष्य गुणित्वस्य तीव्रं सेवाश्रमस्य च। प्रतिपत्त्या कतमया तावदानृण्यमाप्नुयात्।
इति चिन्तयतस्तस्य राज्ञस्तं सेवकं प्रति। स्वप्रसादोचिता काचित् मत्यभाग्नैव सत्क्रिया।
ततः प्रावर्त्तत स्फारशीकरसत्ववाहिभिः। दहन्निवाङ्गं प्रालेयपवमानैर्हिमागमः।

सन्ततध्मातमिषतस्तीव्रशीतवशीकृताः । आशाश्यकाशिरे नीलनिचोलाच्छादिता इव ।
शीतार्त्या द्युमणेर्वह्निदहनोत्थाभिलाषतः । द्रुतं यातीव जलधिं दिनानि लघुतां ययुः । १००
अथ दीपोज्ज्वले धाम्नि सपद्दीप्तहसन्तिके । कदाचिन्नृपतिर्दैवादर्द्धरात्रे व्यबुध्यत ।
स हेमन्तानिलैर्भूरिभीकारपरुषैः पुरः । दीपान् प्रकल्पितानीषत्प्रविष्टैर्धाम्नि दृष्टवान् ।
तानुज्ज्वलयितुं भृत्यानन्विष्यन्नभ्यधात्ततः । यामिकेषु बहिस्सुज्ञः कोऽवर्त्तत इति स्फुटम् ।
सुखसुप्तेषु सर्व्वेषु वाह्यकंवान्तरात्ततः । राजन्नयमहं मातृगुप्तइत्यश्रृणोद्वचः ।
प्रविशेति स्वयं राज्ञा दत्तानुज्ञस्ततो गृहं । लक्ष्मीसानिध्यरम्यन्तदपृष्टोऽन्यैर्व्विवेश सः । १०५
दीपानुज्ज्वलयेत्युक्तो निष्पाद्य चतुरैः पदैः । वहिर्यियौ स ऊचेऽथ क्षणं तिष्ठेति भूभुजा ।
समयद्विगुणीभूतशीतकम्पः प्रभोः पुरः । किंखिदकीति विम्हयन्नातिदूरेऽभ्युपाविशत् ।
अथ पप्रच्छ भूपालः कियत्यस्ति निशेति तम् । सोऽभ्यधाद्देव यामिन्यायामः सार्धोऽवशिष्यं
ततोऽभूद्भुवाचैनं कथं सम्यङ्निशाचणः । लयावधारितो निद्रा कथं नाभूच्च ते निशि ।
अथ क्षता चणाच्छ्लोकमेतं तं संध्यजिज्ञपत् । अवस्थावेदनादाशां दैन्यं वा त्यक्तुमुद्यतः । ११०
शीतेनोद्धूषितस्य माषमशिवच्चिन्तार्णवे मज्जतः शान्ताग्निं स्फुटिताधरस्य धमतः चुत्क्षामकण्ठस्य मे ।
निद्रा क्वाप्यवमानितेव दयिता सन्त्यज्य दूरं गता सत्पात्रप्रतिपादितेव वसुधा न क्षीयते शर्वरी ।
तदाकर्ण्य महीपालः साधुवादैः परिश्रमं । अभिनन्द्य कवीन्द्रं तं पूर्व्वस्थाने व्यसर्जयत् ।
अचिन्तयच्च धिङ्मां यः स्वगुणात् खिन्नचेतसः । दुःखोत्तप्तं वचः शृण्वन्नेवमेवाधुना स्थितः ।
निरर्थकान् साधुवादानस्येव विदम्भम । अयमज्ञातहृदयो दुःखमास्ते ध्रुवं बहिः । ११५
चिरं चिन्तयतो यस्मात् सदृशीमस्य सत्क्रियां । देयं महाहमद्यापि न किञ्चित् प्रतिभाति मे ।
अथवास्त्येव सङ्केतन स्मारितोऽस्म्यधुना यथा । वर्त्तते राजरहितं काम्यं काश्मीरमण्डलं ।
पात्रायास्मैमहते तस्मात् सा मया प्रतिपाद्यते । अवधीर्य्य महीपालान्महतोऽप्यर्थनापरान् ।
इति निश्चित्य चतुरं चपायामेव पार्थिवः । गूढं व्यसर्जयद्दूतान् काश्मीरेः प्रकृतीः प्रति ।
आदिदेश च तान् यो वा दर्शयेच्छासनं मम । मातृगुप्ताभिधो राज्ये निःशङ्कं सोऽभिषिच्यतां । १२०
अथ दूतेषु यातेषु सेवयित्वा स्वमासनम् । क्ष्मापतिस्तं चपाशेषं कृतकृत्योऽत्यवाहयत् ।
मातृगुप्तस्तु नृपतेः संतापमपि निष्फलम् । ध्यायन् गृहीतनैराश्यस्यक्भारद्वाभवत् ।
अमर्दंधौ च कर्त्तव्यं कृतं शम्भोऽद्य संशयः । आशापिशाचिकात्यक्तश्चरिष्याम्यधुना सुखं ।
गतानुगतिकत्वेन कोऽयमासीन्मम भ्रमः । जनप्रवादात् मिथ्यैव येनास्य श्रातवामहम् ।
भुजप्राणाः पवनं शरीरपणाः प्रख्यापिता भोगिनो गायद्भृङ्गनिवारकाणि गदिता विस्तीर्णकर्णा गजाः । १२५
यद्याभ्यन्तरभूतोत्थविहतिः प्रोक्ताः शमीमद्भुता लोकेनेति निरर्गलं प्रलपता सर्व्वं विपर्यासितं ।
अथ वा विदितेऽमुष्य न कादनभिगम्यता । लक्ष्मीप्रणयिनो येन कृताः प्रणयिनां स्पृहाः ।

त्यागिनो निष्कलङ्कस्य कोऽदोषोऽस्य महीपतेः। ममापुण्यन्तु तन्निन्द्यं यच्छ्रेयःप्रतिबन्धकम्।
रत्नोज्ज्वलाः प्रविकिरेल्लहरीस्समीरैरब्धिः क्रियेत यदि रङ्कतटाभिमुख्यः। २००
दोषोऽर्थिनः स खलु भाग्यविपर्य्ययाणां दातुर्मनागपि न तस्य तु दातृतायाः।
उत्तानफललुब्धानां वरं राजोपजीविनः। न तु तत्स्वामिनस्तीव्रपरिक्लेशैः फलन्ति ये।
तिष्ठन्ति ये पशुपतेः किल पादमूले सम्प्राप्यते झटिति तैर्नहि भस्मनोऽन्यत्।
ये तद्नृपस्य तु समुज्ज्वलजातरूपप्राप्त्या न कानि सुदिनानि सदैव तेषां।
चिन्तयन्नपि पश्यामि न किञ्चिद्दोषमात्मन.। यातो विरक्तिं यं ज्ञात्वा सेव्यमानोऽप्ययं नृपः।
अथवा नादृतोऽन्येन सम्प्राप्तोऽन्तिकमाप्नुयात्। कः फलेनाभिसम्बन्धं गतानुगतिकात् प्रभोः।
अन्तर्यं सततं लुठन्ति गणितास्तानेव पाथोधरैरात्तानापतितांस्तरङ्गवलयैरालिङ्ग्य गृह्णन्नसौ।
व्यक्तं मौक्तिकरत्नतां जलकणान् सम्प्रापयत्यम्बुधिः प्रायोऽन्येन कृतादरो लघुरपि प्राप्तोऽर्च्यते स्वामिभिः। २०५
इदं संचिन्तयन् सोऽभूत्सेव्ये तस्मिन्निरादरः। खिन्नस्य हि विपर्य्येति तत्त्वज्ञस्यापि शेमुषी।
प्रभातायां विभावर्य्यामथास्थानस्थितो नृपः। आकार्य्यतां मातृगुप्त इति क्षत्तारमादिशत्।
ततः प्रधावितानेकप्रतीहारप्रवेशितः। प्रविवेश महीभर्त्तुस्त्यक्ताश इव सोऽन्तिकं।
तस्मै कृतप्रणामाय मूर्द्धन्तादेव पार्थिवः। भ्रूसंज्ञितेन व्यतरल्लेखं लेखाधिकारिणा।
स्वयञ्च तमुवाचाङ्ग कश्मीरान् वेत्ति किं भवान्। गत्वा तत्राधिकारिभ्यएतच्छासनमर्प्यतां। २१०
स स्थापितोऽस्मदादेशेन यो लेखं वाचये त्वयि। मन्निदेशा प्रयत्नेन विस्मर्त्तव्या न जातुचित्।
अविज्ञाताशयो राज्ञस्तामाज्ञां क्लेशशंकितः। सोऽबुद्ध दहनज्वालां नतु रत्नाङ्कुरद्युतिम्।
यथादेशस्तथेत्युक्त्वा मातृगुप्ते विनिर्गते। निर्गर्व्वः पूर्ववद्राजा तस्थावाप्तैः सहालपन्।
अथ क्लेशोचितं चाममपाथेयमबान्धवं। दृष्ट्वा यान्तं मातृगुप्तं निनिन्देति नृपं जनः।
अहो नरेश्वरस्येयं यत्किञ्चन विधायिता। पृथग्जनोचिते कर्मण्यर्हतो निदधाति यः। २१५
दुराशया धृतक्लेशं सेवमानमहर्निशं। ध्रुवं क्लेशार्हमेवैनं ज्ञातवानबुधो नृपः।
उपायं तं पुरस्कृत्य सेवते सेवकः प्रभुं। अनन्तरज्ञस्तत्रैव योग्यं तं किल मन्यते।
सुखार्थी नागारिप्रतिभयशमात् प्रत्युत सुखं जहौ शेषस्तल्पीकृततनुर्निषेव्यासुररिपुं।
यतस्तेनामुष्मिन्नधिगतवता क्लेशमहतां अमादायिन्यस्तं निरवधि धराभारवहनम्।
अयमेतद्गृहीतेषु गुणवत्सु गुणाधिकं। आत्मानं गुणवान्पश्यन्नास्थयैनमशिश्रियत्।
अनन्तरज्ञः कोऽन्योऽस्माद्गुणान्दर्शयतेऽधिकान्। अस्मै गुणवते पूजां यश्चकार किलेदृशीं। २२०
यो नानाद्युतिमत्पदार्थरसिकोऽसारेऽपि शक्रायुधे सप्रेमा स विलोक्य वर्हमिह मे किं किं न कुर्य्यात्
इत्याविष्कृतवर्हराजि नटते योवर्हिणेऽभीतवान् नान्यन्मुञ्चति तं विहाय जलदं कोऽन्योऽस्ति शून्याशय
गच्छतो मातृगुप्तस्य निर्दैन्यस्यैव वर्त्मसु। नाशङ्काव्यर्थमाहात्म्यादिकल्पः कोऽपि चेतसि।
अहंपूर्व्विकयोद्यद्भिर्निमित्तैः शुभशंसिभिः। सवितीर्णकरालम्ब इव न श्रममाददे।

अपश्यत् स फणाकोटौ खञ्जरीटमहेः पथि । स्वप्ने प्रासादमारुह्य स्वञ्चोल्लङ्घितसागरम् ।
अचिन्तयच्च शास्त्रज्ञो निमित्तैः शुभशंसिभिः । एतैर्भूभर्तुरादेशो ध्रुवं मे स्याच्छुभावहः ।
फलं मम तनीयोऽपि काश्मीरेषु भवेद्यदि । अनर्घदेशमाहात्म्यात् किं किं नातिशयेत तत् ।
अश्रान्तच्छलद्गाः पन्थानो वल्लभातिथयो गृहाः । उपानमन् गच्छतोऽस्य सत्क्रियास्य पदे पदे ।
इत्थं विलङ्घिताकाशं लोलानोकहशाद्वलं । मङ्गल्यदधिपात्राभं ददर्शाग्रे हिमाचलम् ।
सरलस्यन्दसुभगा गङ्गाशीकरवाहिनः । प्रत्युद्ययुस्तं मरुतः पान्थाया संस्तुता भुवः ।
क्रमवर्त्ताभिधाने स प्रदेशे प्राप्तवांस्ततः । ढक्कं काम्बुवनामानं योऽद्य शूरपुरे स्थितः ।
नानाजनपदाकीर्णे स्थाने तत्राथ शुश्रुवान् । काश्मीरकान् महामात्यान् स्थितान् केनापि हेतुना ।
ततोऽपनीतप्राग्वेशः प्रावृत्तो धवलांशुकैः । स जगामान्तिकं तेषां दातुं नृपतिशासनं ।
तत्प्रयान्तं समुद्यद्भिः शकुनैः सूचितोदयं । पान्थाः केऽप्यन्वयुर्द्रष्टुं निमित्तानां फलोद्गमे ।
श्रुत्वाथ विक्रमादित्यदूतः प्राप्त इति द्रुतम् । द्वास्थाः काश्मीरमन्त्रिभ्यस्तमासन्नं न्यवेदयन् ।
आगच्छत प्रविशतेत्युच्यमानोऽथ सर्वतः । स तान् समस्तसामन्तानाससादानिवारितः ।
यथाप्रधानं सचिवैर्विहितोचितसत्क्रियः । ततः पराङ्घ्रमध्यास्त तन्निदर्शितमासनं ।
क्षणार्द्धेऽथ ततोऽमात्यैराज्ञां पृष्टो महीभुजः । शनैस्तच्छासनं तेभ्यो लज्जमान इवार्पिपत् ।
तेऽभिवन्द्य प्रभोर्लेखमुपांशु मिलितास्ततः । उन्मुच्य वाचयित्वैतमवोचन् विनयान्विताः ।
मातृगुप्त इति श्लाघ्यं भवतामेव नाम किं । एवमेवैतदित्यूचे सोऽपि तान् विहितस्मितः ।
कः कोऽत्र सन्निधातॄणामित्यश्रूयत वाक् ततः । राज्याभिषेकसम्भारो दृश्यते स च संभृतः ।
ततः कलकलोत्तालभूरिलोकसमाकुलः । प्रदेशः क्षणमात्रेण सोऽभूत् क्षुभ्यन्निवार्णवः ।
अथ प्राङ्मुखसौवर्णभद्रपीठप्रतिष्ठितः । सन्निपत्य प्रकृतिभिर्मातृगुप्तोऽभ्यषिच्यत ।
तस्य विन्ध्यतटव्यूढवपुषः परिनिर्लुठन् । सशब्दमभिषेकाम्बुरेवास्रवदिवाबभौ ।
अथ स्नातानुलिप्ताङ्गमर्घ्याङ्गामुक्तभूषणं । व्यजिज्ञपंस्तं राजानं क्रान्तराजासनं प्रजाः ।
प्रार्थितेन स्वयं चातुं विक्रमादित्यभूभुजा । निर्दिष्टः स्वसमानस्त्वं शाधि नः पृथिवीमिमां ।
मण्डलानि विलम्बन्ते येन तेन प्रतिक्षणं । माभूत्ता मण्डलं राजन् विलघन्नादिदम्परैः ।
कर्मभिः स्वैरवाप्तस्य जन्मनः पितरौ यथा । राज्ञा तथान्ये राज्यस्य प्रवृत्तावेव कारणं ।
इत्थं स्थिते परं कश्चिन्मदीयोऽस्मीति संमता । न नेया भवता राजन् वयमात्मा च लाघवं ।
इति नैकट्यमुख्योऽपि संभ्रमं स्वामिसत्क्रियां । मातृगुप्तमहीपालः सममासीत् कृतस्मितः ।
दानेन सुदिनं चक्रे सर्वराज्योऽर्जितेन सः । तथैव मङ्गलोदयं तदहो निरवर्त्तयत् ।
पुरप्रवेशायान्येद्युर्व्यसर्जीनोऽथ मन्त्रिभिः । अद्भुतप्राभृतं दूतं राज्यदातुर्व्यसर्जयत् ।
देशोऽयमथानुमार्गेण स्वर्द्धामिव च तां विदन् । स्वामिनो मनसि श्रीमन्मातृगुप्तमस्मन्यत ।
अधाहमपरान् भृत्यान् देशानुपि प्रभोः । अस्यापीत्याद्यपि सारानि प्रादिशोत् प्राभृतानि सः ।

असामान्यान् गुणांस्तस्य स्मरन् पर्य्यश्रुलोचनः। स्वयं विलिखिता श्लोकास्तत्कर्मैकं व्यसर्जयत्।
नाकारमुद्वहसि नैव विकत्थसे त्वं दित्सां न सूचयसि मुञ्चसि सत्फलानि।
निःशब्दवर्षणमिवाम्बुधरस्य राजन् संलक्ष्यते फलत एव तव प्रसादः।
ततः प्रविश्य नगरं सैन्यैः पिहितदिक्तटैः। क्रमागतामिव महीं यथावत् पर्य्यपालयत्।
त्यागे वा पौरुषे वापि तस्यौचित्योन्नतात्मनः। क्ष्माभुजस्तर्कुकस्येव नाभूत् परिमितेच्छता।
यष्टुं यज्ञान् कृतोद्योगस्त्यागी विततदक्षिणान्। पशुबन्धमनुध्याय करुणाकुञ्चितोऽभवत्।
अमारमादिदेशाय यावद्राज्यं स्वमण्डले। चूर्णीकृत्य सुवर्णादि प्रददौ च करम्भकम्।
करम्भके कीर्य्यमाणे मातृगुप्तेन भूभुजा। वैतृष्ण्यमुन्मिषत्तोषो न कोनाम न्यषेवत।
गुणी च दुष्टकष्टश्च वदान्यश्च स पार्थिवः। विक्रमादित्यतोऽप्यासीदभिगम्यः शुभार्थिनाम्।
विवेचकतया तस्य श्लाघ्यया सुरभीकृताः। लक्ष्मीविलासाः क्ष्माभर्तुरशोभन्त मनीषिषु।
हयग्रीववधं मेण्ठस्तदग्रे दर्शयन्नवम्। आसमाप्ति ततो नापत् साध्वसाध्विति वा वचः।
अथ ग्रन्थयितुं तस्मिन् पुस्तकं प्रस्तुते न्यधात्। लावण्यनिर्याणभिया राजाधः स्वर्णभाजनम्।
अन्तरज्ञतया तस्य तादृश्याकृतसत्कृतिः। भर्तृमेण्ठः कविर्मेने पुनरुक्तं श्रियोऽर्पणं।
स मातृगुप्तस्वाम्याख्यं निर्ममे मधुसूदनं। कालेनादत्त यद्ग्रामान् ममः श्वशुरसद्मने।
इत्यासादितराज्यस्य शासतः क्ष्मां क्षमापतेः। चिमासोनाश्चतुस्तस्य सैकाहाः पञ्च वत्सराः।
कृतार्थतां तीर्थतोयैराज्ञनेयोऽनयत् पितॄन्। जातन्तादृशमश्रौषीत् स्वक्षिन्देशे पराक्रमं।
पितृशोकार्द्रता तस्य क्रोधेनान्तरधीयत। तरोरिवार्कतापेन नैशाम्बुनवसिक्तता।
श्रीपर्वते पाशुपतप्रतिवेशस्समागतम्। आचख्यावश्वपादाख्य सिद्धः कन्दाशनन्ददत्।
जन्मान्तरे तस्य सिद्धिस्वामस्युपरि साधकम्। वाञ्छामपृच्छं राज्यार्थमभिलाषस्ततोऽभवत्।
सपदं त्वं कर्तुमन्नेोरयमनन्यया। अथ मामित्यमादिचत् चपारमणशेखरः।
गणोऽयं मामकः सिद्धो यस्त्वयोपरि साधकः। जन्मान्तरेऽस्य राज्येच्छां कुर्य्यामहमनन्यया।
भावि भवत्सदृशो भगवान्दत्तदर्शनः। शाफल्यं नेष्यतीत्येवमभिधाय तिरोदधे।
साधाज्येच्छोस्समामेकां तत्र तस्य तपस्यतः। भस्मसूतिस्मितगिरा प्रददौ दर्शनं शिवः।
प्रतिवेशस्तमादिष्टवाञ्छितार्थसमर्पणम्। स जगत्त्रिशयोऽसिद्धस्त्वरेक्त्वमयाचत।
उपेत्य मोक्षं किं प्राभृतोगानिच्छसि भङ्गुरान्। इति गिरामुना भावं शम्भुना सोऽभ्यधीय
स तं प्रभावे शम्भुं त्वां बुद्धा व्याजतपोधनं। अभ्यधामिदन्दृष्ट्वा त्वं न स देवो जगद्गुरुः।
महान्तो ह्यर्थिताः स्वल्पं फलमयन्तेतरत् स्वयं। उदन्यया वदान्योऽदादुग्धाब्धिं स पयोर्थिने
अस्य वैकल्पकोपन्यासाभनियतचेतस। नोवेत्सभिजनसाभिभूतिं मर्सन्ययाऽस्मः।
जगत्परिवृढः प्रौढमीतिस्तं स फटार्थिनम्। कृत्वा प्रादुष्कृतवपुस्ततो भूयोऽप्यभाषत।
स जेता राज्यधारित्रु धायुज्यावाप्तिदूतिकां। मदाश्रयाश्वपादस्ते संज्ञां कालें करिष्यति।

इत्युक्त्वान्तर्हिते देवे स कृतव्रतपारणः । अगच्छदश्वपादन्तमाप्तवाञ्छाभिमताम्भुवम् ।
ततोविदितवृत्तान्तो मातृगुप्ताभिषेचनात् । निषिद्ध सर्वविधायातानमात्यानब्रवीद्वचः ।
विक्रमादित्यमुन्मिक्तमुच्छेत्तुं यतते मन । मातृगुप्तम्प्रति न नो रोषेण क्षपितं मनः ।
अप्रियैरपि निष्पिष्टैः किं स्यात् क्लेशासहिष्णुभिः । ये तदुन्मूलने शक्ता जिगीषा तेषु शोभते ।
यान्त्यङ्गान्युदयं द्विषन्ति शशिनः कोऽन्यस्ततोऽसम्मतस्तन्निर्माथिकरीन्द्रदन्तदलनं यन्नाम कोऽयं नयः।
सामर्थ्यप्रथनाय चित्रमसमैः स्पर्द्धांसिधूयोन्नता ये तेषु प्रभवन्ति तत्र जहति व्यक्तं प्ररूढा रुषः ।
त्रिगर्त्तानाशुवं जित्वा स व्रजन्नथ भूपतिः । विक्रमादित्यमशृणोत् कालधर्म्ममुपागतं ।
तस्मिन्नहनि भूभर्त्ता शोकाक्रान्तः स्वपतानिशम् । नास्नायि नाशि नास्वापि स्थितेनावनताननम् ।
अन्येद्युर्भुवमुत्सृज्य कश्मीरेभ्यो विनिर्गतम् । शुश्राव मातृगुप्तं स नातिदूरे कृतस्थितिं ।
कैश्चिन्निर्व्वासितो मास्विन्मदीयैरिति शङ्कितः । ययौ प्रवरसेनोऽस्य पार्श्वं मितपरिच्छदः ।
कृतार्हणं सुखासीनं ततः पप्रच्छ तं शनैः । विनयावनतो राजा राज्यत्यागस्य कारणं ।
बभाषे तं क्षणं स्थित्वा स निःश्वस्य विहस्य च । गतः स सुकृती राजन् येन भूमिभुजो वयम् ।
यावन्मूर्ध्नि रवेः पादास्तावत् द्योतयते दिशः । द्योतयेन्नान्यथा किं न ग्रावैव तपनोपलः ।
अथ राजाभ्यधात् केन राजन्नपकृतन्तव । यत्प्रत्ययचिकीर्षायै तमीशमनुशोचसि ।
मातृगुप्तस्ततोऽवादीत् कोपस्मितसिताधरः । अस्मानुत्सहते कश्चिन्नापकर्त्तुं बलाधिकः ।
नयतागण्यतामस्मानन्तरज्ञेन तेन हि । न भस्मनि हुतं सर्पिर्नोप्तम्वा शस्यमूषरे ।
उपकारं स्मरन्नास्तु कृतज्ञत्वकथम्वदः । पदवीमुपकर्त्तॄणां यान्ति निश्चेतना अपि ।
निर्व्वाणमनुनिर्व्वाति तपनन्तपनोपलः । इन्दुमिन्दुमणिः किञ्च शुष्यन्तमनुशुष्यति ।
पुण्यां वाराणसीङ्गत्वा तस्मात्क्षमसुखोन्मुखः । इच्छामि सर्व्वसंन्यासं कर्त्तुं द्विजजनोचितम् ।
मणिदीपमिवेशान्तमन्तरेणान्धकारितां । बिभेमि द्रष्टुमप्युर्व्वीं भोगयोगे कथैव का ।
इत्थौचित्यनिधेस्तस्य वाणीमाकर्ण्य विस्मितः । धीरः प्रवरसेनोऽपि व्याजहारोचितं वचः ।
सत्यं विश्वम्भरा देवी भूपतेरस्तसारियं । उत्पत्त्या द्योतते धन्यैः कृतार्था भवादृशैः ।
अन्तरज्ञतया श्लाघ्यः कोऽन्यस्तस्मान्महीभुजः । इत्यज्ञडे जगत्येकस्त्वं यथावद्विवेद यः ।
चिरं खलु खिलीभूताः कृतज्ञत्वस्य वीथयः । धीर त्वयैव नलासु सञ्चारो यदि दर्श्यते ।
पाकर्येन्न ग्रभस्य भेऽथ तदसौ प्रागेव नादात्किमु स्वार्थयेन्न मयास्य किं न भजते दीनान् स्वबन्धूनयम् ।
सत्ता रत्नद्रुमोऽप्य भीर्यदि न तल्लुब्धः किमेष त्यजेदित्यन्तः पुरुषाधमः कलयति प्रायः कृतोपक्रियः ।
अत्युदात्तगुणैस्तैषा कृतपुण्यैः सगोपिता । मतमाश्वो भवत्येव यावन्नात्मापि सत्क्रिया ।
तत्त्वं गुणवतामप्यस्तत्वंशोयापि नन्दितः । परीक्षितो मणिरिव व्यक्तं बहुमतः सतां ।
तस्मादगुस्त्वराणास्मान् मास्म त्याक्षीर्नरेश्वताम् । ममापि ख्यातिमायातु गुणवत्पक्षपातिता ।
पूर्व्वक्ष्माय परमं मयापि प्रतिपादिताम् । भवान् पाणिप्रणयिनीं विदधातु पुनर्भुवम् ।

अव्याजौदार्य्यचर्य्यस्य श्रुत्वेति नृपतेर्वचः। कृतस्मितो मातृगुप्तः शनैर्व्वचनमब्रवीत्। २१०
यान्यचराण्यन्तरेण वाच्यं वक्तुं न पार्य्यते। का गतिस्तदुपादाने मर्य्यादोल्लङ्घनं विना।
अतः परुषमप्यद्य किञ्चिदेव मयोच्यते। अव्याजार्जवमप्येतदार्य्यत्वमवधीर्य्यते।
सर्व्वः स्मरति सर्व्वस्य प्रागवस्थासु लाघवम्। आत्मैव वेत्ति माहात्म्यं वर्त्तमाने क्षणे पुनः।
पूर्व्वावस्था मदीया ते त्वदीया या च मे हृदि। ताभ्यां विमोहितावावां न विद्वोऽन्योन्यमाशयम्।
राजा भूत्वा कथं मादृक् प्रतिगृह्णातु सम्पदः। कथमेकपदे सर्व्वमौचित्यम्परिमार्जतु। २१५
असाधारणमौदार्य्यमाहात्म्यं तस्य भूपतेः। भोगमात्रकृते मादृक् किं साधारणतां नयेत्।
अपि च स्पृहयालुः स्यां भोगेभ्यो यदि भूपते। ध्रियमाणेऽभिमाने मे केन ते विनिवारिताः।
यन्ममोपकृतन्तेन तद्विना प्रत्युपक्रियां। जीर्णमेवाधुनाङ्गेषु प्रभवत्वेष निश्चय.।
या गतिर्भूभुजोऽमुष्य मया तामनुगच्छता। पात्रापात्रविवेकत्वख्यातिर्नेया प्रकाश्यतां।
एतावत्येव कर्त्तव्ये यातेऽस्मिन् कीर्त्तिशेषताम्। भोगमात्रपरित्यागाद्विदर्ध्या सत्यसन्धतां। २२०
इत्युक्त्वा विरते तस्मिन् जगाद जगतीपति.। त्वदीया न मया स्पृश्या त्वयि जीवति सम्पदः।
अथ वाराणसीं गत्वा कृतकाषायसंग्रहः। सर्व्वं सन्त्यस्य सुकृती मातृगुप्तोऽभवद्यतिः।
राजा प्रवरसेनोऽपि कश्मीरोत्पत्तिमञ्जसा। निखिलां मातृगुप्ताय प्राहिणोत् दृढनिश्चयः।
स हठापतितां लक्ष्मीं भिक्षाभुक् प्रतिपादयन्। सर्व्वार्थिभ्यः कृती वर्षान्दश प्राणानधारयत्।
अन्योन्यं साभिमानानामन्योन्यौचित्यशालिनां। त्रयाणामपि वृत्तान्त एष त्रिपथगापयः। २२५
राजा प्रवरसेनोऽथ नमयन्नवनीधरान्। अकाञ्चनवत्या ककुभो वृद्धस्य यशसो न्यधात्।
पीताब्धिर्लङ्घितोर्व्वीभृत् कुम्भयोनिरिवानयत्। तस्य प्रतापः प्रभवन् भुवनानि प्रसन्नतां।
शुष्यत्तमालपत्राणि शीर्णताडीदलानि च। तत्तन्नार्णवतीराणि चक्रे ऽरिस्त्रीमुखानि च।
स गङ्गालिङ्गिताङ्गस्य पूर्व्ववारिनिधेर्व्यधात्। सैन्येभमदनिष्यन्दैः कालिन्दीसङ्गमश्रियं।
रोधस्यपरपाथोधेः कटकैः स्पृष्टदिक्तटैः। चकारोत्पाट्य सौराष्ट्रानसौ राष्ट्रविपाटनम्। २३०
यशोऽर्थिन. पार्थिवेषु द्वेषरागबहिष्कृतः। ववृधे धर्म्मविजयस्तस्य क्षितिशतक्रतोः।
वैरिनिर्वासितं पित्र्ये विक्रमादित्यजं न्यधात्। राज्ये प्रतापशीलं स शीलादित्यापराभिधं।
सिंहासनं स्ववंश्यानां तेनाहितहृतन्ततः। विक्रमादित्यवसतेरानीतं स्वपुरं पुन.।
हेतुनुदीर्य्य विविधानमन्वानं पराजयम्। सप्त वारान् स तत्याज जित्वा मुम्मुनिभूभुजं।
धार्ष्ट्यादथाष्टमे वारे हेतुमाख्यातुमुद्यतम्। धिक्पशुर्वध्यतां सोऽयमित्यूचे नृपतिः क्रुधा। २३५
अवध्योऽहं पशुत्वेन वीरेत्युक्त्वा भयोत्सुक.। मध्यसभं नर्त्तोऽस्य सोऽनुकुर्व्वन् कलापिनं।
नृत्यं केकाश्च शिखिनो दृष्ट्वास्मै द्रविणं नृप.। अभयेन समं प्रादात्तात्ताङ्कचरणोचितं।
वसतोऽस्य द्विषो जित्वा नप्तुः पैतामहे पुरे। कर्त्तुं पुरं स्वनामाङ्कं पप्रथे स मनोरथ।
रात्रौ क्षेत्रस्य सम्प्रच दिव्यं शातुमथैकदा। स वीरो वीरचर्य्यायां निर्ययौ पार्थिवार्य्यमा।

गच्छतः क्ष्मापतेस्तस्य मौलिरत्नाङ्कविम्बितः। बभार तारामकरो रचाशर्षपविभ्रमम्।
अथानन्तचितालोकस्पष्टभीमतटद्रुमाम्। श्मशानप्रान्ततटिनीं पर्य्यटन्नाससाद सः।
ततस्तस्य सरित्पारे मुक्तसंरावमयतः। ऊर्द्ध्वबाहुर्महद्भूतं प्रादुरासीन्महौजसः।
नृपतिस्तस्य दृक्पातैर्ज्वलद्भिः कपिशीकृतः। उल्काज्योतिः कृताश्लेषः कुलाद्रिरिव दिद्युते
तमथ प्रतिशब्देन घोरेणापूरयन्दिशः। अत्रासं विहसन्नुच्चैर्वाच चण्डाचरः।
संत्यज्य विक्रमादित्यं सत्वोद्रिक्तश्च शूद्रकं। त्वाञ्च भूपाल पर्य्याप्तं धैर्य्यमन्यत्र दुर्लभं।
वसुधाधिपते वाञ्छासिद्धिस्तव विधीयते। सेतुमेतं समुत्तीर्य्य पार्श्वमागम्यतां मम।
इत्युदीर्य्य निजश्चानुं रच.पारान् प्रसारयन्। तन्महासरितो वारि सेतुसीमन्तितं व्यधात्।
अङ्घ्रेन रच.कायस्य ज्ञात्वा सेतुम्प्रकल्पितं। वीरः प्रवरसेनोऽथ विकोर्षा चुरिकान्दधे।
स तयोत्कृत्य तन्मांसं कृतसोपानपद्धतिः। अतरद्यत तत् स्थानं चुरिकावाल उच्यते।
पार्श्वस्थन्तं सप्रमुक्त्वा प्रातर्भस्त्रचपातनम्। दृष्ट्वा पुरं विधेहीति वदन्भूतस्तिरोदधे।
देव्या शारिकयाटेन यचेणाधिष्ठितश्च सः। ग्रामे शारीटकेऽपश्यत् सूत्रं वेतालपातितं।
भक्त्या प्रतिष्ठां प्राक् तस्मिन्निवेशी प्रवरेश्वरम्। जयस्वामी स्वयं पीठे भित्त्वा यन्त्रमुपाविशत्।
वेतालवेदितं लग्नं जानतो जगतीभुजा। स्थपतेः स जयाख्यस्य नाम्ना प्रख्यापितोऽभवत्।
नगरामातिलोम्याय भक्त्या तस्य विनायकः। प्रत्यङ्मुखः प्राङ्मुखतां भीमस्वामी स्वयं ययौ।
सद्भावश्र्यादिका देव्यस्तेन श्रीशब्दलाञ्छिताः। पञ्च पञ्चजनेन्द्रेण पुरे तस्मिन्निवेशिताः।
वितस्तायां स भूपालो बृहत्सेतुमकारयत्। ख्याता ततःप्रभृत्येव तादृङ्नौसेतुकल्पना।
श्रीजयेन्द्रविहारस्य बृहद्बुद्धस्य च व्यधात्। मातुलस्तु नरेन्द्रस्य जयेन्द्रो विनिवेशनम्।
बुभोज सिंहलादीन् यो द्वीपान् स सचिवोऽकरोत्। मोराकनामा मोराकभवनं भुवनाद्भुतम्।
षटत्रिंशद्गृहलचाणि पुरन्तत्प्रथमे पुरा। यस्यास्ताम्बर्द्धनस्वामी विश्वकर्मा च सीमयोः।
दक्षिणस्मिन्नेव पारे वितस्तायाः पुरा किल। निर्मितन्तेन नगरं विभक्तैर्धुकमापणैः।
ते तत्राभ्रंलिहाः सौधा यानधाद्यद्य दृश्यते। दृष्टिस्त्रिग्धं निदाघान्ते चैत्रे चोत्कुसुमं जगत्।
तद्विना नगरं कुत्र पवित्राः सुलभा भुवि। सुभगाः सिन्धुसम्भेदाः क्रीडावसथवीथिषु।
दृष्टः क्रीडानगोऽन्यत्र न मध्येनगरं क्वचित्। यतः सर्व्वाकर्षा लक्ष्मीः संलक्ष्या चुपथादिव।
वैतस्तं वारिवास्तथैर्दृत्तृदिमग्रकरम्। श्रीसोऽपेऽङ्कि स्वैरमायात् कृततोऽन्यत्र लभ्यते।
प्रतिदेवगृहं कोशास्ते तस्मिन्नर्पिता नृपैः। सहस्रशः प्रकर्षन्ते ये. कर्तुं भूः सागराम्बरा।
पुरे निवसतस्तस्मिंस्तस्य राजप्रजास्रजः। शनैः शाखाप्यनाभस्य षष्टिः सम्वत्सरा ययुः।
ललाटे शूलमुद्राङ्कं जराशुक्लाः शिरोरुहाः। तस्य श्मश्रुश्मशार्षङ्किगङ्गाश्रीविभ्रमन्दधुः।
अथाश्वपादेनेशान निर्दिष्टस्तत्क्षणागतः। काश्मीरिको जयस्ताख्यो द्विजन्मायोजि पार्श्वगः।
ग्रामोऽस्यास्मन्य मान्यस्माद्द्विजतोऽभिमतस्वतेत्। राज्ञे प्रवरसेनाय लेख एष प्रदर्श्यतां।

इत्युक्त्वार्पितलेखोऽसावसमर्थः पयः प्रयून्। गन्तुं मेऽस्थानखिन्नोऽस्मि मद्यस्तेनेत्यगच्छत।
स्नाप्यस्तावत्त्वं स्पृष्टो द्विजः कापालिना मया। उक्त्वेति तेन चिप्तोऽसावासन्ने दीर्घिकाजले।
उन्मीलितेचणोऽद्राचीत् स्वं स्वदेशादथोत्थितम्। तत्युरश्चार्चने राज्ञो भृत्यान् व्यग्रान् जलाहृतौ।
स्वमावेदयितुं नद्या नीयमाने नृपान्तिकम्। अथ्याचिप्तोऽचिपल्लेखं स स्नानकलसे ततः।
प्रवरेशं स्नापयता स्वस्तन्तत् कलसात् पुनः। राज्ञा लेखं वाचयित्वा जयन्तः प्रापितोऽन्तिकं।
कृतं कृत्यं महद्दत्तं भोगा भुक्ता वयोगतं। किमन्यत् करणीयं ते एहि गच्छ शिवालयम्।
ततस्तं दृत्तसङ्केतः सन्तोष्याभिमतार्पणात्। भित्त्वा तमग्रप्रासादं जगाहे विमलं नभः।
जनैः स ददृशे गच्छन् कैलासतिलकां दिशम्। विपदे घटयन् व्योम्नि द्वितीयतपनोदयं।
जयन्तेनाद्भुतोदन्तहेतुनावाप्य सम्पदः। स्वनामाङ्काग्रहारादिकर्मभिर्निर्मलाः कृताः।
एवं स भुवनैश्वर्यं भुक्त्वा भूमिभृताम्वरः। अनेनैव शरीरेण भेजे भूतपतेः सभाम्।
प्रासादे प्रवरेशस्य सिद्धचेत्रे क्षमापतेः। स्वर्गद्वारप्रतिभटं द्वारमद्यापि लक्ष्यते।
तस्य रत्नप्रभादेव्याञ्जातो राजा युधिष्ठिरः। अपासीन्नवमासोनाः क्ष्माञ्च द्वाविंशतिं समाः।
सर्व्वरत्नजयस्कन्धगुप्तशब्दाङ्किताभिधाः। आसन्विहारचैत्यादिकृत्यैस्तत् सचिवा वराः।
भवच्छेदाभिधं ग्रामं स्तुत्यश्चैत्यादिसिद्धिभिः। योव्यधात् सोऽस्य वज्रेन्द्रोऽप्यासीन्मन्त्री जयेन्द्रजः।
दिक्कामिनीमुखोत्कीर्णकीर्त्तिचन्दनचन्द्रकाः। आसन् कुमारसेनाद्यास्तस्यान्येऽप्यग्र्यमन्त्रिणः।
पद्मावत्यां सुतस्तस्य नरेन्द्रादित्य इत्यभूत्। लखणापरनामा यो नरेन्द्रस्वामिनं व्यधात्।
वज्रेन्द्रतनयौ वज्रकनकौ यस्य मन्त्रिणौ। अभूतां सुकृतोदन्तौ राज्ञी च विमलप्रभा।
स विधायाधिकरणं लिखितस्थितये निजम्। द्यां त्रयोदशभिर्वर्षैरारुरोह महाभुजः।
तस्यानुजो धरणिभृद्रणादित्यस्ततोऽभवत्। तुञ्जीनापरनामानं यञ्जनाः प्राकरञ्जसा।
जगद्विलक्षणं यस्य शङ्खमुद्राङ्कितं शिरः। अपूर्व्वशर्व्वरीशान्तर्लीनभानुश्रियं दधे।
रिपुकण्टाटवीश्वासीद्यस्य धाराधरः पतन्। तद्वधूनेत्रकुण्डैस्तु जलाधिक्यमधार्य्यत।
अपूर्व्वो यत्प्रतापाग्निः प्रविश्योर्व्वीं द्विषां न्यधात्। नारीनेत्रेषु नीरोर्म्मीन्मन्दिरेषु तृणाङ्कुरान्।
यस्य पाणिप्रणयितां कृपाणे समुपागते। कवन्धेभ्यः परो नृत्यं न व्यधत्त द्विषद्बले।
तस्याप्यपोढमाहात्म्या देवी दिव्याकृतेः प्रिया। विष्णुशक्तिः चितिम्प्राप्ता रणारम्भाभिधाभवत्।
स हि जन्मान्तरे पूर्व्वं द्यूतकारोऽभवत् किल। कदापि प्राप निर्व्वेदं सर्व्वस्वं कितवैर्जितं।
देहत्यागोद्यतोऽप्यासीत् प्राप्यं किञ्च विचिन्तयन्। न पर्य्यन्तेऽप्युपेचन्ते कितवाः स्वार्थसाधनं।
अवन्ध्यदर्शनाद्विन्ध्ये देवीं भ्रमरवासिनीम्। द्रष्टुमैच्छदराकाङ्क्षी निर्व्यपेचः स्वजीविते।
भ्रमरैः शङ्कुपुच्छाद्यैः खण्ड्यमानस्य देहिनः। तदास्पदं हि विशतो दुर्लङ्घ्या पञ्चयोजनी।
स वज्रशङ्कुपुच्छानां धीमांस्तेषाम्प्रतिक्रियां। देहेऽवश्यपरित्याज्ये मन्वानोऽभूद्दुष्कराम्।
प्रागधोवर्म्मणा देहं ततो महिषचर्म्मणा। तेन च्छादयता दत्तो गूढलेपोऽथ सगोमयः।

अथ भानुकरोच्छुष्कात्क्षेपाप्रेङ्खिताङ्गकः । स सोऽटव्य सञ्चारी प्रतस्थे क्रूरनिश्चयः ।
सरलां सरणिं त्यक्त्वा जीवितस्पृहया समम् । गुहा तेन ततः सान्द्रं तमोभीमा यगाहत ।
अथोदतिष्ठन् गर्त्तेभ्यो घोरा भ्रमरमण्डलाः । पक्षशब्दैः श्रुतिं घ्नन्तो मृत्युतूर्य्यरवैरिव ।
ते तमुच्छुष्कमृत्क्षेपरेणुग्रथितलोचनाः । सहसा नाक्रमन्ते स्म प्रहरन्तोऽपि बाधितुं ।
रेणुभिर्बाधितदृश. ते न्यवर्तन्त षट्पदाः । तेऽखण्डयंस्तु मृत्क्षेपं न्यपतंश्चैव वा नवा ।
तैः खण्ड्यमानमुच्चण्डैर्व्रजतो योजनत्रयीम् । क्रमान्मृत्कवचन्तस्य पथि संक्षयमाययौ ।
ततो मुञ्जः प्रहरता तेषां महिषचर्म्मणि । घोरश्चटचटाघोषः प्रादुरासीद्भयङ्करः ।
चतुर्थयोजनस्यार्द्धमतिक्रम्य विवेद स । रणत्कारैर्द्विरेफांस्तानयोवर्मणि पातिनः ।
धावंस्ततोऽतिवेगेन खण्ड्यमानेन षट्पदैः । स शस्त्रवर्म्मणामोचि चित्तं धैर्य्येण नो पुर. ।
गव्यूतिमात्रमासन्ने देवीधामनि धैर्य्यवान् । धुन्वन् कराभ्यां मधुपान्धावति स्म स धीरधीः ।
अथ स्नाय्वस्थिशेषाङ्गो लूनमांसः षडङ्घ्रिभिः । कराभ्यामक्षिणी रुन्धन्देव्यायतनमासदत् ।
प्रशान्ते भृङ्गसम्पाते प्रकाशमवलोकयन् । स देव्याः पादयोरग्रे पपातोद्भ्रान्तजीवित ।
स्तोकावशेषप्राणन्तन्देव्याश्वासयितुन्ततः । अभिरामं वपुः कृत्वा पस्पर्शाङ्गेषु पाणिना ।
दिव्येन पाणिस्पर्शेन तेन पीयूषवर्षिणा । स क्षिप्रासादितस्वास्थ्यो दिक्षु चिक्षेप चक्षुषी ।
प्रविष्टमात्रः प्रैक्षिष्ट सिंहविष्टरशोभिनीं यां । घोराकारां स तान्देवीन्तदाऽद्राक्षीन्न तामुनः ।
ददर्श पुनरुद्यानलतावासो विलासिनीम् । स्थितां पुष्करिणीतीरे श्यामाम्पुष्करलोचनाम् ।
गृहीतहारमुक्ताढ्यां बद्धापीनस्तनाञ्जलिं । महार्हैः कान्तिकुसुमैर्यौवनेनार्च्चिताङ्गकाम् ।
यावकाहारिणौ पादौ दधतीं कृच्छ्रचारिणौ । स्तनं च्छन्नमुखं द्रष्टुं तपस्यान्तामिवान्वहम् ।
भास्वद्बिम्बाधरां कृष्णकेशीं सितकराननां । हरिमध्यां शिवाकारां सर्व्वदेवमयीमिव ।
तां विभाव्यानवद्याङ्गीं निर्जने यौवनोर्जितां । निन्ये वारितवामेन स कामेन विधेयतां ।
दधती रूपमाधुर्य्यपूरच्छन्नामधृष्यतां । अप्सराः प्रत्यभात्तस्य साद्धि चित्तेन देवता ।
कृपाम्रदुरवादीत्तं व्यथितोऽसि चिरं पथि । मुञ्ज सौम्य समाश्वस्य प्रार्थ्यतामुचितो वरः ।
स ताम्बभाषे शान्तो मे भवत्या दर्शनश्रमः । अदेवी किन्तु भवती वरं दातुं कथं क्षमा ।
देवी जगाद तं भद्र कोऽयन्ते मनसि भ्रमः । देवी वा स्यामदेवी वा वरीतुं त्वान्तु शक्नुयां ।
इति सोऽभीष्टसम्प्राप्तौ कारयित्वा प्रतिश्रवम् । दूरमुत्क्रान्तमर्य्यादः सङ्गमं तामयाचत ।
तमभ्यधात् सा दुर्बुद्धे कोऽयन्तेऽनुचितो विधि. । प्रार्थयस्वेतरद्यस्मात् साहं भ्रमरवासिनी ।
देवी ताञ्जानतोऽप्यस्य नाभूदवहितं मन. । निरुद्धा वासनाः केन जन्मान्तरनिबन्धना. ।
स तामुवाच सत्यश्चेद्देवि स्वाङ्गिरमिच्छसि । प्रमाणीकुरु मद्वाणीमहमन्यन्न कामये ।
पूर्व्वमेव हि जन्तूनां योऽधिवासो निलीयते । तिलानामिव तेषां स पर्य्यन्तेऽपि न शीर्य्यते ।
देवी वा नवकान्ता वा भीमा वा शोभनापि वा । यादृशी पूर्व्वमद्राक्षं तादृश्येवावभासि मे ।

तमित्थं कथयन्तं सा ज्ञात्वा निश्चलनिश्चयम्। एवं जन्मान्तरे भावीत्यभ्यधादनुरोधतः।
असहन्ते हि संस्रष्टुं न दिव्या मर्त्त्यधर्म्मिणः। तद्गच्छ कुरु सङ्कल्पमित्युक्त्वा सान्तर्दधे ततः।
अभून्यजन्मा भूयासन्तया देव्येति चिन्तयन्। प्रयागवटशाखायाद्दाचीत् स्ववपुस्ततः।
सोऽजायत रणादित्यो रणारम्भा च सा भुवि। मर्त्यभावेऽपि यन्नैव जहौ जन्मान्तरस्मृतिं।
रतिसेनाभिधश्चोलराजः सन्ध्योऽब्धिपूजने। तान्तरङ्गान्तराल्लेभे रत्नराजिमिवोज्ज्वलाम्।
आबाल्याद्वासुदिव्योर्ऋि तामलङ्कृतयौवनां। दिव्यार्हां पृथिवीशेभ्यो नार्थिभ्योऽपि ददौ नृपः।
रणादित्यनृपामात्ये दूत्यायाते तथैव तं। प्रत्याख्यानेच्छुमाचख्यौ सैव तद्वरणं वरम्।
तदर्थमेव कथितस्वोत्पत्तिवृत्तान्ततः पिता। द्रुतं कुन्तलभूभर्त्तुः सुहृदः प्राहिणोद्गृहं।
प्रहृष्टो विप्रकृष्टन्तं देशं गत्वा व्यधत्त तां। परिणीय रणादित्यः शुद्धान्तस्याधिदेवतां।
मर्त्यसंस्पर्शभीरुः सा महादेवी भवन्त्यपि। तं मायया मोहयन्ती न पस्पर्श कदाचन।
व्यधान्मायामयीं राज्ञस्तल्पे स्वसदृशीं स्त्रियम्। स्वयम्भ्रमररूपा सा निर्जगाम वहिर्निशि।
स्वनाम्ना स्वस्य देव्याश्च कृत्वा परस्परहृदयं। माहेश्वरः शैललिङ्गे कारयामास कारुभिः।
श्वः प्रतिष्ठाप्रसङ्गेऽथ सज्जे तल्लिङ्गयोर्द्वयं। देशान्तरागतः कश्चित् दूषयामास दैववित्।
स दृष्टप्रत्ययः शश्वत्तयोर्घटितलिङ्गयोः। अश्मखण्डे समण्डूकैर्ब्भावे गर्भमाहतम्।
किङ्कर्त्तव्यतया मूढं प्रतिष्ठाविघ्नविक्लवं। दिव्यदृष्टिः स्वयन्देवी ततो राजानमब्रवीत्।
राजन् गिरिसुतोद्वाहे पौरोहित्यम्पुरा भजन्। स्वमर्चाद्देवमादत्त पूजाभाण्डात् प्रजापतिः।
तां विष्णोः प्रतिमां वीक्ष्य पूजितान्तेन धूर्जटिः। शून्यानिव तदा मेने शक्तिरूपां विना शिवं।
निमन्त्रितैर्ढौकितानि रत्नान्यथ सुरासुरैः। पिण्डीकृत्य स्वयञ्चक्रे लिङ्गम्भुवनवन्दितं।
तां विष्णुप्रतिमान्तञ्च लिङ्गमीशानपूजितं। स्वयं प्रजासृजः पूज्यं कालेनादत्त रावणः।
तेनाप्यभ्यर्च्यमानं तं लङ्कायामभवच्चिरम्। देवद्वयं रावणान्ते नीतमासीच्च वानरैः।
निर्व्यक्तया ते कपयो गुरुत्वाद्धि मानसौकसः। श्रान्तोत्सुक्याः शनैर्द्देवौ न्यधुरुत्तरमानसे।
प्रागेव सरसस्तस्मात् कुशलैः शिल्पिभिर्मया। तावुद्धतौ प्रातरत्र प्राप्तौ द्रव्यस्य संशयं।
तयोः प्रतिष्ठा क्रियतामित्युक्त्वा पृथिवीभुजं। देवी प्रयाता शुद्धान्तं सिद्धान् सस्मार खेचरान्।
ते ध्यातमात्राः सम्प्राप्ता देव्यादेशेन पाथसः। उद्धृत्य नृपतेर्धाम्नि देवौ हरिहरौ न्यधु।
दिव्यैः प्रसूनैः संवीतौ हरनारायणौ जनः। प्रातर्नृपगृहे दृष्ट्वा परं विस्मयमाययौ।
सज्जे प्रतिष्ठालिङ्गेऽथ माहेश्वरतया नृपः। रणेश्वरप्रतिष्ठायां पूर्व्वं यावत् समुद्यतः।
रणारम्भानुभावेन तावद्देवाद्भुतावह। स्वयं पीठे रणस्वामी भित्त्वा यन्त्रमुपाविशत्।
॥ युग्मकं ॥ कर्त्तुं प्रभावजिज्ञासां राज्ञा दत्तधनस्ततः। स स्वयम्भूः स्वयम्भक्तांस्तांस्तान् ग्रामानदापयत्।
कुम्भदासतयाच्छन्नः सिद्धो ब्रह्माभिधो वसन्। परिज्ञाय तयोर्द्देव्या प्रतिष्ठाकर्म्म कारितः।
स दृत्तप्रत्यभिज्ञः सन् प्रतिष्ठाप्य रणेश्वरम्। व्योम्ना प्रजग्मणस्वामी प्रतिष्ठां गूढमादधे।

जनास्तल्लङ्घयन् यत् स स्वयं पाठमवातरत्। इति केषामपि हृदि प्रवादोऽद्यापि वर्त्तते।
सामब्रह्मप्रतिमं सिद्धं देवी ब्रह्मविदां वरम्। अकारयत्तमुद्दिश्य परार्द्ध्यं ब्रह्मसत्तमम्।
रणारम्भास्वामिदेवौ दम्पतीभ्यां व्यधीयत। मठः पाशुपतानाञ्च ताभ्यां प्रद्युम्नमूर्द्धनि।
आरोग्यशाला निरधाप्युश्लाघत्वाय रोगिणां। तेन सेनामुखी देवी भयशान्त्यै च कारिता।
ख्यातिं रणपुरस्वामिसंज्ञया सर्व्वतोगतम्। स सिंहरोत्सिकाग्रामे मार्त्तण्डं प्रत्यपादयत्।
अमृतप्रभया तस्य राज्ञः पत्न्यान्यया कृतः। दक्षिणस्मिन् रणेशस्य पार्श्वे देवोऽमृतेश्वरः।
मेघवाहनभूभर्तृपत्न्या भिन्नाख्यया कृते। विहारेऽपि तया बुद्धबिम्बं साधु निवेशितं।
राज्ञे देव्यनुरक्ताय सानुक्रोशाय सैकदा। पातालसिद्धिदं मन्त्रं प्रददौ हाटकेश्वरम्।
साभून्मोघास्य मन्त्राप्तिरिति मत्वा तयार्पितम्। असाधयत् स तम्प्राप्य वसन्तं वत्सरान् बहून्।
छलत्टिकापथे कष्टं ततो नन्दिशिलाहृतः। भूरिभिर्वत्सरैर्मन्त्रसिद्धेः प्रणयितां ययौ।
स्वप्नैव सिद्धलिङ्गस्य जातो भङ्गुरनिश्चयः। चन्द्रभागाजलं भित्त्वा नमुचेः प्राविशद्दिलं।
बिलेऽपावृततां याते दिवसानेकविंशतिं। प्रविश्य पौरान् प्राज्ञिन्ये दैत्यस्त्रीभोगभोगितां।
एवं स भूपतिर्भूत्वा भुवं वर्षशतत्रयम्। निर्व्वाणश्लाघ्यनिर्व्यूढपातालेश्वरमासदत्।
सानुगे नृपतौ याते दैतेयदयितान्तिकम्। देवी सा वैष्णवीशक्तिः श्वेतद्वीपमगाहत।
राजवंशेष्वनेकेषु राज्ञोर्वंशद्वये परम्। द्वयोरेवात्र निर्व्यूढिम्प्रजावात्सल्यमागतं।
रणादित्यस्य गोनन्दवंशे रामस्य राघवे। लोकान्तरसुखस्यापि ययोरंशभुजः प्रजाः।
विक्रमाक्रान्तविश्वस्य विक्रमेश्वरकृत्सुतः। तस्याभोद्विक्रमादित्यस्त्रिविक्रमपराक्रमः।
राजा ब्रह्मगलूनाभ्यां सचिवाभ्यां समं महीं। सोऽपासीदासवसमो द्वाचत्वारिंशतिं समाः।
चक्रे ब्रह्ममठं ब्रह्मा गलूनोलूनदुष्कृतः। रत्नावल्याख्यया सध्वा विहारं निरमापयत्।
राज्ञोऽनन्तरजस्तस्य राजाभूत्तदनन्तरम्। तापितारातिभूपालो बालादित्यो यशोर्जितः।
लवणार्णवपानेन तर्षोत्कर्षमिवोद्वहन्। यत्प्रतापो रिपुस्त्रीणां सनेत्राम्भोऽभजन्मुखं।
आसमम् चरिमेगाधेबाधदंष्ट्रा इवावृताः। यस्याद्यापि जयस्तम्भाः सन्ति ते पूर्ववारिधौ।
प्रभावादेष वङ्गानां जित्वा येन व्यधीयत। काश्मीरिकनिवासाय कालम्ब्याख्यो जनाश्रयः।
काश्मीरेषु धनोदयमयहारं द्विजन्मनाम्। राजा मडवराज्ये यो भेडराश्ममकारयत्।
विश्वं विपाटितारिष्टमरिष्टोत्सादने व्यधात्। बल्लभा यस्य बिम्बोष्ठी बिम्बा बिम्बेश्वरं हरम्।
भ्रातरौ खङ्खणस्य येया मठमुरोफसः। सेनाय कारका आसन् खङ्खमुख्यप्रमाखताः।
बभूव तस्य भूभर्त्तुर्भुवमाहृतविभ्रमा। तनयानङ्गलेखाख्या शृङ्गारोदधिकौमुदी।
तां वीक्ष्य स्वपतोर्पितां मृगाक्षीं पितुरन्तिके। समीपप्रत्ययोग्यत्वं व्याजहारेति दैववित्।
भविता तव जामाता जगतीभोगभाजनम्। सद्वंशेन सायाज्य गोनन्दान्वयजन्मनां।
श्रुत्वाथ वत्सरमपायात्म्यमनिच्छन्नथ पार्थिवः। दैवमुत्पाटने चेतुमासीत् कृतोद्यमः।

अराजान्वयिने दत्ता नेयं साम्राज्यहारिणी । मत्वेति प्रददौ कन्यां न कस्मैचन भूभुजे । ४९०
हेतुं स्वरूपतामात्रं कृत्वा जामातरं नृपः । अथाश्वघामकायस्थञ्चक्रे दुर्लभवर्द्धनम् ।
मातुः कर्कोटनागेन सुस्नातायाः समीयुषा । राज्यायैव हि सञ्जाता राज्ञा नाज्ञायि तेन सा ।
निश्चिन्वाते हि धीमन्या यमेवायोग्यमाग्रहात् । जिगीषयेव तत्रैव निदधाति विधिः शुभम् ।
मात्सर्येण महद्ग्रहान् विसदृशे धूमध्वजे योग्यतां ज्ञात्वा स्वान्निदधत्त्विषं दिनपतिर्हास्यप्रयात्युन्मुखः ।
दैवं वेत्ति न च शिखी स परतोनामास्तु तत्सम्भवाः सुदीपा अपि यद्वशेन जगतस्तिग्मांशुविस्मारकाः ।
धिया भाग्यानुगामिन्या चेष्टमानो न याचितम् । अभूत् सर्व्वस्य चक्षुष्यः स तु दुर्लभवर्द्धनः । ४९५
प्रज्ञया द्योतमानं तं प्रज्ञादित्य इति प्रथाम् । कौवीरभाग्यसामग्र्या शनकैः श्वशुरोऽनयत् ।
पित्रोः प्रेयस्तयोद्वृत्ता तारुण्यादिमदेन च । राजपुत्री यथावत्तु गणयामास नैव तम् ।
स्वैरिणीसङ्गमो भोगा युवानोऽग्रे पितुर्गृहम् । पत्युर्मृदुलमित्यस्याः किन्नाभूच्छीलविप्लवत् ।
सा नित्यदर्शनाभ्यासाच्छनकैर्विशता मनः । अनङ्गलेखा खङ्खेन सम्प्रायुज्यत मन्त्रिणा ।
छन्नप्रेमसुखाभ्यासनष्टाभीतिसम्भ्रमा । धार्ष्ट्यन्दिनाद्दिनं यान्ती ततस्तन्मयतां ययौ । ५००
स मन्त्री दानमानाभ्यां वशीकृतपरिच्छदः । अन्तःपुरे यथाकामं विजहार तया सह ।
उपलेभे च शनकैस्तस्यास्तं शीलविप्लवं । विरागलिङ्गैश्चिह्नैर्धीमान् दुर्लभवर्द्धनः ।
सखीमध्ये रहः स्मेरा विवर्णा भर्तृदर्शने । अकाण्ड एव शोकाय पश्यन्ती सस्मितं पथः ।
पत्युः कोपे कृतावज्ञा भ्रूनेत्रचिबुकाञ्चनैः । तदप्रियं भाषमाणे सस्मितं न्यस्तलोचना ।
तत्तुल्यगुणनिर्व्विण्णा तद्विपक्षस्तुतौ रता । रिरंसां तस्य संलक्ष्य सखीभिर्बद्धसङ्कथा । ५०५
तच्चुम्बने भुग्नकण्ठी तदाश्लेषसहाङ्गका । तत्सम्भोगे त्यक्तहर्षा तत्तल्पे व्याजनिद्रिता ।
भवेद्धि प्रायशो योषित्प्रेमविक्रीतचेतना । निवेदयन्ती दौःशील्यमप्रियाचारवैकृतं ।
॥ कुलकं ॥ निगूढदारदौरात्म्यचिन्ताक्षामवपुस्ततः । शुद्धान्तमविशत् ज्ञातुं निशि दुर्लभवर्द्धनः ।
सोऽपश्यत् सुरतक्लान्तिसुप्तस्वापनि सद्मनि । दुर्जातभर्तुरङ्गेषु प्रत्युप्तामिव वल्लभां ।
श्वासैरगलितावेगैः कम्पयन्ती कुचाङ्कुरौ । निवेदयन्ती तत्कालमेव निर्वहणं रते । ५१०
अन्यस्यापि क्रुधो हेतुं पुनरप्यसमावहां । तां तथावस्थितां वीक्ष्य स प्रजज्वाल मन्युना ।
प्रजिहीर्षुः स रोषेण विमर्शेन निवारितः । प्रवृत्त्येव प्रवृत्त्येव निवृत्तं स्वममन्यत ।
ततस्तथाविधः क्षुभ्यत्प्रकोपावेशसागरः । विचारवेलया तस्य शनाच्छममनीयत ।
नमस्तस्मै ततः कोऽन्यो गण्यते वशिनां धुरि । जीर्यन्ते येन पर्याप्ता ईर्ष्याविषविसूचिकाः ।
सोऽचिन्तयदहो कष्टा येठरागानुगा द्रमाः । विचारवन्ध्याः क्षिप्यन्ते क्षिप्रं याभिरधो नराः । ५१५
स्त्रीति नामेन्द्रियार्थोऽयमिन्द्रियार्था यथा परे । तथैव सर्व्वसामान्या वशिनामत्र का क्रुधः ।
निसर्गतरला नारी को नियन्त्रयितुं क्षमः । नियन्त्रणेन किं वास्याध्रुवता चरणोचितम् ।
द्वयः शुनोरिव सङ्घर्षे एकार्थाभिनिविष्टयोः । रागिणोर्यदि मानः स कोऽपमानस्ततः परः ।

ममकारो मृगाक्षीषु क इवायं सचेतसां । स्वदेहेऽनुपपन्नोऽपि यः सोऽन्यत्र कथं मतः ।
उद्वेगोत्पादनाद्देषा यथा चेत्प्रतिभाति मे । रागस्तद्विस्मृतः कस्मान्मूलमुद्वेगशाखिनः । ५२०
सप्तपातालनिश्छिन्नमूलो रागमहीरुहः । भूमिभूतमनुत्पाद्य द्वेषमुन्मूल्यते कथम् ।
द्वेषो नामैष दुर्धर्षो जितो येन विवेकिना । क्षणार्द्धेनैव रागस्य तेन नामापि नाशितम् ।
वीक्ष्यैनद्दियया दृष्ट्या रागिणां भस्मैवधम् । ईर्ष्या जेया ततो रागः स्वयमाशा पलायते ।
इति ध्यात्वालिखद्वर्णान् खड्गः स्वांशुकपल्लवे । बध्योऽपि न हतो यत्त्वं स्मर्त्तव्यं तत्त्वयैव ।
जनैरलक्ष्यमाणेऽथ याते दुर्लभवर्धने । त्यक्तनिद्रस्य मन्त्री तद्दृष्ट्वा वर्णानवाचयत् । ५२५
दाक्षिण्यात् प्राणदस्यास्य खड्गस्य मनसा तदा । विसस्मारानङ्गलेखान्ध्यौ तु प्रत्युपक्रियां ।
तस्योपकर्त्तुमुचितं प्रतिकारमिच्छोश्चिन्ताविषन्नतु मनः स्मरबाणपंक्तिः ।
दुर्गोचरे परिचयप्रणयं प्रपेदे निर्निद्रता ननु कदाचन राजपुत्री ।
भूत्वा सप्तत्रिंशतमब्दान् सचतुर्भिर्मासैर्वन्द्यो मूर्द्धनि रत्नं नृपतीनां ।
तस्मिन् काले लोकमवापोज्ज्वलकीर्त्यो बालादित्यो बालशशाङ्काङ्कितमौलेः ।
पूर्वं विपन्नतनयेऽभिजनस्य शेषे गोनन्दसन्ततिरजायत तत्र शान्ते ।
प्राग्दन्तिभग्ननलिनाऽथ हठप्रविष्टतोयौघपाटितबिसा नलिनीव दीना ।
अथ शिथिलितमुख्यामात्यवर्त्यविघ्नः कनकघटविमुक्तैः पावनं तीर्थतोयैः ।
कथमपि स कृतज्ञो राजजामातुरत्यर्थ्यधित विधिवदिष्टं मूर्ध्नि राज्याभिषेकम् । ५३०
कर्कोटप्रभवः प्रभुः स मुकुटप्रत्युप्तमुक्ताकणद्योतश्रेणिफणाङ्कुराङ्कितवृहद्दाडमंहोमुद्वहन् ।
ज्ञातिप्रीतिघनोपशेषफणभृत्सम्पुत्रकृतपल्लवन्यासावर्त्तकहाटकाब्जपटलस्वधामशोभोऽभवत् ।
अथ विगलिता गोनन्दोर्वीभुजोऽभिजनाः शुचेरति शुचिनि भूः कर्कोटाहे कुले व्यधित स्थितिम् ।
चिरपरिचितात् स्वर्गभोगाध्वनः पतनं श्रिता त्रिभुवनगुरोः शम्भोर्मौलाविवामरनिम्नगा ॥ ५३२

नः १० आदित ५३ पन्था. । ५२५ इति श्रीकाश्मीरिकमहामात्यचम्पकप्रभुसूनोः कल्हणस्य कृतौ राजतरङ्गिण्यां
तृतीयस्तरङ्गः समाप्तः ।

---

## अथ चतुर्थस्तरङ्गः ॥

तद्गोत्रव्यतिरेकमद्रितनयादेहेन सिद्धाश्रमात्प्रत्यूहाम ह व्यपाहतु वपुः स्थाणोरमद्राण च।
वेष्या भोगिवधूशरीरकुटिलश्यामत्विषा वेष्टिता जूटाहेरपि यत्र भाति दयिता मूर्त्यैव पृक्ता तनु
स मही राजकन्याञ्च प्राप्तवानेकतः कुलात्। रत्नानाञ्च सुतानाञ्च राजाभूद्भाजनं शनैः।
पतिर्गोपितदौःशील्यात्तुल्यसौभाग्यगौरवा। अनङ्गभवनं चक्रे विहारं नृपतिप्रिया।
शिग्रुरेवायुषोऽल्पत्वं दैवज्ञोक्तं विचिन्तयन्। राज्ञः सुतो मल्हणाख्यो मल्हणस्वामिनं व्यधात्।
पारे विशोककोटाद्रौ प्रदत्तप्रतिपत्तिना। आदीयत द्विजेन्द्रेभ्यश्चन्द्रग्रामः क्षमाभुजा।
श्रीनगर्यां प्रतिष्ठाप्य दुर्लभस्वामिनं हरिं। षट्त्रिंशता वत्सराणां क्ष्मापस्तमुपाययौ।
अनङ्गदेव्यां सम्भूतस्तस्य दुर्लभकः सुतः। शशास वासवसमस्ततोवसुमतीं कृती।
मातामहस्य यो मात्रा दौहित्रस्तनयीकृतः। प्रतापादित्यइत्याख्यां तत्कुलानुगुणां दधे।
आडैनैडविडात् प्राप्तश्रिया यन्मन्त्रिणा कृता। अग्रहारा हनुमता पुण्या नमनसम्पदा।
प्रतापतापितारातिः प्रतापपुरपत्तनं। मघवन्नगरस्पर्द्धि दीर्घबाहुर्व्यधत्त सः।
नानादिगन्तरायाततत्तत्क्रयिकसंकुले। नोणाभिधोऽवसत्तस्य देशे रौहीतको वणिक्।
रौहीतदेशे जातानां निवेशाय द्विजन्मनां। महागुणो नोणमठं पुण्यश्रेष्ठं चकार सः।
स जातु राजभवने राज्ञा प्रीत्या निमन्त्रितः। अर्चितोऽभवदेकाहमुपचारैर्नृपोचितैः।
प्रातः सुखासिकां प्रेम्णा पृष्टोऽथ पृथिवीभुजा। शीर्षव्यथामकथयत् प्रजानां दीपकज्जलैः।
ततः क्रमेण नृपतिस्तेन जातु कृतार्थनः। वसंस्तदास्पदेऽद्राक्षीत् क्षपायां मणिदीपकान्।
विलासित्वेन लक्ष्म्या च तादृश्या तस्य विस्मितः। अथ दिनाण्यहान्यासीत्तत्रैव स कृतादरः।
एकदा तेन तत्कान्ता विलोक्य ललिताकृतिः। श्रीनरेन्द्रप्रभा नाम हर्म्ये हिमकरानना।
उरोजपूर्णकुम्भाढ्यसद्द्वारस्थितविभ्रमः। मूर्त्तिमन्मङ्गलं तस्थौ वरस्य च गृहस्य च।
हर्म्यस्य निर्जनतया स निःशङ्कविहारिणीं। तां विलोक्यानवद्याङ्गीमभिलाषेण पस्पृशे

सापि दर्शितमालीभिः किञ्चित् साचीकृतानना । अपश्यत् काश्यपीकान्तं श्रोत्रविश्रान्तया दृशा । १०
प्राग्जन्मप्रेमसम्बन्धाद्वा निदेशाद्वा मनोभुवः । सपक्षपातं सा तस्मै दृश्यैव विदधे मनः ।
क्षणादलब्धस्पर्शोऽपि तां सौभाग्यसुधामयीं । मज्जानामपि संस्पृश्य स्थितामिव विवेद सः ।
हर्म्यस्तम्भच्छन्नगात्री क्षणं भूत्वा जगाम सा । आवर्त्य वक्त्रं पश्यन्ती पार्थिवं तं मुहुर्मुहुः ।
गृहीतहृदयस्तन्व्या तावतैव महीपतिः । स चिन्ताजिह्मनयनो राजधानीं शनैर्ययौ ।
तत्र तस्य तदाकारध्यानावहितचक्षुषः । समस्त पुरसौत्या प्रपेदे तानवं तनुः । १५
अचिन्तयत् स धिक् कष्टं रूढोऽयमशुभावहः । अस्मिन् मे मानसोद्याने रागनामा विषद्रुमः ।
अहो नु सुभगा रागवृत्तिश्चित्तं विजित्य य । विवेकादीन् व्यधाद्दूरे सुहृदः परिपन्थकान् ।
भाव्यं कौलीनभीतेन येन भूमिभृता सता । तस्य मे दुःसहः कोऽयं सदाचारविपर्ययः ।
यत्र दारापहरणं राजैव कुरुते विशां । परः को नाम तत्रास्तु शमिना नीत्यतिक्रमे ।
विमृश्यन्निति भूपालो विस्रष्टुमभवत् क्षमः । न पद्धतिं साधुसेव्यां न च तां दीर्घलोचनां । २०
तमथ प्रथितास्वस्थं नेदीयोमरणं वणिक् । स जनाज्ज्ञातवृत्तान्तः सुजनो विजनेऽब्रवीत् ।
इमामवस्थां प्राप्तोऽसि किं धर्मेण निरुध्यसे । न प्राणसंशये जन्तोरकृत्यं नाम किञ्चन ।
यन्मतानि प्रतीक्ष्यन्ते विबुधैर्धर्मसंशये । तेषामपीदृशे कृत्ये श्रूयते संयमव्ययः ।
यशोऽनुरोधादुचितं नापि देहमुपेक्षितुं । स्वकीर्त्तिर्न परासूनां कीर्त्तिकर्णरसायना ।
माभून्मदनुरोधस्ते त्वत्प्रियार्थं हि पार्थिव । प्राणा अपि न मे गण्या इन्द्रियार्थेषु का कथा । २५
एवमुक्तोऽपि नाधत्से तां चेत्तत् सा सुरालयात् । गृह्यतां नर्त्तकी भूत्वा नृत्यज्ञत्वान्मयार्पिता
तेनेति प्रेर्य्यमाणः स बलिना च मनोभुवा । आलम्ब्यामथ जग्राह कथञ्चित्तां सुलोचनां ।
कृत्यैरुदात्तैः शापास्ततादृक्चारित्र्यलाघवा । नरेन्द्रमहिषी चक्रे श्रीनरेन्द्रेश्वरं हरं ।
क्रमेण च प्रजापुण्यैश्चन्द्रापीडाभिधं सुतं । प्रासोष्ट पार्थिववधूर्निधानमिव मेदिनी ।
तस्याभिजनमालिन्यं स्वच्छैरच्छेदि तद्गुणैः । शाणाश्मककणैः कार्ष्ण्यमाकरोत्थं मणेरिव । ३०
धूमाद्गाढमलीमसाच्छुचिपयः सूते घनस्योद्गमो लोहस्यातिसितस्य जातिरचलात् कृष्णाश्ममालामयात् ।
किञ्चात्यन्तजडाज्जलाद्द्युतिमतो ज्वालाध्वजस्योद्भवो जन्मावध्यनुकारिणो न महतां सत्यं स्वभावाः क्वचित् ।
तारापीडोऽपि तनयः क्रमात्तस्यामजायत । अविमुक्तापीडनामा मुक्तापीडोऽपि भूपते ।
वज्रादित्योदयादित्यललितादित्यसंज्ञकाः । प्रतापादित्यजाः ख्याताश्चन्द्रापीडादयोऽपि ते ।
वर्षान् पञ्चाशतं भुक्त्वा भुवं दुर्लभभूपतिः । पुण्यनिःश्रेणिभि. पुण्यामारुरोह दिवं शनैः ।
राजचूडामणिः श्रीमांश्चन्द्रापीडस्ततोऽभवत् । पीडितेन्दुत्विषा कीर्त्त्या कले. पीडाश्चकार यः । ३५
एकपादास्थितिर्धर्मः समस्थैर्वोज्झितो नृपैः । शश्वच्छ्लोककृता येन पादैः संयोजितस्त्रिभिः ।
यं क्षमाविक्रममुखाः परस्परविरोधिनः । सिषेविरे गुणास्तुल्यं दिव्योद्यानमिवर्त्तवः ।
स्थाने स्थाने यदीया श्रीस्तुल्यमाप्याययन्त्यभूत् । अमातुपात्तकुल्येव निखिलाननुजीविनः ।

दोषांस्त्यक्त्वान्यभूपेषु यं शुद्धा श्रीरशिश्रियत्। मार्गाद्रिस्रोघकालुष्यं त्यक्त्वा सिन्धुरिवार्णवं।
कार्य्यज्ञो यो नतश्चक्रे यत्फलीभूदविघ्नधीः। परं समाचरन् स्तुत्यं स्तूयमानस्त्रपां दधे।
व्यनीयत नयोऽमात्यैर्विनयं तान् स्वशिक्षयत्। वज्रं न भिद्यते कैश्चिच्छिनत्त्यन्यान् मणींस्तु तत्।
यस्य धर्म्मभयादासीत् संत्याज्यो धर्म्मसंशये। निजोऽपि पक्षः कुलिशत्रासादिव गरुत्मता।
न्यायं दर्शयता वर्त्म तेन राज्ञा प्रवर्त्तिताः। स्थितयो वीतसन्देहा भास्तेव दिनक्रियाः।
नियन्त्रिता यद्गुणितिस्तद्गुणोदीरणादियं। अतिप्रसङ्गभङ्गात्तन्नेयत्तावाप्तितः पुन.।
तस्य त्रिभुवनस्वामिप्रासादारम्भकर्म्मणि। चर्म्मकृत् कोऽपि न प्रादात् कुटीं चेत्रोपयोगिनीं।
प्रश्यत्प्रतिश्रुतार्थानां नव कर्म्माधिकारिणां। नैसर्गिकग्रहग्रस्तः सूत्रपातं न चक्रमे।
विज्ञापितोऽथ तैरेत्य तमर्थं पृथिवीपति.। तानेव सागसो मेने चर्म्मकारं न तं पुनः।
सोऽभ्यधात्तान् धिगेतेषामप्रेक्षापूर्व्वकारितां। प्रागेव यैरपृष्ट्वा तं प्रविष्टं नवकर्म्मणि।
नियम्यतां विनिर्माणं यद्वान्यत्र विधीयतां। परभूम्यपहारेण सुकृतं कः कलङ्कयेत्।
ये द्रष्टारः सदसतां ते धर्म्मविगुणाः क्रियाः। वयमेव विदध्मश्चेद्यातु न्यायेन कोऽधुना।
इत्युक्तवति भूपाले प्रेषितो मन्त्रिपर्षदा। पार्श्वात् पादूकृतस्तस्य दूतः प्राप्तो व्यजिज्ञपत्।
इच्छति स्वामिनं द्रष्टुं स च ब्रूते न चेन्मम। युक्तः प्रवेश आस्थाने बाह्यात्त्वावसरेऽस्तु तत्।
अन्येद्युरथ भूपेन स बहिर्दत्तदर्शनः। पुण्यकर्म्मणि नो विघ्नः किं त्वमेवेत्यपृच्छ्यत।
प्रतिभाति गृहं तच्चेद्रम्यं तत्र ततोऽधिकं। तदर्थतो धनं वापि भूयस्त्वं चाभ्यधीयत।
तूष्णीं स्थितं ततो भूपं चर्म्मकारो व्यजिज्ञपत्। दन्तांशुसूत्रैस्तत्सत्यमानं ज्ञातुमिवोद्यतः।
राजन् विज्ञाप्यते कश्चिदस्माभिर्यथाशयं। न स्वेयमवत्रिप्तेन तत्र द्रष्टा सता त्वया।
नाहमून. शुनो नास्ति काकुत्स्थात् पार्थिव. पृथुः। चुम्बन्तीवाद्य तत्सभ्याः संलापेऽस्मिन् किमावयोः।
जातस्य जन्तोः संसारे भङ्गुरः कायकञ्चुकः। अहन्ताममताख्याभ्यां शङ्कुभ्यामेव बध्यते।
कङ्कणाङ्गदहारादिशोभिनां भवतां यथा। निष्किञ्चनानामस्माकं स्वदेहेऽहंक्रिया तथा।
देवस्य राजधान्येषा यादृशी सौम्यहासिनी। कुटीघटमुखानद्धतमोरिस्तादृशी मम।
आजन्मना साक्षिणीयं मातेव सुखदुःखयोः। मठिका शोध्यमानाद्य नेक्षितुं शक्यते मया।
नृणां यदेश्महरणे दुःखमाख्यातुमीश्वरः। तदिमानच्युतोऽमर्त्यो राज्यभ्रष्टोऽथ पार्थिव.।
एवमप्येत्य मदेश्म मार्थ्येद्देव न याच्यते। सदाचारानुरोधेन दातुं तदुचितं मम।
इति तेनोत्तरे दत्ते भूभृद्गत्वा तदास्पदं। कुटीं जग्राह वित्तेन नाभिमान. शुभार्थिनां।
अवोचच्चर्म्मकारस्तं तत्र सव्यञ्जिताञ्जलिः। राजन् धर्म्यानुरोधेन परवत्ता तवोचिता।
अविगृहेण धर्म्मेण पाण्डुसूनोः पुरा यथा। धार्म्मिकत्वं तथा तेऽद्य मया स्वप्नेन वीक्षितं।
स्वस्ति तुभ्यं चिरं स्थेया धर्म्म्या वृत्तान्तपद्धती.। दर्शयन्नीदृशीः शुद्धाः श्रद्धया धर्म्मचारिणां॥
एव निष्कलङ्काचारः स चक्रे पावनीं भुवं। राजा त्रिभुवनस्वामिकेशवस्य प्रतिष्ठया।

कृत्यैः प्रकाशदेव्याख्या प्रकाशाकाशकान्तिभिः । प्रकाशिका विहारस्य तत्पत्नी कारयित्र्यभूत् ।
गुरुर्म्मिहिरदत्ताख्यस्तस्योदात्तगुणोऽभवत् । विश्वम्भरस्य गम्भीरस्वामिनाम्नो विधायकः ।
सर्व्वाधिकरणस्थैर्य्यच्छेत्ता च्छलितकाभिधः । नगराधिकृतस्तस्य छलितस्वामिनं व्यधात् ।
कदाचन सभासीनं दृष्ट्वा धर्म्माधिकारिभिः । प्रायोपविष्टा राजानं ब्राह्मणी काचिदब्रवीत् ।
त्वयि प्रशासति महीमहो गर्हानिवर्हणे । सुखसुप्तस्य मे पत्युर्हृतं केनापि जीवितं ।
एषैव महती लज्जा सदाचारस्य भूपतेः । यदकालभवो मृत्युस्तस्य संस्पृशति प्रजाः ।
कलिकालबलात्तच्चेत्त्वादृशैरपि दृश्यते । पापात् पापतरे ऽमुष्मिन्दोषे कथमुदास्यते ।
चिन्तयन्त्यपि नावैमि भर्त्तुः कञ्चिद्विरोधिनं । निर्दोषस्य हि तस्यासन् सर्व्वतः शीतला दिशः ।
अनसूयो निरुत्सेकः प्रियवाग्गुणवत्सलः । पूर्व्वाभिभाषी निर्लोभो न विद्वेषो हि कस्यचित् ।
तस्य तुल्यवया बाल्यात् प्रभृत्यध्ययने ऽधमः । मात्रिकस्वामिवास्तव्यो विप्रः शङ्काऽभिचारवित् ।
गुणदारिद्र्यनिर्निद्रैः क्षुद्रैः कौशलशालिनां । प्रसिद्धिस्पर्द्धया बन्ध्यैर्धाव्यन्तेऽसूययाखलः ।
नापुंश्चलीयो दुःशीलो नाद्रोहो नित्यशङ्कितः । नावाचालो मृषाभाषी नाकायस्थः कृतघ्नधीः ।
नादासस्पृहजो लुब्धो नानीर्ष्यो नित्यदुःखितः । नास्त्रीजितः सर्व्वहास्यो नाषण्डः स्निग्धभाषितः ।
नानन्त्यजः पिहदोषो नारागी निरपत्रपः । नाक्षुद्रविद्यः पापीयानिति भूतार्थसंग्रहः ।
तिलकं । इत्युक्तवत्यां ब्राह्मण्यां तच्छङ्काविषयं द्विजं । आनीय परिशुध्यस्वेत्यभ्यधाद्वसुधाधिपः ।
भूयो ब्राह्मण्यवादीत्तं ख्यातः ख्यातोदविद्यया । निःसम्भ्रमः स्तम्भयितुं देव दिव्यक्रियामयं ।
न्यायदक्षरवावादीत्ततस्तं मेदिनीपतिः । अदृष्टदोषे किं कुर्म्मो वयमत्राधिकारिणः ।
नान्यस्मिन्नपि दण्डस्य प्रसङ्गो निश्चितागसि । किं पुनर्ब्राह्मणे दण्ड्यो यो दोषेऽपि वधं विना ।
उक्तेति विरते तस्मिन् द्विजजायाब्रवीत् पुनः । चतस्रः क्षणदाः क्षीणराजन्नपि न शस्यते ।
नाभ्यगा परिणेतारं हन्तुः प्रतिचिकीर्षया । तत्राविहितदण्डेऽस्मिंस्त्यजाम्यनशनैरसून् ।
तया स्थितायां ब्राह्मण्यां कृतप्रायोपवेशनः । स्वयं त्रिभुवनस्वामिपादानुद्दिश्य सोऽभवत् ।
त्रिरात्रोपोषितं तत्र राजानं रजनीक्षये । स्वप्ने स्वप्नोत्तमोऽवोचत् सत्योक्तिं सत्यवाहनः ।
ईदृशं युज्यते राजन् सत्यस्याक्षेपणं कथं । निशीथे कस्य सामर्थ्यं कर्त्तुं दिवि विकर्त्तनं ।
भवच्छ्रत्यनुरोधेन यद्यदेतत् प्रवर्त्तते । मत्प्रासादाङ्गनेऽमुष्मिन् शालिचूर्णं विकीर्य्यतां ।
प्रदक्षिणं कुर्व्वतोऽस्य चिरत्र यदि दृश्यते । ब्रह्महत्यापादमुद्रा पादमुद्रानुयायिनी ।
तदेष वधको भूत्वा सदृशं दण्डमर्हति । रात्रावेष विधिः कार्य्यो दिने पापहृदर्य्यमा ।
अथ सत्कारयित्वा स दृष्टदोषं द्विजन्मनि । दण्डं दण्डधरश्चक्रे द्विजत्वाद्वधवर्ज्जितं ।
महीमघोना भर्त्रा तस्मिन् विहितशासने । ततो द्विजजाया सा क्ष्माभीरभ्यधादिदं ।
इयत्यवनिभृल्लोके गूढपापानुशासनं । कार्त्तवीर्य्यस्य वा दृष्टं तव वा पृथिवीपते ।
दण्डधारे त्वयि क्ष्मापं शिक्षितैतां प्रशासति । को धैर्य्येहृदयो पारमनामाधावसीदति ।

इत्थं कृतयुगध्येयैर्धर्म्यवृत्तान्तवस्तुभिः। स्वल्पोऽपि राज्यकालोऽस्य पर्य्याप्तैः पर्य्यपूर्य्यत। ११०
द्रष्टुर्व्विष्टरपाथोजसंसर्गेण निरर्गलः। निविडं जडिमा जाने व्यधत्त धियि सन्निधिं।
विभक्तवर्णशोभस्य तस्यासावन्यथा कथं। माहेन्द्रस्येव धनुषो विदधे दृष्टनष्टतां।
कारयित्वाभिचारं तं निग्रहोग्रपथं द्विजं। तं यशःशेषतामीशं तारापीडोऽनुजोऽनयत्।
दुष्कर्म्मदुर्भगान् भोक्तुं भोगान् पापगुणोन्नतं। स्पृशन्ति कण्टकान् प्राप्तं करभाइव केतकं।
ततः प्रभृति भूपानां राज्येच्छूनां गुरून् प्रति। दुष्टाः प्रवृत्ता राज्येऽस्मिन्नभिचारादिकाः क्रियाः। ११५
श्रीचन्द्रापीडदेवस्य तत्क्षमित्वमपश्चिमं। संस्मर्य्यमाणं कुरुते न कस्योत्पुलकं वपुः।
मुमूर्षुर्यत् स लब्धापि तं कृत्याध्यायिनं द्विजं। वराकोऽन्यप्रयुक्तेऽस्मिन् को दोष इति नावधीत्।
विस्मृतः स कृतज्ञाभृतपंक्तिमध्येऽद्य वेधसा। दत्वा कार्य्यपदं न्यूनं न्यस्तः कलिनृपावलौ।
अष्टौ वर्षान् साष्टमासाननुगृह्येति मेदिनी। प्रविवेश वशी स्वर्गमनिशश्च सतां मनः।
भ्रातृद्रोहाख्यसुहृदा प्रतापेन भयावहः। उवाह तारापीडः स चण्डः क्ष्मामण्डलं ततः। १२०
पूर्णपात्रप्रतिभटं द्विषां लुण्ठयता यशः। शिशोः प्रतापस्योत्पत्तौ कबन्धा येन नर्त्तिताः।
तस्यातिदुष्टदृष्टस्य लक्ष्मीर्दीप्तापि सर्व्वतः। अभूदुद्वेगजननी श्मशानाग्नेरिव द्युतिः।
मन्त्रैः प्रभावसान्निध्यं देवानां क्रियते द्विजैः। मत्वेति देवद्वेषी स द्विजानां दण्डमत्यजन्।
माघं षड्भिर्दिनैरूनं चतस्रश्च समा भुवि। स प्राभवद्गुरुद्रोहप्ररोहत्सुकृतात्ययः।
अथारूढाभिचारेण विहितायुःक्षयो द्विजैः। स भ्रातृसदृशीं शान्तिं प्रपेदे न पुनर्गतिं।
योऽयं परापकरणाय सृजत्युपायं तेनैव तस्य नियमेन भवेद्विनाशः। १२५
धूमं प्रधाति नयनान्धकरस्य योऽग्निर्भूत्वाम्बुदः स शमयेत् सलिलैस्तमेव।
राजा श्रीललितादित्यः सार्व्वभौमस्ततोऽभवत्। प्रादेशिकेश्वरस्रष्टुर्व्विधेर्बुद्धेरगोचरः।
प्रतापांशुच्छटाकूटैः पटवासमधर्म्मभिः। जम्बुद्वीपद्विजेन्द्रस्य येनातन्यत मण्डनं।
नयाश्वलिषु बद्धेषु राजभिर्व्विजयोद्यमे। पार्थिवः पृथुविश्रान्तिर्युधि क्रोधं मुमोच यः।
विनिःसरज्जनतया भयाद्गर्भानिवामुचन्। द्विषां वसतयो यस्य निशम्यास्कन्ददुन्दुभिं। १३०
विलोलतिलकान्तैर्यैः सनेत्राम्भोभिराननैः। निवापाञ्जलिदानानि द्विषां नारीरकारयत्।
क्षितिं प्रदक्षिणयतो रवेरिव महीपतेः। जिगीषोः प्रायशस्तस्य यात्रास्वेव वयो ययौ।
करं पूर्व्वदिशो गृह्णन् प्रतापानलसन्निधौ। अन्तर्व्वेदीं महाराजः स्वकीर्त्युष्णीषभृद्बभौ।
कन्यानां यत्र कुब्जत्वं व्यधाद्गाधिपुरे मरुत्। तत्रैव शंसनीयः स पुंसांश्चक्रे भयस्पृशां।
यशोवर्म्माद्रिवाहिन्याः क्षणात् कुर्व्वन् विशोषणं। नृपतिर्ललितादित्य प्रतापादित्यतां ययौ। १३५
मतिमान् कान्यकुब्जेन्द्रः प्रत्यभात् कृत्यवेदिनां। दीप्तं यल्ललितादित्यं पृष्ठं दत्वा न्यषेवत।
तत्सहायास्ततोऽप्यासन्निकाममभिमानिनः। कुसुमाकरतोऽप्युष्णे सुरभिश्चन्दनानिलः।
श्रीयशोवर्म्मणः सन्धौ सान्धिविग्रहिकोऽनयत्। न यं नियमनान्नेशे मित्रशर्म्माख्य सत्तमे।
सोऽभूत् सन्धिर्यशोवर्म्मललितादित्ययोरिति। लिलिखेनादिनिर्देशादनर्थत्वं विदन् प्रभोः।

॥ युगलकं ॥ सुदीर्घविग्रहाश्रान्तैः सेनानीभिरसूयितां । औचित्यापेचितां तस्य चितिभृद्क्रम
प्रीतः पञ्चमहाशब्दभाजनं तं व्यधत्त सः । यशोवर्म्मनृपं तञ्च समूलमुदपाटयत् ।
अष्टादशानामुपरि प्राक्सिद्धानां तदुद्भवै. । कर्म्मस्थानैः स्थितिः प्राप्ता ततः प्रभृति पञ्चभिः ।
महाप्रतीहारपीडा स महासन्धिविग्रहः । महाश्वशालापि महाभाण्डागारश्च पञ्चमः ।
महासाधनभागश्चेत्यता यैरभिधाः श्रिताः । शाहिमुख्या येष्वभवन्नध्यचाः पृथिवीभुजः ।
कविर्व्वाक्पतिराजश्रीभवभूत्यादिसेवितः । जितो ययौ यशोवर्म्मा तद्गुणस्तुतिवन्दितां ।
किमन्यत् कान्यकुब्जोर्व्वी यमुनापारतोऽस्य सा । अभूदाकालिकातीरं गृहप्राङ्गनवद्वशे ।
यशोवर्म्माणमुल्लङ्घ्य हिमाद्रिमिव जाह्नवी । सुखेन प्राविशत्तस्य वाहिनी पूर्व्वसागरं ।
पश्यद्भिर्जन्मवसुधां सेर्ष्याधोरणभर्त्सितैः । तन्मातङ्गैः कलिङ्गेभ्य. कथञ्चित् प्रस्थितं पथि ।
आक्रष्टलक्ष्मीपर्य्यङ्कादन्तिसंख्यादिवागताः । अशिश्रयंस्तं निःशेषाद्दन्तिनो गौडमण्डलात् ।
कटकेभघटाहस्तक्षतवीचिकचग्रहः । अदृश्यताग्रगैस्तस्य गृहीतः पूर्व्ववारिधिः ।
वनराजिश्यामलेन दिशं वैवस्वताङ्कितां । स प्रतस्थेऽब्धितीरेण तल्पकाणेन तु द्विषः ।
तस्योर्द्धजूटाः कर्णाटाः कृतप्रणतयोऽनयन् । सुवर्णकेतकीस्त्यक्त्वा प्रतापमवतंसतां ।
तस्मिन् प्रसङ्गे रट्टाख्या कर्णाटी चटुलेचणा । अपासीन्नृपतिर्भूत्वा पृथुश्रीर्दचिणापथं ।
विन्ध्याद्रिमार्गाः पर्य्याप्ता निष्पर्य्यन्तप्रभावया । दुर्गयेव तया देव्या कृता निहतकण्टकाः ।
ह्लिलितादित्यपादाब्जनखदर्पणमण्डले । स्वमूर्त्तिं वीच्य संक्रान्तां प्रणता सापि पिप्रिये ।
तालीतरुतलाचान्तनारिकेलरसोर्म्मय । कावेरीतीरपवनैस्तद्योधा. क्रममत्यजन् ।
चन्दनाद्रेस्तदास्कन्दत्रासभ्रश्यद्दहिच्छलात् । श्रीखण्डद्रुमदोःषण्डा मण्डलाग्रा इवापतन् ।
उत्तराश्मस्विव पदं चिप्ता द्वीपेष्ववित्रतः । स कुल्याया इवाम्भोधेः चिप्रं चक्रे गतागतं ।
ततोऽब्धिवीचिनिर्घोषैरुद्गीतजयमङ्गलः । प्रतस्थे पश्चिमामाशां जिगीषूणामपश्चिमः ।
आक्रम्य क्रमुकान् यत्र कोङ्कणान् यत्र तापयन् । तुरगानिव तिग्मांशुः प्रतापस्तस्य पप्रथे ।
पश्चिमाब्धिमरुद्घ्रातवीचेराविर्भवन्त्यभूत् । द्वारका तस्य सैन्यानां प्रवेशौत्सुक्यदायिनी ।
विन्ध्याद्रिस्तद्दलचुण्णधातुरेणुहृताम्बरः । प्रत्यभात्त्यक्तमर्य्यादः कोपताम्र इवोन्नमन् ।
विश्रतां दमनश्रेयसस्त्वावन्तिषु दन्तिनां । महाकालकिरीटेन्दुज्योत्स्नया खण्डिताः परं ।
सर्व्वतो दिशमालोक्य जितप्रायांस्ततो नृपान् । स प्राविशत् सुविस्तीर्णमपथेनोत्तरापथं ।
राजभिस्तस्य तचोद्यै. संग्रामोऽभूत् पदे पदे । कुलाद्रिभिरिवेन्द्रस्य पचच्छेदोद्यमस्पृशः ।
काम्बोजानां वाजिशाला जायन्ते स्म हयोज्झिताः । ध्वान्तच्छलात्तदिरुद्धैर्निरुद्धा महिषैरिव ।
भूःखाराः शिखरश्रेणीर्धान्तः सन्त्यज्य वाजिनः । कुण्ठभावन्तदुत्कण्ठां निन्युर्दृष्ट्वा हयाननां ।
दीन्वाराम् समरे जित्वा जितं मेने स दुस्त्यजं । सहस्रायमरेर्व्वीरा मन्यन्ते हि घृणाचरं ।
चिन्ता म दृष्टा भोट्टानां वक्त्रे प्रकृतिपाण्डुरे । सनोकसामिव क्रोधाः स्वभावकपिले मुखे ।

तस्य प्रतापोदरदां न सेहेऽनारतं मधु। दरीणामोषधिज्योतिः प्रत्यूषेऽर्क इवोदितः। १७०
कस्तूरीमृगसंस्पर्शी धूतकुङ्कुमकेसरः। सैन्यश्रीमन्तिनीस्तस्य सञ्चस्कारोत्तरानिलः।
शून्ये प्राग्ज्योतिषपुरे निर्जिहानं ददर्श सः। धूपधूमं वनस्तुष्टात् कालागुरुवनात् परं।
मरीचिकावितीर्णार्णोविभ्रमे वालुकाम्बुधौ। तद्गजेन्द्रा महाग्राहसमूहसमतां ययुः।
तद्योधान् विगलद्धैर्यान् स्त्रीराज्ये स्त्रीजनोऽकरोत्। तुङ्गौ स्तनौ पुरस्कृत्य नतु कुम्भौ कवाटिनां।
स्त्रीराज्यदेव्यास्तस्याग्रे वीक्ष्य कम्पादिविक्रियां। संग्रामसमभिलाषं वा निश्चिकाय न कश्चन। १७५
उत्तराकुरवोऽविशंस्तद्भयाज्जन्मपादपान्। उरगान्तकसंत्रासाद्बिलानीव महोरगाः।
जयार्ज्जितधनः सोऽथ प्रविवेश स्वमण्डलं। भिन्नेभमौक्तिकापूर्णपाणिः सिंह इवाचलं।
जालन्धरं लोहरश्च मण्डलानीतराणि च। प्रसादीकृत्य विदधे राजत्वं सोऽनुजीविनां।
पराजयव्यञ्जनार्थं नानालिङ्गानि पार्थिवाः। उग्रेण ग्राहितास्तेन वहन्त्यद्यापि निर्मदाः।
बन्धमुद्राभिधानाय पश्चाद्बाहु तदाज्ञया। तुरुष्का दधते व्यक्तं मूर्द्धानं चार्द्धमुण्डितं। १८०
चितिभृद्दाक्षिणात्यानां तिर्य्यक्त्वज्ञापनाय सः। पुच्छं महीतलस्पर्शि चक्रे कौपीनवाससि।
न तत्पुरं न स ग्रामो न सा सिन्धुर्न सोऽर्णवः। न स द्वीपोऽस्ति यत्रासौ प्रतिष्ठां न विनिर्ममे।
क्वचिच्चेष्टासमुचितं क्वचित् स समयानुगं। वाक्येन प्रतिष्ठानां स मानी नाम सन्दधे।
सुनिश्चितपुरं चक्रे दिग्जये कृतनिश्चयः। सगर्वो दर्पितपुरं कृतवान् कृतकेशवं।
फलं गृह्णन् फलपुरं पर्णोत्सम्पूर्णमाददत्। क्रीडारामविहारस्य क्रीडन् राजा विनिर्ममे। १८५
एकमूर्द्धं नयद्रक्षमधः कर्षंस्तथापरं। बुद्धा व्यधान्निरालम्बं स्त्रीराज्ये नृहरिश्च सः।
दिगन्तरस्थे भूपाले तस्मिंस्तत्कर्मकृत् किल। पुरं विधाय तन्नाम्ना तत्कोपफलमन्वभूत्।
ललिताख्ये पुरे तस्मिन्नादित्याय स भूपतिः। सग्रामां कान्यकुब्जोर्वीमभिमानोर्ज्जितो ददौ।
तेन हुष्कपुरे श्रीमान् मुक्तस्वामी व्यधीयत। वृहद्विहारो भूपेन सस्तूपश्च महात्मना।
एकां कोटिं गृहीत्वा स दिग्जयाय विनिर्गतः। भूतेशाय ददौ शुद्ध्यै कोटीरेकादशागतः। १९०
स तत्र ज्येष्ठरुद्रस्य शिलाप्रासादयोजनं। भूमिग्रामप्रदानञ्च विदधे वसुधाधिपः।
चक्रे चक्रधरे तेन वितस्ताम्भः प्रतारणं। विनिर्मायारघट्टालीस्तांस्तान् ग्रामान् प्रयच्छता।
सोऽखण्डिताश्मप्राकारं प्रासादान्तर्व्यधत्त च। मार्त्तण्डस्याद्भुतं दाता द्राक्षास्फीतञ्च पत्तनं।
लोकपुण्ये पुरं कृत्वा नानोपकरणावलीं। प्रतिपादितवान् जिष्णुर्ग्रामैः साकं स विष्णवे।
ततः परं परीहासलीलो भूलोकवासवः। विहसद्वासवावासं परिहासपुरं व्यधात्। १९५
विरेजे राजतो देवः श्रीपरीहासकेशवः। लिप्तो रत्नाकरस्थोऽपि मुक्ताज्योतिर्भरैरिव।
नाभीनलिनकिञ्जल्कपुञ्जेनेवानुरञ्जितः। अचकात् काञ्चनमयः श्रीमुक्ताकेशवो हरिः।
महावराहः शुशुभे काञ्चनं कवचं दधत्। पाताले तिमिरं हन्तुं वहन्निव रविप्रभाः।
गोवर्द्धनधरो देवो राजतस्तेन कारितः। यो गोकुलपयःपूरैरिव पाण्डरतां दधे।

चतुर्भ्यस्त्वायतं हस्तान्रोपयित्वा महाशिलां । ध्वजाये दितिजारातेस्ताक्ष्यंस्तेन निवेशितः । २००
चक्रे बृहच्चतुःशाला बृहच्चैत्यबृहज्जिनैः । राजा राजविहारं स विरजाः स्ततोर्ज्जितं ।
तोलकानां सहस्राणि चतुर्भिरधिकानि सः । अशीतिं निदधे हेम्नो मुक्ताकेशववियहे
तावन्त्येव सहस्राणि पलानां रजतस्य च । सन्धाय शुद्धधीश्चक्रे श्रीपरीहासकेशवं ।
रीतिप्रस्थसहस्रैस्तु तेन तावद्भिरेव सः । व्योमव्यापिवपुः श्रीमान् बृहद्बुद्धो व्यधीयत ।
चतुःशालां च चैत्यञ्च तावता तावता व्यधात् । धनैर्नैवेति तस्यासन् पञ्च निर्म्मितयः समाः ।
राजतान् क्वापि सौवर्णान् क्वापि देवान् विनिर्म्ममे । पार्श्वेषु मुख्यदेवानां पार्थिवो धनदोपमः २०५
कियन्ति तत्र रत्नानि ग्रामान् परिकरं तथा । स प्रादादिति कः शक्तः परिच्छेत्तुमियत्तया ।
अवरोधैरमात्यैश्च सेवकैश्च नरेश्वरैः । तत्र प्रतिष्ठाः शतशो विहिता भुवनाद्भुताः ।
राज्ञी कमलवत्यस्य कमलाह्वकारिणी । राजतं विपुलाकारं कमलाकेशवं व्यधात् ।
अमात्योमित्रशर्म्मापि चक्रे मित्रेश्वरं हरं । श्रीकय्यस्वामिनं चक्रे लाटः कय्याभिधो नृपः ।
श्रीमान् कय्यविहारोऽपि तेनैव विदधेऽद्भुतः । भिक्षुः सर्व्वज्ञमित्रोऽभूत् क्रमाद्यत्र जिनोपम २१०
तुःखारश्चङ्कुणश्चक्रे स चङ्कुणविहारकृत् । भूपचित्तोन्नतं स्तूपं जिनान् हेममयांस्तथा ।
ईशानदेव्या तत्पत्न्या खाताम्बु प्रतिपादितं । सुधारसमिव स्वच्छमारोग्यदायि रोगिणां
ललितादित्यभूभर्त्तुर्व्वल्लभाचक्रमर्द्दिका । सहस्राण्येकधां सप्त तत्र चक्रपुरं व्यधात् ।
आचार्यो भप्पटो नाम विदधे भप्पटेश्वरं । अन्येऽपि कर्कटेशाद्या बहवो बहुभिः कृताः ।
अधिष्ठानान्तरेऽप्यत्र चङ्कुणेनाग्र्यमन्त्रिणा । स चैत्यः सुकृतोदारो विहारो निरमीयत । २१५
भिषगीशानचन्द्राख्यः श्यालश्चङ्कुणमन्त्रिणः । विहारमकरोल्लब्धा तक्षकानुग्रहाच्छ्रियं ।
एवं हेममयीमुर्व्वीं स कुर्व्वन्नुर्व्वरापतिः । गुणैरौदार्य्यशौर्य्याद्यैर्म्मघवानमलङ्घयत् ।
हेलयापि विनिर्य्यान्ती वक्त्राद्वसुमतीपतेः । न कदाचन तस्याज्ञा दैवेरप्युदलङ्घ्यत ।
तथाहि पूर्व्वपाथोधेस्तटे सकटको वसन् । आनीयन्तां कपित्थानीत्यादिदेश स जातुचित् ।
किङ्कर्त्तव्यतयान्येषु पुरोगेषु स्थितेष्वथ । उपानयत् कपित्थानि दिव्यः कोऽपि पुमान् पुरः । २२०
अथादुपायनं गृह्णन् कृतसंज्ञो भुवा प्रभोः । कुत्र त्वमिति पप्रच्छ प्रतीहारः प्रसृत्य तं ।
सोऽभ्यधात्तं कपित्थानि दत्वा राज्ञः प्रियाण्यहं । प्रहितोऽद्य महेन्द्रेण नन्दनोद्यानपालकः ।
रहोमहेन्द्रसन्दिष्टं वक्तव्यं किञ्चिदस्ति मे । इति श्रुत्वा प्रतीहारः सभां चक्रे स निर्ज्जनां ।
ततो दिव्यः पुमानूचे शक्रस्त्वां वक्ति भूपते । वक्तव्यं पथ्यमप्येतत् सौजन्यान्निष्ठुरं वचः ।
तुर्य्ये युगेऽपि भूपाल दिक्पाला अपि ते वयं । बिभ्रमो यत् प्रणम्याज्ञां श्रूयतां तत्र कारणं । २२५
पुरा ग्रामे गृहस्थस्य कस्यचित् पृथुसम्पदः । जन्मान्तरे कर्म्मकरो हालिकोऽभूद्भवान् किल ।
एकदा तस्य तं ग्रीष्मे वाहयित्वा महाटवान् । श्रान्तस्य निर्ज्जलेऽरण्ये क्षीणप्रायमभूद्दहः ।
ततः स्वामिगृहात् क्षुत्तृट्खिन्नस्य भवतोऽन्तिकं । वारिकुम्भमपूपञ्च गृहीत्वा कश्चिदाययौ ।

निर्धौतपाणिपादस्त्वं भोक्तुं संप्रस्तुतस्ततः। विप्रं कण्ठगतप्राणमपश्यः पुरतोऽतिथिं।
स त्वामवोचन्मा भुङ्क्ष्व दुर्भिक्षोपहतस्य मे। कण्ठे यियासवः प्राणा वर्त्तन्ते भोजनं विना। २१०
वारितः पार्श्वगेनापि तस्मै त्वं प्रीतिपूर्व्वकं। पूपाढ्यं वारिकुम्भीञ्च प्रादाः प्रियमुदीरयन्।
पात्रे प्रसन्नचित्तस्य काले दानेन तेन ते। अखण्डितानामाज्ञानां शतमासीत्त्रिविष्टपे।
तेन वारिप्रदानेन वाञ्छामात्रेऽपि दर्शिते। प्रादुर्भवन्ति सुस्वादा नद्यो मरुपथेष्वपि।
सत्त्वेत्रप्रतिपादितः प्रियवचोवद्धालवालावलिर्निर्दोषेण मनःप्रसादपयसा निष्पन्नसेकक्रियः।
दातुस्तत्तदभीप्सितं किल फलन् कालेऽतिबालोऽप्यसौ राजन् दानमहीरुहो विजयते कल्पद्रुमादीनपि।
अन्यात्रेपास्तास्त्वय सन्त्याज्ञास्तव भूपते। वचोलङ्घनं क्षपयतो यत्र तत्राविचारतः। २१५
अपि चेतसि भूपाल सुलभं महतः सतः। कस्मादिचारशून्यत्वं तवापि हृदि रोहति।
दिनानि कतिचिद्यानि कश्मीरेषु घनागमे। जायन्ते तानि पूर्व्वाब्धौ फलानि शिशिरे कुतः।
विगाहसे दिशं यां यां तत्र तत्रैव तत्पतेः। त्वदाज्ञाग्रहणे यत्नः पूर्व्वदानप्रभावतः।
आशां श्रितस्य माहेन्द्रीमाज्ञा स्वल्पापि तेऽधुना। गृहीता कथमप्येषा शक्रेणाभग्नशक्तिना।
विना प्रयोजनं मुख्यं तस्मादाज्ञा त्वया क्वचित्। नैवमेव पुनर्देया विरलाः सन्ति ता यतः। २२०
इत्युक्त्वान्तर्हिते तस्मिन् भूपालो विपुलाशयः। चिन्तयन् दानमाहात्म्यं परं विस्मयमाययौ।
ततः प्रभृति तादृक्षयोग्यार्थप्राप्तिलालसः। परिहासपुरे चक्रे स्थिरां गुर्व्वीं सपर्व्विणीं।
सहस्रभक्तमित्येवंप्रख्यातायां सदक्षिणं। लक्षमेकोत्तरं भक्तपात्राणां यत्र दीयते।
अभिप्रायेण तेनैव पत्तनान्यपुरेषु सः। चक्रे यक्षेषु तृष्णार्त्तः कश्चिन्मातु पिवेदपः।
सञ्जग्राह स देशेभ्यस्तांस्तानन्तरविज्ञानान्। विकचान् सुमनस्तोमान् पादपेभ्य इवानिलः। २२५
तेन कङ्कणवर्षस्य रससिद्धस्य सोदरः। चङ्कुणो नाम भुःखारदेशानीतो गुणोत्तरः।
सरसेन समातन्वन् कोशे वज्रसुवर्णतां। पद्माकर इवास्य भूभृतोऽभूच्छुभावहः।
रुद्धः पञ्चनदे जातु दुस्तरैः सिन्धुसङ्गमैः। तटे स्तम्भितसैन्योऽभूद्राजा चिन्तापरः क्षणं।
ततोऽम्बुतरणोपायं तस्मिन् पृच्छति मन्त्रिणः। अगाधेऽम्भसि रोधस्थश्चङ्कुणो मणिमक्षिपत्।
तत्प्रभावाद्विधाभूतं सरिन्नीरं ससैनिकः। उत्तीर्णो नृपतिस्तूर्णं परं पारं समासदत्। २३०
मणिमन्येन मणिना चङ्कुणोऽथाचकर्ष तं। सलिलं प्रागवस्थञ्च क्षणेन सरितामभूत्।
परिभाव्याद्भुतं तत्त्व प्रशंसामुखराननः। प्रणयाच्चङ्कुणं राजा मणियुग्ममयाचत।
स तमाह स्म विहसन् कर्म्मभी कुरुतो मणी। यौ तौ मत्पाणिगावेव किं स्यात् स्वीकरणेन वः।
सामान्येनैव लभते सोत्कर्षं वस्तु सम्पदां। महत्तु तस्य का शोभा विविधोत्कृष्टवस्तुषु।
प्रस्यन्दनं शशिमणेर्गणयन्ति तावद्यावत् स्थिता जलनिधेः पुलिनैकदेशे।
स स्वीक्रियेत यदि तेन ततस्तदास्य स्यन्दैः स्फुरन्नपि न तत्पुलिने विभाव्यः। २३५
इत्युक्त्वा विरते तस्मिन् राजा सस्मितमब्रवीत्। संभावयसि किं रत्नमाभ्यामभ्यधिकं मम।

ततोऽधिकतरं यदा कोषोत्थं मम पश्यसि। तदादाय प्रयच्छेदं निष्क्रयेण मणिद्वयं।
ततो महान् प्रसादोऽयमित्युक्त्वा चङ्कुणोऽब्रवीत्। स्वायत्ते स्वामिनो रत्ने मह्यमिष्टं प्रदीयतां।
गजस्कन्धेऽधिरोप्यैतन्मागधेभ्यो यदाहृतं। दत्वा सुगतबिम्बं तन्नोऽयमनुगृह्यतां।
सलिलोत्तरणोपायो मणी देवेन गृह्यतां। संसारोत्तरणोपायः सुगतो मह्यमर्प्यतां। २६०
इति तेनार्थितो युक्त्या जिनबिम्बं ददौ नृपः। वाग्मिनां कस्य सामर्थ्यं परिपन्थयितुं वचः।
स्वविहारेऽथ भगवान्स तेन विनिवेशितः। कपिशाभिः सकाषाय इव यो भाति कान्तिभिः।
दृश्यतेऽद्यापि कटकैरायासैः परिवेष्टितः। गजस्कन्धनिबद्धस्य सूचको यस्य विष्टरः।
अभिप्रायानुसारेण प्रकटीकुरुते श्रियं। अहो महाप्रभावाणां भूपतीनां वसुन्धरा।
अशिक्षितं कदाचित्स स्वयं दमयितुं हयं। निनायारण्यमेकाकी हयविद्याविशारदः। २६५
दूरान्निर्मानुषे तत्र ललनां ललिताकृतिं। एकां ददर्श गायन्तीं नृत्यन्तीमपरामपि।
क्षणाच्च ते समापय्य गीतनृत्ये मृगीदृशौ। प्रणम्य किञ्चिद्गच्छन्त्यावपश्यद्दमयन् हयं।
तुरगं तं समारुह्य तत्रागच्छद्दिने दिने। दृष्ट्वा तथैव ते कान्ते गत्वापृच्छत् सविस्मयः।
तमूचतुस्ते नर्त्तक्यावावां देवगृहाश्रिते। यः शूरवर्त्तमानोऽयं ग्रामस्तत्रावयोर्गृहं।
दुहृत्यजीवनभुजां माहृणामुपदेशतः। अस्मत्कुलेन नियतं नृत्यमत्र विधीयते। २७०
रूढिः परम्परायाता सेयमस्मद्गृहे स्थिता। आवामन्योऽपि वा नात्र निमित्तं ज्ञातुमीश्वरः।
एवं वचस्तयोः श्रुत्वा नृपोऽन्येद्युः सविस्मयः। तदुक्तां मेदिनीं कृत्स्नां कारुभिर्निरदारयत्।
दूरं निर्द्धतमृद्भिस्तैरयाद्राचीन्निवेदितं। नृपतिः पिहितद्वारं जीर्णदेवगृहद्वयं।
उद्घाटितारदैर्वर्णैः पीठोत्कीर्णौ निवेदितौ। अपश्यत् केशवौ तत्र रामलक्ष्मणनिर्मितौ।
परिहासपुरे पार्श्वे पृथक् कृत्वा शिलागृहं। स रामस्वामिनः श्रीमान् प्रतिष्ठाकर्म्म निर्ममे। २७५
देवोऽपि लक्ष्मणस्वामी तथैवाभ्यर्थ्य पार्थिवं। चक्रमर्दिकया चक्रेश्वरपार्श्वे निवेशितः।
दिग्जये पुरुषः कश्चिद्दत्तप्रत्ययनिग्रहः। अग्रे न्यक्षिपदात्मानं गजारूढस्य भूभुजः।
तं कृत्तपाणिघ्राणादिप्रत्यैः शोणितवर्षिणं। त्राणार्थिनं कारुणिकः खेदन्तं पृष्टवान्नृपः।
स तस्मै सिकतासिन्धुसविधस्थस्य भूपतेः। प्रख्यातमूचे सचिवमाख्यातं हितकारिणं।
प्रणतिर्लङ्घितादित्यनृपतेः क्रियतामिति। हितं कथयतः स्वस्य निग्रहश्च ततो नृपात्। २८०
॥ युग्मं ॥ प्रतिजज्ञे च भूपेन ततस्तत्स्वामिनिग्रहः। रुदन्त्रणोऽगदङ्कारैः स चाकार्य्यत सत्कृतैः।
ततो विहितयाच्ञं तं स मन्त्री कृतसत्क्रियः। कदाचिदेवमवदद्द्विजेन जगतीभुजं।
एवंविधस्य कायस्य राजन् यत् परिरक्षणं। तत्र वैरविशुद्ध्याशा विडम्बयति मामियं।
वाग्मिर्जलाञ्जलिं दत्वा दुःखाय च सुखाय च। कृतकृत्यो भुवं जह्यादवमानहतानसून्।
अपहृत्याधिकं ग्रीवोरपकारं जयोद्दितं। गम्भीरं प्रतिनद्येव निनादं महतो गिरेः। २८५
इतो मार्गैस्त्रिभिर्गम्या भूः माप्या त्वरितं कथं। यदा वा ज्ञायते वैरी तदा तत्रैव किं वसेत्।

मासार्द्धेनद्वरं पन्थानं तस्मादुपदिशामि ते । गृहीत्वा स जलं गम्यतामूनां किन्तु निर्जलः ।
तद्भूमिजा बन्धवो मे न वक्ष्यन्ति त्वदागमं । सामात्यान्तःपुरो राजा छद्मना तेन गृह्यते ।
इत्युक्ता सोऽकरोत्तस्य प्रवेशं वालुकार्णवे । पथे क्षीणे तु कटको निस्तोयः समपद्यत ।
तत्राप्यहानि दित्राणि वहन्नेवाभवन्नृपः । तृष्णार्त्तं वीक्ष्य सैन्यञ्च मन्त्रिणं तमभाषत ।
उक्तकालाधिका यावद्वासरा गमिताः पथि । मुमूर्षु तृष्णया सैन्यं तदद्या म्रियते कियान् ।
ततो विहस्य सोऽवादीज्जिगीषोः शेषमध्वनः । किं पृच्छत्यरिराष्ट्रस्य यमराष्ट्रस्य वा भवान् ।
त्वं हि स्वामिहितायैव समुपेत्य स्वजीवितं । मृत्युवक्त्रं सकटको मया युक्त्या प्रवेशितः ।
नेदं मरुमहोमात्रं भीमोऽयं वालुकार्णवः । नाम्भोऽत्र लभते क्वापि कस्त्राता तेऽद्य भूपते ।
श्रुत्वेति पृतना कृत्स्ना समभूद्दीतसौष्ठवा । करकार्म्भंशितकला स्तम्भेषेव शालिभूः ।
सन्त्यक्तजीविताशानां भीरूणां क्रन्दितध्वनिं । भुजमुद्यम्य शमयंस्ततो नृपतिरब्रवीत् ।
अमात्य तव कृत्येन प्रीतः स्वामिहितैषिणः । मरावत्यत्र शीतार्त्ता इव रोमाञ्चिता वयं ।
अभेद्यसारे मयि तु व्यक्तमेवंविधेऽपि ते । प्रयोगः कुण्ठतां यातो लोहं वज्रमणाविव ।
मणिभ्रमादहिफणं गृह्णन् दग्धा इवाङ्गुलीः । त्वं मिथ्यानयवाञ्छानद्य शोचिष्यसि ध्रुवं ।
निदेशेनैव मे पश्य पयः सूतेऽद्य मेदिनी । रश्मितेनाम्बुवाहस्य रत्नं वैदूर्यभूरिव ।
इत्युक्ता सोऽम्बु निष्क्रष्टुं कुन्तेनोर्व्वीं व्यदारयत् । उज्जिहीर्षुर्वितस्ताम्भः शूलेनेव त्रिलोचनः ।
अथोज्जगाम पातालजलक्षोर्ल्लोलाम्भितच्छविः । सरात्तलात् सरित्साकं सैन्यानां जीविताशया ।
तस्य सेनाचराणां सा क्रमं चिच्छेद वाहिनी । कथाव्ययीकृताङ्गस्य मन्त्रिणस्तस्य चेष्टितं ।
न्यूनाङ्गो मङ्गलाशंसी स मन्त्री विफलश्रमः । स्वस्य भर्त्तुर्निदेशाद्दो नगरीमन्तकस्ततः ।
राज्ञोऽपि कुटिलाचारो निगृह्य स महीपतिः । निजस्य मन्त्रिणस्तस्य तुल्यावस्थो व्यधीयत् ।
यथोपयोगं तेनैव स्थाने स्थाने प्रवर्त्तिताः । अद्यापि कुन्तवाहिन्यः प्रवहन्त्युत्तरापथे ।
सहस्रशः सम्भवन्तोऽप्यपरे भुवनाद्भुताः । अतिप्रसङ्गभङ्गेन तद्वृत्तान्ता न दर्शिताः ।
यस्मि शब्दजला घनागमपतये देशेऽतिघोरारवा यद्वाच्छाः समये पयोदमलिने कालुष्यसन्दूषिताः ।
दृश्यन्ते कुलनिम्नगा अपि परं दिग्देशकालाविभो तत्सत्त्वं महतामपि स्वपरद्रुमाचारप्रवृत्तिप्रदो ।
कर्त्तृवीर्यं प्रभावः स्यात्तरनायाकनस्य वा । यत् सोऽपि भौमकनुपाः प्रवृत्ती. समदर्शयत् ।
॥ युग्मं ॥ अवरोधसखो राजा परिहासपुरे स्थितः । स जातु मदिराक्षीवः सचिवानेवमन्वशात् ।
क्षतं प्रवरसेनेन यदेतत् प्रवरं पुरं । तन्निर्दहत मन्यध्वे मत्पुरस्यैव चेच्छ्रियं ।
घोरामवज्ञितात्रस्य श्रुत्वेत्याज्ञां महीपतेः । गत्वाऽग्र घासकूटानि तेऽदहन् वातुलानके ।
हर्म्याग्रादीक्ष्यमाणस्तदग्निज्वालोज्ज्वलानलः । उल्कामुखइवाभूत्स दर्पाट्टहसितोत्कटः ।
देषादिवैकृतवतः प्रतिभासतेऽन्यो मिथ्यैव चित्रमधिको विपदात्मनोऽपि ।
चन्द्रादि पश्यति पुरो द्विगुणं प्रकृत्या तेजोमयं तिमिरदोषहतं हि चक्षुः ।

नैवच्छेदेकमपि तत् पुरं प्रवरभूपतेः। अमध्यपुरनिर्म्माता स विवेदाधिकं कुतः। ३१५
॥ युग्मं ॥ चीणधैर्य्योऽथ निर्ध्याय नगरप्लोषकिल्विषं। उष्णनिःश्वासमुद्रा परमर्षेऽनुशयाग्निना।
तत् कुर्व्वतेऽन्तः सुषिरा गूढं येनातनुव्ययं। दह्यन्ते जीर्णतरवः कोटरस्थानला इव।
प्रातस्तमथ शोचन्तं सदुःखं वीक्ष्य मन्त्रिणः। चिन्तानिवर्त्तनायोचुः पुरप्लोषं स्वपैव तत्।
श्रुते प्रनष्टे नगरे निःशोकोऽभून्महीपतिः। स्वप्नान्तर्दारिते पुत्ते प्रहृष्टोऽयव स्थिते।
कार्य्यं न जातु मद्वाक्यं यत् क्षीवेण मयोच्यते। तान्युक्तकारिणोऽमात्यान् प्रशंसन्निति सोऽब्रवीत्। ३२०
प्रियमनुचितं क्ष्मापश्चक्षोवणप्रभुरीश्वरो रमयति यतो धिक्तान् भृत्यान् स्ववृत्तिसुखार्थिनः।
नृपमपथगं पान्ति प्राणानुपेक्ष्य निजानपि प्रसभमिह ये तैः पूर्णेयं महात्मभिरुर्व्वरी।
अतीन्द्रमपि माहात्म्यं राज्ञस्तस्याधितिष्ठतः। अथमन्योऽपि दोषोऽभूदितरक्षितिपोचितः।
दत्तापि यत् स मध्यस्थं श्रीपरीहासकेशवं। जघान तीक्ष्णपुरुषैस्त्रिग्राम्यां गौडपार्थिवं।
गौडोपजीविनामासीन् सत्वमत्यद्भुतं तदा। जह्रर्ये जीवितं धीराः परोचस्य प्रभोः कृते।
शारदादर्शनमिषात् कश्मीरान् सम्प्रवेश्य ते। मध्यस्थदेवावसथं संहताः समवेष्टयन्। ३२५
दिगन्तरस्थे भूपाले प्रविविचूनवेक्ष्य तान्। परिहासहरिं चक्रुः पूजकाः पिहितारिरं।
ते रामस्वामिनं प्राप्य राजतं विक्रमोर्ज्जिताः। परिहासहरिं भ्रान्त्या चक्रुरुत्पाट्य रेणुशः।
तिलं तिलं तं कृत्वा च विचिपुर्दिचु सर्व्वतः। नगरान्निर्गतैः सैन्यैर्हन्यमानाः पदे पदे।
श्यामलारक्तसंसिक्तास्तेऽपतन्निहता भुवि। अञ्जनाद्रिदृषत्खण्डा धातुस्यन्दोज्ज्वला इव।
तदीयरुधिरासारैः समभूदुज्ज्वलीकृता। स्वामिभक्तिरसामान्या धन्या चेयं वसुन्धरा। ३३०
वज्रादक्षतं भयं विरमति श्रीःपद्मरागाङ्कवेनानाकारमपि प्रशाम्यति विषं गारुत्मतादश्मनः।
एकैकं क्रियते प्रभावनियमात् कर्म्मातिरत्नैः परं पुंरत्नैः परमप्रमेयमहिमोन्नद्धैर्न किं साध्यते।
क्व दीर्घकाललङ्घ्योऽध्वा शान्ते भक्तिः क्व च प्रभौ। विधातुरप्यसाध्यन्तद्गौडैर्व्विहितं तदा।
लोकोत्तरस्वामिभक्तिप्रभावाणि पदे पदे। तादृशानि तदाभूवन् भृत्यरत्नानि भूभृतां।
राज्ञः प्रियोरक्षितोऽभूद्गौडराक्षसविप्लवे। रामस्वाम्युपहारेण श्रीपरीहासकेशवः।
अद्यापि दृश्यते शून्यं रामस्वामिपुरास्पदं। ब्रह्माण्डं गौडवीराणां सनाथं यशसा पुन.।
एवं नानाविधादन्तैर्व्यासराः क्ष्मापतेर्ययुः। विरलाः स्वपुरे तस्य भूयांसस्तु दिगन्तरे
अनन्याक्रान्तपृथिवीसमालोकनकौतुकी। अपारं प्रविविक्षाय पुनरेवोत्तरापथं।
कर्त्तुं प्रभावजिज्ञासां प्रहितैर्धनदादिभिः। नैश्चैतैस्तु इह वृत्तान्तास्तस्य ते ते तदाभ
नाद्यापि या भुवो दृष्टा जाने भानुकरैरपि। राज्ञस्तस्य बभूवाङ्
चिरमज्ञातवृत्तान्तैर्मन्त्रिभिः प्रहितस्ततः। प्रत्यावृत्तस्तस्य पा
इत्यादिशति वः स्वामी कोऽयं मोहो भवादृशां। क्ष्मामिमां मे
नवं नवं प्रतिदिनं सन्त्यज्य विजयार्ज्जनं। सुराष्ट्रं सम्प्रविष्टस्य वि

विनिर्गतानां स्वभुवः सरितां सलिलाकरः । न निर्व्याजं जिगीषूणां दृश्यते ह्यवधिः क्वचित् ।
तस्मादाचारसारं वो वक्ष्ये स्वविषयोचितं । राज्यं तदनुसारेण निर्विघ्नं कुरुतानघाः ।
अत्रस्थैः सर्व्वदा रक्ष्यः सुभेदः प्रभविष्णुभिः । चार्वाकाणामिवैषां हि भयं न परलोकतः ।
अपराधं विनाप्यत्र दण्ड्या गह्वरवासिनः । ते हि संभृतवित्ताः स्युर्दुर्भेद्या दुर्गसंश्रयाः ।
सर्वोपभोग्यान्यन्नानि चेत्रभूस्मिता नृपाः । ग्राम्याणां नातिरिच्यन्ते यथाकार्य्यं तथामक्षत् ।
अधिकीभूतवित्ता हि वत्सरेणैव ते भृशं । भवेयुर्डामराः क्रूरा नृपाज्ञातिक्रमक्षमाः ।
वस्त्रं स्त्रियः कथाभोज्यमलङ्कारा हया गृहाः । आसाद्यन्ते यदा जातु ग्रामीणैर्नगरोचिताः ।
सदा दुर्गाण्युपेक्षन्ते संरक्ष्याणि यदा नृपैः । यदा चानन्तरज्ञत्वं तेषां भृत्येषु दृश्यते ।
प्रदेशादेकतो रूढा यदा वृत्तिश्च शस्त्रिणां । अन्योन्योद्वाहसम्बन्धैः कायस्थाः संहता यदि ।
कर्म्मस्थानानि वीक्षन्ते स्वापाः कायस्थवद्यदा । तदा निःसंशयं ज्ञेयः प्रजाभाग्यविपर्य्ययः ।
॥ चतुर्भिः कुलकं ॥ चेष्टानुसारिणोन्नीय दृढमादाय संविदं । मयोक्तं हृदये कार्य्यमन्तरं राजवीजिनां ।
प्रत्यासत्तिं मदकरटिनो दानगन्धेन वायुर्व्वोढाभूतिं प्रकटितरुचिश्चञ्चलेवाम्बुदस्य ।
चेष्टा स्पष्टं वदति मतिमन्नैपुणोन्नेयतत्त्वा जन्तोर्व्वन्मान्तरपरिचितां निश्चलां चित्तवृत्तिं ।
पुत्रः कुवलयादित्यो वज्रादित्यश्च मे समौ । भिन्नगोत्रा तयोर्भ्रात्रोर्द्वैमातुरयोः पुनः ।
ज्यायान् राज्येऽभिषेक्तव्यः स च स्याद्बलवान् यदा । तस्याज्ञातिक्रमः कार्य्यो भवद्भिर्नियमात्तदा ।
उत्सृजज्जीवितं वापि राज्यं वापि स पार्थिवः । शोचनीयो न केनापि स्मरतेदं वचो मम ।
कार्य्यः कनीयान्न नृपः प्रमादात् क्रियते यदि । नोल्लङ्घनीया तस्याज्ञा रक्ष्यश्च विषमोऽपि सः ।
पौत्रेषु मे कनीयान् यो जयापीडोऽस्ति दारकः । पितामहसमो भूया इति वाच्यः स सर्व्वदा ।
भर्त्तुर्गृहीतनैराश्याः साभिप्रायाः प्रणम्य तान् । आनंशुः पश्चिमामाज्ञां ते वाष्पार्धकण्ठ्यजः ।
उवाच चङ्कुणो जातु सन्निपत्याखिलाः प्रजाः । वाष्पैः पतिवियोगाग्नितप्तां सिञ्चन् वसुन्धरां ।
राज्ये कुवलयापीडो राजपुत्रोऽभिषिच्यतां । सुगृहीताभिधो राजा गतः स सुकृती दिवं ।
सहजे यस्य कृतिनो दैवते कोपदूषिते । रससिद्धिरकस्मात्तं यस्मात् साक्षमुपागता ।
दूरस्थोऽपि हि भूभृत्स भाग्यशक्त्या कयाचन । कार्य्याणि घटयन्नासीद्दुर्घटान्यपि हेलया ।
अम्भोजानि घनाघनव्यवहितोऽप्युल्लासयत्यंशुमान् दूरस्थोऽपि पयोधरोऽतिशिशिरस्पर्शं करोत्यातपं ।
शक्तिः काप्यपरोक्षितास्ति महतां स्वैरं दविष्ठान्यहो यन्माहात्म्यवशेन यान्ति घटनां कार्य्याणि निर्धन्वपं ।
सैकादशदिनान् सप्त मासान् षट्त्रिंशतं समाः । स्वमाक्षाय स मही प्रजाचन्द्रोऽस्तमाययौ ।
तुषारवर्षैर्व्वरलैस्समकाण्डनिपातिभिः । आर्य्याणकाभिधे देशे विपन्नं केचिदूचिरे ।
राजप्रष्ठः प्रतिष्ठां स रक्षितुं चिरसञ्चितां । सङ्कटे क्वापि दहनं प्राविक्षदिति केचन ।
केषांचित्तु मते भूभृद्वीयन्नुत्तरापथे । सोऽमर्त्यजनभां भूमिं प्रविष्टः कटकान्वितः ।
अत्यद्भुतानि कृत्यानि श्रुतान्यस्य यथा किल । विपत्तिरपि भूभर्त्तुस्तथैवात्यद्भुता श्रुता ।

यातोऽस्तं द्युमणिः पयोधिसलिलं कैश्चित् प्रविष्टोऽपरैः सम्प्राप्तो दहनं गतः किल परैर्लोकान्तरं कीर्त्यते ।
जायन्ते महतामहो निरुपमप्रस्थानहेवाकिनां निःसामान्यमहत्वयोगपिशुना वार्त्ता विपत्तावपि ।
ततः कुवलयापीडो भेजे कुवलयेशतां । जातः कमलदेव्यां यः श्रीमाञ्छक्रादिवादितिः ।
त्यागेन चक्रे विशदां योऽनुरक्तां नृपश्रियं । महोरगत्वचमिव स्वभावमलिनामपि ।
भ्रात्रा तुल्यप्रभावेण कञ्चित्कालं हृतप्रभः । स ऊताशेषणाक्रान्तः प्रदीप इव नारुचत् ।
भृङ्गैरिवानुगैर्दानलोभात् पर्य्यायवृत्तिभिः । श्रीर्दुःस्थाभूत्तयोरन्तर्मत्तेभकटयोरिव ।
अथोभयधनादायि भृत्यचक्रिकया समं । राजा कुवलयापीडो बभञ्जानुजमञ्जसा ।
राज्यं निष्कण्टकं कृत्वा ततः प्राप्तबलो नृपः । दिग्जयायोर्जितक्रान्तिः सोऽभूत् सम्भृतसाधनः ।
एकस्मिन् क्षणे मन्त्री तस्याज्ञामुदलङ्घयत् । स्मरन् वा तत्पितुर्व्वाचं भजन वा दर्पविक्रियां ।
प्राप्तायामपि यामिन्यां तल्पे कोपाकुलो नृपः । तमाज्ञातिक्रमं ध्यायन्न निद्रां क्षणमप्यगात् ।
एवं कृतागसं हन्तुं सस्पृहस्य तदाश्रयात् । बहवः प्रत्यभासन्त सध्यास्तस्योद्यतक्रुधः ।
विरागशैलमथितात्तस्य चित्तमहोदधेः । प्रकोपकालकूटस्य पश्चात् शमसुधोद्गात् ।
दध्यौ सोऽथ गतक्रोधः प्रवृद्धः प्राणिसङ्क्षयः । एतावान् कस्य नु कृते कर्त्तव्यः प्रत्यभान्मम ।
अकार्य्याण्यपि पर्य्याप्य कृत्वापि वृजिनार्जनं । विधीयते हितं यस्य स देहः कस्य सुस्थिरः ।
कृतघ्नस्यास्य कायस्य हेतोरगणितस्मृतेः । हन्तव्याः कस्य पन्थानः प्रतिभान्त्यनपायिनः ।
सदन्ति जन्तवो हन्त पश्यमानस्य नात्मनः । अवस्थां कालसूदेन कृतां तां तां क्षणे क्षणे ।
ह्यः पश्यद्भिरकारणस्मितमितं पाथोजकोशाकृतिस्निग्धौष्ठकठोरमद्य रभसादुत्तप्तनासप्रभं ।
प्रातर्जीर्णशवस्य चञ्चुविलुलितं ध्वाङ्क्षोपमं वक्त्रं नः परिहस्यते भुवमिदं भूतैश्चिरस्थायिभिः ।
इत्याद्यनित्यताचिन्तादत्तशान्तिसुखादरः । राज्यं सन्त्यज्य स वनं श्रीप्रस्रवणं ययौ ।
गच्छ भद्र यत्रैव तपस्याधीयतां मनः । मायायाः परभङ्गिन्य एवंमाया विभूतयः ।
तेन मन्दप्रशान्ता राज्ये लिखितेन निजासने । वैराग्यशमनोन्मेषः श्लोकेनानेन सूचितः ।
अप्रमप्रमसम्भोगत्यक्तसिद्धिर्नराधिपः । श्रीपर्व्वतादावद्यापि भव्यानामेति दृक्पथं ।
तस्य याते प्रभोः पुत्रे मित्रशर्मा द्विजान्वितः । विनस्तासिन्धुसम्भेदे सभार्य्यो जीवितं जहौ ।
राज्यं सप्तसमाः सार्द्धाः कृत्वा स वसुधाधिपः । निःश्रेयसाप्तिनिःश्रेणीं सुधीः सिद्धिं समासदत् ।
वज्रादित्यो वप्पियको ललितादित्य इत्यपि । ख्यातोऽथ भूभृद्भवद्यम्माता परमर्द्दिका ।
स क्रूरचरितो भ्रातुः प्रशान्तविधायिनः । सुधांशोरिव दुर्भासा सूनुर्विपद्रूपोऽभवत् ।
परिहासपुरात् विष्णो नानोपकरणावली । स जहार दुराचारो भूभृद्भग्नसम्मदः ।
वाणिजो म्लेच्छपाशं भूद्रष्टोऽन्य पुराश्रियः । सोऽनाद्यचैव बहुशाखाः पशमवन् प्रियाः ।
विक्रीय प्रददौ स म्लेच्छेभ्यः पुरुषान् बहून् । येषां चिन्ता व्यवहारं प्राक्सोपान मण्डले ।
समाल्लात् सद्भृत्यां भुक्ता सोऽनिषेधागजन्मनां । जगाम यक्ष्मं कामान् क्षयरोगेण विभ्यती ।

## ॥ चतुर्थस्तरङ्गः ॥

तस्मान्मञ्जरिकादेव्या जातो राजा प्रजान्तकः। ततः पृथिव्यापीडोऽभूत् समामासांश्चतुरः समाः।
जातो मल्लाभिधानायां वर्षियात् सप्त वासरान्। सङ्ग्रामापीडनामाथ तमुत्पाट्याभवन्नृपः। ४००
भ्रातरौ तौ समासाद्य राज्यं नैव व्यराजतां। हेमन्तशिशिरावाप्य चण्डांशोरिव मण्डलं।
शान्तेऽथ संग्रामापीडे कनीयांस्तत्प्रियात्मजः। राजा श्रीमाञ्जयापीडः प्राप राज्यं ततः क्रमात्।
पितामहसमो भूयादित्यमात्यवचः स्मरन्। जिगीषुः सम्भृतबलो दिग्जयाय स निर्ययौ।
स्वदेशादेव नयविद्यां नीतैः समं नृपैः। दृङ्गान् पप्रच्छ निर्गच्छन् कश्मीरद्वारगोचरान्।
पितामहस्य नः सैन्यं कियन्निर्गच्छतोऽभवत्। इति भूताच्च यात्रासु यूयं सञ्जातसैनिकाः। ४०५
स्मितस्मितास्तमूचुस्ते किं प्रश्नेनामुना प्रभो। वस्तु कश्चिदतिक्रान्तं नानुकर्तुं क्षमोऽधुना।
वर्णोरथानां तस्यासीत् सपादं लक्षमीशितुः। अशीतिस्तु सहस्राणि देवस्याद्य जयोद्यमे।
तदाकर्ण्य जयापीडो बहु मेने न निर्जयं। चिरं चितैः सङ्कुचन्त्याः कालस्य बलवत्तया।
जिगीषोः क्ष्माभुजस्तस्य भावमालोक्य तादृशं। दध्युर्नावज्ञतां दृष्ट्वा ललितादित्यभूपतेः।
तस्य दूरप्रयातस्य श्यालो जज्जाभिधो बलात्। द्रोहेणाक्रम्य कश्मीरान् स्वयं भेजे नृपासनं। ४१०
दिने दिने राजसैन्यात् स्वदेशप्रसारिणस्ततः। सैनिकाः स्वान्यवर्त्तन्त स्वामिभक्तिपराङ्मुखाः।
प्रख्यापयिष्यन् स्वामेव शक्तिं परिकरं विना। निश्चिकाय जयापीडो युक्तां काञ्चित्तु संविदं।
अभङ्गुरास्तेऽभिमानास्तस्यैवासन्मनस्विनः। अभ्यवर्त्तत धैर्येण वेधसोरपि वामताः।
स विसृज्य भुवं स्वां स्वां भूपतीननुयात्रिकान्। प्रयागमगमत् सैन्यैः परिमेयैर्निजैः समं।
तत्रावशिष्टान्निश्चित्य वाजिनः स मनोजवान्। द्विजेभ्यो लक्षमेकोनं प्रददौ भूरिदक्षिणं। ४१५
सम्पूर्णमन्यो लक्षं यः प्रदद्यादत्र वाजिनां। तन्मुद्रयेयं मन्मुद्रा विनिवार्येत्युदीर्य च।
श्रीजयापीडदेवस्येत्यक्षरैरुपलक्षितां। दिग्देशगामिनो मुद्रां गाङ्गस्य पयसो ददौ।
तन्मुद्राङ्कं पयः पीत्वा गाङ्गमद्यापि निर्मलं। चित्ते प्रवर्द्धते तापो भूपानामभिमानिनां।
स्वदेशागमनानुज्ञां सैन्यस्याप्तमुखेन सः। दत्वा निशायामेकाकी निर्ययौ कटकान्तरात्।
मण्डलेषु नरेन्द्राणां पयोदानामिवार्यमा। गौडराजाश्रयं गुप्तं जयन्ताख्येन भूभुजा। ४२०
प्रविवेश क्रमेणाथ नगरं पौण्ड्रवर्द्धनं। तस्मिन् सौराज्यरम्याभिः प्रीतः पौरविभूतिभिः।
लास्यं स द्रष्टुमविशत् कार्त्तिकेयनिकेतनं। भरतानुगमालक्ष्य नृत्यगीतादिशास्त्रवित्।
ततो देवगृहद्वारशिलामध्यास्त स क्षणं। तेजोविशेषचकितैर्जनैः परिहृतान्तिकं।
नर्त्तकी कमला नाम कान्तिमन्तं ददर्श तं। असामान्याकृतेः पुंसः सा ददर्श सविस्मया।
असंस्पृष्टेऽथ धावन्तं करं तस्यान्तरान्तरा। अचिन्तयत्ततो गूढं चरन्नेष भवेद्ध्रुवं। ४२५
राजा वा राजपुत्रो वा लोकोत्तरकुलोद्भवः। स्वं यदीतुमभ्यासः पृष्ठस्थाः पर्णवीटिकाः।
असंस्पृष्टेन येनायं लघत्पाणिः प्रतिक्षणं।
शोलश्रोत्रपुटो मदोत्कमधुपापातात्ययेऽपि द्विपः सिंहः सत्यपि पृष्ठतः करिकुले व्याहत्य विप्रेषिता।

मेघाम्बुष्वशमेऽप्यशान्तवदनोद्गीर्णस्वरो वर्हिणश्चेष्टानां विरमेऽत्र हेतुविगमेऽप्यभ्यासदीर्घास्थितिः ।
इत्यन्तश्चिन्तयन्तो सा ज्ञात्वा संक्रान्तमन्विदं । सखीमभिन्नहृदयां विससर्ज्ज तदन्तिकं ।
प्राम्वत्पृष्ठं गते पाणौ पूगखण्डांस्तयार्पितान् । वन्नाऽचिपज्जयापीड. परिवृत्य ददर्श तां ।
भूसंज्ञयासि कस्य त्वं पृष्टाया इति सुभ्रुवः । ददन्त्या वीटिकास्तस्या वृत्तान्तमुपलब्धवान् ।
तया जनितदाक्षिण्यस्तैस्तैर्मधुरभाषितैः । सख्याः समाभ्यर्थ्याया निन्ये स वसतिं शनैः ।
अग्राम्यपेशलालापा तया तं सा विलासिनी । उपाचरत् परार्घ्यश्री सोऽप्यभूद्विस्मितो यथा ।
ततः शशाङ्कधवले सञ्जाते रजनीमुखे । पाणिनालम्ब्य भूपालं शय्यावेश्म विवेश सा ।
ततः काञ्चनपर्य्यङ्कशायी मैरेयमत्तया । तयार्थितोऽपि शिथिलं विदधे नाधरांशुकं ।
प्रवेशयन्निव हृदयहस्तां सत्रपान्ततः । दीर्घबाहुः समाश्लिष्य स शनैरिदमब्रवीत् ।
न त्वं पद्मपलाशाक्षि न मे हृदयहारिणी । किन्तु कालानुरोधोऽयं सापराधं करोति मां ।
दासस्तवायं कल्याणि गुणैः क्रीतोऽस्म्ययन्त्रिमैः । अचिराज्ज्ञातवृत्तान्ता ध्रुवं दाक्षिण्यमेष्यसि ।
कार्य्यशेषमनिष्पाद्य सज्जं मानिनि कञ्चन । अभोगे कृतसङ्कल्पं सुखानां त्वमवेहि मां ।
तामेवमुक्त्वा पर्य्यङ्कं साङ्गुलीयेन पाणिना । वादयन्निव निःश्वस्य श्लोकमेतं पपाठ सः ।
असमाप्तजिगीषस्य स्त्रीचिन्ता का मनस्विनः । अनाक्रम्य जगत् सर्व्वं नो सन्ध्यां भजते रविः ।
श्लोकेनात्मगतं तेन पठितेन महीभुजा । सा कलाकुशलाशासीन्महान्तं कञ्चिदेव तं ।
गन्तुकामश्च तं प्रातर्नृपं प्रणयिनी बलात् । अर्थयित्वा चिरं कालमप्रस्थानमयाचत ।
एकदा वन्दितुं सन्ध्यां प्रयातः सरितस्तटं । चिरायातो गृहं तस्या ददर्श भृशविक्लवं ।
किमेतदिति पृष्टाय तमूचे सा शुचिस्मिता । सिंहोऽत्र सुमहान् रात्रौ निपत्याहन्ति देहिनः ।
नरनागाश्वसंहारः कृतस्तेन दिने दिने । त्वया दूरं चिरायाते तद्भयेन समाकुला ।
राजानो राजपुत्रा वा तद्भयेन विशङ्किताः । गृहेभ्यो नात्र निर्यान्ति प्रवृत्ते चण्डताण्डवे ।
तामिति ब्रुवतीं मुग्धां निषिध्य च विहस्य च । सक्रोड इव तां रात्रिं जयापीडोऽत्यवाहयत् ।
अपरेद्युर्दिनापाये निर्गतो नगरान्तरात् । सिंहागमप्रतीक्षोऽभून्महावटतरोरधः ।
अदृश्यत ततो दूरादुत्फुल्लबकुलच्छविः । अट्टहासः कृतान्तस्य सञ्चारीव मृगाधिपः ।
अध्वनान्येन यान्तं तमथ मन्थरगामिनं । राजसिंहो नदन् सिंहं समाह्वयत हेलया ।
लब्धक्रोधो व्यात्तवक्त्रः कम्प्रकूर्चः प्रदीप्तदृक् । तदभ्यपूर्व्वकायस्तं सगर्ज्जं समुपाद्रवत् ।
तस्यान्यस्तानलक्षिप्तं कफोणिं पततः क्रुधा । क्षिप्रकारी जयापीडो वक्त्रः क्षुरिकयाभिनत् ।
शोणितं गजगन्धेभसिन्दूराभं विमुञ्चता । एकप्रहारभिन्नेन तेनात्यज्यत जीवितं ।
आमुक्तव्रणपट्टः स कफोणिमथ गोपयन् । प्रविश्य नर्त्तकीवेश्म निशि सुष्वाप पूर्व्ववत् ।
प्रभातायां विभावर्य्यां श्रुत्वा सिंहहतं नृपः । प्रपय. कौतुकाद्द्रष्टुं जयन्तो निर्ययौ स्वयं ।
स दृष्ट्वा तं महाकायमेकप्रहृतिसंहतं । मायस्या नियमान्सेने महर्त्तारममानुषं ।

तस्य दन्तान्तरालस्थं केयूरं पार्श्वगार्पितं । श्रीजयापीडनामाङ्कं ददर्शाथ सविस्मयः ।
स्यात् कुतोऽत्र स भूपाल इति ब्रुवति पार्थिवे । जयापीडागमाशङ्कि पुरमासीद्भयाकुलं ।
ततः पौरान् विहस्यैव जयन्तः क्षितिपोऽब्रवीत् । प्रहर्षावसरे मूढाः कस्मादो भयसम्भवः ।
श्रूयते हि जयापीडो राजा भुजवनोर्ज्जितः । केनापि हेतुना भ्राम्यन्नेकाकीव दिगन्तरे । ४६०
राजपुत्त्रः कलट इत्युक्ता कल्याणदेव्यसौ । तस्मै नियमिता दातुं निष्पुत्त्रेण सता मया ।
सोऽन्वेषयेत् स्वयं प्राप्तस्तद्द्रव्याहरणेच्छया । रत्नदीपं प्रतिष्ठाप्य निधानामादनं ग्टहात् ।
अस्मिन्नेव पुरे तेन भाव्यं भुवनशासिना । ब्रूयादेनं समान्वेष्य योऽस्मै दद्यामभीप्सितं ।
वाचि सप्रत्ययाः पौरा भूपतेः सत्यवादिनः । अन्विष्य कमलावासवर्त्तिनं तं न्यवेदयन् ।
सामात्यान्तःपुरोऽभ्येत्य प्रयत्नेन प्रसाद्य तं । ततः स्ववेश्म नृपतिर्निनाय विहितोत्सवः । ४६५
कल्याणदेव्यास्तेनाथ कल्याणाभिनिवेशिना । राजलक्ष्म्या व्यपास्ताया इव सोऽजिग्रहत्करं ।
व्यधाद्दिनापि सामग्रीं तत्र शक्तिं प्रकाशयन् । पञ्च गौडाधिपान् जित्वा श्वशुरं तदधीश्वरं ।
गतेऽशेषं प्रभुत्यक्तं सैन्यं सन्नाहयन् स्थितः । मित्रशर्मात्मजो देवशर्मामात्यस्तमाययौ ।
निजदेशं प्रति ततः स प्रतस्थे तदर्पितः । अग्रे जयश्रियं कुर्व्वन् पश्चात्तोऽय सुलोचने ।
संहासनं जितादादौ कान्यकुब्जमहीभुजः । स राज्यककुदं राजा जहारोदारपौरुषः । ४७०
तस्मिन् प्रविष्टे स्वभुवं स्फूर्जद्दूर्जितविक्रमे । सैन्यैस्तंभसमित्सज्जैर्जज्जो योद्धुं विनिर्ययौ ।
पुष्कलेत्राभिधे ग्रामे तेन सार्द्धं सुदारुणः । जयापीडस्य सङ्ग्रामः सुबहूनि दिनान्यभूत् ।
अनुरक्तप्रजो राजा जज्जराज्यासहिष्णुभिः । युधि सोऽन्विष्यमाणोऽभूद्ग्राम्याटविकमण्डलैः ।
श्रीदेवो ग्रामचण्डालः प्राप्तो ग्राम्यैः समं युधि । कोऽत्र जज्ज इति भ्राम्यन् योधान् पप्रच्छ सर्व्वतः ।
तृष्णार्त्तं स्वर्णभृङ्गारात् पिबन्तं वारि तस्य ते । रणमध्ये हयारूढं तं दूरात् समदर्शयन् । ४७५
भ्रमयन् क्षेपणीयं स चिक्षेपाश्मानं तदानने । सोऽयं हतो मया जज्ज इत्यमोघक्रियोऽनदत् ।
साहायकाय राज्ञोऽहं यामीत्युक्त्वा हितात्मनः । मातुर्हमन्या जज्जस्य प्रतिज्ञाय ययौ वधं ।
अश्वसंरम्भभीमास्यं मुमूर्षुं पतितं हयात् । विचेष्टमानं मेदिन्यां जज्जं त्यक्त्वा ययुर्निजाः ।
स समर्याहितापातचिन्तासततदुस्थितः । द्रोहार्ज्जितेन राज्येन त्रिभिर्व्वर्षैर्व्ययुज्यत ।
न्यासापहाराद्वणिजां वेश्यानां कामिवञ्चनात् । द्रोहाद्योपनता राज्ञामस्थिरा एव सम्पदः । ४८०
हते तस्मिन् जयापीडः प्रत्याहृत्य निजां श्रियं । जग्राह दोष्णा भूभारं कृत्येन च सतां मनः ।
प्रपेदे यत्र कल्याणं स विरोधिवधान्नृपः । देशे कल्याणपुरस्तत्र कल्याणदेव्यभूत् ।
राजा मल्हाणपुरञ्चक्रे विपुलकेशवं । कमला सा स्वनाथापि कमलाख्यं पुरं व्यधात् ।
महाप्रतीहारपीठाधिकारं प्रतिपद्य सः । कल्याणदेवी दाक्षिण्यादकरोदधिकोन्नतिं ।
उत्पत्तिभूमौ देशेऽस्मिन् दूरदूरतिरोहिता । कश्यपेन वितस्तेव तेन विद्यावतारिता । ४८५
वचोमूर्खोऽयमित्येव कस्मैचिद्दते स्फुटं । सर्व्वशास्त्रं ददच्चक्रे सर्व्वान् विद्याभियोगिनः ।

देशान्तरादागमय्य व्याचक्षाणः क्षमापतिः । प्रावर्त्तयत विच्छिन्नं महाभाष्यं स्वमण्डले ।
क्षीराभिधाच्छब्दविद्योपाध्यायात् संभृतश्रुतः । बुधैः सह ययौ वृद्धिं स जयापीडपण्डितः ।
भूपतिरात्मनः स्पर्द्धां चक्षमे न स कस्यचित् । आत्मनस्तु बुधैः स्पर्द्धां शुद्धधीर्बह्वमन्यत ।
तावत्पण्डितशब्दोऽभूद्राजशब्दादपि प्रभुः । तैस्तैर्दोषैर्नैतु स्थानिं कालान्तरवदाययौ ।
नृपतौ विद्वदायत्ते राज्यसाम्मुख्यकाङ्क्षिभिः । गृहा बभूवुर्विदुषां व्याप्ताः सेवागतैर्नृपैः ।
समग्रहीत्तथा राजा सोऽन्विष्यन्निखिलान् बुधान् । विद्वदुर्भिक्षमभवद्यथान्यनृपमण्डले ।
अध्यक्षो भक्तशालायां शुक्रदन्तस्य मन्त्रिणः । विद्वत्तया थक्कियाख्यस्तेन स्तोकत्य वर्द्धितः ।
विद्वान् दीनारलक्षेण प्रत्यहं कृतवेतनः । भट्टोऽभूदुद्भटस्तस्य भूमिभर्त्तुः सभापतिः ।
स दामोदरगुप्ताख्यं कुट्टिनीमतकारिणं । कविं कविं वलिरिव धुर्य्यन्धीसचिवं व्यधात् ।
मनोरथः शङ्खदत्तश्चटकः सन्धिमांस्तथा । बभूवुः कवयस्तस्य वामनाद्याश्च मन्त्रिणः ।
सुस्वप्ने पश्चिमाशायां लक्षयन्नुदयं रवेः । देशे धर्म्मोत्तराचार्य्यप्रविष्टं साध्वमन्यत ।
सचेताः संस्तवव्यक्तविवक्तृत्वो बभूव सः । भावानां भुज्यमानानामास्वादान्तरविन्नृपः ।
अपश्यद्भिर्महास्वादान् भावान् स्वादुविवेकिभिः । किं श्रेयमशनादन्यत् श्वापैरन्धैर्विवेचभिः ।
आरूढस्य चितां छन्नानुमरणोद्योगप्रियालिङ्गनं पुण्ड्रेक्षुरसपानमुल्बणमहामोहप्रलुप्तस्मृतेः ।
वीतासारवतंसमाल्यवलयामोदस्य यादृग्भवेद्भावानां सुभग स्वभावमहिमा निश्चेतसस्तादृशः ।
मन्त्रविक्रमयोस्तस्य द्वयोर्दर्पणयोरिव । एकैव विदिता मूर्त्तिः सहस्रगुणतां ययौ ।
अकुर्व्वन् विगुणामाज्ञां लङ्केन्द्रात्पञ्च राक्षसान् । तेनानयेति जगदे दूतो जातु पुरःस्थितः ।
सान्धिविग्रहिकः सोऽथ गच्छन् पोतच्युतोऽम्बुधौ । प्राप पारन्तिमिग्रासं तिमिमुत्पाट्य निर्गतः ।
प्रियमत्यौ रामभक्त्या नृपायालेख्यदायिनं । स्वदेशमनयद्दूतं चाभिमतं विभीषणः ।
दूतं वित्तैः पूरयित्वा सरोऽगाधञ्च राक्षसैः । चक्रे जयपुरं कोट्टं त्रिविष्टपसमं नृपः ।
पुरश्चथं महाकारं विहारस्य विधाय सः । नगरान्तर्जयादेवीं पुण्यकर्म्मा स निर्म्ममे ।
तत्पुरे चतुरात्मा च शेषशायी च केशवः । विष्णुलोकस्थितिं त्यक्त्वा ध्रुवं यस्याति सन्निधिं ।
अन्यत् समीन्तरं किञ्चित् कारयित्वा स राक्षसान् । पश्चात् काश्मिरेवाभ इति शंसन्ति केचन ।
स हि स्वप्ने जलान्तर्भं कुरु द्वारवतीमिति । उक्तः कंसारिणा चक्रे विनिर्म्माणं तथाविधं ।
श्रीद्वारवत्यधिष्ठानं राज्ञ्यः कोट्टं तथाभवत् । अभ्यन्तरं जयपुरं ब्रूतेऽद्याप्यखिलो जनः ।
कल्यौ पश्चमहाशब्दभाजनं जगतीभुजः । तस्मिन् जयपुरे कोट्टे जयदत्तोऽथधामठं ।
राजधन्तुः प्रमोदस्य जामाता मथुरापतेः । आचाभिधोव्यरचयच्छुचिराधेश्वरं हरं ।
पुनः सम्भृतसामर्थ्यो दिग्जयाय विनिर्ययौ । सर्व्वेऽर्थधिवेन्द्रान्मीन् द्रापयत्सपुद्विपैः ।
यस्य विष्टापि पूर्व्वाद्रिमर्विच्छिन्ना हिमाचले । भगीरथस्य गङ्गेव रेजे सन्यानुगा चमूः ।
षाहं प्रत्युदण्डानेरटन्तः कटकाद्दहिः । सम्यासन् यामिकारावे गुम्फुनिमगुपा नृपाः ।

नामान्यदिनयादित्य इति प्रख्यापयन्नृपः। पूर्व्वोयां विनयादित्यपुरेणाद्भुतं व्यधात्।
अभ्युत्थितेन महसा सहसाध्यवसायिनां। श्रीरागेहति सन्देहं महतामपि भूभृतां।
भीमसेनाभिधानस्य स दुर्गं पूर्व्वभूपतेः। निःशब्दो व्रतिभिः सार्द्धं व्रतिलिङ्गी विवेश यत्।
तं रन्ध्रान्वेषिणं तत्र परिज्ञाय चिरस्थितः। भ्राता जज्जस्य सिद्धाख्यो गत्वा राज्ञे न्यवेदयत्।
भूपतिर्भीमसेनोऽथ राजा कक्षादबन्धयत्तं। नक्रपाजगरो भीममिव भीमपराक्रमं। ५२०
तस्मिन् वीरे तथा बद्धे धुर्य्ये पुरुषकारिणां। पौरुषद्वेषिणा जाने दैवेनोन्नमितं शिरः।
जयापीडस्तथैवमूढो व्यसनेऽप्यतिदारुणे। तांस्तान् सञ्चिन्तयन्नासीदुपायानुद्यमोन्मुखः।
अत्रान्तरे नरपतेः पौराणामतिदुस्तरा। लूतामयकृता व्यापदुदपद्यत मण्डले।
आमयः स्पर्शसञ्चारी तत्र व्यापादकश्च सः। देशदोषाद्दतोजन्तुर्लूताव्याप्तो विवर्ज्यते।
तदाकर्ण्य जयापीडो जातोपायप्रयुक्तधीः। स्वभृत्येनोपयुक्तानि द्रव्याण्यानीतवान् रहः। ५२५
तैः पित्तोद्रेचकैर्भुक्तैर्ज्वलत्पित्तोऽवहज्ज्वरं। वक्षस्त्वचपयस्याङ्गे चिप्रा स पिटकोऽभवत्।
तं लूताव्याप्तमाकर्ण्य विषचोरचिणां मुखात्। विपस्यते भुवमिति ध्यात्वा देशाद्बहिर्व्यधात्।
एवं स्वमतिमाहात्म्यात् सन्तीर्णो विपदर्णवात्। व्याप्तव्योमाग्रहीद्दुर्गं यशश्च परिपन्थिनः।
यः सर्व्वकालमबुधैः परिहृश्यमानो मूत्राङ्कुराद्यपि न जातु पुरस्करोति।
व्यापत्सु शास्त्रविटपी स फलं प्रसूय पुंसः किलैकपद एव लुनात्यनर्थों।
तमेच्छदभिसन्धातुं विद्याविक्रमसंयुतः। मायाव्यरमुडिर्नाम राजा नेपालपालकः।
अकृतप्रणतिस्तस्य प्रविष्टस्य स्वमण्डलं। अयात् सुदूरमध्वानं ससैन्योऽपससार सः। ५३०
जिगीषोस्तस्य तु तथा तत्तत्पार्थिवनिर्ज्जयः। पृथक् प्रयत्ननिर्वर्त्यो नाभूत्तदनुसारिणः।
संशक्तापि क्वचिद्दृश्यं प्रतिदेशं स वैरिणं। श्येनः कपोतं कचान्तरितोन्विष्यन् जगाम सः।
ततो निःशेषितापाये तस्मिन् कुर्व्वन् स दिग्जयं। आसन्नाब्धेस्तटे सिन्धोरस्मुपावेशयद्बलं।
प्रतस्थे दिवसैर्द्वित्रैरथ पूर्व्वार्णवोन्मुखः। कर्षन् वेलानिलस्पर्शोत्सृष्टध्वजपटाशमूः।
ततस्तस्मिन् सरित्पारे दक्षिणस्मिन् क्षमापतेः। तस्थावरमुडिस्सैन्यं स्वच्छत्राङ्कं प्रकाशयन्। ५३५
भेरिभेरीरवोद्गारि प्रबलं वीक्ष्य तद्बलं। प्रजज्वाल जयापीडः पीतसर्पिरिवानलः।
स जानुदघ्नं निर्व्विघ्नं पश्यन्नग्रे सरिज्जलं। अपूर्व्वत्वादभूमिज्ञः क्रुद्धस्तत्तं व्यगाहत।
रुध्यं प्राप्ते नृपे पूर्णा वेलया वर्द्धमानया। अकाण्डेऽभूदगाधाम्भाः सार्णवाभ्यर्णगा सरित्।
नरनागाश्वबहुलं तथा सैन्यं महीपतेः। प्रवृद्धया शाय्यमानं च शनैः संचयमाययौ।
नृपतिर्वीचिसंमर्दसंभग्नाभरणोरुकः। बाहुभ्यां लहरीश्छिन्दन् जनैर्दूरमनीयत। ५४०
एकस्य करुणाक्रन्दैः सैन्यस्यान्यस्य गर्ज्जितैः। सरित्तरङ्गघोषैश्च बभूवुस्तुमुला दिशः।
क्षिप्रकारी स दूतिभिः सन्नद्धैः सरितोऽन्तरात्। स चाकृष्य जयापीडं बबन्ध विहितोत्सवः।
दैवस्यास्मुमुचस्य नाम्नि नियमः कोऽप्यानुकूल्यं प्रति यच्चन् यः प्रियमुत्कटं घटयते जन्तोः क्षणादप्रियं।

चिप्रं दीर्घनिदाघग्रावरविपक्षंतापनिर्व्वापणं प्रादुष्कृत्य वनस्पतेः प्रकुरुते विद्युद्विसर्गं च यः।
स कालगण्डिकातीराश्रयात्युच्चाम्बवेश्मनि। निचिक्षेप जयापीडमाप्तानां रक्षिणां करे।
तथा काश्मीरिको राजा निमग्नो व्यसने पुनः। स किंकर्त्तव्यतामूढः शुचा गूढमदह्यत।
कलावत्सु शशाङ्कोऽपि तेजस्विष्वर्य्यमायितं। न ददर्श यथा धीमान् स ररक्ष तथा नृपः।
अपश्यन्निर्गतं किञ्चिदालोकन्यस्तलोचनः। आसन्नां तटिनीमासीदुपायांश्च स चिन्तयन्।
अत्रस्थावेदकास्तत्र प्रथिताः पृथिवीभुजा। आर्द्रान्तःकरणैः स्तोकाः स्मर्य्यन्तेऽद्यापि सूरिभिः।
तथा तस्मिन् स्थिते मानी देवशर्म्मैव मन्त्रिषु। चिन्तयन् स्वामिसम्मानमनिशं पर्य्यतप्यत।
भर्त्तुः स्वदेहत्यागेन स हितं कर्त्तुमुद्यतः। दूतैररमुडेश्चक्रे प्रियवाग्भिः प्रलोभनं।
जयापीडश्रिया सार्कं राज्यं कश्मीरमण्डले। दास्यामि तुभ्यमित्यस्य दूतैः स श्रावितोऽभवत्।
प्राप्तेषु प्रतिदूतेषु पूर्णायामथ संविदि। गृहीतकटको मन्त्री नेपालविषयं ययौ।
स कालगण्डिकासिन्धोरर्वाचि कटकं तटे। स्थापयित्वा परं पारं ययौ मितपरिच्छदः।
सामन्तैरग्रमायातैस्तां सभां सम्प्रवेशितं। सत्कृत्यारमुडेः शक्तं न्यवेशयत विष्टरे।
अध्वश्रान्त इति चिप्रं प्रतिमुक्तः चमाभुजा। तद्दिष्टोपचारस्तस्मिन्नायावसथे दिनं।
स चारमुडिभूभृच्च पीतकोशौ परस्परं। आसतां निर्जनेऽन्येद्युः कर्त्तव्यकृतनिश्चयौ।
नृपमूचेऽथ सचिवो जयापीडार्जितं धनं। अस्ति सैन्ये तदाप्तानां तस्य वा विदितश्च तत्।
दानेन भविता मोचस्तस्येत्युक्त्वा विमोहयन्। तस्मात्त्वं प्रष्टुमिच्छामि क्व वसु न्यस्तमित्यहं।
अत एव मया सैन्यं संहतं न प्रवेशितं। यदि तन्मध्यगाः शक्या न बन्धुं न्यासधारिणः।
तस्मादेकैकमाहूय तेषु यद्वेषु सैनिकाः। कोपमज्ञातहृदया न यास्यन्ति विवक्षवः।
एवं विमोहितात्तस्मात् प्राज्ञोऽप्याज्ञां स लब्धवान्। वद्धस्य ययौ पार्श्वं जयापीडमहीभुजः।
तदालोकनजं शोकं दर्शयन् धैर्य्यसागरः। गृहं तन्निर्ज्जनं कृत्वा चिप्रं पप्रच्छ तं नृपः।
अपि त्वया निजं तेजो भित्तिभूतं न हारितं। तस्मिन् हि सति सिध्यन्ति साहसान्यप्यकल्पना।
स तं बभाषे निःशङ्को मन्त्रिन्नेवं व्यवस्थितः। अद्भुतं कर्म किं कुर्य्यां ध्रियमाणेन तेजसा।
मन्त्री तमूचे तेजश्चेद्राजन्स्थितं तव। जानीहि तत्क्षणेनैव लङ्घितं विपदर्णवं।
अपि वातायनादस्मात् पतित्वा निम्नगाम्भसि। पारं गन्तुं समर्थोऽसि सैन्यं यत्र निजं तव।
राजा जगाद तं नास्मात् पतित्वोत्थीयतेऽभ्रमः। विना दृतिं दृतियाच दूरपाताद्विदीर्य्यते।
तस्मात्त्वमुपायोऽद्य न स नाम विमानितः। यत्र मन्ये तनुत्यागमनिर्मध्यापकारिणं।
इति निर्दिश्य सोऽमात्यस्तमवादीन्महीपते। बहिः केनाप्युपायेन वह त्वं मान्त्रिकादयं।
प्रविश्यैकाकिनैवाय द्रष्टव्यः सम्भूतो मया। सरिदुत्तरणोपायः सोऽमुष्योऽप्यसहितं।
युक्तेति निर्गतो गत्वा पायुत्सर्गवेश्मसः। प्रविश्यम् बहिर्वेलां तदुक्तामत्यवाहयत्।
एकाकी सम्प्रविष्टोऽथ तं ददर्श च्युतं चितौ। विपन्नं गलमुद्बद्ध दृढया चेलचीरया।

सद्यो व्यापादिततनुः श्वासापूरितविग्रहः । अभेद्योऽहं तव दृतिर्मामारुह्य तरापगां ।
आरोढुरुरुबन्धाय स्वोर्व्वोरुष्णीषपट्टिका । बद्धा मया तां प्रविश्य क्षिप्रमेव पताम्यपि ।
नखनिर्भिन्नगात्रास्त्वलिखितामिति संविदं । दृष्ट्वा चावाचयत्कण्ठनिबद्धां दूतकपत्रके । १८०
॥ तिलकं ॥ विस्मयखेदयोः पश्चात् पूर्व्वं स सरितस्ततः । प्रवाहे पतितो राजा परं पारं समासदत् ।
मार्गसैन्यः प्रतिश्याय चरौनैव निनाय सः । तमशेषं सभूपालं नेपालविषयं स्वयं ।
रक्षिणोऽपि न यावत्तमजानन् बन्धनाच्युतं । तावदेव कथाशेषं विपयन्तं चकार सः ।
नृत्यत्कबन्धः स्वर्गस्त्रीमुक्तस्रक् तूर्य्यघोषवान् । भूपतेर्बन्धनान्मोक्षे बभूव समरोत्सवः ।
दावानलोल्बणभुवा गिरयो निदाघे यत्रैव दूरमितरे परिवर्ज्जनीयाः ।
तत्रैव सम्भवति सान्द्रहिमद्रवार्द्रसिक्ततुषारशिखरी नितरां निषेव्यः । १८५
जज्जादीनां चयं यत्र जन्मस्थानमिद्रुहामभूत् । तत्रैव मन्त्रिणश्चित्रं कृतिनो देवशर्म्मणः ।
नाभूद्विसदृशः सूनुः स पितुर्म्मित्रशर्म्मणः । तमोमयो भासुरस्य भानोरिव शनैश्चरः ।
दक्षारत्नोपमे तस्मिन् सचिवेऽस्तमुपागते । प्राप्तामपि श्रियं मेने नृपतिर्हारितामिव ।
तस्य दिग्विजयस्यान्ते सा न ग्लानिर्व्विनिर्ययौ । मानसात् पृथिवीभर्त्तुर्नमात्योऽपि क्रिया पुनः ।
चित्रं जितवतस्तस्य स्त्रीराज्ये मण्डलं महत् । इन्द्रियग्रामविजयं वक्रमन्यत भूभुजा । १९०
कर्णश्रीपट्टमाबद्य श्रीराज्यान्निर्ज्जिताहृतं । धर्म्माधिकरणाख्यञ्च कर्म्मस्थानं विनिर्म्ममे ।
द्वितीयञ्चलगञ्जाख्यं कर्म्मस्थानमपि व्यधात् । उपयुक्तं प्रयाणेषु गञ्जे दूरस्थिते निजे ।
किमन्यद्भुजावासनिवासिन्या जयश्रियः । चत्वारोऽम्बुधयोऽभूवन् विलासमणिदर्पणाः ।
पुनः प्रविश्य कश्मीरान् स भूपैः परिवारितः । चिराय बुभुजे राजा विजयोपार्ज्जितां श्रियं ।
तं कदाचिन्नृपं स्वप्ने सर्व्वाशाविजयोर्ज्जितं । पुमान् दिव्याकृतिः कोऽपि व्याजहार कृताञ्जलिः । १९५
सुखं त्वद्विषये राजन् वसन्नस्मि सबान्धव । नागेन्द्रोऽहं महापद्मनामा त्वां शरणं श्रित ।
द्राविडो मान्त्रिकः कश्चिन्मामितो नेतुमुद्यतः । जलाकाङ्क्षिणे वित्तेन विक्रेतुं मरुमण्डले ।
तस्माच्चेत्पासि मां तत्ते स्वर्णधातुसुवङ्गिरिं । स्वदेशे दर्शयिष्यामि स्फीतोपकृतिकारिणः ।
राजा स्वप्ने निशम्येति दिक्षु सम्प्रेरितैश्चरैः । कुतोऽपि प्राप्तमानीय तं पप्रच्छ चिकीर्षितं ।
दत्ताभयः स नागार्कं यथावत् सर्व्वमुक्तवान् । सविस्मयेन भूभर्त्रा स्वयं भूयोऽप्यपृच्छ्यत । २००
भूरि योजनविस्तीर्णात् सरसोऽभ्यन्तरात्त्वया । नागः प्रभावोत्कृष्टः स निष्क्रष्टुं शक्यते कथं ।
स तं व्यजिज्ञपद्राजन्नचिन्त्या मन्त्रशक्तयः । तच्चेद्दिदृक्षसे क्षिप्रमेत्याश्चर्य्यं विलोक्यतां ।
अथानुगम्यमानः स राज्ञा प्रातः सरोन्तिकं । अभिमन्त्र्योज्झितैर्बाणैर्व्वद्धाम्भोऽशोषयज्जलं ।
राजाऽपश्यत्ततः पङ्के लुठन्तं मानुषाननं । वितस्तिदैर्घ्यमुरगं भूरिक्षुद्रोरगान्वितं ।
मन्त्रस्तम्भोचितं राजन् गृह्णाम्यमुमिति ब्रुवन् । मापहीरिति भूपेन सोऽभिधाय न्यषिध्यत । २०५
दूष्णं राजाज्ञया याते मन्त्रवीर्य्येऽथ संहृते । सरोऽभूत् प्रागवस्थन्तत् पुनर्ध्वान्तं दिगन्तरं ।

देशान्तरं प्रयातेभ्यो ये शेषास्ते व्यरंसिषुः । विक्रीयन्तोऽनुसरणाद्धरणाच्चापि पार्थिवः ।
विप्राणां शतमेकोनमेकाह्नेन विपद्यते । निवेद्यमेतदित्यूचे क्रौर्याक्रान्तोऽथ पार्थिवः ।
विपर्यस्तचरित्रस्य तस्य क्रूरस्य भूपतेः । एवं स्तुतिविपर्यासः काव्येष्वपि बुधैः कृतः ।
नितान्तं कृतकृत्यस्य गुणवृद्धिविधायिनः । श्रीजयापीडदेवस्य पाणिनेश्च किमन्तरं ।
भाष्यव्याख्याचयैः श्लोकैर्व्यवच्छिन्नहतैः कृतः । सोऽयं तस्य विपर्यासो बुधैरिव विवर्त्तितः ।
कृतविप्रोपसर्गस्य भूतनिद्राविधायिनः । श्रीजयापीडदेवस्य पाणिनेश्च किमन्तरं ।
तुलमूलापहर्त्ता च चन्द्रभागातटे स्थितः । विप्राणां शतमेकोनमष्टणोत्तन्मन्ने मृतं ।
ततोऽपहारहरणादेव प्रविरतोऽभवत् । वास्तव्यानां कृतां भूमिं ननु निःशेषतो जहौ ।
अथ विज्ञप्तिसमये तुलमूलौकसो द्विजाः । चुकुशुर्जातु तस्याग्रे प्रतीहारकराहताः ।
मनुमान्धातृरामाद्या बभूवुः प्रवरा नृपाः । अनभावि तदग्रेऽपि ब्राह्मणैर्न विमानना ।
सेन्द्रं स्वर्गं सशैलां क्ष्मां सनागेन्द्रं रसातलं । निर्दग्धुं हि क्षणेनैव विप्राः शक्ताः प्रकोपिताः ।
तदाकर्ण्यास्तसामन्तत्यक्तवेष्टः क्षमापतिः । उल्लासितैकभूलेखो दर्पाद्वचनमब्रवीत् ।
भिक्षाकणभुजां कोऽयं शठानां वो मदज्वरः । येनर्षय इव ब्रूथ प्रभावव्यापकं वचः ।
भीमभूभङ्गभीतेषु तेषु तूष्णीं स्थितेष्वथ । इट्टिलाख्यस्तमाह स ब्रह्मतेजोनिधिर्द्विजः ।
राजन् युगानुरूपेण भावभावानुवर्त्तिनः । शासितुस्तेऽनुसारेण न कस्मादृषयो वयं ।
आहस्म विश्वामित्रो वा वसिष्ठो वा तपोनिधिः । त्वमगस्त्योऽथ वा किंस्वी इति दर्पेण तं नृपः ।
ज्वलन्निव ततः स्फूर्जत्तेजोदुष्प्रेक्ष्यविग्रहः । स फणीवोत्फणस्ताम्यन् कोपान्नृपतिमब्रवीत् ।
भवान् यत्र हरिश्चन्द्रस्त्रिशङ्कुर्नहुषोऽपि वा । विश्वामित्रमुखेभ्योऽहं तत्रैको भवितुं क्षमः ।
विहस्योवाच तं राजा विश्वामित्रादिकोपतः । हरिश्चन्द्रादयो नष्टास्त्वयि क्रुद्धे तु किं भवेत् ।
पाणिना ताडयन्नुर्वीं ततः क्रुद्धोऽभ्यधाद्द्विजः । मयि क्रुद्धे क्षणादेव ब्रह्मदण्डः पतेन्न किं ।
तत् श्रुत्वा विहसन् राजा कोपाद्ब्राह्मणमब्रवीत् । पततु ब्रह्मदण्डोऽसौ किमद्यापि विलम्बते ।
नन्वयं पतितो जाल्मेत्यथ विप्रेण भाषिते । राज्ञः कनकदण्डोऽङ्गे वितानस्खलितोऽपतत् ।
क्षतव्रणः स तेनाङ्गे विसर्पिक्लिन्नविग्रहः । कीर्यमाणकृमिकुलः क्रकचैर्दारितैरभूत् ।
अनुभाव्य व्यथा भावि निरयक्लेशवर्णिका । गणरात्रेण तं प्राणा काङ्क्षितापगमा जहुः ।
ब्रह्मदण्डकृतं दण्डं भुक्त्वा दण्डधराधिपः । अकाण्डदण्डघट्टाय ययौ दण्डधरान्तिकं ।
तस्यानियतचित्तस्य विंशतं परिवत्सरान् । एवं प्रतापिनः सैकान् भूभागो भूपतेरभूत् ।
तथाभूम्न्नस्यद्रविणकणपाशःक्षतलयः क्षितिं क्षामुग्भ्रन्तो विदधति कुमार्गानुसरणं ।
क्रियन्ते कान्तानामुगविहतकेवर्त्तनिवहैर्यथा श्वेते कस्मात् स्थिरनिरयमात्सप्रणयिनः ।
कृतपापं तमुद्दिश्य विपन्नमप्ततप्रभा । मृतोद्धाराय तन्माता व्यधत्तामृतकेशवं ।
ललितापीडनामाभूत्ततो वसुमतीपतिः देव्यां दुर्गाभिधायां यो जयापीडादजायत ।

द्राविडं द्रविणं दत्वा विसृज्याचिन्तयन्नृपः । दद्यात्साधाप्यसौ नागः कथं स्वर्णाकरं गिरिं ।
ध्यायन्तमेव तं स्वप्ने ततः प्रोवाच पन्नगः । केनोपकारेण गिरिः स्वर्णसूर्दृश्यते तव ।
स्वदेशोऽयं विदेशोऽयमिति बुद्धेः प्रवर्त्तक. । अन्वयव्यतिरेकाभ्यां स्थित्यभ्यासः शरीरिणां ।
शरणं त्वामहमगामवमानभयात् पुनः । शरण्येन सता तत्तु भवतैव प्रदर्शितं ।
उदन्वानिव योऽत्योभ्यो ज्ञायते संश्रितैः प्रभुः । का ह्रीस्ततोऽन्या योऽन्यैर्यत्तेषामप्यभिभूयते ।
याभिरन्याभिभूताभिरौचितस्त्रातुमक्षमः । तासां केनाभिमानेन स्त्रीणां द्रक्ष्याम्यहं मुखं ।
ये कारणसधर्माणो व्यामूढस्य भवाम ते । विडम्ब्यमानाः क्रीडार्थे ते वयं प्राकृता इव ।
अथ वा श्रीमदान्धानामप्रेक्षापूर्व्वकारिणां । यत्किञ्चन विधायित्वं पार्थिवानां किमद्भुतं ।
मन्यन्ते क्ष्माभुजः क्रीडामुन्नतानां विमानिनां । यावज्जीवन्तु सश्वासं मरणं त्वां विदन्ति ते ।
उपेक्ष्यपक्षे भूपानां मानः स्वार्थस्य सिद्धये । स तु प्राणानुपेक्ष्यापि ग्राह्यपक्षे मनस्विनां ।
महतो येऽवमन्यन्ते घटन्ते च विमानितैः । मानस्वरूपाभिज्ञत्वं तेषां केनानुमीयते ।
भवन्त इव तत्रापि न वयं व्यर्थदर्शनाः । ताम्रधातुरसस्यन्दी दृश्यते तद्गिरिस्तव ।
इत्युक्त्वा संविदं तस्मै स्वप्न एव सतां ददौ । यथा प्रबुद्धः प्रत्यूषे प्राप ताम्राकरं गिरिं ।
स तस्मात् क्रमराज्यस्थात्ताम्रमाकृष्य निर्ममे । शतन्दीनारकोटीनामेकोनं स्वाभिधाङ्कितं ।
पूर्णं कोटिशतं कुर्य्याद्य. स मां निर्ज्जयेदिति । दर्पभङ्गाय भूपानां समयं स्थापयेन्नृपः ।
समस्या इव स क्ष्माभृत् सावशेषैर्व्विचेष्टितैः । चिक्षेप तुल्यनिर्म्माणकुण्ठलायेति भूभृतां ।
अथाकस्मान्महीपालः प्रजाभाग्यविपर्य्ययैः । त्यक्त्वा पैतामहं मार्गं ययौ पित्र्येण सोऽधुना ।
किं दिग्जयादिभिः क्लेशैः स्वदेशादर्ज्यतां धनं । इत्यर्थ्यमानः कायस्थैः स्वमण्डलमदण्डयत् ।
शिवदासादिभिर्लुब्धैर्धनस्थानाधिकारिभिः । प्रविवर्द्धितवित्तश्च सोऽभूल्लोभवशम्वदः ।
काश्मीरकाणामुत्पन्नं निजाज्ञाव्यवधायकं । कायस्थवक्तृमेचिनं ततः प्रभृति भूभृतां ।
मन्त्रस्तस्य महीभर्त्तुर्योऽभूत्तत्तन्नृपाग्रहे । वास्तव्यबन्धचिन्तायां स एव स्थैर्य्यमाययौ ।
यत् सतां प्रथमादायि पापस्योपदिदेश तत् । जयापीडस्य पाण्डित्यं प्रजापीडनशौण्डतां ।
स सौदास इवानीकलोकप्राणापहारकृत् । अस्तुत्यकृत्यधाहित्यं स्वप्नेऽपि न समाययौ ।
कुर्म्मः किल्बिषमेतदेव हृदये शल्येति कोलाहलात् स्वैरिण्यः क्षितिपाश्च धिक् चपलतां कौर्य्यंस्य कुर्युः सकृत् ।
क्रान्तधियो भवन्त्यथ यथा नान्यात् स्पृशन्त्योऽपि ता दूयन्ते न च ते यथा स्वपितरौ घ्नन्तोऽपि शान्तत्रपाः ।
लोभाभ्यासात्तथा कौर्य्यं स ययौ वत्सरत्रयं । सह कार्षकभागेन यथाहार्षीत् क्षेत्रफलं ।
सम्भलध्वस्तधीर्भूभृत् स्वल्पवित्तत्वप्रदान् । सर्व्वस्वहारिणो मेने कायस्थान् हितकारिणः ।
सामुद्रास्तिमयो नृपाय्यं मद्भुमारके हतानभसः स्वस्मादेव कणान् घनस्य जहतो जानन्ति ये दातृतां ।
सर्व्वस्मात् स्फुटलुण्ठितादितरतो येषात् किलान्येऽपि ये दुष्कायस्थकुलस्य हन्त कलयन्त्यन्तर्हिताधायितां ।
सर्व्वकालं स्वाद्भणानामेहाधैर्य्यमकुण्ठितं । निर्लिङ्गस्य बभूवुर्य्ये तस्यापि परिपन्थिनः ।

देशान्तरं भयातेभ्यो ये ययास्ते व्यरंसिषुः । विक्रोशन्तोऽनुसरणाद्धरणाच्चापि पार्थिवः ।
विप्राणां शतमेकोनमेकाह्नेन विपद्यते । निर्वेदमेतदित्यूचे क्रौर्याक्रान्तोऽथ पार्थिवः ।
विपर्यस्तचरित्रस्य तस्य क्रूरस्य भूपतेः । एवं स्तुतिविपर्यासः काव्येष्वपि बुधैः कृतः ।
नितान्तं कृतकृत्यस्य गुणवृद्धिविधायिनः । श्रीजयापीडदेवस्य पाणिनेश्च किमन्तरं ।
भाष्यव्याख्याचणे श्लोकैर्व्वितचण्डहतेः कृतः । सोऽयं तस्य विपर्यासो बुधैरिव विवर्त्तितः ।
कृतविप्रोपसर्गस्य भूतनिष्ठाविधायिनः । श्रीजयापीडदेवस्य पाणिनेश्च किमन्तरं ।
तुलमूलापहर्त्ता च चन्द्रभागातटे स्थितः । विप्राणां शतमेकोनमष्टणोत्तज्जले मृतं ।
ततोऽग्रहारहरणादेव प्रविरतोऽभवत् । वास्तव्यानां कृतां भूमिं ननु निःशेषतो जहौ ।
अथ विज्ञप्तिसमये तुलमूलीकयो द्विजाः । चुक्रुशुर्जातु तस्याग्रे प्रतीहारकराहताः ।
मनुमान्धातृरामाद्या बभूवुः प्रवरा नृपाः । अन्वभावि तदग्रेऽपि ब्राह्मणैर्न विमानना ।
सेन्द्रं स्वर्गं सशैलां क्ष्मां सनागेन्द्रं रसातलं । निर्दग्धुं हि चणेनैव विप्राः शक्ताः प्रकोपिताः ।
तदाकर्ण्यास्तेषामन्तस्त्यक्तकष्टः क्षमापतिः । उल्लासितैकभ्रूलेखो दर्पाद्वचनमब्रवीत् ।
भिक्षाकणभुजां कोऽयं शठानां वो मदज्वरः । येनपेय इव भूय प्रभावव्यापकं वचः ।
भीमभ्रूभङ्गभीतेषु तेषु तूष्णीं स्थितेष्वथ । इट्टिलाख्यस्तमाह स्म ब्रह्मतेजोनिधिर्द्विजः ।
राजन् युगानुरूपेण भावभावानुवर्त्तिनः । शक्तिस्तेऽनुसारेण न कस्माद्दृश्यते वयं ।
आहस्म विश्वामित्रो वा वसिष्ठो वा तपोनिधिः । त्वमगस्त्योऽथ वा किंस्या इति दर्पेण तं नृपः ।
ज्वलन्निव ततः स्फूर्जत्तेजोदुग्रेद्धविग्रहः । स फणीवोत्फणस्तान्वन् कोपान्नृपतिमब्रवीत् ।
भवान् यत्र हरिश्चन्द्रस्त्रिशङ्कुर्नहुषोऽपि वा । विश्वामित्रमुखेभ्योऽहं तत्रैको भवितुं क्षमः ।
विहस्योवाच तं राजा विश्वामित्रादिकोपतः । हरिश्चन्द्रादयो नष्टास्त्वयि क्रुद्धे तु किं भवेत् ।
पाणिना ताडयन्नुर्वीं ततः क्रुद्धोऽभ्यधाद्द्विजः । मयि क्रुद्धे चणादेव ब्रह्मदण्डः पतेन्न किं ।
तत् श्रुत्वा विहसन् राजा कोपाद्ब्राह्मणमब्रवीत् । पततु ब्राह्मदण्डोऽसौ किमद्यापि विलम्बते ।
नन्वयं पतितो जाल्मेत्यथ विप्रेण भाषिते । राज्ञः कनकदण्डोऽङ्गे विनानस्खलितोऽपतत् ।
कृतव्रणः स तेनाङ्गे विसर्पिक्लिन्नविग्रहः । कीर्य्यमाणकृमिकुलः क्रकचैर्दारितैरभूत् ।
अनुभाव्य व्यथा भावि निरयक्लेशवर्णिका । गणरात्रेण तं प्राणा काङ्क्षितापगमा जडः ।
ब्रह्मदण्डकृतं दण्डं भुक्त्वा दण्डधराधिपः । अकाण्डदण्डस्रष्टाय ययौ दण्डधरान्तिकं ।
तस्यानियतचित्तस्य त्रिंशतं परिवत्सरान् । एवं प्रतापिनः सैकान् भूभागो भूपतेरभूत् ।
तयाभूम्नमस्यद्रविणकणपाभःकृतव्ययः चितिं स्वामुञ्झन्तो विदधति कुमार्गानुसरणं ।
कियन्ते कान्तन्तानुगविकृतकैवर्त्तनिवहैर्यथाद्यैते कस्मात् स्थिरनिरयजालप्रणयिनः ।
कृतपापं तमुद्दिश्य विपन्नमम्मतप्रभा । स्वतोद्धाराय तन्माता व्यधत्तामृतकेशवं ।
ललितापीडनामाभूत्ततो वसुमतीपतिः देव्यां दुर्गाभिधायां यो जयापीडादजायत ।

बभूव रागिणो राज्ये राज्यकार्य्याण्यपश्यतः । यस्य वाराङ्गनाभोज्यं राज्यं दुर्णयदूषितं ।
दुष्कृतेनार्ज्जितं वित्तं पित्रा निरयभागिना । यश्चारणादिषु न्यस्यन्ननुरूपं व्ययं व्यधात् ।
बन्धकीबन्धुभावेन प्राप्तराजगृहाश्रयाः । तं पौंश्चलीयविद्यानामन्तरङ्गं व्यधुर्व्विटाः ।
केशान् स्त्रीदशनच्छिन्नान् वक्षस्तन्नखलाञ्छितं । वपुषो मण्डनं मेने किरीटकटकोज्झितः ।
यो यो वेश्याकथाभिज्ञो यो यो नर्म्मविचक्षणः । स स तत्प्रियतां लेभे न शूरो नच पण्डितः ।
अतृप्तः स्त्रीभिरल्पाभिरुग्ररागः स पार्थिवः । जडं मेने जयापीडं स्त्रीराज्यान्निर्गतं जितात् ।
दिग्विज्जयव्यसनिनः पूर्व्वभूपाञ्जहास सः । गणिकाभोगसुखितः स्वसामयिकमध्यगः ।
श्लाघाकारिणो वृद्धान्नर्म्मोक्त्योद्वेज्य वारयन् । तस्मादिटजनो लेभे सम्प्रीतात् पारितोषिकं ।
अट्टचेट इव स्पष्टपरिहासविचक्षणः । सोऽलज्जयन्मन्त्रिवृद्धानास्थाने गणिकासखः ।
बन्धकीपादमुद्राङ्कचारुप्रावरणादि सः । गौरवार्हान् दुराचारैः सचिवान् पर्य्यधापयत् ।
मानीमनोरथो मन्त्री परं परिजहार तत् । अशक्नुवन् शमयितुं मध्यपातपराङ्मुखः ।
कुक्षत्वं यागवाहिलं वैधुर्य्यं द्रोहवृत्तिता । दुर्वृत्तस्य प्रभोरन्यत् परिहारान्न भेषजं ।
सुवर्णपार्श्वं विप्रेभ्यो दधत् फलपुरं तथा । भूभृत्स लोचनोत्सञ्च द्वादशाब्दानभूद्विभुः ।
कल्याणदेव्यां सञ्जातो जयापीडमहीभुजा । संग्रामापीडनामाथ बभूव भुवनेश्वरः ।
पृथिव्यापीड इत्यन्यन्नाम बिभ्रत् स पार्थिवः । समाप्तिं सप्तभिर्व्वर्षैः साम्राज्यस्य समासदत् ।
श्रीचिप्पटजयापीडो बृहस्पत्यपराभिधः । ललितापीडजो राजा शिशुदेश्यस्ततोऽभवत् ।
रागग्रहगृहीतस्य ललितापीडभूपतेः । वेश्यायां कल्पपाल्यायां जयादेव्यामजायत ।
उपाख्यस्याखुवग्रामकल्पपालस्य तां सुतां । रूपलुब्धोऽवरुद्धत्वमनैषीत् स हि भूपतिः ।
पद्मोत्पलककल्याणमम्मधर्म्माः समातुलैः । बालकः पाल्यमानाभूत् पृथिवी भोगभागिभिः ।
तस्य पञ्च महाशब्दाञ्ज्यायानुत्पलकोऽग्रहीत् । अन्ये जगृहिरेऽन्यानि कर्म्मस्थानानि मातुलाः ।
आयत्तीकृतसाम्राज्यैर्भ्रातृभिर्व्वन्दिताज्ञया । भूभृज्जनन्या विदधे जयादेव्या जयेश्वरः ।
राज्ञां कृपणवित्तार्थं प्रविष्टो दूयते धनं । अचिराल्लीयते शान्तिमपूर्व्वैः कश्चिदेव तत् ।
जयापीडस्य यत्किञ्चित् सूनुना हि व्ययीकृतं । स्वनुश्यालैरशेषन्तैः क्रमेण हृतं वसु ।
भगिनीभोगभाग्यसगर्भैर्व्विभवैः कृताः । ते भङ्गुराणां भोगानां भोक्तारो भाग्यभागिनः ।
निरङ्कुशं चेष्टमानाः शनकैस्त्यक्तगौरवात् । ते स्वस्त्रीयान्नृपान्नाममकुलीनाः शशङ्किरे ।
अथाभिचारक्रियया मिथः संमन्त्र्य पापिभिः । राज्येच्छया तैः स्वस्त्रीयः स्वामी च स नृपो हतः ।
भुक्तवित्तो द्वादशाब्दांस्तस्मिन् व्यापादिते तथा । नैच्छन्नेकस्य ते राज्यं परस्परमहङ्कृताः ।
तेषामाप्तदेशानां मामसाध्वमहीपतीन् । तांस्तान् कर्त्तुमशामान्यान् विरोधोऽन्योन्यमुद्ययौ ।
अथ मेघावलीदेव्यां जातो वप्पियभूपतेः । ज्येष्ठोऽप्यप्राक्तिकतया योऽभूद्राज्यविवर्ज्जितः ।
सोऽयं त्रिभुवनापीडो जयादेव्यामसौजसत् । राजानमजितापीडं तं सहादुत्पलो व्यधात् ।

॥ युग्मं ॥ श्रेडादिगणनास्थानविष्यन्दोत्या नृपाय ते। पञ्चमाङ्गणनास्थानादमनाच्छादने ददुः। १९०
एकस्मात्पणात् खेदं यात्स्वन्येषु दिने दिने। पञ्चतुल्यमुखान्वेच्छद्रुस्ता राजा तदाश्रितः।
ते राजन्यजितापीडे राज्योत्पत्त्यपहारिणः। पुरदेवगृहादीनां प्रतिष्ठाकर्म चक्रिरे।
सापत्यास्ते बुभुजिरे राज्यं स्वामिविवर्ज्जितं। निर्ज्जने महिषं श्रान्तं मिथः सेर्ष्या वृका इव।
उत्पलेनोत्पलस्वामी तथोत्पलपुरं कृतं। पद्मस्य पद्मस्वाम्यन्ते कृतिः पद्मपुरं तथा।
वधूर्व्यधत्त पद्मस्य गुणादेवी गुणोज्ज्वला। मठमेकमधिष्ठाने द्वितीयं विजयेश्वरे। १९५
धर्म्मो धर्म्माग्रमे हेतुर्धर्म्मस्वामिविनिर्म्मिते। कल्याणवर्म्मा सत्कर्म्मा कल्याणस्वामिकेशवे।
दीनाराणां सहस्राणि पञ्चोपकरणं कृती। एकैकस्याः सुधीर्धेनोः कृत्वा समीं महाधनः।
पञ्चाशीतिसहस्राणि गवां दत्वा प्रकल्पयन्। कुम्भप्रतिष्ठासम्भारं योमस्वामिनं व्यधात्।
तस्यैकस्यैव सामर्थ्यां कः सङ्ख्यां कर्त्तुमर्हति। भ्रातॄणां किं पुनस्तेषां सर्व्वेषां भूरिसम्पदां।
द्रोहार्ज्जितास्तु वा लक्ष्मीः सुकृतोपार्ज्जिताथवा। सर्व्वेषां स्पृहनीयैव तेषां दातृतया तया। २००
कृता देवगृहास्तैर्ये तत्पार्श्वे ऽन्यसुरास्पदैः। दिक्ष्वातङ्कसमीपस्थकलभौपम्यमाश्रितं।
एकोननवते वर्षे स्वस्तीये शान्तिमागते। निर्व्विघ्नभोगास्तेऽभूवन् षट्त्रिंशाब्दात्ययावधि।
अथ सम्योत्पलकयोरुदभूद्दारुणो रणः। रुद्रप्रवाहा यत्रासीद्वितस्ता सुभटैर्हतैः।
कविर्बुधमनःसिन्धुशशाङ्कः शङ्कुकाभिधः। यमुद्दिश्याकरोत् काव्यं भुवनाभ्युदयाभिधं।
मम्मसूनुर्यशोवर्म्मा संग्रामाग्रे व्यपाहरत्। स यत्र तेजः शूराणां नक्षत्राणामिवार्यमा। २०५
अथोत्पाट्याजितापीडं संग्रामापीडसम्भवः। अनङ्गापीडनामाभूत् कृतो मम्मादिभिर्नृपः।
सम्योत्साहासहिष्णुत्वात् सम्भृतामर्षपेशलः। तस्य राज्ये द्विपत्त्वासीत् सुखवर्म्मोत्पलात्मजः।
वर्षत्रयेणोत्पलके ततः प्रशममागते। स चकारोत्पलापीडमजितापीडजं नृपं।
तेषामाश्वयुजे राजसङ्ग्रामानां महीभुजां। भूत्वापि भृत्याः कृतिनो विभूतिं केऽपि लेभिरे।
सान्धिविग्रहिकस्तस्य रत्नोनाम विभूतिभाक्। तस्मिन् कालेऽपि यश्चक्रे रत्नस्वामिसुरास्पदं। २१०
भेजुर्दार्व्वाभिसारादीन् देशानुत्तम्य भूपतां। विमलाश्वाग्रामभुजो नराद्या व्यवहारिणः।
राज्ञां कर्कोटवंश्यानां क्षीणप्रायमभूत् कुलं। वंशस्तूत्पलकुल्यानां भुवि वैपुल्यमाययौ।
सामर्थ्योपनतप्रायपार्थिवत्वोऽप्यपद्यत। विद्वेषात् सुखवर्म्माय शुम्भाख्येन स्वबन्धुना।
ततः शूराभिधो मन्त्री सुखवर्म्मात्मजेऽकरोत्। राज्ययोग्योऽयमित्यास्थां सगुणेऽवन्तिवर्म्मणि।
एकत्रिंशे स वर्षेऽस्य प्रजाविप्लवशान्तये। विनिवार्योत्पलापीडं तमेव नृपतिं व्यधात्। २१५
यत्कृते विफलक्लेशा आसन् पितृपितामहाः। पौत्रेण हेलया प्राप्ता सा सिद्धिः पुण्यकर्म्मणा।
कुम्भाः पयोनिधिपयोहरणप्रवृत्ता नित्यश्च हन्ति किल ये विफलश्रमत्वं।
चित्रं क्षणादिह तदेकसमुद्भवेन सन्दर्शिता निखिलवारिधिपानलीला।
अभूत तदुरुमूर्द्ध्नि राजलक्ष्मीघटितकटाक्षकृतादिपट्टबन्धे।

कनकघटमुखान्तराभिषेकं झटिति पतन्तमवन्तिवर्म्मदेवः ।
सम्प्राप्तावुपदेष्टुमिन्दुतपनौ युक्तं स्वतेजोङ्गवैर्भूपालैर्नवराज्यतन्त्वमिव स श्रोत्रद्वये धारयन् ।
राजा मण्डनकुण्डलद्वयमिषात् स्वच्छातपत्रच्छलाद्वज्रोविष्टरपुण्डरीकघटितच्छायाद्वयो दिद्युते ॥ ७२५ ॥

॥ राजानः ॥ १७ ॥ वर्षाः ॥ २६० ॥ आदितः राजानः ॥ ७० ॥ वर्षाः ॥ २७ ॥

इति श्रीकाश्मीरिकमहामात्यचम्पकप्रभुसूनोः कल्हणस्य कृतौ राजतरङ्गिण्यां चतुर्थस्तरङ्गः ॥

समाशतद्वये षष्टियुते मासेषु षट्सु च । निर्दिष्टाद्बेषु कार्कोटवंश्ये सप्तदशाभवन् । ७२७

॥ अथ पञ्चमस्तरङ्गः ॥



काव्येषु रुचिः कचेषु फणिनां पुंस्कोकिलस्येव ते गोभिः कण्ठतटस्य ह्रयति पुरो दृक् पश्य चक्षुःश्रुतेः।
सन्धानेऽभिनवे मिथो भगवतोर्जिह्वा पृथक्स्पन्दिनी भिन्नार्थां सदृशाक्षरामपि वदन्त्येवं गिरं पातु वः।
अवन्तिवर्मा साम्राज्यं प्राप्य पाटितकण्टकः। चकार चरितैश्चित्रं सतां कण्टकितं वपुः।
आसतां क्षितिपामात्यौ तौ द्वावपि परस्परं। आज्ञादाने परिष्ठ्टौ सत्यावाज्ञापरिग्रहे।
कृतघ्नः क्षान्तिमान् क्ष्माभृन्मन्त्री भक्तः स्मयोज्झितः। अभङ्गुरोऽयं संयोगः सुकृतैर्जातु दृश्यते।
विवेको प्राप्तराज्यः स क्ष्माभृद्वीक्ष्य नृपश्रियं। अविलुप्तस्मृतिर्धीमानन्तरेवमचिन्तयत्।
गोभुजां वल्लभा लक्ष्मीर्मातङ्गोत्सङ्गलालिता। सेयं स्पृहां समुत्पाद्य दूषयत्युन्नतात्मनः।
स नास्ति कश्चित् प्रथमं यः प्रदर्श्यानुकूलतां। सन्ताप्य तेन च रसं नीचप्रीत्येव नानया।
चपलाभिः प्रहृष्टेयं स्ववेश्याभिः सहाम्बुधौ। तदेकचारिणीदृष्टमनया शिक्षितं कुतः।
निःस्नेहानन्वगात् कांश्चित् सुचिरं संस्तुताप्यसौ। परलोकाध्वगान् भूपानपाथेयानबान्धवान्।
हेमभोजनभाण्डादि भाण्डागारे यदर्जितं। कस्मादस्य न नायास्ते लोकान्तरगता नृपाः।
अन्योच्छिष्टेषु पात्रेषु भुक्तेषु महीभुजः। कस्मान्न लज्जामवहन् शौचचिन्तां नवा दधुः।
स्थलेषु राजतस्थालकपालेष्ववलोकितैः। प्रेतभूपालनामाङ्कैः शङ्का कस्य न जायते।
दृष्टाः प्रविष्टे ये कालपाशे कण्ठान्मुमूर्षतां। अशस्ता अपविचार्य ते हाराः कस्य हारिणः।
सन्दूष्य वाष्पैर्दुःखोष्णैस्तकान् पूर्वैर्मुमूर्षुभिः। स्पृशन्नेतानलङ्कारान्न सङ्कोचः कमाप्नुयात्।
या वारिराशिमलिलान्तरसन्निधानसंसेवयापि सततं मलिनैव लक्ष्मीः।
पार्श्वेषु गैरमितखभागिषु सा विमुक्ता वैमल्यमेति दहरिणीव कृतापशौचे।
इति निर्धार्य नृपतिर्नीत्वा स्वर्णादिलवणतां। निर्झरश्रेणिभि. प्रादाद्द्विजन्मभ्यः करम्भकं।
साधु भूपेति वक्तव्ये हर्षाच्छीघ्रगौरवं द्विजः। साध्ववन्तिस्मिति वदन्नेकः प्रापाञ्जलीन् बहून्।

लक्ष्मीं कलार्थिनात्मत्वात्मा कृतिनावन्तिवर्म्मणा । विभूतिश्चामरच्छत्रमात्रशेषा व्यधीयत ।
अनन्तसम्पत्सम्पन्नभूरिगोचजविस्तरे । राजश्रीर्दुर्जरा तस्य नवत्वे भुभुजोऽभवत् ।
विश्रुतः समरे भ्रातॄन् भ्रातृव्यांश्च विजित्य सः । चकार भूरिरभिर्व्वारैराज्यं विगतकण्टकं ।
राज्यं निष्पाद्य निर्व्विघ्नमथ वात्सल्यपेशलः । विभज्य बन्धुभृत्येषु बुभुजे पार्थिवः श्रियं ।
भ्राता द्वैमातुरस्तेन शूरवर्म्माभिधः सुधीः । ज्ञातिप्रियेण वितते यौवराज्येऽभ्यषिच्यत ।
स्वाधूयाहस्तिकर्णाख्यावग्रहारौ प्रदाय यः । शूरवर्म्मा स्वामिनश्च गोकुलश्च विनिर्ममे ।
सम्पूर्णपुण्यमहिमा मर्त्यमाहात्म्यमन्दिरं । पञ्च हस्तप्रदश्चक्रे मठं सुकृतकर्म्मठः ।
भ्राता व्यधत्त नृपतेरपरः समराभिधः । केशवं चतुरात्मानं समरस्वामिनं तथा ।
द्वौ शूरावरजौ धीरविन्नपाख्यौ निजाख्यया । व्यधत्तां विबुधावासौ द्वावन्यौ गणनापती ।
भूत्वा बाकुलताच्छन्नप्रभावानुभवौ भुवि । गतौ सविग्रहावेव हरावासाग्र्यसत्यतां ।
॥ युग्मं ॥ राजदौवारिकः श्रीमाञ्छूरस्तस्मान्महोदयः । महोदयस्वामिनोयः प्रतिष्ठां समपादयत् ।
रामजाख्यमुपाध्यायं ख्यातव्याकरणश्रमं । व्याख्यातृपदकं चक्रे स तस्मिन् सुरमन्दिरे ।
अमात्येन महीभर्त्तुः श्रीप्रभाकरवर्म्मणा । कृतं प्रभाकरस्वामिनाम्नो विष्णोर्निकेतनं ।
आयातेन प्रुकैः सार्द्धमिन्दुला गृहबुद्धकेन यः । मुक्ताः प्राप्य प्रतिष्ठायां चक्रे ख्यातां शुकावलीम् ।
विच्छिन्नप्रसरा विद्या भूयः शूरेण मन्त्रिणा । सत्कृत्य विदुषः सभ्यान्देशेऽस्मिन्नवतारिता ।
युग्मे. चितिभुजां योग्यैरूह्यमानामहर्द्धयः । बुधाः प्रवृद्धसत्काराभूपतेर्व्विविशुः सभां ।
मुक्ताकणः शिवस्वामी कविरानन्दवर्धनः । प्रथां रत्नाकरश्चागात्साम्राज्येऽवन्तिवर्मणः ।
आस्थाने कृतमन्दारोवन्दी शूरस्य मन्त्रिणः । सङ्कल्पस्मृतिमाधातुमिमामार्य्यां सदापठत् ।
अयमवसरउपकृतये प्रकृतिचला यावदस्ति सम्पदियं ।
विपदि समाभ्युदयिन्यां पुनरुपकर्त्तुं कुतोऽवसरः ।
कृतः सुरेश्वरी चेत्रे मङ्गगेहविधायिना । शिवयोर्मिश्रयोस्तेन प्रासादः सोऽव्ययस्थितिः ।
शूरेश्वरं प्रतिष्ठाप्य स्वदेशेव समुन्नतं । चक्रे शूरमठन्धीमान् स भोगाय तपस्विनां ।
स्वकृते पत्तनवरे तेन शूरपुराभिधे । क्रमवर्त्तु प्रदेशस्थोढक्कोऽभूद्विनिवेशितः ।
सुरेश्वरीप्राङ्गनतश्चक्रे भूतेश्वरं हरं । मठं शूरमठान्तश्च शूरजोरत्नवर्धनः ।
काव्यदेव्यभिधा शूरवधूः शुद्धान्वया व्यधात् । सदाशिवं सुरेश्वर्य्यां काव्यदेवीश्वराभिधं ।
निर्म्मत्सरोऽवन्तिवर्म्मा सोदरेभ्योऽनपायिनीं । शूराय तस्य पुत्राय नृपतिः प्रक्रियान्ददौ ।
छन्दानुवर्त्ती भूपालो दैवतस्येव मन्त्रिणः । आबाल्याद्देष्णोऽप्याभोक्तृवतामुपदर्शयन् ।
क्षेत्रे विश्वैकसाराख्ये मृतानामपवर्गदे । भूरिभोगास्पदं राज्ञा नेमावन्तिपुरं कृतं ।
अवन्तिस्वामिनं तत्र प्रापाज्याधिगमात्पुरा । विधाय प्राप्तसाम्राज्यश्चक्रेऽवन्तीश्वरं तदा ।
त्रिपुरेश्वरभूतेशविजयेशेषु भूभृता । स्नानद्रोण्या रौप्यमय्या तेन पीठचयं कृतं ।

शूरस्यापि नरेन्द्रं तं ध्यायतः स्वाधिदैवतं । तत्प्रियार्थमुपेत्योऽभूद्धर्मः प्राणाः सुतोऽपि वा ।
तथा चार्चयितुं जातु यातो भूतेश्वरो नृपः । विभवानुगुणेष्वस्मिन् पूजोपकरणेऽर्पिते ।
ददर्श पीठे देवस्य पूजकैरुपपादितम् । वन्यमुत्पलशाकाख्यं तिक्तशाकमवस्थितं ।
तत्रस्थाः क्ष्माभुजा पृष्टास्तन्निवेदनकारणं । व्यजिज्ञपन् क्षितिन्यस्तजानुप्राञ्जलयस्ततः ।
डामरो धन्वनामास्ति लहरे विषये बली । शूरस्य मन्त्रिणो देवसेवको यः सुतोपमः ।
हृतेषु तेन ग्रामेषु निरवग्रहशक्तिना । निवेद्यमेतद्देवास्मै भूतेशाय निवेद्यते ।
अकाण्डशूलजनितां पार्थिवः कथयन् व्यथां । श्रुतमश्रुतवत्कृत्वा त्यक्तपूजोऽथ निर्ययौ ।
पूजां सन्त्यज्य गमनं शूलं चाकस्मिकं प्रभोः । सहेतुकं विदञ्शूरो वृत्तान्तान्वेषकोऽभवत् ।
ज्ञाततत्त्वस्ततस्तूर्णं भूतेशाभ्यर्णवर्त्तिनः । क्रुद्धः समाख्यचक्रस्य भैरवस्याविशद्गृहं ।
निषिद्धजनबाहुल्योऽभूत्ता विरलपार्श्वगः । प्राहिणोद्धन्वमानेतुं ततो दूतान् पुनःपुनः ।
स क्षितिं पत्तिपृतनासंमर्द्देन प्रकम्पयन् । अप्रकम्प्यतनुः प्राप क्रूरः शूरान्तिकं पुनः ।
तस्य प्रविष्टमात्रस्य शस्त्रिणः शूरचोदिताः । मुण्डं सजीवितस्यैव चिच्छिदुर्भैरवाग्रतः ।
आसन्ने सरसि क्षिप्ता रुधिरोद्गारि तद्वपुः । क्ष्मापतेः चालितामर्षो धीरः शूरो विनिर्ययौ ।
तस्य श्रुत्वा शिरश्छिन्नं स्वपुत्रस्येव मन्त्रिणा । क्षीणमन्युः क्षितिपतिः सवैलक्ष्य इवाभवत् ।
शूरोऽथ पृष्टकुशलो निर्व्यथोऽस्मीति भाषिणं । उत्थाप्य तल्पात्तं देवं पूजाशेषमकारयत् ।
इत्थं समस्तकृत्येषु भावज्ञः स महीपतेः । अनुक्तैव हितं तत्तु प्राणांस्त्यक्त्वाप्यसाधयत् ।
परस्परमनुत्पन्नमन्युकालुष्यदूषणौ । न दृष्टौ न श्रुतावन्यौ तादृशौ राजमन्त्रिणौ ।
श्रीमेघवाहनस्येव भासाञ्चेऽवन्तिवर्म्मणः । अशेषप्राणिनामासीत्कुमारी दशवत्सरान् ।
जलं जहद्भिः शिशिरं तटानीत्याकुतोभयैः । तत्कालं सेवितः पृष्ठे पाठीनैः शरदातपः ।
अनुग्रहाय लोकानां भट्टाः श्रीकल्लटादयः । अवन्तिवर्म्मणः काले सिद्धा भुवमवातरन् ।
चरित्रे वक्तव्ये येषामेकस्य पावनः । अयं प्रासङ्गिकः कश्चिद्वृत्तान्तो वर्णयिष्यते ।
देशः प्रवलतोयेऽयं महापद्मसरोजलैः । कूलिनीभिश्च शवलः स्वल्पोत्पत्तिः सदाभवत् ।
ललितादित्यभूभर्तुरुद्योगेन वनीयसा । किञ्चिदाकृष्टसलिलः प्राप्योत्पत्तिं मनाक्ततः ।
जयापीडे क्रमायाते स्वल्पवीर्य्येषु राजसु । सलिलोपप्लवैरासीत्पुनरेवावृता क्षितिः ।
दीन्नाराणां दशशतो पञ्चाशत्यधिकाभवत् । धान्यखारीक्रये हेतुर्द्देशे दुर्भिक्षविक्षते ।
अवन्तिवर्म्मणः पुण्यैर्जन्तूज्जीवयितुं ततः । स्वयमन्नपतिः श्रीमान् सुय्यः क्षितिमवातरत् ।
यस्याविज्ञातसम्भूतेस्तूर्य्ये कालेऽपि निश्चितं । अयोनिजत्वकृतिनश्चरितैर्भुवनाद्भुतैः ।
पुरा रथ्यारजःपुञ्जं सम्मार्ज्जन्ती पिधाभवत् । सुय्याभिधाना चण्डाली मृद्भाण्डं प्राप नूतनं ।
तस्मिन् पिधानमुद्धृत्य साप्रश्यन्मध्यशायिनं । बालं कमलपत्राक्षं धयन्तं स्वकराङ्गुलीः ।
माभा कयापि त्यक्तोऽसौ सुन्दरो मन्दभाग्यया । अयेति चिन्तयन्त्यासीत्सा स्नेहात्प्रस्नुतस्तनी ।

अदूषयन्त्याः स्पर्शेन धात्र्याः शूद्रस्त्रियो गृहे । तया विहितवृत्तिः स शिशुर्वृद्धिमनीयत ।
स सुय्यनामा मतिमान् प्रवृद्धः शिक्षिताक्षरः । कस्याप्याधीकृद्गृहपतेरर्भकाध्यापको गृहे ।
व्रतस्नानादिनियमैस्तं सतां हृदयङ्गमं । गोष्ठीषु विशदप्रज्ञं विदग्धाः पर्य्यवारयन् ।
तेषां कथाव्यवस्थासु निन्दतां जलविप्लवं । धीरस्ति मे निरर्थस्तु किं कुर्य्यामिति सोऽब्रवीत् ।
उन्मत्तस्येव वदतस्तस्य तन्नियमाद्वचः । निशम्य भूमृच्चारेभ्यश्चिरमासीत्सविस्मयः ।
ततस्समानीय नृपः किं ब्रूष इति पृष्टवान् । धीरस्तीत्यादि राजाग्रेऽप्यवोचत्सोऽप्यसम्भ्रमः ।
वातुलोऽसाविति निर्जल्कोऽप्यथ महीपतिः । धियं दिदृक्षुर्व्विदधे तस्यायत्तं निजं धनं ।
कोशाद्दीनारभाण्डानि बहून्यादाय हेलया । ययौ मडवराज्यं स नावमारुह्य रंहसा ।
ग्रामे तत्र प्रवृद्धाम्बुनिमग्ने नन्दकाभिधे । एकं निक्षिप्य दीनारभाण्डं व्यावर्तत द्रुतं ।
सत्यं वातूल एवासौ सभ्येष्वपि वदत्स्वपि । वार्तां निशम्य तां राजा तन्निष्ठान्वेषकोऽभवत् ।
क्रमराज्यं समं प्राप्य देशे यक्षदराभिधे । अञ्जलिभ्यां निचिक्षेप दीनारान् सलिलान्तरे ।
यत्र तीरद्वयालम्बि शैलनिर्लुठिताः शिलाः । चक्रुर्व्वितस्तां निष्पीड्य पयः प्रतिपथोन्मुखं ।
दुर्भिक्षोपहता ग्राम्या दीनारान्वेषिणस्तदा । शिलाः प्रवाहादुद्धृत्य वितस्तां समशोधयन् ।
एवं दिनानि द्वित्राणि पयोयुक्त्या विरुध्य तत् । वितस्तामेकतः स्थानात्कर्मकृद्भिरबन्धयत् ।
पाषाणसेतुबन्धेन सुय्येनाद्भुतकर्मणा । सप्ताहमभवद्बद्धा निखिला नीलजा सरित् ।
अधः प्रवाहं संशोध्य लुठदश्मप्रतिक्रियां । कृत्वा बद्धैः शिलावन्धैः सेतुबन्धमपाटयत् ।
चिरकालनिरोधेन सोत्कण्ठेवाम्बुधिं प्रति । ततः प्रावर्तत जवाद्गन्तुं सागरगामिनी ।
जम्बालाढ्या स्फुरन्मीना भूर्व्यभा सलिलोज्झिता । व्यक्तकाण्डासनचया निर्मेघेव नभस्थली ।
यत्र यत्र विवेदौघरोधं सलिलविप्लवे । तत्र तत्र वितस्तायाः प्रवाहान्नूतनान् व्यधात् ।
मूलस्रोतोपनिष्ठ्यूतभूरिस्रोता बभौ सरित् । एकभोगाश्रयानेकफणेवासितपन्नगी ।
वामेन सिन्धुस्त्रियाम्भा वितस्ता दक्षिणेन तु । याभ्यां वै समगंसातां प्राग्वैन्यस्वामिनोऽन्तिके ।
वर्त्ततेऽद्य महानद्योः कल्पापायेऽप्यनत्ययः । सङ्गमो नगरोपान्ते स सुय्योपक्रमस्तयोः ।
अद्याप्यास्तां फलपुरपरिहासपुरस्थितौ । विष्णुस्वामी सङ्गमस्य वैन्यस्वामी च तीरयोः ।
सुन्दरीभवनाभ्यर्णप्राप्तस्यायतनस्य तु । योगशायी हृषीकेशस्सुय्यस्याभ्यर्चितस्तटे ।
दृश्यन्तेऽद्यापि सरितां पूर्व्वस्रोतस्तटोद्भवाः । निपाताक्रष्टनौरज्जुरेखाङ्काजीर्णपादपाः ।
स्फुरत्तरङ्गजिह्वाग्रा नदीर्म्मार्गमजिग्रहत् । तास्ताः स्वेच्छानुसारेण मान्त्रिकः पन्नगीरिव ।
बद्धा शैलमयाम् सेतुम्बितस्तां सप्रयोजनाम् । महापद्मसरोवारि स चकार नियन्त्रितं ।
महापद्मसरः कुण्डादितस्ता येन योजिता । जवान्निर्याति कोदण्डयन्त्रादिषुरिवाधुना ।
उद्धृत्य सलिलादुर्व्वीमिश्मादिव राघवः । अनेकशस्सहस्रोर्व्वीम् ग्रामान्ग्रामान्विधाय्यधात् ।
पालीभिरभ्यः संरोध्य याम् कुण्डसदृशान् व्यधात् । कुण्डलामीति सर्व्वांस्तान् सम्टद्धान् ब्रुवते जनाः ।

उत्खातकीलनिवहा नद्योऽद्यापि शरल्लशाः । व्यञ्जन्ति जलगन्धिभवन्धनं स्तम्भसन्निभान् ।
दीनारभाण्डानौज्झीत्स यदगाधजलान्तरे । नन्दके निर्गतजले स्थलान्तात्तदलभ्यत ।
अदेवमातृकान् ग्रामान् परीक्ष्य विविधाः क्षितीः । संविभेजे विभक्तेन नाद्येन स वारिणा ।
असिञ्चच्च जलैर्ग्रामान् ग्रामान्मृदमुपाहृतां । या यावता क्षणेनागाच्छोषं तां तावता हृदि
कालेन मत्वा सेकार्हांम्प्रतिग्रामं जलस्रुतेः । परिमाणं विभागञ्च परिकल्प्य निरत्ययं ।
चकार चानूलाद्याभिः सिन्धुभिः सर्व्वतोदिशः । सत्फलोदारकेदारसम्पत्संपन्नविभ्रमाः ।
॥ तिलकं ॥ न कश्यपेनोपहृतं न यत्सङ्कर्षणेन वा । हेलया मण्डलेऽमुष्मिंस्तत्सुय्येन सुकर्मणा ।
भूमेर्जलादुद्धरणं द्विजचैत्रे तथार्पणं । सेतुबन्धोऽश्मभिस्तोये यमनं कालियस्य च ।
चतुर्षु सिद्धमिति यद्विष्णोः सत्कर्मजन्मसु । सुय्यस्य तत्पुण्यराशेरेकस्मिन्नेव जन्मनि ।
॥ युगलकं ॥ यस्मिन्महासुभिक्षेषु दीनाराणां शतद्वयी । धान्यखारी प्राप्तिहेतुराघर्गाद्भवत्पु
ततः प्रभृति तत्रैव चित्रं कश्मीरमण्डले । षट्त्रिंशता धान्यखारी दीनारैरुदितः क्रयः ।
निर्गताया महापद्मसलिलात्स्वर्गसन्निभं । वितस्तायास्तटे चक्रे स्वनामाङ्कं स पत्तनं ।
सुकृता स्थापिता तेन सरसि व्याघ्रदिक्तटे । आसंसारं स्थिरा सारमर्यादाश्मपचिशां ।
सुय्याकुण्डलनामानं ग्रामं कृत्वा द्विजातिसात् । सुय्यामुद्दिश्य तन्नाम्ना सुय्यासेतुं स निर्ममे ।
तेनोद्धृतासु सलिलाद्भूषु ग्रामाः सहस्रशः । अवन्तिवर्मप्रमुखैर्जयस्थलमुखाः कृताः ।
ईदृशैर्धर्म्यवृत्तान्तैः प्रवर्त्तितकृतादयः । अवन्तिदेवः पाति स्म मान्धातेव वसुन्धरां ।
प्राणप्रयाणसोद्योगरोगग्रस्तस्ततो यथा । चैत्रं स त्रिपुरेशाद्रिनिष्ठज्येष्ठेश्वराश्रितं ।
आत्मनस्तत्र निश्चित्य विपत्तिं चिरगोपितां । प्राणान्ते प्राञ्जलिः शूरो वैष्णवत्वमदर्शयत् ।
तेनान्ते भगवद्गीताः शृण्वता भावितात्मना । ध्यायता वैष्णवं धाम निरमुच्यत जीवितं ।
आषाढशुक्लपक्षस्य तृतीयस्यां क्षमापतिः । वर्षे एकोनषष्ठे स क्षाष्टपासमुपाययौ ।
तस्मिन् प्रशान्ते प्रत्येकं विभवोल्लिक्तचेतसां । तुल्यमुत्पलवंश्यानां राज्येच्छा भूयसामभूत् ।
ततश्चक्रे प्रतीहारः प्रयत्नाद्रत्नवर्धनः । नृपं शङ्करवर्माणमवन्तिनृपतेः सुतं ।
कर्णपो विन्नपामात्यस्तनूजं शूरवर्मणः । तद्दायासुखवर्माख्यं यौवराज्येऽप्ययोजयत् ।
अतस्तयोरभूद्वैरं क्षितीशयुवराजयोः । यस्मिन् क्षणे क्षणे राज्यमासीद्दोलामिवाश्रयत् ।
शिवशक्त्यादयो वीराः स्वामिकार्य्योज्झितासवः । यत्राभूवन् स्वसत्वस्य परीक्षाक्षणलाभिनः ।
कुर्व्वतां स्वामिशत्रूणां दानमानप्रतिश्रवं । सत्वैकाग्र्याश्च ते यस्मादानुकूल्यमशिश्रयन् ।
पिण्डस्पृष्टाश्च निस्त्यज्याहङ्कृताः शिक्षिताः क्वचित् । तावन्न वीततमसः स्वद्वृत्तिमनुजीविनः ।
कथञ्चिदथ निर्जित्य युवराजं महौजसं । प्राज्यः स्वविभयोद्धारश्चक्रे शङ्करवर्मणा ।
सम्राट् समरवर्माथैर्वितीर्णसमरोऽसकृत् । कीर्त्तिं श्रिया प्रणयिनीं लब्धयाधिविवेद सः ।
अथ निर्जित्य दायादान्लब्ध्वा लक्ष्मीं क्षितीश्वरः । जिष्णुर्दिग्विजयं कर्त्तुं श्रीमानासीन्महोद्यमः ।

तस्य कालवशाद्देशे प्रक्षीणजनसम्पदि । लक्षाणि नवपत्तीनां द्वारान्निष्क्रमतोऽभवन् ।
स्वपुरस्योपकण्ठेऽपि योऽभूत्कुण्ठितशासनः । स एव रत्नोत्तंसेषु राज्ञामाज्ञां न्यवेशयत् ।
गच्छन्नाम्नायविच्छेदसम्प्रदायः कनुजये । स्वप्रज्ञया समुन्नीतो राज्ञा शङ्करवर्म्मणा ।
तत्सेनानरनाथानां पृतनाभिः पदे पदे । कुल्यापगेव कुल्याभिर्व्विशन्तीभिरवर्द्धत ।
दार्व्वाभिसारराजेन त्रस्यता समुपाश्रिताः । अद्रिद्रोण्यो न वाहिन्यस्तत्सेनानादमादधुः ।
जनोल्वणैर्हरिगणैर्गृह्णन्हरिगणं क्षणात् । अनासादितदुर्गं स चक्रे दुर्गान्तरातिथिं ।
लक्षाणि नवपत्तीनां वारणानां शतत्रयी । लक्षञ्च वाजिनामासीद्यस्य सेनापुरःसरं ।
स गुर्ज्जरजयव्यग्रः स्वपराभवशङ्किनं । त्रैगर्तं पृथिवीचन्द्रं निन्ये तमपि दास्यतां ।
पुत्रं भुवनचन्द्राख्यं नीविं प्रागेव दत्तवान् । स ह्यभूत्प्रणतिं कर्तुं तस्याभ्यर्णमुपागतः ।
अथ तत्कण्टकं भ्राम्यद्भूरिमण्डलनायकम् । वीक्ष्य सम्मुखमायान्तं महार्णवमिवोज्ज्वलं ।
समागमक्षणे यस्माच्छङ्कमानः स्वबन्धनं । पलाय्य प्रययौ दूरं निर्व्वाणौजोविजृम्भितः ।
॥ तिलकं ॥ यमप्रतिमसौन्दर्य्यमद्याप्याहुः पुराविदः । तमेवाद्राक्षुरुत्त्रस्ता नृपाः कालि
ङ्गचखानालखानस्य संख्ये गुर्जरभूभुजः । बद्धमूलां क्षणाल्लक्ष्मीं शुचं दीर्घामरोपयत् ।
तस्मै दत्वा टक्कदेशं विनयादङ्गुलीमिव । स्वशरीरमिवापासीन्मण्डलं गुर्जराधिपः ।
द्दतं भोजाधिराजेन स साम्राज्यमदापयत् । प्रतीहारतया भृत्यो भूते थक्कियकान्वये ।
दरत्तुरुष्काधिपयोर्यः केशरिवराहयोः । हिमवद्विन्ध्ययोरासीदार्य्यावर्तेद्रवान्तरे ।
नक्षत्रेष्विव भूपेषु नभसीवोत्तरापथे । यस्यैव विपुला ख्यातिर्मार्तण्डस्येव मण्डलं ।
स श्रीमांल्ललियः शाहिरलखानाश्रय. क्रुधा । निराकरिष्णु. साम्राज्यात्तस्य सेवां न लब्धवान् ।
एवं दिग्विजयं कृत्वा प्राप्त स निजमण्डलं । प्रदेशे पञ्चसत्राख्ये स्वनाम्ना विदधे पुरं ।
तस्य श्रीस्वामिराजस्य तनयोद्दक्पथप्रभोः । पूर्णिमेव क्षपाबन्धोः सुगन्धाख्याभवत्प्रिया ।
तया समं पुरवरे सुरराजोपमो नृपः । तस्मिन् शङ्करगौरीशसुगन्धेशौ विनिर्म्ममे ।
द्विजस्तयोर्नायकाख्यो गौरीशसुरसद्मनोः । चातुर्व्विद्यः कृतस्तेन वाग्देवीकुलमन्दिरं ।
परकाव्येन कवयः परद्रव्येण चेश्वराः । निर्लोठितेन स्वकृतिं पुष्णन्त्यद्यतने क्षणे ।
स्वल्पसत्त्वो नरपतिः स्वपुरख्यापनाय सः । सारापहारमकरोत्परिहासपुरस्य यत् ।
ख्यातिहेतुः पट्टवानां पशूनां क्रयविक्रयौ । इत्यादि यत्पत्तनेऽस्ति तत्तस्मिन्हि पुरेऽभवत् ।
राज्यप्रदेन नृपतेरत्नवर्धनमन्त्रिणा । श्रीरत्नवर्धनेशाख्यो व्यधीयत सदाशिवः ।
चित्रं नृपद्विपाः पूतभूतं य. कीर्त्तिनिर्झरैः । भवन्ति व्यसनाशक्तिपांशुस्नानमलीमसाः ।
अथ क्रमेण नृपतिर्लोभाभ्यासेन भूयसा । अधीयमानचित्तोऽभूत्प्रजापीडनपण्डितः ।
आरब्धैर्व्यसनैर्भूम्ना क्षीणकोशः क्षणे क्षणे । देवादीनां स सर्व्वस्वं जहारायासयुक्तिभिः ।
कर्म्मस्थाने पुरग्रहग्रामादिधनहारिणा । तेनाट्टपतिभागाख्यगृहकृत्याभिधे कृते ।

धूपचन्दनतैलादिविक्रयोत्थं समादधे। द्रविणं देववेश्मभ्यः क्रयमूल्यकलाच्छलात्।
प्रत्यवेक्षां मुखे दत्त्वा विभक्तैरधिकारिभिः। चतुःषष्टिं सुरगृहान्मुमोचेतरदञ्जसा।
ग्रामान्देवगृहग्राह्यान् राजा प्रतिकरेण सः। स्वयं स्वीकृत्य चोत्पत्तिं क्ष्मां कार्षक इव व्यधात्।
तुलां कृत्वा त्रिभागोनां वर्षदेयां समर्पयन्। भुक्तिकम्बलमूल्यादिदम्भादप्यधिकं ददौ।
दिगन्तरस्थो ग्रामीणानूढभारानानागतान्। तद्देशार्हैर्भारमूल्यं वर्षमेकमदण्डयत्।
वर्षेऽपरस्मिन्निखिलान्भारमूल्यं निरागसः। तथैव संख्यया ग्राम्यान् प्रतिग्राम्यमदण्डयत्।
इत्येषा रूढभारोढिः प्रथमं तेन पातिता। दारिद्र्यदूतीग्रामाणां या त्रयोदशधा स्थिता।
स्कन्दकग्रामकायस्थमासवृत्त्यादिसञ्ज्ञकैः। अन्यैश्च विविधायासैर्व्यधाद्ग्रामांश्च निर्धनान्।
तुलापहारोपचयग्रामदण्डादिसञ्ज्ञकैः। इत्येष तेन संवाहो गृहकृत्ये प्रवर्त्तितः।
व्यधत्त पञ्च शिविरांश्च तस्मिन्भिन्नकर्मणि। षष्ठं तथा गञ्जवरं प्रकचं लवटाभिधं।
आत्मनो निरयं मूढः सोऽङ्गीकृत्येत्युपक्रियां। भाविनामकरोद्राज्ञां पापीयस्त्वानि योगिनाम्।
निमित्तं मण्डलेऽमुष्मिन् सविद्यानामनादरे। राज्ञां प्रतापशालौ च नान्यः शङ्करवर्म्मणः।
मुख्येन गुणिना राज्ञां धनहान्या प्रथापहा। मूर्खेण येन कायस्था दास्याः पुत्राः प्रवर्त्तिताः।
तथा कायस्थभोज्या भूर्जाता तत्प्रात्यवेक्षया। यथा सञ्जायते वर्णहरणादिव भूभुजाम्।
तस्मिन् घोरे प्रजादुःखे कृपार्द्रः पृथिवीपतिं। पुत्रो गोपालवर्म्माख्यः कदाचिदिदमब्रवीत्।
प्रदातुस्तात भवतः पूर्व्वं न्यासीकृतः स्थितः। वरो यः सत्यसन्धस्य सोऽधुना प्रार्थ्यते मया।
कायस्थप्रेरणादेतैर्देवेनाद्य प्रवर्त्तितैः। आयासैः श्वासशेषैव प्राणवृत्तिः शरीरिणां।
न च नामास्ति तातस्य काचिल्लोकद्वयोचिता। मनागपि हितप्राप्तिरेतया जनपीडया।
अदृष्टविषयां वार्तां गहनां विवृणोति कः। दृष्टेऽप्यनिष्टादन्यत्र कर्म्मणा नेन दृश्यते।
एकतो व्याधिदुर्भिक्षप्रमुखा विपदोऽखिलाः। प्रजानामेकतस्त्वेका लुब्धता वसुधापतेः।
भूभुजोऽभ्यस्तलोभस्य श्रीः कैश्चिन्नाभिनन्द्यते। अकालकुसुमस्येव फलसम्भावनोज्झिता।
दानञ्च सूनृता स्फूर्त्तिर्विश्वसंवननं प्रभोः। लोभः पूर्व्वं तयोरेव विनाशाय महीयसः।
प्रतापमायतिं शोभां हेमन्तस्येव वारिदः। क्षतिशेषां करोत्येव लोभश्च पृथिवीभुजां।
दायादव्ययभीरुता परिहृतारम्भैर्भवन्त्युन्नता भृत्याः प्रत्युपकारकातरमतेः कुर्य्युर्न कोऽपि प्रियं।
राशीभूतधनस्य जीवितहृतौ सज्यतेरन्विषा भूभर्त्तुः क्रियते द्विषेव रभसा लोभेन किं नाप्रियं।
राजा संवाहनामायं नवायाशो जनास्वृजत्। तद्देष लोभप्रभवः प्रजानाय निवार्य्यतां।
श्रुत्वेति राजपुत्रस्य सौजन्येनोज्ज्वलं वचः। स्मितधौताधरो राजा शनैर्वचनमब्रवीत्।
तवाकृत्य विसम्वादि वचः सौजन्यपेशलं। स्मारयत्यद्य मामेतच्चित्तवृत्तिं पुरातनीं।
कुमारभावे पूर्व्वं मे तवेवार्द्रान्तरात्मनः। प्रजावत्सलता वत्स पर्य्याप्ता पर्य्यवर्द्धत।
सोऽहं घर्म्मे वहन्वर्म्म शीतेऽदलोष्णसंशुकं। पदातिरपपादत्रः पित्रा सञ्चारितोऽभवं।

मृगव्याधा इवै. शार्दूलमटन्तं कण्टकवृतं। अन्तर्व्याप्यं मां विलोक्य तमस्युपियुरग्रगाः।
स तानुवाच सामान्यो भूत्वाहं राज्यमाप्तवान्। काले कार्ये सेवकानां जाने सेवापरिश्रमं।
ईदृग्दुःखमयं भुक्त्वा ज्ञास्यत्यन्यथया भुवं। प्राप्तैश्वर्यो भवेन्मूढो गर्भेश्वरतयान्यया।
उपायैरीदृशैर्योऽहं कृतः पित्रा सुशिक्षितः। तेनापि प्राप्तराज्येन मयैवं पीडिताः प्रजाः।
गर्भवासव्यथां जातः शरीरी विस्मरेद्यथा। प्राप्तराज्यस्तथा राजा नियतं पूर्वचिन्तनं।
त्वयैव तस्मादेकोऽद्य वरो मह्यं प्रदीयतां। प्राप्तराज्यः प्रजापीडां माकार्षीस्त्वमतोऽधिकां।
बाढमित्यथ तेनोक्तः कृतान्येन्यस्मितैर्विटैः। राजाप्तैर्व्याचितश्चासीत्कुमारो ह्रीनताननः।
त्यागभीरुतया तस्मिन् गुणिषड्गपराङ्मुखे। आसेवन्तावराद्वत्तीः कवयो भल्लटादयः।
निर्वेतनाः सुकवयो भारिकोलवटस्त्वभूत्। प्रसादात्तस्य दीनारसहस्रद्वयवेतनः।
कल्यपालकुले जन्म तत्तेनैव प्रमाणितं। चीवो चिताप्रभ्रंशशकैर्दैवी वागस्य नाभवत्।
वेष्टितश्मश्रुरुष्णीषो घाणस्याग्रे प्रदेशिनी। ध्यानैकाग्या दृगित्यासीत्सुखराजस्य मन्त्रिणः।
योऽयमार्यो चितोवेशो दुर्नयासेविन. प्रभोः। छन्दानुवृत्त्या स प्राप नटस्येव विडम्बनां।
॥ युग्मं ॥ सोऽनुगैः सह निर्द्रोहं जघान द्रोहशङ्कया। शूरं दार्वाभिसारेशं शर्वध्या नरवाहनं।
प्रजानिशापे पतिते नृपस्योन्मार्गवर्त्तिनः। त्रिंशद्दिनाः सुतास्तस्य व्यपद्यन्तामयं विना।
वंशः श्रीर्जीवितं दारा नामापि पृथिवीभुजां। क्षणादेव क्षयं याति प्रजाविप्रियकारिणां।
इत्युक्तं वक्ष्यते चाग्रे व्यक्तमेतत्तु चिन्त्यतां। प्रनष्टं तस्य नामापि यथा क्रूरेण कर्मणा।
नाम्ना पत्तनमित्येव प्रख्यातं स्वपुरंकृतं। कस्यान्यस्याभिधाध्वंसि यथा शङ्करवर्मणः।
स्वस्त्रीयः सुखराजस्य तेन द्वाराधिपः कृतः। वीरानकाभिधे स्थाने प्रमादाद्दासदद्धं।
तत्कोपात्स्वयं राजा दत्तयात्रामदोर्ज्जितः। वीरानकं समुन्मूल्य प्रविवेशोत्तरापथ।
सिन्धुकूलाश्रयान्देशाञ्जित्वा भूरिभयातुरैः। कृतानतिर्महीपालैः प्रत्यावृत्तोऽभवत्तत.।
उरशान्तिशतस्य वास्तव्यैरीरशीक्षणं। निक्षेप्तौः सैन्यप्रकाशपृष्ठभूपत्र्तिः।
गिरिशृङ्गाधिरूढेन श्वपाकेन निपातित.। वेगवाही शरस्तस्य प्रसादादविशङ्कलं।
मुमूर्षुरात्मान् कटकं संरक्ष्य नयतेति सः। उक्त्वा कर्णीरथारूढः स्थानात्तस्मादिनिर्ययौ।
हीनदर्शनसामर्थ्य परिज्ञाय शनैर्गिरा। क्रन्दन्त्या वधुराविज्ञ स्थितायाः स्थानभापितः
पुत्रं गोपालवर्माख्यं न्यासीकृत्य च रक्षितुं। गिरस्देशं महादेव्याः सुगन्धायाश्चवान्वयं।
फाल्गुणे कृष्णसप्तम्यां वत्सरे सप्तसप्तते। उरस्थायमानविशिखो मार्गएव व्यपद्यत।
॥ तिलकं ॥ सुखराजादयः सैन्यं रक्षन्त. परभूमिषु। कृत्वान्तर्गोपयन्तस्तं यान्त एवाभव
तं यथायथैस्ते मूर्द्धा नयतोऽग्रगावहे.। प्रतिप्रणामं प्राप्तानां सामन्तानामकारयन्।
षड्भिर्दिनैर्निजे स्थाने प्राप्ते बोलामकाभिधे। चक्रिरे गतसन्ध्यासामन्तस्त्यान्त्यसत्क्रियां।
तिग्म. सुरेन्द्रवत्याद्या राज्ञो राजानमन्वयुः। वाचावितुः कृतश्चाय अयमिशाकयः कृतौ।

द्वौ लाडोवज्रधारख्य तं भृत्यावनुजग्मतुः । इति सद्भिस्थिताक्रूढैः सहसाक्रियताग्निसात् ।
ततो जुगोप गोपालवर्म्मा धार्म्मिकतोज्ज्वलः । सुगन्धया पाल्यमानः सत्यसन्धो वसुन्धरां ।
मध्ये लालितकादीनां दुर्वृत्तानां वसन्नपि । अनतिक्रान्तवान्योऽपि तु संस्कारान्न सोऽग्रहीत् ।
भूपालजननी भोगैर्वैधव्येऽधिकमुन्मदा । सा प्रभाकरदेवाख्यमचीकमत मन्त्रिणं ।
तया निर्भरसम्भोगप्रीतया स व्यधीयत । सौभाग्यपदशृङ्गारमौलिचक्रत्रयाङ्कितः ।
कोशाध्यक्षेण रागिण्यास्तस्या लुण्ठितसम्पदा । तदा भाण्डापुरे तेन शाहिराज्यं व्यधीयत ।
आज्ञातिक्रमिणः शाहेः कृत्वा कमलुकाभिधं । तोमराणाय स प्रादाद्राज्यं लल्लियसूनवे ।
प्रत्यावृत्तोऽथ नगरं विवेश विजयोर्ज्जितः । शौर्य्यशृङ्गारवपतौ साभिमानः स्वविग्रहे ।
स राजजननीजारः शाहङ्कारो जयार्जनात् । मानचतिमधिचेपैर्व्वीराणां व्यधितान्वहं ।
चुद्रेण कामिना वेश्यावेश्मनीव नृपास्पदे । तेनावृते सम्प्रवेशो नाभूदन्यस्य कस्यचित् ।
शनैर्व्विज्ञातवार्त्तस्य धनमानापहारकृत् । सोऽभूद्विगतोऽत्यर्थं राज्ञो गोपालवर्म्मणः ।
विद्यते यत्र गञ्जेऽस्मिंस्तत्सर्व्वं शाहिविग्रहे । गतमित्यत्रवीद्भूपं स कोषगणनोद्यतं ।
अथ गञ्जाधिपो राजभीतः खर्व्वीदवेदिनं । रामदेवाख्यं बन्धुमभिचारमकारयत् ।
तयाभिचारक्रियया भुक्तभूर्व्वत्सरद्वयं । गोपालवर्मनृपतिर्ज्ज्ञातदाहो व्यपद्यत ।
व्यक्तीभूतकुकर्म्मा स राजदण्डभयाकुलः । रामदेवोऽवधीत्पापः स्वयमेव स्वविग्रहं ।
रथ्यागृहीतो गोपालवर्म्मभ्राताथ सङ्कटः । बभूव प्राप्तराज्यः स दशभिर्द्दिवसैर्व्यसुः ।
अथ वंशक्षये वृत्ते राज्ञः शङ्करवर्म्मणः । प्रजाप्रार्थनया राज्यं सुगन्धा विदधे स्वयं ।
गोपालपुरगोपालमठगोपालकेशवान् । सा पुरञ्च स्वनामाङ्कं विदधे धर्म्मवृद्धये ।
गोपालवर्म्मणो जाया नन्दा निन्द्यान्वयोद्भवा । शिशुरप्यभवन्नन्दा मठकेशवधारिणी ।
अन्तर्व्वत्न्याः चणे तस्मिन् पत्न्या गोपालवर्म्मणः । जयलक्ष्म्यां सवन्ध्यायां श्वश्रूः सन्तानकाङ्क्षिणी ।
तस्यां विपन्नापत्यायां प्रसवान्तेऽतिदुःखिता । साभूदन्वयिने राज्यं कस्मैचिद्दातुमुद्यता ।
तस्मिन् काले महीपालविग्रहानुग्रहचमं । तत्र तत्र पदातीनां वृत्त्यसंहत्यभूत्कुलं ।
ततः समाश्रितैकाङ्गा स्वयं सम्वत्सरद्वयं । सुगन्धा विदधे राज्यं समन्त्रिनेन तन्त्रिणां ।
योग्याय दातुं साम्राज्यं कस्मैचित्सा कदाचन । सत्ताय मन्त्रिसामन्तात्तथैकाङ्गानढौकयत् ।
अवन्तिवर्म्मवंशान्ते नप्तारं शूरवर्म्मणः । गर्गीयायाः स्वकुटुम्बिन्याः सञ्जातं सुखवर्म्मणा ।
अनुमतो मे सम्बन्धिस्नेहादेवं भवेदिति । राज्ये निर्ज्जितवर्माख्यं कर्त्तुं तस्या मनोऽभवत् ।
॥ युग्मं ॥ तया तदुक्तं विषयव्यसनित्वेन जागरात् । रात्रौ दिवाशयतया योऽप्यनुत्थानदूषितः ।
नाम पङ्गुरिति प्राप राज्ये का तस्य योग्यता । इत्युदीर्य्याभवन् प्रन्तो यावत्केचन मन्त्रिणः ।
संहतैर्भेदनिर्यातैस्तावन्निर्ज्जितवर्मजः । दशवर्षः कृतो राजा पार्थस्तंत्रिपदातिभिः ।
॥ तिलकं ॥ तं गञ्जाधिपवाक्यानां सुगन्धोत्पाटनात्ततं । प्रायश्चित्तममन्यन्त मानचतिविधायिनां ।

सा राजधान्याः साम्राज्यपरिभ्रष्टा विनिर्ययौ । हृताधिकारा हारस्य पतितैर्बाष्पबिन्दुभिः ।
शरणं प्रत्यभाङ्क्त्यो योयस्तस्याः क्रमागतः । तं तस्मैचिष्ट निर्यान्ती विपक्षैः सह सङ्गतं ।
वर्षे एकोननवते सम्भूयैकाङ्गसैनिकाः । गत्वा सुगन्धामानिन्युः पुनर्हुष्कपुरे स्थितां ।
तामापतन्तीमाकर्ण्य पार्थानुग्राहकामरात् । चैत्रान्ते तन्त्रिणः सर्व्वे निर्ययुः समरोन्मुखाः ।
ते जित्वा नवते वर्षे वैशाखे भिन्नसंहतीन् । एकाङ्गान् व्यूढसङ्घातान्वबन्धुस्तान् पलायितान् ।
निष्पालकविहारान्तस्तैर्बद्धा सा व्यपद्यत । अनित्यपतनोच्छाया विचित्रा भाग्यवृत्तयः ।
अस्मिन्धनजनचौर्य्यनिमित्तं मण्डलोत्तमे । सर्व्वतो दिक्कमुक्तस्थावधानर्थपरम्परा ।
जनकः पालको भूत्वा पङ्गुर्व्वालस्य भूपतेः । सामात्योऽपीडयल्लोकमुत्कोचग्रहतत्परः ।
भूभुजो ग्रामकायस्था इवान्योन्यविपाटनं । दत्ताधिकाधिकोत्कोचा विदधुस्तन्त्रिसेवया ।
यद्राजैः कान्यकुब्जाद्या विलब्धास्तत्र मण्डले । तन्त्रिणां ऊण्डिकादानाद्भूभुजां जीविकाभवत् ।
विष्णुः पुराणाधिष्ठाने मेरुवर्धनमन्त्रिणा । श्रीमेरुवर्धनस्वामिनामा येन व्यधीयत ।
तदात्मजाः क्षणे तस्मिन् गहनद्रोहचाक्रिकाः । चक्रुर्निगूढराज्येच्छाः प्रजायासर्धनार्ज्जनं ।
॥ युग्मं ॥ सार्धं सुगन्धादित्येन गूढं शङ्करवर्धनः । तेषां ज्येष्ठो बद्धसख्यो मुमोष नृपमन्दिरं ।
क्षीणप्रजे क्षणे तस्मिन् घारपात इव क्षते । उद्दीपः स्नाविताशेषशरच्छालिरजृम्भत ।
खार्य्यां सहस्रैक्रयायां दुर्लभे भोजनेऽभवत् । वर्षे त्रिनवते घोरे दुर्भिक्षेण जनक्षयः ।
शवैर्स्थिरप्रविष्टाम्बुसंसेकोच्छूनविग्रहैः । वितस्ता सर्व्वतश्छन्ना दुर्लक्ष्यसलिलाभवत् ।
विश्वतोऽस्थिमये जाते नैरन्ध्र्यात्क्षितिमण्डले । सर्व्वभूतभयादायि श्मशानैक्यमजायत ।
महार्घधान्यसम्भारविक्रयप्राप्तसम्पदः । मन्त्रिणः क्ष्मापतेः प्रापुस्तन्त्रिणश्च धनाढ्यतां ।
आधेयः क्ष्माभुजः सोऽभून्मन्त्री यस्तादृशीः प्रजाः । विक्रीय वाहयन्नासीत्तन्त्रिणां ऊण्डिकाधनं ।
अटव्यां दृष्टिसम्पाते वातवर्षैरुपद्रुतं । वहिः सर्व्वं जनं पश्यन् कश्चित्प्राप्तोष्णमन्दिरः ।
यथा तथा जनं दुःस्थं वीक्ष्य कापुरुषस्थिरं । राजधानीस्थितः पङ्गुः स्वसुखं बह्वमन्यत ।
॥ युग्मं ॥ तुञ्जीनचन्द्रापीडादिप्रजापालप्रियाः प्रजाः । एवं तस्मिन् क्षणे नीताः सङ्क्षयं राजराक्षसैः ।
प्रापुस्थिरमवस्थानं पार्थिवा न तदा क्वचित् । धारासम्पातसम्भूताद्बुद्बुदा इव दुर्दिने ।
पार्थः पितरमुत्पाट्य कदाचित् प्राभवत्स्वयं । कदाचित्सुतमुत्पाट्य तन्त्रिचक्रिकयाप्यभूत् ।
अक्षीणयत्पङ्गुसधूवडवामण्डलं युवा । सुगन्धादित्यबीजाश्वो व्यवायविधिसेवया ।
राज्यावष्टदेव्याः स निर्दयैः सुरतोत्सवैः । खण्डयामास यां दूतीं सायस्यार्यैरगां धरैः ।
भगिनीभगसौभाग्यबद्धराज्याः स्वयं दधुः । यं पङ्गवे मनोभार्ङ्गी मेरुवर्धनसूनवः ।
सुगन्धादित्यभागुक्त्यांत्वापि देवी मृगावती । स्वयं संबुभुजेऽत्यर्थकान्ताकामितकामिनी ।
पर्य्यायेणाभवद्भृत्यः सतयोर्भोगद्वये । दरिद्रयोपितोरेकं भुक्तिपात्रमिवान्वहं ।
पुत्रयोराज्यलाभाय स्पर्द्धयाभ्यां स्वमन्त्रिणे । दत्त्वा निधुवनश्रद्धा धनदानैः सदक्षिणः ।

अथ पार्थं समुत्पाद्य तत्पिता पङ्गुराश्रितः। तन्त्रिभिः सप्तनवते वर्षे पौषेऽभिषेचितः।
माघेऽष्टानवते वर्षे सोऽभिषिच्य शिशुं सुतं। चक्रवर्माभिधं राज्ये चीणपुण्यो व्यपद्यत।
पैतृकं वाञ्छता राज्यं पार्थस्यानुचरा व्यधुः। एकाङ्गैः सह संग्रामं तत्र तन्त्रिपदातयः।
मातुर्व्वप्पटदेव्याः स कञ्चित्कालं शिशुर्नृपः। मातामह्याः चिल्लिकायाः पाल्यस्त्वासीत्समा दश।
बाल्याद्व्यक्तदोःशौर्य्ये तस्मिंस्तत्पालनं तयोः। निर्दोषमासीद्दण्डस्फणिलालनसन्निभं। २९५
जातः पङ्गोर्मृगावत्यां नवमेऽब्देऽथ मन्त्रिभिः। चक्रवर्माणमुत्पाद्य शूरवर्मा नृपः कृतः।
निःस्नेहा मातुलामात्याः प्रययुः स्वार्थतत्पराः। अदत्त्वा तन्त्रिणां देयं तस्योत्पाटनहेतुतां।
अदुर्वृत्तोऽपि स प्राश्वद्विना भूरिधनार्पणं। गुणवानिव वेश्यानां तन्त्रिणां नाभवत्प्रियः।
वर्षे गते तमुत्पाद्य दृष्टोत्पत्तितया नृपं। सक्रुधेदं पुनः पार्थं व्यधुस्तन्त्रिपदातयः।
अभूत्साम्नवती वेश्या साम्नेश्वरविधायिनी। पार्थप्रिया तन्त्रिचक्रसंग्रहे ख्यातचक्रिका। ३००
कालापेची चक्रवर्मा ततोऽप्यैच्छद्धनं बहु। एकादशाब्दस्याषाढे कृतोभूयोऽपि तन्त्रिभिः।
पार्थादीन् यैः समुत्पाद्य भुक्तं चक्रिकया पुरा। तैस्तैः स्थानैश्च ये तेभ्यो जीवनाद्युपलेभिरे।
पिता भ्राता च यैरस्य राज्यादुत्पाटितोऽभवत्। सम्बन्धिभ्योऽपि यैर्द्दुग्धं कन्यां दत्त्वेतरेतरं।
अकरोद्दृष्टदोषाणां तेषामेव स नष्टधीः। मेरुवर्धनपुत्त्राणामधिकारसमर्पणं।
॥ तिलकं ॥ कृतोऽक्षपटलाधीशस्तेन शङ्करवर्धनः। गृहकृत्येऽप्यसत्कृत्योदाशिकः शम्भुवर्धनः। ३०५
पौषे तस्यैव वर्षस्य धनाभावात्स तन्त्रिणां। अदत्तदण्डिकादेयः पलायिष्ट भयाकुलः।
स्थिते मडवराज्यान्तस्तस्मिञ्छङ्करवर्धनः। राज्यार्थी तन्त्रिणां दूतं प्राहिणोच्छम्भुवर्धनं।
आवर्जितैः स निखिलैरधिकोत्कोषचर्चया। वञ्चयित्वाग्रजं राज्ये तैः स्वमेवाभ्यषेचयत्।
तीर्थस्थितः स्वकुलजां तिमिरत्ति भुङ्क्ते मीनी बकस्तिमिमुपेत्य वनान्तवासी।
व्याधीन्निहन्ति तु बकं प्रभवन्ति ते ते पात्राण्युपर्य्युपरि वञ्चनचञ्चुतायाः।
अथ श्रीचक्रवर्माथ निशि श्रीढक्कवासिनः। एकदा डामराग्र्यस्य संग्रामस्याविशद्गृहं। ३१०
ज्ञात्वा कान्तिविशेषेण राजानं स कृताञ्जलिः। प्रणम्य ग्राहयामास संभ्रमान्निजमासनं।
राज्यभ्रंशादिवृत्तान्तमुक्त्वा साहाय्यकार्थिनं। तं विपत्प्रेमतं प्रज्ञो विचिन्त्योवाच डामरः।
तन्त्रिणां वा तृणानां वा राजन् का गणना रणे। त्वत्सेवनार्थं सामर्थ्यं कश्चिन्न मम कर्म्मणि।
प्राप्तोत्कर्षः पुनर्नूनमस्मानेव हनिष्यसि। विस्मरन्त्युपकारं हि कृतकार्य्या महीभुजः।
ऊर्ध्वारोहे य आलम्बहेतुर्भूभृच्छिनत्ति तम्। कुठारिकस्तरुस्कन्धमिवाधोगमनोन्मुखः। ३१५
धीधैर्य्यादिप्रकर्षेण येनोपक्रियते नृपः। प्राप्तोदयः स तेनैव प्रह्वं वेत्त्युपकारिणं।
अस्मिन् स्थिते विपद्भूदिति सञ्चिन्त्य वर्ज्यते। मूढैः परिष्टडैरापत्सेवको मङ्गलेच्छुभिः।
सम्पद्यापत्सहायस्य विस्मृतोपक्रिया नृपाः। मध्ये प्रमादस्खलितमुत्पन्नं यदि कुर्व्वते।
आमयार्तिरिपुत्रासदुरादौ दृष्टवैकृतान्। सम्पोदया ह्रीभयेन प्रापा प्रभ्रन्नुयायिनः।

सा राजधान्याः साम्राज्यपरिभ्रष्टा विनिर्ययौ । च्युताधिकारा हारस्य पतितैर्बाष्पबिन्दुभिः ।
शरणं प्रत्यभाद्भृत्यो योयस्तस्याः क्रमागतः । तं तर्भैच्छिष्ट निर्यान्ती विपक्षैः सह सङ्गतं ।
वर्षे एकोननवते सम्भूयैकाङ्गसैनिकाः । गत्वा सुगन्धामानिन्युः पुनर्हुष्कपुरे स्थितां ।
तामापतन्तीमाकर्ण्य पार्थानुग्राहकामरात् । चैत्रान्ते तन्त्रिणः सर्व्वे निर्ययुः समरोन्मुखाः ।
ते जित्वा नवते वर्षे वैशाखे भिन्नसंहतीन् । एकाङ्गान् व्यूढसङ्ग्रामान्वबन्धुस्तान् पलायितान् ।
निष्पालकविहारान्तस्तैर्ब्बद्धा सा व्यपद्यत । अनित्यपतनोच्छ्राया विचित्रा भाग्यवृत्तयः ।
अस्मिन्धनजनचैर्य्यनिमित्तं मण्डलोत्तमे । सर्व्वतो दिक्कमुत्तस्थावथानर्थपरम्परा ।
जनकः पालको भूत्वा पङ्गुर्ब्बालस्य भूपतेः । धामात्योऽपीडयल्लोकमुत्कोचग्रहतत्परः ।
भूभुजो ग्रामकायस्था इवान्योन्यविपाटनं । दत्ताधिकाधिकोत्कोचा विदधुस्तन्त्रिसेवया ।
यद्राजैः कान्यकुब्जाद्या विलब्धास्तत्र मण्डले । तन्त्रिणां ऊण्डिकादानाद्भूभुजां जीविकाभवत् ।
विष्णुः पुराणाधिष्ठाने मेरुवर्धनमन्त्रिणा । श्रीमेरुवर्धनस्वामिनामा येन व्यधीयत ।
तदात्मजाः क्षणे तस्मिन् गहनद्रोहचक्रिकाः । चक्रुर्निगूढराज्येच्छाः प्रजायासैधनार्ज्जनं ।
॥ युग्मं ॥ सार्धं सुगन्धादित्येन गूढं शङ्करवर्धनः । तेषां ज्येष्ठो बद्धसख्यो मुमोष नृपमन्दिरं ।
क्षीणप्रजे क्षणे तस्मिन् क्षारपात इव क्षते । उद्दीपः श्लाविताशेषशरच्छालिरजृम्भत ।
खार्य्यां सहस्त्रैर्यायां दुर्लभे भोजनेऽभवत् । वर्षे त्रिनवते घोरे दुर्भिक्षेण जनक्षयः ।
शवैर्स्त्रिग्मविष्टाम्बुसंसेकोच्छूनविग्रहैः । वितस्ता सर्व्वतश्छन्ना दुर्लक्ष्यसलिलाभवत् ।
विश्वतोऽस्थिमये जाते नैरिच्छ्यात्क्षितिमण्डले । सर्व्वभूतभयादायि श्मशानैक्यमजायत ।
महार्घधान्यसम्भारविक्रयप्राप्तसम्पदः । मन्त्रिणः क्ष्मापतेः प्रापुस्तन्त्रिणश्च धनाढ्यतां ।
आधेयः क्ष्माभुजः सोऽभून्मन्त्री यस्ताद्दृशीः प्रजाः । विक्रीय वाहयन्नासीत्तन्त्रिणां ऊण्डिकाधनं ।
अटव्यां दृष्टिसम्पाते वातवैर्धरुपद्रुतं । वह्निः सर्व्वं जनं पश्यन् कश्चित्प्राप्तोष्णमन्दिरः ।
यथा तथा जनं दुःस्थं वीक्ष्य कापुरुषस्थिरं । राजधानीस्थितः पङ्गुः स्वसुखं बह्वमन्यत ।
॥ युग्मं ॥ तुञ्जीनचन्द्रापीडादिप्रजापालप्रियाः प्रजाः । एवं तस्मिन् क्षणे नीताः सङ्क्षयं राजराक्षसैः ।
प्रापुश्चिरमवस्थानं पार्थिवा न तदा क्वचित् । धारासम्पातसम्भूताद्बुद्बुदा इव दुर्दिने ।
पार्थः पितरमुत्पाट्य कदाचित् प्राभवत्स्वयं । कदाचित्सुतमुत्पाट्य तन्त्रिचक्रिकयाप्यभूत् ।
अमीणयत्पङ्गुमधूवडवामण्डलं युवा । सुगन्धादित्यवीजाश्वो व्यवायविधिसेवया ।
राज्ञावप्यटदेय्याः स निर्दयैः सुरतोत्सवैः । खण्डयामास कां दूतीं माध्यस्थ्यैरणां धनैः ।
भगिनीभगसौभाग्यबद्धराज्याः स्वयं दधुः । यं पङ्गवे मनोज्ञाङ्गीं मेरुवर्धनसूनवः ।
सुगन्धादित्यभोक्तुर्ब्यास्तापि देवी मृगावती । स्वयं संबुभुजेऽत्यर्थकान्ताकामितकामिनी ।
पर्य्यायेणाभवद्भृत्यः क्षतयोर्भोगवृद्धये । दरिद्रयोर्वितीर्णैकं भुक्तिपात्रमिवाम्बहं ।
पुत्रयोराज्यलाभाय स्पर्द्धयाभ्यां स्वमन्त्रिणे । दत्ता निधुवनश्रद्धा धनदानैः सदक्षिणा ।

अथ पार्थं समुत्पाद्य तत्पिता पङ्गुराश्रितः। तन्त्रिभिः सप्तनवते वर्षे पौषेऽभिषेचितः।
माघेऽष्टानवते वर्षे सोऽभिषिच्य शिशुं सुतं। चक्रवर्माभिधं राज्ये चीणपुण्यो व्यपद्यत।
पैतृकं वाञ्छतो राज्यं पार्थस्यानुचरा व्यधुः। एकाङ्गैः सह संग्रामं तत्र तन्त्रिपदातयः।
मातुर्बप्पटदेव्याः स कञ्चित्कालं शिशुर्नृपः। मातामह्याः चिन्निकायाः पाल्यस्तस्थौ समा दश।
वाल्यादव्यक्तदोःशौर्ये तस्मिंस्तत्पालनं तयोः। निर्दोषमासीदण्डस्थफणिलालनसन्निभं। २९५
जातः पञ्चाशीतिगावत्यां नवमेऽब्देऽथ मन्त्रिभिः। चक्रवर्माणमुत्पाद्य शूरवर्मा नृपः कृतः।
निःस्नेहा मातुलामात्याः प्रययुः स्वार्थतत्पराः। अदत्वा तन्त्रिणां देयं तस्योत्पाटनहेतुतां।
अदुर्वृत्तोऽपि स स्वार्थहीना भूरिधनार्पणं। गुणवानिव वेश्यानां तन्त्रिणां नाभवत्प्रियः।
वर्षे गते तमुत्पाद्य दुष्टोत्पत्तितया नृपं। चक्रुर्यदं पुनः पार्थं व्यधुस्तन्त्रिपदातयः।
अभूत्साम्बवती वेश्या साम्बेश्वरविधायिनी। पार्थप्रिया तन्त्रिचक्रसंपद्दे ख्यातचक्रिका। ३००
कालापेची चक्रवर्मा ततोऽथैच्छद्धनं बहु। एकादशाब्दस्याषाढे कृतोऽभ्रयोऽपि तन्त्रिभिः।
पार्थादीन् ये समुत्पाद्य भुक्तं चक्रिकया पुरा। तैस्तैः स्थानैश्च ये तेभ्यो जीवनाद्युपलेभिरे।
पिता भ्राता च यैरस्य राज्यादुत्पाटितोऽभवत्। संबन्धिभ्योऽपि यैर्दुग्धं कन्या दत्तेतरेतरं।
अकरोदृष्टदोषाणां तेषामेव स नष्टधीः। मेरुवर्धनपुत्राणामधिकारसमर्पणं।
॥ तिलकं ॥ कृतोऽलपटलाधोशस्तेन शङ्करवर्धनः। गृहकृत्येऽप्यसत्कृत्योदाम्भिकः शम्भुवर्धनः। ३०५
पौषे तस्यैव वर्षस्य धनाभावात्स तन्त्रिणां। अदत्तकण्डिकादेयः पलायिष्ट भयाकुलः।
स्थिते मडवराज्यान्तस्तस्मिञ्शङ्करवर्धनं। राज्यार्थी तन्त्रिणां दूतं प्राहिणोच्छम्भुवर्धनं।
आवर्जितैः स निखिलैरधिकोत्कोचचर्चया। वञ्चयित्वाग्रजं राज्ये तैः स्वमेवाभ्यषेचयत्।
तीर्थस्थितः स्वकुलजां तिमिरत्ति भुङ्क्ते मीनो बकस्तिमिमुपेत्य वनान्तवासी।
व्याधानिहन्ति तु वकं प्रभवन्ति ते ते पात्राण्युपर्युपरि वञ्चनचञ्चुतायाः।
अष्टशीश्चक्रवर्माथ निशि श्रीढकवासिनः। एकदा डामरास्यस्य संग्रामस्याविशद्गृहं। ३१०
ज्ञात्वा कान्तिविशेषेण राजानं स कृताञ्जलिः। प्रणम्य ग्राहयामास संभ्रमान्निजमासनं।
राज्यभ्रंशादिवृत्तान्तमुक्त्वा साहायकार्थिनं। तं विपत्प्रेमलं प्रक्षो विचिन्त्योवाच डामरः।
तन्त्रिणां वा तृणानां वा राजन् का गणना रणे। त्वत्सेवनार्थं सामर्थ्यं कञ्चिन्न मम कर्मणि।
प्राप्तोत्साहः पुनर्नूनमस्मानेव हनिष्यसि। विस्मरन्त्युपकारं हि कृतकार्या महीभुजः।
ऊर्ध्वारोहे य आलम्बहेतुर्भूम्यच्छिन्नन्ति तम्। कुठारिकतरस्कन्धमिवाधोगमनोन्मुखं। ३१५
धीधैर्यादिप्रकर्षेण येनोपक्रियते नृपः। प्राप्तोदयः स तेनैव शङ्कां वेत्त्युपकारिणं।
अस्मिन् स्थिते विपद्भूदिति सञ्चिन्त्य वर्ज्यते। मूढैः परिहृढैरापत्स्वेवको मन्त्रलेशुभिः।
सम्पद्यापत्सहायस्य विस्तृतोपक्रिया नृपाः। मध्ये प्रमादस्खलितमुत्पन्नं हृदि कुर्वते।
आमयार्तिरिपुत्रासचुदादौ दृष्टवैकृतान्। वर्षोदया हीभयेन स्मापा प्रत्यनुयायिनः।

सा राजधान्याः साम्राज्यपरिभ्रष्टा विनिर्ययौ । च्युताधिकारा हारस्य पतितैर्बाष्पबिन्दुभिः ।
शरणं प्रत्यभाङ्क्षीत्यो योयस्तस्याः क्रमागतः । तं तमैचिष्ट निर्यान्ती विपक्षे सह सङ्गतं ।
वर्षे एकोनवते सम्भूयैकाङ्गसैनिकाः । गत्वा सुगन्धामानिन्युः पुनर्हुष्कपुरे स्थितां ।
तामापतन्तीमाकर्ण्य पार्थानुग्राहकामरात् । चैत्रान्ते तन्त्रिणः सर्व्वे निर्ययुः समरोन्मुखाः ।
ते जित्वा नवते वर्षे वैशाखे भिन्नसंहतीन् । एकाङ्गान् व्यूढसङ्घातानबन्धुस्तान् पलायितान् ।
निष्पालकविहारान्तस्तैर्बद्ध्वा सा व्यपद्यत । अनित्यपतनोच्छ्राया विचित्रा भाग्यवृत्तयः ।
अस्मिन्धनजनचौर्य्यनिमित्तं मण्डलोत्तमे । सर्व्वतो दिक्षमुत्तस्थावनर्थपरम्परा ।
जनकः पालको भूत्वा पङ्गुर्व्वालस्य भूपतेः । सामात्योऽपीडयल्लोकमुत्कोचग्रहतत्परः ।
भूभुजो ग्रामकायस्था इवान्योन्यविपाटनं । दत्ताधिकाधिकोत्कोचा विदधुस्तन्त्रिसेवया ।
यद्राजैः कान्यकुब्जाद्या विलब्धास्तत्र मण्डले । तन्त्रिणां ऊण्डिकादानात्भूभुजां जीविकाभवत् ।
विष्णुः पुराणाधिष्ठाने मेरुवर्धनमन्त्रिणा । श्रीमेरुवर्धनस्वामिनामा येन व्यधीयत ।
तदात्मजाः क्षणे तस्मिन् गहनद्रोहचाक्रिकाः । चक्रुर्निगूढराज्येच्छाः प्रजायोर्धनार्ज्जनं ।
॥ युग्मं ॥ सार्धं सुगन्धादित्येन गूढं शङ्करवर्धनः । तेषां ज्येष्ठो बद्धसख्यो मुमोष नृपमन्दिरं ।
क्षीणप्रजे क्षणे तस्मिन् घारपात इव क्षते । उद्दीपः स्रावितासेषपशस्यशालिरजृम्भत ।
खार्य्यां सहस्रक्रेयायां दुर्लभे भोजनेऽभवत् । वर्षे त्रिनवते घोरे दुर्भिक्षेण जनक्षयः ।
शवैर्यत्र प्रविष्टाम्बुसंसेकोच्छूनविग्रहैः । वितस्ता सर्व्वतश्छन्ना दुर्लक्ष्यसलिलाभवत् ।
विस्तृतोऽस्थिमये जाते नैरन्ध्यात्क्षितिमण्डले । सर्व्वभूतभयादायि श्मशानैक्यमजायत ।
महार्घधान्यसम्भारविक्रयप्राप्तसम्पदः । मन्त्रिणः क्ष्मापतेः प्रापुस्तन्त्रिणश्च धनाढ्यतां ।
आधेयः क्ष्माभुजः सोऽभून्मन्त्री यस्मादृशीः प्रजाः । विक्रीय वाहयन्नासीत्तन्त्रिणां ऊण्डिकाधनं ।
अटव्यां दृष्टिसम्पाते वासवर्धरुपद्रुतं । बहिः सर्व्वं जनं पश्यन् कश्चित्प्राप्तोऽपणमन्दिरः ।
यथा यथा जनं दुःस्थं वीक्ष्य कापुरुषस्थिरं । राजधानीस्थितः पङ्गुः स्वसुखं बहुमन्यत ।
॥ युग्मं ॥ सुखीनचन्द्रापीडादिप्रजापालप्रियाः प्रजाः । एवं तस्मिन् क्षणे नीताः सङ्क्षयं राजराक्षसैः ।
प्रापुश्चिरमवस्थानं पार्थिवा न सदा क्वचित् । धारासम्पातसम्भूता बुद्बुदा इव दुर्दिने ।
पार्थः पितरमुत्पाद्य कदाचित् प्राभवत्स्वयं । कदाचित्सुतमुत्पाद्य तस्मिन्पक्रिकयाप्यभूत् ।
अमोघपत्पङ्गुबधूवडशामण्डलं युवा । सुगन्धादित्यवीजाश्वा व्यवायविधिसेवया ।
राजवायपट्टदेव्या स निर्दयैः सुरतोत्सवैः । खण्डयामास यां दूतीं मात्यन्वाधैरयां घनैः ।
भगिनीभगधेभाग्यसहराज्ञाः स्वयं दधुः । यं पङ्गवे मनोभाग्रीं मेरुवर्धनसूनवः ।
सुगन्धादित्यभोगुच्चाप्यापि देवी मृगावती । स्वयं संबुभुजेऽत्यर्थवाम्याकामितकामिनी ।
पर्य्यायेणाभद्भृत्य सत्पयोर्भोगहेतवे । दरिद्रयोर्वितारिकं भुक्तिपात्रमिवान्वहं ।
पुत्रयोराज्यलाभाय स्पृहयाल्वां सममन्त्रिपे । दत्वा निधुवसग्रहा धनदानैः ददर्शिरः ।

अथ पार्थं समुत्पाट्य तत्पिता पङ्गुराश्रितः। तन्त्रिभिः सप्तनवते वर्षे पौषेऽभिषेचितः।
माघेऽष्टानवते वर्षे सोऽभिषिच्य शिशुं सुतं। चक्रवर्माभिधं राज्ये चीणपुण्यो व्यपद्यत।
पैतृकं वाञ्छतो राज्यं पार्थस्यानुचरा ययुः। एकाङ्गैः सह संग्रामं तत्र तन्त्रिपदातयः।
मातुर्व्वप्पटदेव्याः स कञ्चित्कालं शिशुर्नृपः। मातामह्याः चिल्लिकायाः पाल्यस्त्वासीत्समा दश।
वाल्यादव्यक्तदौःशील्ये तस्मिंस्तत्पालनं तयोः। निर्दोषमासीदण्डस्यफणिलालनसन्निभं। २९५
जातः पङ्क्तेर्म्मेगावत्यां नवमेऽब्देऽथ मन्त्रिभिः। चक्रवर्माणमुत्पाट्य शूरवर्मा नृपः कृतः।
निःस्नेहा मातुलामात्याः ययुः स्वार्थतत्पराः। अदत्वा तन्त्रिणां देयं तस्योत्पाटनहेतुतां।
अदुर्वृत्तोऽपि स द्वाभ्र्द्दिना भूरिधनार्पणं। गुणवानिव वेश्यानां तन्त्रिणां नाभवत्प्रियः।
वर्षे गते तमुत्पाट्य दृष्टोत्पत्तितया नृपं। चक्रुर्थेदं पुनः पार्थं ययुस्तन्त्रिपदातयः।
अभूत्साम्बवती वेश्या सान्त्वेश्वरविधायिनी। पार्थप्रिया तन्त्रिचक्रसंग्रहे ज्ञातचक्रिका। ३००
कालापेक्षी चक्रवर्मा ततोऽर्थैच्छद्धनं बहु। एकादशाब्दस्याषाढे कृतोभूयोऽपि तन्त्रिभिः।
पार्थादीन् यैः समुत्पाट्य भुक्तं चक्रिकया पुरा। तैस्तैः स्थानैश्च ये तेभ्यो जीवनाद्युपलेभिरे।
पिता भ्राता च यैरस्य राज्यादुत्पाटितोऽभवत्। सम्बन्धिभ्योऽपि यैर्द्दुग्धं कन्यां दत्वेतरेतरं।
अकरोद्दृष्टदोषाणां तेषामेव स नष्टधी.। मेरुवर्धनपुत्राणामधिकारसमर्पणं।
॥ तिलकं ॥ कृतोऽवपटलाधीशस्तेन शङ्करवर्धनः। गृहकृत्येऽप्यसत्कृत्योदाम्भिकः शम्भुवर्धनः। ३०५
पौषे तस्यैव वर्षस्य धनाभावाच्च तन्त्रिणां। अदत्तडङ्कडिकादेयः पलायिष्ट भयाकुलः।
स्थिते मडवराज्यान्तस्तस्मिंश्चक्ररवर्धन। राज्यार्थी तन्त्रिणां दूतं प्राहिणोच्छम्भुवर्धनं।
आवर्जितैः स निखिलैरधिकोत्कोचचर्चया। वञ्चयित्वाग्रजं राज्ये तैः स्वमेवाभ्यषेचयत्।
तीर्थस्थित. स्वकुलजां तिमिरत्ति भुङ्क्ते मौनी वकस्तिमिमुपेत्य वनान्तवासी।
व्याधानिघ्नन्ति तु वकं प्रभवन्ति ते ते पात्राण्युपर्युपरि वञ्चनचञ्चुतायाः।
भ्रष्टश्रीश्चक्रवर्माथ निशि श्रीढक्कवासिन। एकदा डामरास्यस्य संग्रामस्याविशद्गृहं। ३१०
ज्ञात्वा कान्तिविशेषेण राजानं स कृताञ्जलिः। प्रणम्य ग्राहयामास संभ्रमात्तिजमासनं।
राज्यभ्रंशादिवृत्तान्तमुक्त्वा साहाय्यकार्थिनं। तं विपत्पेशलं प्रह्वो विचिन्त्योवाच डामरः।
तन्त्रिणां वा तृणानां वा राजन् का गणना रणे। त्वत्सेवनार्थं सामर्थ्यं कश्चिन्न मम कर्मणि
प्राप्तोत्साहः पुनर्नूनमस्मानेव हनिष्यसि। विस्मरन्त्युपकारं हि कृतकार्या महीभुजः।
ऊर्ध्वारोहे य आलम्बहेतुर्भूस्त्वच्छिन्नत्ति तम्। कुठारिकास्तरस्कन्धमिवाधोगमनोन्मुख'। ३१५
धीधैर्यादिप्रकर्षेण येनोपक्रियते नृप। प्राप्तोदयः स तेनैव मह्यं वेत्स्युपकारिणं।
अस्मिन् स्थिते विपद्भूदिति संचिन्त्य वध्यते। मूढैः परिदृढैरापत्सेवको मन्त्रचेष्टुभिः।
सम्पद्यापत्सहायस्य विस्मृतोपक्रिया नृपाः। मध्ये प्रमादस्खलितमुत्पन्नं यदि कुर्वते।
आमयार्तिरिपुत्रासचुदादौ दृष्टवैकृतान्। सम्भोदया ह्रीभयेन स्वापा प्रम्यनुयायिनः।

सा राजधान्याः साम्राज्यपरिभ्रष्टा विनिर्ययौ । च्युताधिकारा हारस्य पतितैर्बाष्पविन्दुभिः ।
शरणं प्रत्यभाङ्क्षीत्ते योयस्तस्याः क्रमागतः । तं तमैचिष्ट निर्यान्ती विपदो, सह सङ्गतं ।
वर्षे एकोनवते सम्भूयैकाङ्गसैनिकाः । गत्वा सुगन्धामानिन्युः पुनर्ज्येष्ठपुरे स्थितां ।
तामापतन्तीमाकर्ण्य पार्थानुग्राहकामरात् । चैत्रान्ते तन्त्रिणः सर्व्वे निर्ययुः समरोन्मुखाः ।
ते जिलानवते वर्षे वैशाखे भिन्नसंहतीन् । एकाङ्गान् व्यूढसङ्घातान्वबन्धुस्तान् पलायितान् ।
निष्पालकविहारान्तस्तैर्ब्बद्धा सा व्यपद्यत । अनित्यपतनोच्छ्राया विचित्रा भाग्यवृत्तयः ।
अस्मिन्धनजनचौर्य्यनिमित्तं मण्डलोत्तमे । सर्व्वतो दिक्षमुत्तस्थावथानर्थपरम्परा ।
जनकः पालको भूत्वा पङ्गुर्व्वालस्य भूपतेः । सामात्योऽपीडयल्लोकमुत्कोचग्रहतत्परः ।
भूभुजो ग्रामकायस्था इवान्योन्यविपाटनं । दत्ताधिकाधिकोत्कोचा विदधुस्तन्त्रिसेवया ।
यद्राजैः कान्यकुब्जाद्या विलब्धास्तत्र मण्डले । तन्त्रिणां ऊण्डिकादानाद्भूभुजां जीविकाभवत् ।
विष्णुः पुराणाधिष्ठाने मेरुवर्धनमन्त्रिणा । श्रीमेरुवर्धनस्वामिनामा येन व्यधीयत ।
तदात्मजाः क्षणे तस्मिन् गहनद्रोहचाक्रिकाः । चक्रुर्निगूढराज्येच्छाः प्रजायासैर्धनार्ज्जनं ।
॥ युग्मं ॥ सार्धं सुगन्धादित्येन गूढं शङ्करवर्धनः । तेषां ज्येष्ठो वद्धसख्यो मुमोष नृपमन्दिरं ।
क्षीणप्रजे क्षणे तस्मिन् धारपात इव घ्नते । उद्दीपः श्वाविताग्रेपशरच्छालिरजृम्भत ।
खार्य्या सहस्रक्रयायां दुर्लभे भोजनेऽभवत् । वर्षे त्रिनवते घोरे दुर्भिक्षेण जनक्षयः ।
शवैर्विसर्विशाम्बुसंघेकोच्छूनविग्रहे । वितस्ता सर्व्वतश्छन्ना दुर्लक्ष्यसलिलाभवत् ।
विष्टतोऽस्थिमये जाते नैविद्यात्क्षितिमण्डले । सर्व्वभूतभयादायि श्मशानैक्यमजायत ।
महार्घधान्यसम्भारविक्रयप्राप्तसम्पदः । मन्त्रिणः क्ष्मापते प्रापुस्तन्त्रिणश्च धनाढ्यतां ।
आधेयः क्ष्माभुज सोऽभूमन्त्री यस्याद्दुःखीः प्रजाः । विक्रीय वाहयन्नासीत्तन्त्रिणां ऊण्डिकाधनं ।
अटव्यां दृष्टिसम्पाते वातवर्षैरुपद्रुतं । वहिः सर्व्वं जनं पश्यन् कश्चित्प्राप्तोष्णमन्दिरः ।
यथा तथा जनं दुःस्थं वीक्ष्य कापुरुषश्चिरं । राजधानीस्थितः पङ्गुः स्वसुखं बहुमन्यत ।
॥ युग्मं ॥ तुच्छोमचन्द्रापीडादिप्रजापालप्रियाः प्रजाः । एवं तस्मिन् क्षणे नीताः संक्षयं राजराक्षसैः ।
प्रापुश्चिरमवस्थानं पार्थिवा न तदा कश्चित् । धारासम्पातसम्भूताबुद्बुदा इव दुर्दिने ।
पार्थः पितरमुत्पाद्य कदाचित् प्राभवत्स्वयं । कदाचित्सुतमुत्पाद्य तन्त्रिचक्रिकयाप्यभूत् ।
अभीष्णपत्यङ्गधूवत्सामण्डलं युवा । सुगन्धादित्यवीशाखो व्यवायविधिसेवया ।
राज्यावष्टब्धया स निर्दयो सुरतोत्सवे । खण्डयामास कां दूतीं मायस्याधैरगां धरैः ।
भगिनीभगधौभाग्यसहराज्याः स्वयं दधुः । यं पङ्गवे मभोक्ताङ्गीं मेरुवर्धनसूनवः ।
सुगन्धादित्यभाग्यस्याशापि देवी मृगावती । स्वयं संबुभुजेऽत्यर्थकान्ताकामितकामिनी ।
पर्य्यायेणाभजन्नृत्य सतयोर्भोगहस्तये । दरिद्रयोः पितोरेकं भुक्तिपात्रमिवास्वहं ।
पुत्रयोराज्यलाभाय स्पृहयाभ्यां स्वमन्विषे । दत्ता निधुवनग्रहा धनदाने सदापि ।

तर्ज्जयन् कृतझङ्कारांलुम्बकांलुण्ठितापणान् । शिरोऽचिसंज्ञया चलवालस्थकृतसान्त्वनः । ३८०
भेरीरवैः श्रुतिं छिन्दन् पैराशोर्षोपरोधिभिः । संग्रामजयशोभाङ्कश्चक्रवर्मा विशत्पुरं ।
॥ कुलकं ॥ तस्मिन् सिंहासनं प्राज्यमाक्रम्यातिशयोर्जिते । बद्धा कुतश्चिदानिन्ये भूभटः शम्भुवर्धनं ।
राज्ञः पुरस्तात्तं शस्त्रपातभीमीलितेक्षणं । भक्तिं प्रदर्शयन् पापश्चण्डाल इव सोऽवधीत् ।
उज्झतां धर्ममर्य्यादां भृत्यानां जनकोपमान् । हन्तुं नरेन्द्रान्द्रोहेण प्रारब्धः शम्भुवर्धनः ।
प्राप्य निष्कण्टकं राज्यं चक्रवर्मनृपः क्रमात् । अजायत धृतोत्सेको नृशंसविषमक्रियः । ३८५
स्वविक्रमकथास्तोत्रसंमन्थप्रियताहृतः । सोऽभवद्दिटवन्द्यादिचाटुकारविधेयधीः ।
आत्मानं देवतमिव स्तुतिमोहितचेतसः । जानतः प्राभवंस्तस्य विवेकविगुणाः क्रियाः ।
तस्मिन् प्रसङ्गे रंगाख्यः सख्यातो डोम्बगायनः । वैदेशिकोऽभवद्राज्ञा वितीर्णावसरोऽवहिः ।
प्राप्तान् सचिवसामन्तान्विन्यस्यन्तो यथाक्रमं । प्रतीहारानुपस्थाप्यमनयन्त विविक्ततां ।
विबभौ धवलोष्णीषा सभा दीपप्रभोज्ज्वला । शेषशय्येव मणिभिः कृतालोका फणोद्भवैः । ३९०
कृतावरोधधम्मिल्लमालान्दोलनकेलिभिः । प्रदोषपवनैश्चक्रे शिशिरैर्घ्राणतर्पणं ।
जातगीतदिदृक्षाणां गवाक्षावलयो बभुः । आसवामोदिभिर्व्वक्त्रैरवरोधमृगीदृशां ।
हारकङ्कणकेयूरपारिहार्यादिशोभिना । स्वच्छन्देनानुयातोऽथ प्राविशत डोम्बगायनः ।
हंसीनागलताचास्य सुते ललितलोचने । चक्रतुः कौतुकोत्क्षीवां सभाञ्चित्रार्पितामिव ।
तयोर्व्विलासवलितैश्चलितापाङ्गविभ्रमैः । द्वितीयपुष्पप्रकरोव्यकीर्य्यत सभान्तरे । ३९५
गायनैर्जयजीवेति कृतकोलाहलैरभूत् । सदः सशब्दं कुर्व्वद्भिस्तत्तन्नृपगुणग्रहं ।
भुक्तोत्तरोचितोदश्चत्पञ्चमस्थानचारिणः । वंशैरागविशेषस्य दत्ते स्थाने ततः शनैः ।
अविक्रियशिरःकम्पधूर्नेत्रभ्रमशोभितः । अभिन्नद्व गायन्त्यो गीतध्वनिरजृम्भत ।
अथ ताम्बूलरोमन्थत्यागनिश्चलमूर्त्तिना । जातं राजकुरङ्गेण प्रमोदासन्ददृष्टिना ।
गायन्त्यौ भावमालम्ब्य तस्य स्निग्धमगायतां । अधिकोद्रेचिताभिख्यं विलासस्मितविभ्रमैः । ४००
राज्ञस्तयोश्च संसक्तचित्तयोरितरेतरं । दृग्व्यापारैः स्वसंवेद्यैः संलाप इव पप्रथे ।
नृपं हारितचित्तन्तं विज्ञायैकः प्रियो विटः । ततः प्रसङ्गे प्रोवाच प्रीतिवृद्धिकरं वचः ।
देव गीतमिदं यातं संप्रार्थिते मनोरमे । कर्पूरपारीपतितं मैरेयमिव हारितं ।
गायन्त्योर्भार्ज्जितामितां रागाद्दत्तचतुष्किकां । अनयोः प्रतिमाव्याजाचुम्बतीव निशाकरः ।
करन्यस्तकपोलान्तमुद्रायन्त्याविमे ध्रुवं । कटाक्षैः कुरुते व्योम्नि वैमानिकविमोहनं । ४०५
जानन्त्या स्वाश्रयां चर्चामनयोरेकयानयोः । असूयास्मितगर्भोऽयं कटाक्षः पश्य पातितः ।
गायन्त्येकानतमुखी कर्षव्यालोलकुण्डला । विपरीतरतोद्रेकश्रान्तारब्धेव शोभते ।
सफलं तस्य तारुण्यमीदृश्यो निर्ज्जने स्त्रियः । डोम्बुक्यादिरहे यस्य गायन्त्येवंविधैः स्वरैः ।
उपपत्तिपरित्यक्तशास्त्रानुष्ठानमोहितैः । एकसार्थप्रयातेभ्यः कथमेको विवर्ज्यते ।

राज्ञः सतोऽपि नाश्वासो यस्येभस्येव कर्णयोः । अविशृङ्खलप्रकृतयो ध्वनन्ति मधुपा इव। ११०
दिवसे सन्निधानेन पिशुनप्रेरणा प्रभो. । ईर्ष्यालुना स्वैरिणीव रचितुं यदि पार्य्यते।
राजन् राजन्युपाध्यायो देवी यच्छिचयेदृह. । तत्र प्रजागरः कर्तुमसर्व्वज्ञैर्न शक्यते।
कथञ्चिदङ्कि हृदये कुशलैर्व्विनिवेशिता । शिचा गौरखरेणेव राज्ञा विस्मार्य्यते निशि।
न के लोभं समुत्पाद्य जिह्वया स्निग्धदीर्घया। पिपीलिका इव ग्रस्ता: क्षमापालैः शल्यकैरिव।
जानन्ति हन्तुं हन्तव्यमासन्नं न तु दूरगं। एको वकः परं सत्यं द्रोहवृत्तिर्महीपतिः। ११५
न नाम कण्टकाकीर्णः कौटिल्यं सव्यतां नयेत्। कालापेचो चितिपतिः शरीरमिव जार्य्यकः
नमन्नपि हरिर्हन्यादाश्लिष्यन्नपि पन्नगः। विहसन्नपि वेताल. स्तुवन्नपि महीपतिः।
अद्रोहवृत्त्या तस्मात्त्वं द्रच्यस्यस्मान् सदा यदि। ससैन्यस्ते तदेषोऽहं प्रातरेव पुरःसरः।
तदाकर्ण्याब्रवीद्राजा लज्जास्मितसिताधरः। स्वात्मेव यूयं संरच्या मम पूर्व्वोपकारिणः।
ततो निचिप्य चरणं रक्ताक्ते मेषचर्म्मणि। कोशं चक्रतुरन्योन्यं सखड्गौ नृपडामरौ। १२
अथ सन्नद्धितासंख्यचण्डडामरमण्डलः। चक्रवर्म्माकरोद्यात्रां प्रत्यूषे नगरोन्मुखः।
तस्मिन् चणे पुरस्कृत्य योद्धुं शङ्करवर्धनं। विनिर्ययुः सिताष्टम्यां चैत्रे तन्त्रिपदातयः।
कालानुवृत्तिप्रच्छन्नं तेषां सम्भावनोज्झितं। स तत्वरे पुरस्कर्तुं चक्रवर्म्मा स्वविक्रमं।
अथ प्रवृत्ते संग्रामे घोरे पद्मपुराद्बहिः। जघान प्रेरितहय. पूर्व्वं शङ्करवर्धनं।
हते सेनाधिपे तत्र शतधा तन्त्रिवाहिनी। प्रययौ पवनाघातप्रेरिता नौरिवार्णवे। १२५
पृष्ठानुसारेणोद्युक्तो नृपस्तेषामपाहरत्। गतिं तुरगवेगेन शिरःश्रेणिं तथासिना।
भ्रमतः समरे वभुर्वीरपट्टाञ्चलच्छटाः। चक्रवर्म्ममृगेन्द्रस्य सटापाटलविभ्रमं।
किमन्यत्पञ्चपाश्वासन् सहस्राणि रणाङ्गने। पतितानि चणादेव हतानां तत्र तन्त्रिणां।
तन्त्रिणो रणसंरम्भपरिश्रान्ताः चमातले। खड्गपचहतच्छाये शायिताश्चक्रवर्म्मणा।
विशृङ्खलवंश्यैर्गुणिभिर्निहतैः संश्रितैः समं। अभूत्सुर्यदीरमध्यां शूरः शङ्करवर्धनः। १३०
उदयं संहता एव संहता एव च चयं। प्रयान्तः स्पृहणीयत्वं तन्त्रिणः कस्य नागमन्।
माननीयानधृष्यांश्च महावंश्यान् महीपतीन्। अहीनिव खिलीकृत्य भिचयन्तः चणे चणे।
अनयन् क्रीडया शोडां मापन्तो जीविकाकृते। भागावृत्तिपिण्डकाः क्रूरा इव ये गर्द्धवृत्तयः।
ते त स्मिरः चणादृग्धा गूढवैरविषाग्निना। विमानना विविशेन चक्रवर्म्ममहाहिना।
॥ तिलकं ॥ अथ द्वितीये दिवसे भग्नानामपि तन्त्रिणां। वीरसङ्घट्टनं यावदकरोच्छम्भुवर्धनः। १३५
तावन्मिलितसामन्तसचिवैकाङ्गनालित.। सैन्यैर्नानापथायातैर्नदद्भिर्वाद्यदिक्पथः।
सरगमध्ये चतारणां मृत्युतेवाप्रशासिना। वल्गाकिनोदहसम्बं शिरस्वं वामपाणिना।
घर्म्मेरेनरहसापवेष्टनेोत्तामसरपूष। खड्गस्य विम्बितार्कस्य भाभिर्द्योतितकुण्डलः।
कवचोत्क्षेपसंरम्भकण्ठायासेन ताम्यता। वक्रभ्रुकुटिसम्भेन वदनेन भयावहः।

तर्ज्जयन् छतडङ्कारांशुभ्रकांलुण्ठितापणान्। शिरोऽविसंज्ञया चलवास्ययकृतशान्तनः।
भेरीरवै: श्रुतिं छिन्दन् पौराणीर्व्विवरोधिभिः। संग्रामजयशोभाढ्यश्चक्रतमांविशत्पुरं।
॥ कुलकं॥ तस्मिन् सिंहासनं प्राज्यमाक्रम्यातिजयोर्जिते। बद्धा कुतश्चिदानिन्ये भूभटः शम्भुवर्धनं।
राज्ञः पुरस्तात्तं शस्त्रपातभीमीलितेचणं। भक्तिं प्रदर्शयन् पापश्चण्डाल इव सोऽवधीत्।
उज्झतां धर्म्ममर्य्यादां भृत्यानां जनकोपमान्। हन्तुं नरेन्द्रान्द्रोहेण प्रारब्ध. शम्भुवर्धनः।
प्राप्य निष्कण्टकं राज्यं चक्रवर्म्मनृपः क्रमात्। अजायत धृतोत्सेको नृशंसविषमक्रियः।
स्वविक्रमकथालोचरोमन्थप्रियताद्दतः। सोऽभवदिटवन्द्यादिचाटुकारत्रिधेयधीः।
आत्मानं दैवतमिव स्तुतिमोहितचेतसः। जानतः प्राभवंस्तस्य विवेकविगुणाः क्रियाः।
तस्मिन् प्रसङ्गे रंगाख्यः प्रख्यातो डोम्बगायनः। वैदेशिकोऽभवद्राज्ञा वितीर्णावसरोवहिः।
प्राप्तान् सचिवसामन्तान्विन्यस्यन्तो यथाक्रमं। प्रतीहारानुपस्थायमनयन्त विविक्ततां।
विवभौ धवलोष्णीषा सभा दीपप्रभोज्ज्वला। शेषशय्येव मणिभिः कृतालोका फणोद्भवैः।
कृतावरोधधम्मिल्लमालान्दोलनकेलिभिः। प्रदोषपवनैर्यस्के शिशिरैर्घ्राणतर्पणं।
जातगीतदिदृचाणां गवाचावलयो वभुः। आसवामोदिभिर्व्वक्त्रैरवरोधमृगीदृशां।
हारकङ्कणकेयूरपारिहार्यादिशोभिना। स्वच्छन्देनानुयातोऽथ प्राविशत डोम्बगायनः।
हंसीनागलताचास्य सुते ललितलोचने। चक्रतुः कौतुकोद्ग्रीवां सभांचित्रार्पितामिव।
तयोर्व्विलासवलितैश्चलितापाङ्गविभ्रमैः। द्वितीयपुष्पप्रकरोव्यकीर्य्यत सभान्तरे।
गायनैर्जयजीवेति कृतकोलाहलैरभूत्। सदः सशब्दं कुर्व्वद्भिस्तत्तन्नृपगुणग्रहं।
भुक्तोत्तरोचितोद्दामपञ्चमस्थानचारिणः। वंशैरागविशेषस्य दत्ते स्थाने ततः शनै.।
अविक्रियशिरःकम्पभूनेत्रभ्रमशोभितः। अभिनवइव गायन्त्या गीतध्वनिरजृम्भत।
अथ ताम्बूलरोमन्थत्यागनिश्चलमूर्त्तिना। जातं राजकुरङ्गेण प्रमोदास्यन्ददृष्टिना।
गायन्त्यौ भावमालम्ब्य तस्य स्त्रिग्धमगायतां। अधिकोद्रेचिताभिख्यं विलासस्मितविभ्रमैः।
राज्ञस्तयोश्च संसक्तचित्तयोरितरेतरं। दृग्व्यापारैः स्वसंवेद्यः संलाप इव पप्रथे।
नृपं हारितचित्तन्तं विज्ञायैकः प्रियो विटः। ततः प्रसङ्गे प्रोवाच प्रीतिवृद्धिकरं वचः।
देव गीतमिदं यातं संप्रार्थ्यते मनोरमे। कर्पूरपारीपतितं मैरेयमिव हारितं।
गायन्त्योर्माज्जितमितां रागाद्दत्तवतुष्किकां। अनयोः प्रतिमाव्याजाच्चुम्बतीव निशाकरः।
करन्यस्तकपोलान्तमुद्रायन्त्याविमे ध्रुवं। कटाचैः कुरुते योषि वैमानिकविमोहनं।
जानन्त्या स्वाश्रयां चर्चामनयोरेकयावयोः। असूयास्मितगर्भोऽयं कटाचः पश्य पातितः।
गायन्त्येकानतमुखी कर्षयालोलकुण्डला। विपरीतरतोद्रेकक्लान्तारथेव शोभते।
सफलं तस्य तारुण्यमीदृश्यौ निर्ज्जने स्त्रियः। उल्लुण्ठयादिरहे यस्य गायन्त्यौवंविधैः स्वरैः।
उपपत्तिपरित्यक्तभाषालापनुहासमोदितैः। एकमार्यमथातेभ्यः कथमेको त्रिवर्ध्यते।

नेचस्य नूपं श्रोत्रस्य ध्वनिं संस्पृशतोन चेत्। तदङ्गस्यान्यकान्ताङ्गं स्पृशतो दुष्कृतं कुतः। १८०
अभिलाषाङ्कुरः सिक्त इव तैर्विटभाषितैः। राज्ञः स्वभावलोलस्य गतमायतमाययोः।
ये विस्तारितवर्णसङ्करुचः सन्दर्श्य गोचान्तरादद्धावस्थिति चापलं घनमलं पार्श्वे ध्वनन्त्युद्धताः।
नीयन्ते विपथावपातपरतां सद्योऽदयैस्तैः क्षणात् सिंहावारिधरै रमी च रभसाद्भूपालसिंहा विटैः।
वस्तुक्षणादनुपपत्त्युपपत्तियुक्तं कृत्वा जडान् यदि विमोहयितुं समर्थाः।
न स्युर्विटा अथ कुतर्कपथस्थिताश्च नित्योद्यमेषु निरयेषु कथं गताः स्युः।
सन्तोष्य हारकेयूरकुण्डलैर्डोम्बमण्डलं। अमार्गत्यागराधेयः प्रद्रुत्तामगमन्नृपः।
कान्तोऽस्याः क्षितिवल्लभोऽयमभिधेत्युर्वीपतेरेकतो भूनेऽस्यावनिचण्डतावण्डवपुतं डोम्बः स्वनामान्यतः।
मध्ये यत्किमपीति गीतिरचना काव्यं यदेतद्विदो यल्लक्ष्मीं क्षपयन्ति तान्धिगबुधान् कीर्त्यर्थिनः पार्थिवान्। १८५
वेश्यानुरागस्य महेन्द्रचापधाम्नोहरिद्रारसरञ्जनस्य। उपाङ्गगीतस्य च हारिणोऽपि सौन्दर्यमस्थैर्यहतप्रकर्षं।
दर्शनाभ्याससम्बृद्धचक्षूरागः क्षमापतिः। विनाश्वपाककन्ये ते न पुनः प्राप निर्वृतिं।
गायन्त्यौ शयनोपान्ते शनैर्विहितचुम्बनं। नृपं रतिसुखाभिज्ञं तं हठात्ते प्रचक्रतुः।
समागमेन नवेन तयोर्व्यैयात्यशोभिना। चक्रे क्षपितसामर्थ्यः सलज्जोद्वहनाक्षमः।
रत्यन्तसुलभोद्भेदैर्निःसृतैः स्वेदबिन्दुभिः। भाव्योन्मपङ्कयजडं वपुस्तस्य व्यधीयत। १९०
रागान्धेन कृता हंसी महादेवी महीभुजा। भेजे राजवधूमध्ये वालव्यजनवीजनं।
तस्यायैर्भुक्तमुच्छिष्टं ते यया चक्रवर्मणः। नृपान्तराणामन्येषामप्यभूवन् सभासदः।
मन्त्रिणामक्षपटलप्रख्यमुख्याधिकारदा। महर्द्धिहेतुतां प्राप डोम्बसेवनचक्रिका।
मौर्ख्यात्मसचिवतां केचिच्छ्वपाका न ययुः स्वयं। केचित्तु कुर्वन्नीतिज्ञा राजकार्याणि मन्त्रवत्।
मन्त्रिणस्तस्करा राज्ञीश्वपाकीश्वपचाः प्रियाः। किं न लोकोत्तरमभूद्भूपतेश्चक्रवर्मणः। १९५
ऋतुस्नातार्तवाङ्कानि श्वपाकी स्वांशुकान्यदात्। तदाच्छादनदृप्तेच्छा मन्त्रिणः प्राविशन् सभां।
केचित् क्षितिभुजा वैरमङ्गीकृत्यापि तत्क्षणं। यैर्नाशि श्वपचोच्छिष्टं तेऽभवन् सोमपैः समाः।
मण्डलेऽस्मिन् प्रभावोग्रा न देवान्यवसन् ध्रुवं। तदेश्मनि तदा नोचेच्छ्वपाकी प्रविशेत्कथं
तां रणस्वामिनं द्रष्टुं तिलद्वादश्यहे गतां। सामन्तेभ्यः साभिमानानन्वयुर्डामराः परं।
राजकौटुम्बदृप्तानां डोम्बानां निर्गता मुखात्। राज्ञामिवाज्ञा दुर्लङ्घ्या न केनाप्युदलङ्घ्यत। २००
राज्ञा प्रदत्ते रङ्गाय हेलुग्रामेऽग्रहारवत्। लिलेख पट्टोपाध्यायो न यदा दानपट्टकं।
तदाक्षपटलं गत्वा रङ्गः कोपात्तमब्रवीत्। रङ्गः स हेलुदिण्णेति दासीसुत न लिख्यते।
लिलेख सोऽथ सन्त्रासाद्रङ्गभ्रूभङ्गतर्जितः। कोन राजनि दुर्वृत्ते भवेन्नीतिव्यतिक्रमः।
अन्त्यागमनपापस्य पापः पृच्छन् स निष्कृतिं। विटैर्हास्यावहान्येव प्रायश्चित्तानि कारितः।
हिमेनैव हिमं शाम्येद्दुष्कृतेनैव दुष्कृतं। सोऽनुशिष्टो विटैरेवं दधत्यामरसारतां। २०५
पवित्रास्पर्शतोऽस्पृश्या स्पर्शपापं जिहीर्षुणा। तेनादूष्यत विप्रस्य योषिन्मासोपवासिनः।

ततोऽपि पापिनोऽभूवन् केऽपि तस्मिन् क्षणे द्विजाः। तस्मादप्यग्रहारान् ये जगृहुर्गर्दभोजिन ।
चक्रे चक्रमठं सोऽपि पापः पाशुपताश्रयं। तस्मिन् हतेऽर्द्धनिष्पन्नं तदधूर्यद्योजयत्।
पूर्वापकारान् विस्मृत्य डामरांस्च निरागसः । नृपतिः श्वपचाकामी विश्वस्तांश्छद्मनावधीत्।
हन्तुं व्याजेन विश्वस्ताः केचिड्डामरतस्कराः। तस्युस्तस्यान्तिके द्रोहच्छिद्रान्वेषणतत्पराः ।
श्वपाकीशयनावासासन्नावस्करमन्दिरे। शौचस्थितं तं निःशस्त्रं ते राज्ञो प्रापुरेकदा।
अथ तैः प्राप्तसमयैरकस्मात्तस्य सर्व्वतः। क्षिप्रं न्यपात्यताशेषघातशस्त्रपरम्परा।
सुप्तस्तटाद्ध्रदे भ्रष्ट इव निद्रालसेक्षणः। प्रबुद्धः शस्त्रपातैः स व्यमुचद्भैरवान् रवान्।
निःशस्त्रः शस्त्रमन्विष्यन् चरत्स्रुतजनिर्झरः। अनुद्रुतोऽरिभिर्धावन् शय्यावेश्म विवेश तत्।
अप्राप्तहेतिं क्रन्दन्त्या श्वपाक्यालिङ्गिताङ्गकं। तत्कुचोत्सङ्गलग्नार्द्धं जघ्नुस्तेऽनुप्रविश्य तं।
स्वैरेव प्रेरितादारैस्ते तस्य नृपतेः किल। मुमूर्षोर्जानुनी स्वैरं शिलायां समचूर्णयन्।
त्रयोदशाब्दे ज्यैष्ठस्य शुक्लाष्टम्यां क्षपाक्षणे। श्वपाकभोग्यः स श्वेत्रावस्करे तस्करैर्हतः।
उन्मत्तावन्तिनामाथ पार्थस्तनुर्दुराशयः। अभ्यषिच्यत वैधेयैः सचिवैः शर्व्वटादिभिः।
श्वपाकीकामुके पापे निहते निशि तस्करैः। प्रजानां पाप्मना सोऽभूत्पापात्पापतरो नृपः।
स्थगिता तत्कथापापस्पर्शभीत्या सरस्वती। कथंचित्तत्स्वरस्येव सेयं प्रस्थाप्यते मया।
आसीत्पितृकुलं तस्य भर्त्स्यं दुर्नृपरक्षसः। शौर्व्वाभिधस्य हव्याशविशेषस्येव जीवनं।
तस्यासंस्पृष्टशङ्कराघातसटाङ्कारकरोटिकाः। घाणस्कन्दादिवाचाला: सभायां मुख्यमन्त्रिणः।
तेऽमात्याश्चारणत्वेन ,निर्लज्जास्तमरञ्जयन्। कालान्तरेण यैरेव भूमिपालैर्भविष्यते।
पर्व्वगुप्तोऽभवत्तस्य सर्व्वेभ्योऽप्यधिकं प्रियः। आस्थाने नर्तनं कुर्व्वन्नपाकृतकटीपटः।
आतन्त्रिविसंवाद्दृष्ट्वा कीटप्रायान्महीपतीन्। पर्व्वगुप्तः सर्व्वदाभूद्राज्यावाप्तिकृतोद्यमः।
तदा निगूढराज्येच्छः सख्यं मुख्यैः स मन्त्रिभिः। पोतकोशैः सर्व्वदधे पञ्चभिर्भूभटादिभिः।
भूभटः शर्वटश्चौजः कुमुदः सोऽस्मृताकरः। पर्व्वगुप्तेन सम्बन्धश्चक्रिरे कोशपीथिनः।
गवाक्षसरसि मात्रश्रीजलौकागर्त्तद्विजः। संग्रामडामरश्चेह येरकः ख्यातपौरुषः।
पदातिमात्रो भूपेन दृष्टशौर्य्यः स संयुगे। महोदरो महाकायः प्रापितो मुख्यमन्त्रितां।
यादृशी तेन ददृशे देवी श्रीः सरसोऽन्तरे। तादृग्यक्षजया देवीत्यभिधानेन निर्ममे।
राज्यं निष्कण्टकं कृत्वा धूर्त्तेनापजिहीर्षुणा। प्रेरितः पर्व्वगुप्तेन भूभृच्चक्रे कुलक्षयं।
तेन लुण्ठितसर्व्वस्वः पार्थस्तस्यैव कलत्रवान्। श्रीजयेन्द्रविहारान्तः श्रमणैर्दत्तभोजनः।
शिशून् शङ्करवर्म्मादीन् भ्रातॄन् दारान्निरोध्य सः। तत्र प्यितानानशनैस्तत्कान्तास्तनकारयत्।
उद्यतः पितरं हन्तुं मन्त्रिणोऽनुमतप्रदान्। चक्रुपटान् यथाबद्धनिगडानितरान् पुनः।
एकदा मन्त्रिसामन्ततन्त्रिकायस्थसैनिकाः। पार्थे तदाश्रमामात्य निशायां पर्य्यवेष्टयन्।
घातबीणां वरां पत्नीं रुद्धद्वारां निपात्यते। आलिङ्ग्यमानां क्रन्दद्भिस्तर्षकैरिव दारकैः।

केशानालम्ब्य कर्षन्तः शर्करोत्पाटिताङ्गकं । विपन्नं गोकुलाद्ध्वान्तमिव निर्हृत्य तं गृहात् ।
क्षुत्क्षामरूक्षं क्रन्दन्तं निजघ्नुर्नम्रविग्रहम् । चण्डालाइव निःशङ्कं कुमुदाद्या नृपप्रियाः ।
पितरं निहतं श्रुत्वा राजा सञ्जातकौतुकः । प्रातः स्वसचिवैः सार्द्धङ्गत्वा शवेऽथ दृष्टवान् ।
अत्राङ्गेऽस्य प्रहारोऽयं मद्दत्त इति वादिनः । तस्याग्रे राजपुरुषाः शशंसुर्निजविक्रमं । २४०
न्यक्कृत्य स्वीकृतो राज्ञा तदा तद्रञ्जनोद्यमाः । अचूचुदत्पर्श्वगुप्तो देवगुप्ताभिधं सुतं ।
पार्श्वस्य निहतस्याङ्गे सोऽक्षिपत्क्षुरिकां ततः । रञ्जितो येन भूपालो जातहासोऽभवच्चिरं ।
डामरैर्लुण्ठितो देशः प्रणष्टे चक्रवर्मणः । उत्थाप्य पापकायस्थास्तेन भूयोऽपि दण्डितः ।
सम्प्रेरितः कुसचिवैः शस्त्राभ्यासञ्चकार सः । पाटयन् क्षुरिकाघातैः कोट्टवीस्तनकोटरं ।
गर्भिणीनाञ्च जठरं गर्भान् द्रष्टुमपाटयत् । काठिन्यस्य परीक्षार्थमङ्गद्धर्मक्षतामपि । २४५
प्रतिग्रहाग्रहाद्घोराद्यदा बधभयाद्द्विजाः । प्रत्यगृह्णन्नयहारांस्तस्मादपि नृपाधमात् ।
क्रूरपापानुरूपेण क्षयरोगेण पार्थिवः । तेनानुबाध्यमानोऽभूदपर्यन्तव्यथातुरः ।
व्यथया तस्य तादृश्या प्रजा एव न केवलं । तुतुषुर्निजशुद्धान्तमहिष्योऽपि चतुर्दश ।
अथान्तःपुरदासीभिर्यः कुतश्चिदुपाहृतः । क्षितिपालात्मजातोऽयमिति प्रख्यापितो मृषा ।
तं शिशुं शूरवर्माख्यं विनिवेश्य नृपासने । हस्ते निक्षिप्य सामन्तसचिवैकाङ्गतन्त्रिणं । २५०
कम्पनाधिपतेर्वृद्धदेवः कमलवर्धनात् । विभ्यन्मडवराज्यस्था डामरोत्पाटनक्षमात् ।
आसन्ननिरयप्राप्तिः पितृहा पार्थिवाधमः । शुचौ पञ्चदशाब्दस्य प्रजापुण्यैः क्षयं ययौ ।
॥ चतुर्भिः कुलकं ॥ पितृघातिसुतो राजा जयस्वामिविरोचनं । आषाढशुक्लसप्तम्यां शिशुर्द्रष्टुं विनिर्ययौ ।
नवा विरेजे राजश्रीर्बालस्य पृथिवीपतेः । कृपाणवेल्लिललिता च्छत्रचामरहासिनी ।
अत्रान्तरे जवायातैश्चारैरावेदितश्रुतः । सामन्तैर्नगरोपान्तं प्राप्तः कमलवर्धनः । २५५
एकाङ्गतन्त्रिसामन्तस्यालहारकसादिभिः । नगरं प्रविशन् श्रान्तः समं सैन्यैररुध्यत ।
विरुद्धडामरानीकान् युद्ध्वा मार्गेषु निर्गतः । श्रान्तोऽप्यसौ वैरिसेनामजयद्विक्रमोर्जितः ।
सहस्रमश्ववाराणां विद्राव्य तुरगैर्मितैः । राजधानीमसंरुद्धः प्रविवेश ततः क्षणात् ।
तं लब्धजयमाकर्ण्य सैन्यैस्त्यक्तं पलायितैः । एकाकिनं क्वाप्यनयज्जननी शिशुभूपतिं ।
प्राक्कर्मभिर्मोहितो वा प्रेरितो वा कुमन्त्रिभिः । नाभूत्सिंहासनारूढो मूढः कमलवर्द्धनः । २६०
तदानीं स्वगृहान् यातो राज्यकामोऽन्यवासरे । सङ्घट्टयन् द्विजान् सर्व्वानचूचुददनीतिवित् ।
प्रौढं सकस्व कुरुत क्ष्मापं कश्चित् स्वदेशजं । मामेव कुर्युः सामर्थ्यादिति मूढः स चिन्तयन् ।
एकाकिनीं रहः क्षीवां लब्ध्वा दुर्लभयोषितं । अप्रौढोऽनुपभुञ्ज्यान्यदिने दूत्यार्थयेत यः ।
विभूतिं रभसावाप्तां यश्च सन्त्यज्य तत्क्षणं । नीत्या कामयतेऽन्येद्युः शोच्यस्ताभ्यां परोऽस्ति कः ।
॥ युग्मं ॥ अथोत्पलकुले छिन्ने स्थूलकम्बलवाहिन । अग्रदृष्टोचनिभा विप्राः समगंसत गोकुले । २६५
धूमनिर्दग्धकृर्चाणां राष्ट्रांशांश्चिकीर्षतां । राज्यग्रवस्थोपन्यासस्तेषां चिरमवर्द्धत ।

वैमत्येन मिथस्तेषां नान्यः कोऽप्यभ्यषिच्यत । कूर्चाभापणनिर्ज्यूतैः स्वकूर्चष्ठीवनैः परं ।
राज्यार्थान्वेषिभिर्विप्रैः प्राप्तः स्वस्तिकृतये । अवार्यतेष्टकाघातैर्मुग्धः कमलवर्धनः ।
पञ्चषाणि दिनान्येव यावत्तस्युर्द्विजातयः । काहलाकांस्यतालादिवाद्यकोलाहलाकुलं ।
उत्पताकध्वजच्छत्रशोभियुग्यार्पितासनं । अशेषं पारिषद्यानां तावत्तत्राभिलद्दलं ।
॥ युग्मं ॥ स्वपत्नीं बन्धकीभूतामिवान्यत्रप्रवर्त्तिनीं । वीक्ष्य राजश्रियं शोचन्नासीत्कमलवर्धनः ।
पितृघातिवधूश्छन्नपुत्त्रराज्यार्थिनी ततः । प्राहिणोद्राजपुरुषान् पार्श्वं प्रायोपवेशिनां ।
पिशाचकपुरे ग्रामे वीरदेवाभिधस्य यः । कुटुम्बिनः कामदेवनामा सूनुरजायत ।
स शिक्षिताचरो लब्ध्वा मेरुवर्धनमन्दिरे । बालाध्यापकतां स्नानशीलादिगुणभूषितः ।
क्रमाद्गञ्जाधिकार्यासीदथ तस्यात्मजः शनैः । लेभे गञ्जाधिकारित्वं राज्ञः शङ्करवर्म्मणः ।
यः प्रभाकरदेवोऽपि सुगन्धाछन्नकामुकः । लक्ष्म्या सरस्वतीद्वेषाद्विश्वविश्रुतो गतः ।
विद्वान् यशस्करो नाम तत्पुत्त्रोऽत्यन्तदुर्गतः । सख्या फल्गुणकाख्येन समं देशान्तरं गतः ।
सुस्वप्नदर्शनैः पीठदेव्याशीर्भिश्च हर्षुलः । तस्मिन् प्रसङ्गे सोत्साहः प्रत्यावृत्तो निजाम्भुवं ।
पितृघातिवधूदूतैर्यातैर्बोधयितुं द्विजान् । मध्ये गृहीत्वा वाग्मित्वात्प्रविवेश तदन्तिकं ।
॥ कुलकं ॥ दृष्ट्वैव तं दैववशादेकमत्यस्पृशो द्विजाः । ध्वनिं राजायमेवास्त्वित्युच्चकैरुदचारयन् ।
अथाभ्यषिच्यत क्षिप्रं विप्रैरेत्य यशस्करः । क्ष्माधृतिः प्रौढसामर्थ्यैः सानुमानिव तोयदैः ।
दग्धं वेणुवनं परस्परमहासंघर्षजेनाग्निना तन्मूलोद्धृतिरम्भसा चणधृताद्रेकेण सम्पादिता ।
वात्यावेगविपाटितं विटपिनं प्राप्तं कुतश्चिद्दृढां रूढिं नेतुमहो महाद्रिकुहरे धात्रा न किं स्वचितं ।
भृत्यप्रेरणया वंशम्पार्थजः स्वन्नचेद्दहेत् । तत्पुत्त्रोत्पाटनं कुर्य्यान्नचेत्कमलवर्धनः ।
अनुच्चकुलजातस्य दरिद्रस्याटतः क्षितिं । तद्यशस्करदेवस्य राज्यप्राप्तिः कथम्भवेत् ।
पद्भ्यां व्रजन्निरनुगो ददृशे जनेन यस्तत्क्षणं निखिललोकसमानकीर्तिः ।
साम्राज्यरम्यममुमीक्षितुमास नारीदृक्श्रीरजस्रवकितो नरनाथमार्गः ।
नृपतिवसतिं प्रत्यागच्छन् यशस्करभूपतिः पुरमृगदृशामाशीर्मध्ये वचोऽपि विवक्षितं ।
स्तिमितवलितापाङ्गं शृण्वन्निमीलदहङ्कृतिः क्षतपरिकरस्पर्शैर्भेजे प्रजापरिपालने ।
प्रतिमितरविदीपोद्गाधिरूढभ्रातपत्रप्रचयरजतपात्रास्वलिताराविका श्रीः ।
अथ मुखरितमार्गीर्मङ्गलैरङ्गनानामवनिहरिणधामा राजधाम प्रपेदे ।
श्रीकाश्मीरिक महामात्यचम्पकप्रभुसूनोः कह्लणस्य कृतौ राजतरङ्गिण्यां पञ्चमस्तरङ्गः । राजानः आदितः ॥ ११ ८० ॥
अधिकार्यां समाशीतौ माघेषु च चतुर्ष्वगात् । कल्पपालाष्टकं रथ्यास्वतस्त्रीषु चिरा अपि ।

## ॥ अथ षष्ठस्तरङ्गः ॥



नेदं पर्णसमीरणाशनतपोमाहात्म्यमुच्चैरगौ पश्यैतावत एव संप्रति हृतौ तन्मात्रहृत्ती वह्निः।
प्रेम्णैवार्द्धमिदं चराचरगुरोः प्राप्येयमात्मस्तुतीरेवं देववधूमुखाच्छ्रुतिसुखाः शृण्वन्त्यपर्णावतात्।
दृच्छन्नलङ्घनीयत्वमथ कक्ष्यां विलङ्घयन्। प्रतीहारान् द्विजा दूरं वार्य्यन्तामिति सोऽन्वशात्।
वेत्रिविचाय्यमानांस्तु तान् कृताञ्जलिरब्रवीत्। राज्यप्रदाश्च पूज्याश्च यूयं नो दैवतैः समाः।
राज्यदानाभिमानेन वर्त्तिष्यत मदोद्धताः। यत्कार्य्यकालादन्यत्र नागन्तव्यं मदन्तिकं।
तदाकर्ण्याखिलो लोकस्तमदृश्यममन्यत। व्यस्मरत्सहसंवाससम्भूतमपि लाघवं।
खिलीभूताः पूर्व्वराजव्यवस्था प्रतिभाबलात्। उन्नीतवान्स सुकविः प्राक्तविप्रक्रिया इव।
अघोराभूत्तथा भूमिर्यथा रात्रौ वणिक्पथाः। अतिष्ठन्निहतद्वारा मार्गाश्चाविघ्निताध्वगाः।
प्रत्यवेचापरे तस्मिन्नासीत्सर्व्वापहारिणां। कृष्यध्वबलमुत्सृज्य कृत्यं नान्यन्नियोगिनां।
ग्राम्याः कृषिपराधीना नापश्यन् राजमन्दिरं। विप्राः स्वाध्यायसंसक्ता नाकुर्व्वन् शस्त्रधारणं।
न विप्रगुरवः साम गायन्तो मदिरां पपुः। न तापसाः पुत्रदारपशुधान्यान्यढौकयन्।
न मूर्खा गुरवो मत्स्या पूपयागविधायिनः। चक्रिरे स्वकृतैर्ग्रन्थैस्तर्कागमपरीक्षणं।
नादृश्यन्त च गेहिन्यो गुरुदीक्षात्यदेवताः। कुर्व्वाणा भक्तिशौचश्रोनिषेधं मूर्धधूननैः।
कार्त्तान्तिको भिषक्सभ्योगुरुर्मन्त्री पुरोहितः। दूतः स्थेयो लेखको वा न तदाभूदपण्डितः।
प्रायोपवेशाधिकृतैर्व्वाधितेन महीभृता। प्रायोपविष्टो निकटं प्रापितः कश्चिदब्रवीत्।
अहमाढ्योऽभवं पूर्व्वं वास्तव्योऽत्र महीपते। निष्किञ्चनत्वं शनकैरागच्छं दैवयोगतः।
उत्तमर्णैः पीडितस्य प्रवृद्धर्णस्य तस्य मे। निश्चयोऽभूदृणं छित्वा परिभ्रान्तुं दिगन्तरे।
अथ विक्रीय सर्व्वस्वमृणं शोधयता मया। महाधनाय वणिजे विक्रीतं निजमन्दिरं।
भार्य्यामुद्दिश्य भर्तव्यामेकएव तु वर्जितः। सोपानकूपो विक्रीतान्महतो वेश्मनस्ततः।

निदाघे पुष्पताम्बूलीपर्णं यत्नातिशीतलं । न्यस्तङ्क्षिमान्तिकैर्दत्ता सा शीतेन्नाटकादिति ।
ततोदिगन्तराक्रान्त्वा विंशत्या वत्सरैरहं । लब्धाल्पवित्तः सम्प्राप्तो जन्मभूमिमिमां पुनः ।
अन्विष्यता मया साध्वी स्ववधूर्दृष्टेऽद्य सा । विवर्णदेहा जीवन्ती भित्त्यालेनान्यवेश्मसु ।
किं दत्तजीविकापि त्वमीदृशीं वृत्तिमाश्रिता । मयेति सा सुदुःखेन पृष्टा स्वोदन्तमब्रवीत् ।
सोपानकूपं सम्प्राप्ता त्वयि याते दिगन्तरं । लगुडैस्ताडयित्वाहं वणिजा तेन वारिता ।
तदन्या कास्ति मे वृत्तिरित्युक्त्वा विरराम सा । तदाकर्ण्य निमग्नोऽहमन्तरे शोककोपयोः ।
कृतप्रायोपवेशोऽद्य स्थेयैस्तैस्तैः पदे पदे । प्रत्यर्थिनो दत्तजयैः किमप्यस्मि पराजितः ।
जडत्वादेशि न न्यायं न विक्रीतो मया पुन. । सोपानकूप इत्यस्मिन्नर्थे प्राणा इमे पणः ।
सोऽहं विपद्ये क्षीणार्थो द्वारि शास्तु तव ध्रुवं । वृजिनादस्मि चेन्नीतिवित्तु निर्णीयतां स्वयं ।
राजेति तेन विज्ञप्तो दत्वा धर्मासनं स्वयं । सह दृत्याखिलान् स्थेयानाहीत्तत्वं विचारयन
स्थेयास्तमूचुर्व्वेडशो विचार्यायं पराजितः । शाव्यादगणयन्नथ्यं दण्ड्यो लिखितदूषकः ।
सोपानकूपरहितं विक्रीतं गृहमित्यथ । राजा विक्रयपत्रस्थान् स्वयं वर्णानवाचयत् ।
ततोऽधिगतमित्येव सभ्येषु निगदत्स्वपि । अन्तरात्मा जगादेव नृपतेरर्थिनो जयं ।
मुहूर्तमिव सञ्चिन्त्य राजान्याभिरभूच्चिरं । कथाभिरतिचित्राभिर्मोहयन्सभ्यमण्डलं ।
कथान्तराले सर्व्वेभ्यो गृह्णन् रत्नानि वीक्षितुं । हसन्प्रत्यर्थिनो हस्तादुपादत्ताङ्गुलीयकं ।
क्षणाद्दिवाखिलैः स्थेयनित्यमेवेति सस्मितं । वचो ब्रुवाणः प्रययौ पादचालनकैतवात् ।
अभिज्ञानाय तत्रस्थः स वितीर्याङ्गुलीयकं । भृत्यमेकं वणिग्वेश्म प्राहिणोद्दत्तवाचिकं ।
स वणिग्गणनाध्यक्षं ययाचे साङ्गुलीयकः । यत्राब्दे पत्रमुत्पन्नं गणनापत्रिकां ततः ।
निर्णयेऽद्य तया कृत्यमस्ति भाण्डपतेरिति । श्रुत्वादाद्गणनाध्यक्षस्तां गृहीताङ्गुलीयकः ।
दीनाराणां दशशती तस्यां भूभृदवाचयत् । व्ययमध्येऽधिकरणलेखकाय समर्पितां ।
तस्मै मितधनार्थाय बहुमूल्यार्पणान्नृपः । रेफे सकारं वणिजा कारितं निश्चिकाय सः ।
सभायां तत्प्रदर्श्याथ पृष्ट्वा दत्वाभयञ्च तं । आनीय लेखकं सभ्यान्सञ्जातप्रत्ययान् व्यधात् ।
सभ्यैरभ्यर्थ्यमानेन राज्ञा सार्धं वणिग्गृहं । वितीर्णमर्थिनो देशात्प्रत्यर्थी च प्रवासितः ।
कृताह्निकं भोक्तुकामं तं दिनान्ते च भूपतिं । अकालावेदनाद्विभ्यत्क्षत्ता जातु व्यजिज्ञपत् ।
देवः समासन्नस्योऽद्य विज्ञप्तौ यस्तव क्षणः । इत्युक्तो दर्शने प्राणत्यागी विप्रो बहिःस्थितः ।
दत्तप्रवेशादेशोऽथ रुद्रदेवेन भूभुजा । द्विजः प्रविष्टः पृष्टोऽथ तीव्रार्तिरिदमब्रवीत् ।
सुवर्णरूपकशतं भ्रान्त्वा देशान्तरेऽर्जितं । गृहीत्वा श्रुतसौराज्यः स्वदेशमहमागतः ।
त्वयि राजनि निश्चौरैरध्वभिर्विंशतः सुखं । ह्योऽभवन्नवपोन्ते मे दिनान्ते श्रान्ततः स्थितिः ।
दीर्घाध्वलङ्घनक्लान्तस्तत्राहमकुतोभयः । मार्गारामतरोर्मूले वियामामत्यवाहयं ।
वितानं ग्रन्थिबद्धं नादुत्याघोरपतन्मम । अरघट्टे समीपस्थे कचयोगादसंचिते ।

तस्मिन्दुरवरोहेति निर्व्विसुलाञ्जहद्वपुः। सोऽहं हारितसर्व्वस्वः शोचन् रुद्धस्थिरं जने।
एकोऽध्यवसितः कोऽपि साहसी पुरुषोऽब्रवीत्। मह्यं दापितवित्ताय किन्ददासीति मां ततः।
तमस्म्यवोचं वित्तस्य तस्यार्थस्यास्मि कः प्रभुः। तुभ्यं यद्रोचते मह्यं तत्ततो दीयतां त्वया।
अवरुह्याधिरूढोऽथ रूपकेभ्यो द्वयं मम। स प्रादात् स्पष्टमेवाष्टानवतिं स्वीचकार तु।
व्यवहारा वचोनिष्ठा एका राज्ञि यशस्करे। निन्दन् व्यवस्थां तां लोकैर्न्यकृतोऽस्मीति वादिभिः।
उपचारोक्तिसारस्य च्छलहारितवेतनः। सोऽहं जहास सन्द्वारे दुर्व्यवस्थापकस्य ते।
पुंसस्तस्य स राज्ञाथ पृष्टः सप्रतिनामनो। वदन्सत्यमभिज्ञैव ममास्तीत्यभ्यभाषत।
प्रातस्त्वेप्सितावाप्तिं करिष्यामीति भूभुजा। प्रतिज्ञाय कथञ्चित्स स्वपार्श्वे कारितोऽशनं।
लवणोत्सोकसां दूताहूतानां स विशां ततः। स्थितमन्तर्द्विजोऽन्येद्युस्तं राज्ञेऽदर्शयन्नरं।
पृष्टः स राज्ञा विप्रेण यथैवोक्तं तथैव तत्। सर्व्वमूचे वाक्प्रतिष्ठं व्यवहारमुदीरयन्।
सत्यवाक्पारतन्त्र्यस्य वस्तुवृत्तस्य चान्तरं। अलक्षयन्तः प्रैक्षन्त दोलाकुलधियो धरां।
धर्म्मासनस्थो राजाथ रूपकाणामभाषत। तमष्टानवतेः पात्रं विप्रमन्यं द्वयस्य तु।
अनुयोक्तुर्जगादापि दुःसंचिन्त्या महात्मनः। धर्म्मस्याधर्म्ममुद्वृत्तं निहन्तुं धावतो गतिः।
सार्थं कृताशं प्रविशन्नभयं चेन्दुमण्डलं। स्वतेजसा संविभजन् प्रदीपैर्ज्योत्स्नयाप्यसौ।
तदुत्थाय यथाभानुर्निहन्ति ध्वान्तमुद्धृतं। अनन्यकर्म्मा धर्म्मोऽयं तथाधर्म्मं व्यपोहति।
॥ युग्मं ॥ दुःसंलक्ष्यस्तु धर्म्मोऽसावधर्म्मं बाधतेऽञ्जसा। तिष्ठन्नित्यमधिष्ठाय दारुं काष्ठमिवानलः।
ददाति यद्भवान् दत्तां तदित्याद्युक्तमुज्झत। तुभ्यं रोचत इत्यादि वचोऽस्य निःसृतं तदा।
रुचितास्य समूवाष्टानवतिर्लोभिनोऽस्य तां। नादादस्मायरुचितं रूपकाणां द्वयं ददत्।
इत्यादिसूक्ष्मेक्षिकया धर्म्माधर्म्मान्तरं विदन्। सत्यवेत्तापरः क्ष्माभृद्बभावधात्कृतयुगोदयं।
इत्यञ्जनं स विनयन् हासोऽभून्निजदुर्नये। परस्योपदिशन् पथ्यमपथ्याशीव रोगवत्।
औचित्येनैव तेनापि म्रदिम्ना शाठ्यशालिना। डोम्बाच्छिष्टभुजोऽभृत्याः पार्श्वान्न परिजिह्रिरे।
यथोत्तरं संश्रितार्थैरन्योन्यं पृष्ठपातिभिः। नगराधिकृतैश्चक्रे चतुर्भिः सोऽर्थसङ्ग्रहं।
लेभिरे निधनन्तस्मात्सत्यद्वारात्पदातयः। श्रीरणेश्वरपीठायन्यमखड्गादपि प्रभोः।
स ज्येष्ठे भ्रातरि मृते तयाभूदुदितस्थिरं। तदुपज्ञैर्यथाप्राप्तैस्तैर्नोत्सेचिरसार्पणं।
भीतस्य मण्डनेशत्वं वेलावित्तस्य भूभुजा। देवीः कामयमानस्य चक्रे गजनिमीलिका।
रागाच्छुद्धान्तकान्तानां मूर्द्धानमधिरोपिता। हस्तानामाभवद्वेश्या तस्य वैरस्यकारिणी।
स्ववकाशः सुवृत्तानां चद्याम्लर्भ योषितां। इतीव विहितौ धात्रा सुवृत्तौ तद्दृशिः कुचौ।
कुसमाधमर्धसक्तो जानन्मदृग्वृत्तिताम्। नारीणां गृधिशाद्यानामङ्गनाले व्यधादिधिः।
या सान्त्विनापि राज्ञा पलक्षा संनिलीषया। चण्डालयामिकेनागाद्यामिनीषु समागमं।
॥ युग्मं ॥ सुभगद्वस्यं किंचिच्चण्डालतल्पेऽभवत्। तं यन्मभावविवशा भेजे राजवधूरपि।

सा वा चण्डालकुलजा स वा कार्म्मणकर्म्मवित्। अन्यथा सङ्गमः किं स्यादसम्भाव्यस्तयाविधः।
सोऽभूत्केन प्रकारेण तया सह समागतः। इत्येष लेभे वृत्तान्तः प्रतिभेदं न कुत्रचित्।
केवलं प्रत्यवात्तादृक् पापिनोः प्रेम तत्तयोः। दुर्व्यापारैश्चराज्त्विषं ह्वाडिनाखोऽधिकारिणः।
तमर्थमथ तथ्येन वीक्ष्य प्रणिधिभिर्नृपः। प्रायश्चित्तानुचरणचामः कृष्णाजिनं दधौ।
कुपितोऽपि स यचैनां न्यवधीद्रागमोहितः। तेनैवागात्पुरोभागिवितर्कातङ्कपात्रताम्।
डोम्बोच्छिष्टानुगासङ्गादशुचित्वं यशस्करे। संक्रान्तं कुष्ठिसंस्पर्शात् कुष्ठं दुःखमिवाभवत्।
सामान्येन सता कैश्चित्सदृशैः शुभकर्म्मभिः। जन्मान्तरीयं साम्राज्यं मया प्राप्नोति चिन्तयन्।
साम्राज्यकामोऽपि नृपो भाविष्यपि स जन्मसु। युक्त्या प्रादान्निरातङ्कां राजलक्ष्मीं द्विजन्मने।
भूभुजा दानशौण्डेन पैतृके स्थण्डिले कृतः। छात्राणामार्य्यदेश्यानां तेन विद्यार्थिनां मठः।
मठाधिपतये तत्र च्छत्रचामरहासिनीं। स नरेन्द्राश्रितां प्रादात्स्वकान्तः पुरवर्जितां।
वितस्तापुलिने राजा नानोपकरणान्वितान्। श्रान्तिरेभ्य सोऽग्रहारान् पञ्चपञ्चाशतन्ददौ।
अथ जातोदरव्याधिर्न ज्ञातो नायमित्यसौ। जानन् संग्रामदेवाख्यं परिवर्ज्य निजात्मजं।
समर्थं सचिवैकाङ्गसामन्तानभ्यषेचयत्। रामदेवात्मजं राज्ये वर्णटं प्रपितृव्यजं।
शक्ये राज्यादपाकर्तुं शिशावनभिषेचिते। निराशाः समपद्यन्त तदा राज्यजिहीर्षवः।
स पर्व्वगुप्तकौटिल्यप्रयुक्तेहृदयोन्मुखः। विपाककालस्तत्राक्षि भङ्गोन्मुखइवाभवत्।
राजधानीस्थितस्यापि वर्णटो राज्यदायिनः। आरोग्यवार्तयाप्यासीन्मुमूर्षोरनिरीक्षकः।
ततः सानुशयो राजा तान्यन् प्रैर्थ्यत मन्त्रिभिः। राज्यं सङ्ग्रामदेवाय दातुमाश्वासकारिभिः।
राजाज्ञया निशामेकां बद्धेऽप्यस्तम्भमण्डपात्। बहिर्दत्तार्गलात्प्रातर्वर्णटो निरवर्त्स्यत।
भयात्प्रजागरादापि तद्भृत्यानां विवेकिनां। आस्थानमण्डपं प्राप पायुचालनभूमितां।
एकाङ्गराजपुरुषस्तदाभिं विजयेश्वरे। मीडाद्दिवप्रसादाख्यो राजवीजी समर्पयत्।
अथाभिषिच्य सङ्ग्रामदेवं तीर्थीभवद्धृयः। स राजधान्यानिर्गत्य मर्तुं निजमठं ययौ।
धौ केशश्मश्रुवपने शिरःशाटकवर्जनं। काषायग्रहणोद्वेग शस्त्रत्यागग्रहस्य च।
राजभृत्यैः प्रतिज्ञातः स तस्मिन्निश्चितचये। जीवत्येव कृतज्ञत्वव्यञ्जकैः परिवर्जितः।
॥ युग्मं ॥ द्वे सहस्रे सुवर्णस्य सार्द्धं बद्धा पटाञ्चले। योनिर्जगाम राजासौ मुमूर्षुर्निजमन्दिरात्।
पञ्चभिः पर्व्वगुप्ताद्यैर्घातकं तस्य मन्त्रिभिः। हृतं सजीवितस्यैव विभक्तान्योन्यमग्रतः।
॥ युग्मं ॥ विवेष्टमानः शय्यायां व्याधिदग्धान्तरो नृपः। तिष्ठन्मठाङ्गनकुटीगर्भे ध्वान्तान्धकारिते।
अजातसन्निकृष्टोऽपि पश्यन् द्रोहपरान्निजान्। प्राणैरहानि दिवाणि नयदानिरमुच्यत।
तदा सुहृदन्धुभृत्यवेलावित्ते कृतत्वरैः। जिहीर्षुभिश्च साम्राज्यं विपन्दत्वा विपादितः।
॥ तिलकं ॥ अवरोधवधूमध्यात्सती तं पतिमन्वगात्। एका चैलोक्यदेव्येव स्वंप्रभेव विरोचनं।
वर्णाश्रमप्रत्यवेक्षा बद्धकक्ष्यः क्षितीश्वरः। चक्रभान्वभिधं चक्रे सेवके द्विजतापस।

सुचिराङ्कुरितप्रीतेः पर्व्वगुप्तस्य साकरोत्। समागमार्थिनो युक्त्या वञ्चनामुचितां सती।
इदं यशस्करस्वामिसुरवेश्मार्द्धनिर्म्मितं। त्यक्त्वा पत्युर्व्विपन्नस्य कृत्वा निर्वाणपूरणं।
अमोघमस्मि नियमाद्विधास्यामि त्वदीप्सितं। सच्छुपच्छन्दयन्नेवं सुभ्रुवाभिहितस्तया।
अथ प्रहृष्टगर्व्वेण तत्स्वल्पैरेव वासरैः। सम्पूर्णतां सुरगृहं गमितं तेन भूभुजा।
सा यागज्वलने राजललना पीतसर्पिषि। पूर्णाहुत्या समं साध्वी जुहाव सहसा तनुं।
उपर्य्यस्यानिरस्ताभिः पुष्टाः कुसुमवृष्टय.। तत्कांचिणस्तु न्यपतन्नवर्णमुखरा गिरः।
सुदीर्घसाहसारम्भचिन्तासंरम्भशोषित'। पर्वगुप्तो बभूवाथ तृष्णामयपथातिथिः।
व्याध्याधिप्रशमायासैर्ज्ञात्वाप्यस्थायिनीं स्थितिं। मूढाः समृद्धिं नोज्झन्ति द्रोहे श्रीलोभमोहिताः।
आशक्य तादृङ्निष्ठोऽपि सोऽकुण्ठैः प्राक्तनैः शुभै'। कैश्चित्सुरेश्वरीक्षेत्रे परासुः समपद्यत।
षड्विंशवत्सराषाढबहुलेऽह्नि त्रयोदशे। द्रोहार्जितेन नृपतिः स राज्येन व्ययुज्यत।
अतीन्द्रियायां परलोकवृत्ताविहैव तीव्राशुभपाकशंसी। दृश्येत नाशो यदि नाम नाशु न कः कुकृत्येन यतेत भृत्यैः।
क्षेमगुप्ताभिधानोऽभूदथ राजा तदात्मज। आमवासेवनोत्सिक्तवित्त तारुण्यसंज्वरः।
सोऽभूत्स्वभावदुर्वृत्तो नितरां दुर्जनाश्रयात्। कृष्णचपाचरोघोरमेघान्ध इव भीतिकृत्।
स्वतुल्यवेशालङ्काराः शतं लालितकान्नृपं। तं फल्गुणप्रभृतयो दुराचारा. सिषेविरे।
द्यूतासवाङ्गनासेवाव्यसनेऽपि स पार्थिवः। विटनिर्लुण्ठ्यमानोऽपि नाभूत्सक्तोवहिष्कृत।
रागी मधुप्रणयवान्विहिताघसक्ति धं' सत्यमेति मधुपैर्हृतकोशसारैः।
पद्मे प्रयाति दिनमात्रमपि प्रसक्तिं श्रीस्तत्र चेत्किमिव तत्र कुतूहलाय।
विटाः प्रविष्टा हृदयं जिष्णुशा वामनादयः। पिशाचस्येव रुचितामशुचिं तस्य चक्रिरे।
परोपहासकुशलः परनारीरतिप्रियः। परायत्ताशयस्तस्थौ पार्थिवोऽनर्थतत्परः।
ष्ठीवनं श्मश्रुमालासु गालय श्रोत्रपालिषु। तेन चिप्ता. प्रतीच्छाणां करोटीषु च टक्करा.।
कटिसङ्कटनाम्नार्य्यो मृगव्याशावनाटनैः। विटायासोलरटनैर्व्वाल्लभ्यं तस्य लेभिरे।
पुंश्चलीशाल्लवैधेयवालकद्रोणसूनिर्भरा। समभूत्प्रवेशार्हा राजपर्षन्मनस्विनां।
जिष्णुपुत्रे क्षेमगुप्तक्षमाभृद्धन्सपुत्तकः। चारणत्वगुणाकृष्ट. किं न धूर्तैरनर्त्यत।
तस्य कङ्कणवर्षोऽसीत्यभिधानं विधाय ते। मोषितायामकम्पकुर्दोष्णोः कङ्कणवर्षिताम्।
निर्दोषदोषाविष्कारे गन्ववस्तुप्रदर्शने। अधृष्टटक्कराधाने प्रमादः प्रापि तैर्नृपात्।
संलक्ष्य कुचकल्यान्ताः कृत्वा निजवधू पुरः। रागी राजा गृहान्नीतो द्यूते तैर्निर्धन. कृतः।
संभोगाभप्रशैभाग्यक्षतस्पर्धै. परस्परं। सम्भुज्यताभवाम्बकुविशेषमिति चोदितः।
उपभोगं स्वभार्य्याणां निर्लज्जैस्तैः स कारितः। क्व ह्येति च रत्यन्ते पृष्टोऽभीष्टधनप्रदः।
॥ युग्मं ॥ तस्य लालितकेष्वास्तां मूढो सम्भोगढौकने। मावाधारिवरचित्याद्भिचाकौ हरिधूर्मटौ।
नीता नर्मकथाङ्कतां निजवपुर्मुष्णन्ति मानोन्नतिं सन्दूष्य स्वयमङ्गनाः शुचितया त्यक्तं कुचं कुर्व्वते।

सौख्यं घ्नन्ति सुदीर्घमेव न समासत्त्या यदर्थं श्रमः प्रत्याख्याय तदेव वेद्मि न विटैः किं प्रार्थ्यते सेवया ।
यशस्करस्य भूत्वापि सचिवो भट्टफल्गुणः । तस्याभूदनुजीव्यन्ते धिग्भोगाभ्यामवामता ।
फल्गुणस्वामिमुख्यानां प्रतिष्ठानां विधायिनः । तस्योपदेशो भूभर्त्तुः पर्य्यहास्यसकृद्ध्वः ।
गृह्णन् विद्वेषितां हन्तुं टक्करादिबलात्ततः । हट्टोरकः कम्पनेशोदुर्गोष्ठीमध्यगोऽभवत् । १७०
तीक्ष्णाक्षेपे सम्प्रविष्टं हन्तुं सङ्ग्रामडामरं । श्रीजयेन्द्रविहारं स निर्घृणो निरदाहयत् ।
सुगतप्रतिमारीतिं हृत्वा दग्ध्वा ततोऽखिलात् । जरद्देवगृहेभ्यश्च सङ्गृह्य ग्रावसञ्चयं ।
सुरप्रतिष्ठया दार्ढ्यं मूढः स्वयशसो विदन् । नगरापणवीथ्यन्तः क्षेमगौरीश्वरं व्यधात् ।
एकः प्रयात्युपरमं द्रविणं तदीयं हृत्वा परः प्रसभमुद्वहति प्रमोदं ।
नो वेत्ति तत्स्वनिधने परकोषगामि धिग्वासनामसममोहकृतान्धकाराम् ।
त्यागिना क्षेमगुप्तेन भुक्त्यर्थं खशभूभुजे । हृत्वा विहारान्निर्दग्धान् ग्रामाः षट्त्रिंशदर्पिताः । १७५
दुर्गाणां लोहरादीनां शास्ता शतमखोपमः । नृपतिः सिंहराजाख्यस्तस्मै स्वान्तनयां ददौ ।
स तस्यां शाहिदौहित्र्यां दिद्दायां सक्तमानसः । दिद्दाक्षेम इति ख्यातिं ययौ लज्जावहां नृपः ।
मातामहेन भूभर्त्तुर्बध्वास्तस्या व्यधीयत । श्रीभूमिस्वामिनो दत्तप्रसादो भीमकेशवः ।
चन्द्रलेखाभिधां कन्यां राज्ञे दत्तवताभवत् । फल्गुणदारपतिना समं दिद्दा समत्सरा ।
गुरूपदेशः सुमहान् कुन्तविद्याश्रमस्तथा । तस्य निर्वहणाद्धर्षाद्भूभुजो हास्यतां ययौ । १८०
अमोघपतनान् प्रासान्योग्यान्सङ्ग्रामकर्मसु । शृगालमृगयासक्त्या स हि श्लाघ्यानमन्यत ।
तं वृतं वागुरावाहिडोम्बाटविकपेटकैः । पर्य्यटन्तं श्वभिः सार्द्धमपश्यन्सततं जनाः ।
तस्य दामोदरारण्यलल्यानशिमिकादिषु । स्थानेषु क्रोष्टुमृगयारसिकस्य वयोऽगमत् ।
अथ कृष्णचतुर्दश्यां स कुर्व्वन्मृगयां नृपः । ज्वालामपश्यत् क्रोशन्त्याः शृगाल्या निर्गतां मुखात् ।
तदालोकनसञ्जातसन्त्रासाकम्पितस्ततः । लूतामयज्वरेणाभूत्परीतो मृत्युहेतुना । १८५
मर्त्तुं ययौ च वाराहक्षेत्रं यत्र विधायकः । श्रीकण्ठक्षेममठयोराशोहुष्कपुरान्तिके ।
मस्तूरविद्रलाकारलूताच्छिन्नकलेवरः । पौषे चाब्दे चतुस्त्रिंशे नवमेऽब्दे सिते मृतः ।
क्षेमगुप्तात्मजः क्ष्माभृदभिमन्युरभूत्ततः । शिशुर्निस्त्रिंशधर्म्मिण्या दिद्दादेव्यानुपालितः ।
मन्त्रिविग्रहशङ्कान्तमुख्यकर्माधिकारिणः । निःसाध्वसं राजवधूमवन्ध्यशयनां व्यधुः ।
अभिमन्यो क्षितिं रक्षत्यकस्मादेव दारुणः । तुङ्गेश्वरापणोपान्तादुज्जगाम हुताशनः । १९०
वर्धनस्वामिपार्श्वस्थभिक्षुकीपारकावधिः । वेतालसूत्रपातस्थान् स ददाह महागृहान् ।
डोम्बचण्डालसंस्पृष्टभूपसम्पर्कदूषितान् । दग्ध्वा महागृहान्वह्निर्भुवः शुद्धिमिवाकरोत् ।
रक्षिषी क्ष्मापतेर्म्माता स्त्रीस्वभावादिमूढधीः । सारासारविचारेण लोलकर्णी न पस्पृशे ।
राज्ञः सुताऽर्पणाद्बद्धवैरा सख्यो पुरा यतः । पतिव्रतेव सा सार्द्धं फल्गुणेनाग्र्यमन्त्रिणा ।
पत्यौ मृते सपत्नीनां दृष्ट्वानुसरणं ततः । दम्भेनानुमुमूर्षन्तीमनुमेने स तां द्रुतं । १९५

निषिषेधानुबन्धात्तु सानुतापां चितान्तिके। कृपालुर्मरणादेतामामात्यो नरवाहनः।
अतो निसर्गपिशुनो रक्तस्तां मन्युदूषिताम्। फल्गुणाद्राज्यहरणाशङ्कां राज्ञीमजिग्रहत्।
विरागशंसिभिर्लिङ्गैस्तां ज्ञात्वा विषमाशयां। समन्युं साखिलामात्यां फल्गुणोऽप्यास्त शङ्कितः।
स हि सर्वाधिकारस्थः सर्वस्याचिरतोऽभवत्। दीप्यमानोऽधिकं मन्त्रशौर्योत्साहादिभिर्गुणैः।
अस्थीनि क्षेमगुप्तस्य गृहीत्वा जाह्नवीं गते। पुत्त्रे कर्दमराजाख्ये प्रबलैरन्वितो बलैः।
तत्प्रत्यागमपर्यन्तं पर्णोत्से स्थातुमुद्यतः। अविश्वसन्नृपगृहे फल्गुणो वैरिशङ्कितः।
निर्गत्य नगराद्यावत्सभाण्डागारिसैनिकः। काष्ठवाटान्तिकम्प्राप्य तावद्रक्षादिचोदिता।
आकलय्य द्रुतं डिड्डा सनयज्य प्रार्थनादिकं। पृष्ठे प्रत्युत याष्टीकांस्तस्य हन्तुं व्यसर्जयत्।
नवावमानखिन्नः स मिलितानन्तसैनिकः। प्रत्यावृत्त्य ततो मानी वाराहं क्षेत्रमाययौ।
श्रुत्वा समेतसैन्यं तं प्रत्यायातं प्रतापिनं। आस्कन्दशङ्किनी डिड्डा सामात्या समकम्पत।
तस्मिन् क्षेत्रे गतं शान्तं विलप्य स्वामिनं चिरं। वराहपादसविधे तेन शस्त्रं समर्पितं।
द्रोहसम्भावनापापं शस्त्रत्यागेन मन्त्रिणा। स्वस्य सम्मार्जितं तेन राजमातुश्च साध्वसं।
युक्तायुक्तविचारवाह्यमनसः सेवा महद्वैशसं क्रुद्धेऽस्मिन् प्रतिकारकर्मगहनद्रोहापवादावहं।
येन न्यूनगुणे दृशोपकरणीभावोऽपि तस्मै परं कोपः कोऽपि विवेकिनः समुचितः शास्त्राय शस्त्राय वा।
पर्णोत्समेव शनकैः ससैन्ये फल्गुणे गते। विगताध्यापका बाला इवामोदन्त मन्त्रिणः।
योगक्षेमौ चिन्तयन्तौ क्षेमगुप्तवधूरपि। अनिशं मज्जागार स्वयं कण्टकपाटने।
राज्यप्रार्थी पर्वगुप्तो मन्त्रिणौ कोशपायिनौ। अजिग्रहत्करौ पूर्वं पुत्र्यौ च्छोजभूभटौ।
तयोः प्रजातौ तनयौ ख्यातौ महिमपाटलौ। अवर्द्धिषातां यौ राजमन्दिरे राजपुत्रवत्।
तौ तत्रावस्थिताविव तत्कालं राज्यलालसौ। संमन्त्र्य समगंसातामुद्रामैर्हिमकादिभिः।
बलिनौ तावबलया राज्ञयापास्तौ नृपास्पदात्। समन्यू खटहादास्तां यावत्ततगतागतौ।
एकतः पृष्ठतः प्रादान्महिमो निर्गतस्य सा। निर्वासनाय याष्टीकांस्तावत्पृष्टवेक्षता।
॥ युग्मं ॥ शक्तिसेनाभिधानस्य श्वशुरस्य निवेशनं। प्रविवेश स तज्ज्ञात्वा तं ते तत्रापि दुद्रुवुः।
शक्तिसेनेन याष्टीकाः सान्त्विता नाचलन् यदा। तदा भीतस्य जामातुर्व्यक्तं प्रादात्स संश्रयं।
तं लब्धसंश्रयं प्राप डिम्बकोमुत्कलस्तथा। एरमन्तकनामा च परिहासपुराश्रयः।
श्रीमानुदयगुप्ताख्योऽप्यमृताकरनन्दनः। ललितादित्यपुरजा यशोधरमुखास्त्रपि।
एकैकं तं मिथः सैन्यैर्भुवनक्षोभकारिणः। सम्भूय चक्रुर्द्दैराज्यं महिमः पक्षमाश्रिताः।
तस्मिन्महाभये डिड्डापक्षं मन्त्री सबान्धवः। एकएव तु तत्याज नाद्रोही नरवाहनः।
प्रवर्द्धमानपृतना योद्धुं बद्धोद्यमास्ततः। पद्मस्वाम्यन्तिकं प्रापुर्दीप्यमानायुधा द्विषः।
अथ शूरमठे डिड्डा विसृज्यात्मजमाकुला। आपच्छान्तिक्षमांस्तांस्तानुपायान्समचिन्तयत्।
ललितादित्यपुरजान्द्विजान् स्वर्णेन भूरिणा। उपांशु स्वीकृत्य विदधे रिपूणां सहभेदनं।

एकाचेपेऽखिलैः कोपो विधेय इति वादिभिः। महिमः पोतकोशस्तैः मन्त्रिर्देव्या समं क्षतः।
गोष्पदोल्लङ्घने यस्याः शक्तिर्नाज्ञायि केनचित्। वायुपुत्रायितं पंग्व्या तया सप्ताब्धिलङ्घने।

यत्सङ्ग्रहो रत्नमहोदधीनां करोति सर्व्वव्यसनावसानं।
त्यागेन तद्यस्य भवेन्नमोऽस्तु चित्रप्रभावाय धनाय तस्मै।

उल्कोचकाञ्चनादानेऽप्युत्थान्ध्यायन्त्युपक्रियां। दिद्दा यशोधरादिभ्यः कम्पनादि समार्पयत्।
अभिचारं महिमस्य क्षतवत्यामितैर्दिनैः। मण्डले खण्डिताज्ञत्वं दिद्दायाः समजृम्भत।
कदाचित् ढक्कमाख्यस्य शाहेशस्योपरि क्रुधा। सत्रासं वंशजैर्याचां कम्पनाधिपतिर्ददौ।
तद्देशं निम्नगाशैलदुर्गं प्रविशता जवात्। अखण्डशक्तिना तेन बलादग्राहि थक्कनः।
स क्षतप्रणतेस्तस्य करमादाय भूपतेः। अभिषेकाम्बुभिस्सिक्ते श्रीलनाथायनं पुनः।
लब्धप्रवेशः समये तस्मिन् रक्कादिभि. खलै.। कम्पनाधिपतौ राज्ञा विद्वेषोऽग्राहि मूढया।

उर्वीपतेश्च स्फटिकाश्मनश्च शौलोज्झितस्तोहृदयस्य चान्तः।
असन्निधानात्सततस्थितीनामन्योन्यराग. कुरुते प्रवेशं।
स्वचित्तसम्पादिवचोवदन्तो धूर्ता वितन्वन्ति मनः प्रवेशम्।
पृथग्जनानां गणिकावधूनां विटाः प्रभूणामपि गर्भचेटाः।

द्रोग्धायं थक्कनं रचन्धनादायीति पैशुनं। तथ्यमेव तदीयं सा स्वयं वादादमन्यत।
अथ स्ववसतिं प्राप्ते कम्पनेशे जयोर्जिते। थाष्टोकान् व्यसृजद्दिद्दा स्फुटं निर्व्वासनोद्यता।
तदाचेपं समाकर्ण्य स्मरन्तः कोशवेदिनं। ते हिम्मकेरसत्ताद्याः पूर्व्ववद्विक्रियां ययुः।
नरवाहनमुख्यास्तु राज्ञोपधं न तत्यजुः। विभेदं पूर्व्ववत्प्राप देवं निजबलं पुनः।
प्रविष्टेषु ततः कोपात्पुरं शुभधरादिषु। भट्टारकामठे दिद्दा भूयः पुत्रं व्यसर्जयत्।
दत्तार्गले नृपगृहे स्थितां तां दैवमोहिताः। तं तदैव विना पुत्रं विमूढा नोदपाटयन्।
राजन्याः सन्धघटे लोकः परस्मिन्नेव वासरे। यद्दलेन तदा स्थैर्यं सा किञ्चित्समदर्शयत्।
जयाभट्टारिकापार्श्वाद्यावच्छूरमठान्तिकं। व्याप्य स्थितैर्द्विपत्सैन्यैरथ प्रवृत्ते रणं।
राजधानीं राजसैन्ये प्रविष्टे चाभविद्रुते। सिंहद्वारे घटाबन्धमेकाङ्गाः समदर्शयन्।
शरीरनिरपेक्षास्ते भीतं संस्तभ्य तद्दलं। अधावन् विद्विषां सैन्यं चेलुः केचिच्च शत्रवः।
तस्मिन्नवसरे राजकुलभट्टः समाश्रयो। तूर्य्यघोषैर्द्विषां सैन्यं भिन्दन्नानन्दयन्निजं।
तस्मिन् प्राप्ते द्विषां सैन्यं विननाश विनश्वरं। न द्रोहं विनयं जातु सहन्ते शस्त्रदेवताः।
लोटयन्यायमान् सन्धान् स्फोटयत्युपलानिति। यः ख्यातिमावहत्तस्या हिम्मको भीमविक्रमः।
सन्धापिना राजकुलभट्टदेहार्द्धपातिना। चर्ममात्रं स तु चोट कंकटस्यातिसङ्कटे।
विशोध्य तदसध्याय्यं सैन्ये दैन्यं समाश्रिते। अघानि हिम्मकोयोधैरवाष्टम्भि यशोधरः।
गदाघातैरीन् स्फुरन् मंक्षु यशेरमत्तकः क्षणं। स भग्नासिर्युतो बाहाब्जोवयाहमन्दघ्नत।

नाम्ना तैरेय्यताधातुं यः श्रीमान् राजवान्धवः। जगामोदयगुप्तः स क्वापि त्यक्त्वा महाहवं।
इत्थं लब्धजया राज्ञी तत्क्षणाद्ग्रहीद्रुषा। यशोधरं शुभधरं मुकुलञ्च सबान्धवं।
काश्मीरिकाणां यः श्राद्धशुल्कोच्छित्त्या गयान्तरे। सोऽप्येरमन्तकः शूरः परिहासपुराश्रयः।
बद्ध्वा महाशिलां कण्ठे वितस्ताम्भसि पातितः। स्वदुर्नयफलं देव्याः सकोपेनानुभावितः।
ये सप्तसप्ततादर्वाद्गोपालनृपात्पुरा। अभिमन्युं यावदासन् षोडशानां महीभुजां।
वर्षषष्टिं प्रतापायुः श्रीहराद्रोहहृत्तयः। ते क्षिप्रं मन्त्रिणः सर्व्वे सान्वयाः सहानुगाः।
भीमभ्रूभङ्गमात्रेण दिद्दादेव्या सकोपया। आसन्निःशेषतां नीता दुर्गयेव महासुराः।
॥ तिलकं ॥ अभवन्निहिता राज्ञा तानुत्पाट्य मदोद्धतान्। रक्कादयः कम्पनादिकर्मस्थानाधिकारिणः।
इत्थं मन्त्रिप्रकाण्डः स रण्डामाखण्डलोपमां। अखण्डमण्डलां चक्रे निर्द्रोहो नरवाहनः।
राज्ञी कृतज्ञभावेन सापि मन्त्रिसभान्तरे। तमाजुहाव निर्द्रोहं स्वयं राजानकाख्यया।
सुप्ते सुष्वाप निष्पन्नभोजनेऽभिन्नभुक् सा। हृष्टे जहर्ष निर्व्विन्ने निर्विवेदानुकूल्यतः।
आरोग्यान्वेषणं शिक्षाप्रार्थनां गृहवर्त्तिनः। सात्मवस्तुविसर्गांश्च नाकृत्वा तस्य पिप्रिये।
अभूतां युग्यवाहस्य कुप्यनाम्नः सुतौ पुरा। यौ सिन्धुभुय्यौ तज्ज्यायान् सिंधुर्लावितकः किल।
पर्व्वगुप्तगृहे भूत्वा गञ्जाध्यक्षे स्थिते क्रमात्। लब्ध्वा गञ्जाधिकारित्वं तस्या राज्ञ्याः प्रियोऽभवत्।
रुद्ध्वा तयैव गञ्जेशो नवायामविधायकः। कर्मस्थानस्य निर्माता सिन्धुगञ्जाभिधस्य यः।
प्रायेणा हृतराज्यस्ते वर्तते नरवाहनः। इति नैषधियं राज्ञीं सोऽभ्यधत्त दुराशयः।
सा तथेत्यब्रवीद्यावत्तावत्प्रेम्णा स जातुचित्। अस्वो तां प्रार्थयामास भोक्तुं निजगृहागमं।
सा सानुगान्तत्र यातां भुवन्त्यामेव वक्ष्यति। इत्युक्त्वा सिन्धुनापृच्छत्तत्कर्त्तव्यं भयाकुला।
अनुक्तैव प्रचलिता राजधानीमलक्षिता। स्त्रीधर्मिण्यस्मि जातेति पश्चादेतां व्यसर्जयत्।
संप्रवृत्तोपचारायां गतायां तत्पयात्तया। राज्ञां नाश्ममात्यस्य मौतिसम्बिध सा ययौ।
तयोस्ततः प्रभृत्येव निष्कृष्टस्नेहयोः कृतम्। चाक्रिकैरतिच्छद्रत्वे तिलपिण्याकयोरिव।
कुलिशं सर्व्वलोहानामश्मनां शैलमेतवः। अभेद्याः प्रतिभाव्यन्ते न किञ्चिदसतां पुनः।
ये बालादपि संमूढाः प्राज्ञाः सुरगुरोरपि। तेषां न विद्मः किन्तावन्निर्माणपरमाणवः।
विद्यासेविज्झितधीः शिशून् कलयते काकोऽन्यदीयान्निजान् हंसः क्षीरपयोविभागकुशलस्तस्सत्यमारोहनात्।
लोकाविचक्षणतीक्ष्णधीः खलगिरं जानाति सत्यां नृपो धिग्विदग्ध्यविमुग्धताव्यतिकरस्पृष्टं विधानं विधेः।
मूढाचरणहीना सा श्रुतिवाह्यतया तया। वैधेयविप्रप्रकृतिरिव मायादिगर्शनां।
उद्वेजितस्तया शश्वत्तया स नरवाहनः। यया विमाननोत्तप्तः स्वयं तत्याज जीवितं।
प्रकुप्यत्यप्रतीकार्य्यं स्वतेजस्तप्तचेतसां। शरणं मरणं त्यक्त्वा किमिवान्यद्यशोर्थिनां।
शशिहीनेव रजनी सत्यत्यक्तेव भारती। विरराज न राजश्रीर्नरवाहनवर्जिता।
सा क्रौर्य्याभ्यासविषमा हन्तुं विततविक्रमान्। संग्रामडामरमुखान् समीपस्थानचिन्तयत्।

निजमुत्तरघोषं ते तद्भयेन विनिर्गताः । कय्यकद्वारपत्यादीन् हतारब्धीन् व्यपादयन् ।
उत्पिञ्जभीतया राज्ञ्या त्यक्ता परिभवत्रपा । ते यत्नात्समधया न मानः स्वार्थार्थिनां कुतः ।
स्थानेश्वरादिभिर्मुख्यैर्डामरैरितरैः समम् । ते भीताः पुरतस्तस्याः पुनरेत्य जजृम्भिरे ।
अथ तद्भीतया राज्ञ्या रक्षे समयनागते । आनीतः फल्गुणो भूयो वीरार्थिन्या निजान्तिकं ।
राजकार्य्याणि कुर्व्वाणः स भूयः शस्त्रमग्रहीत् । न्यस्तशस्त्रोऽपि यत्सत्यं दुस्त्यजा भोगवासना ।
महिमा राजपुर्य्यादिजयिनस्तस्य पश्चिमः । अद्भुतो वृद्धवन्ध्यया अरुद्धद्रवाभवत् ।
अभूदुदयराजस्य देवीभ्रातुरतिप्रियः । यः सहायेऽक्षपटले जयगुप्ताभिधः सुधीः ।
अन्येऽधिकारिणस्तेन सहिता. क्रूरवृत्तयः । कश्मीरेषु व्यधुर्लुण्ठं दुष्कृतैस्तदुपार्जितैः ।
दौःशील्यभाजो मातुश्च पाप्मभिर्व्विधुरीकृतः । अभिमन्युः क्षणे तस्मिन् क्षयरोगेण पस्पृशे ।
पण्डितः पुण्डरीकाक्षो विद्युत्पुत्रैरुपस्कृतः । कृतश्रुतः स वैदुष्यतारुण्याभ्यां विदिद्युते ।
तया विशुद्धप्रकृतेस्तस्य दुष्कृतसङ्गमः । शोषाधायी शिरीषस्य रवितापइवाभवत् ।
वर्धमानः प्रजाचन्द्रस्तृतीयस्यां स कार्तिके । शुक्लेऽष्टाचत्वारिंशाब्दे ययौ नियतिराज्ञया ।
तत्सुतो नन्दिगुप्तस्तु बालश्चक्रे निजासने । हृद्रूढस्तनयशोकस्तु दिद्दाया हृदये पदं ।
सा शोकपिहितक्रौर्य्या तस्थौ प्रशमशीतला । रविरश्मिशलाकेव ध्वान्तच्छन्नाप्यवैकृता ।
ततः सम्पत्प्रसूताभिस्तस्या धर्मप्रवृत्तिभिः । कुकर्मभिरुपोढापि लक्ष्मीः प्राप्ता पवित्रतां ।
नगराधिपतिर्भुय्यः सिन्धुभ्राता शुभाशयः । तदीयधर्मचर्चायां बभूव परिपोषकः ।
सा तेनोत्पादितानर्घजनरागागतैनसा । ततः सम्पत्यभूद्देवी सर्व्वलोकस्य सम्मता ।
राज्ञः समचितः सत्यन्दुःप्रापो लुप्तचण्डिमा । कुर्य्यात्कः सुखसेव्यत्वं हेमन्तइव भास्वतः ।
सा निर्म्माती शिपद्मस्य सूनोः सुकृतवृद्धये । अभिमन्युस्वामिनोऽभूदभिमन्युपुरस्य च ।
अथ दिद्दापुरोपेतो दिद्दास्वामी तया कृतः । मठश्च मध्यदेशीयलाटसौडोचसंश्रयः ।
भर्त्तुः कङ्कणवर्षस्य पुण्योत्कर्षाभिवृद्धये । चकार कङ्कणपुरं रमणी स्वर्णवर्षिणी ।
श्वेतशैलमयं चान्यं सा दिद्दा स्वामिनं व्यधात् । धवलं चरणोद्भूतगङ्गाम्भःशतनैरिव ।
चक्रे काश्मीरिकाणाञ्च दैशिकानां समाश्रयं । तयाप्युच्चचतुःशालो विहारश्चारुसम्पदा ।
श्रीसिंहस्वामिनं नाम्ना सिंहराजस्य सा पितुः । मठञ्च विदधे स्थित्यै दैशिकानां द्विजन्मनां ।
मठप्रतिष्ठावैकुण्ठनिर्म्माणाद्यैः स्वकर्म्मभिः । तयातिपत्रनयकृते वितस्तासिन्धुसङ्गमः ।
तेषु तेषु प्रदेशेषु किमुक्तैर्वृरिभिः शुभैः । सा प्रतिष्ठा व्यरच्ययच्चतुःषष्टिमिति श्रुतिः ।
जीर्णोद्धाराः कृता देव्या नुष्टप्राकारमण्डलाः । प्रायः पुण्यगृहाः सर्व्वे शिखावसाहृताः कृताः ।
क्रीडाचंक्रमणे गच्छासंग्या वियदवाहिनी । वल्गाभिधा वैवधिकी वल्गामठमकारयत् ।
[illegible]मीमभागपि तितिः मतः स्वकुल्याशने यातायात् पसते शिष्यो धनपवीमाघायमोऽप्यघं ।
विश्वासाम्रनधारिणः प्रकटितध्यानोऽपि भुङ्क्ते बकः सत्कर्माचरणेऽपि दोषविहितौ न प्रत्ययः पापिनां ।

वर्षिणी वर्षमात्रेण शान्तशोका बभूव सा। भोगोत्सुकार्भके तस्मिन्नरि व्यभिचारकृत्। २१०
वर्षएकान्नपञ्चाशे नीतः पक्षे सिते चयं। स मार्गशीर्षद्वादश्यामसमार्गव्ययया तया।
पौत्त्रस्त्रिभुवनो नाम मार्गशीर्षे सितेऽहनि। पञ्चमेऽप्येकपञ्चाशे वर्षे तद्वत्तया हतः।
अथ मृत्युपथे राज्ञ्यनास्थि स्वैरं निवेशितः। क्रूरया चरमः पौत्त्रो भीमगुप्ताभिधस्तया।
तस्मिन्नवसरे वृद्धः फल्गुणोऽपि व्यपद्यत। निगूढकौर्यदोःशील्या दिद्दा यद्वैरवादभूत्।
बभूव साथ सुस्पष्टदुष्टचेष्टाशतोत्कटा। भ्रष्टवक्त्रपटा मत्तदन्तिमूर्तिरिवोत्कटा। २१५
महाभिजनजातानामपि हा धिङ्निसर्गतः। सरितामिव नारीणां वृत्तिर्निम्नानुसारिणी।
स्रोतोधिराज्यमधिगम्य विराजमाना सिन्धोः प्रसूय कमलात्पयोनिकेते।
जाते सरस्यविरतं जलजे प्रसक्ता नार्यो महाभिजनजा अपि नीचभे ग्याः।
खशस्य वल्दिवासाख्यपर्णोत्सग्रामजन्मनः। वाणस्य सूनुस्तुङ्गाख्योऽविशन्महिषपालकः।
प्रविष्टो जातु काश्मीरांल्लेखहारककर्मणा। सुगन्धिसीहप्रकटनागादृ्यिकृपणमुखैः।
पञ्चभिर्भ्रातृभिः सार्धं सन्धिविग्रहकार्मिके। देव्यादृग्गोचरं यातो हृदयावर्ज्जकोऽभवत्। २२०
॥ तिलकं ॥ रहःप्रवेशितो दूत्या समाव्यर्थबलाद्युवा। सम्भुक्तभूरिजारायाअपि तस्याः प्रियोऽभवत्।
तुङ्गानुरागिणी राज्ञी पापा लज्जोज्झिता ततः। रसदानेन वैमुख्यभाजं भृत्यमघातयत्।
धिङ्निर्विचारान् कुपतीन् येषां विषमचेतसां। फलशून्या स्तुतिस्तोषे दोषे प्राणधनचयः।
रक्कोदेवकलशोवेलावित्तः कृतस्तया। भृत्याधिकारे कौद्दिन्यामाचरन्निस्तपोविटः।
येऽपि कर्दमराजाद्या वीरादारादिनायकाः। तेऽपि कौटिल्यमभजन्नेषां जननैव का। २२५
चतुःपञ्चानि वर्षाणि तिष्ठन्नृपस्टहे शिशुः। भीमगुप्तोऽभवद्यावत्किञ्चित्प्रौढीभवन्मतिः।
राज्यव्यवस्था यावच्च पितामह्याश्च वृत्तयः। दुःखिताः प्रत्यभायन्त सर्वाण्यास्तस्य चेतसि।
अङ्गशीलविहीनाया निर्घृणाया निसर्गतः। तावन्नेयधियस्तस्याः सचिन्त्यः समपद्यत।
अभिमन्युवधूस्तं हि चक्रे गूढप्रवेशितं। महाभिजनजन्मुत्वं तस्मात्सोऽभूत्तथाविधः।
सा देवकलशेनाथ दत्तमन्त्रा विशङ्किता। त्रपोज्झिता स्पष्टमेव भीमगुप्तमबन्धयत्। २३०
निगूढे नन्दिगुप्तादिद्रोहे लोकस्य योऽभवत्। सन्देहः स तया तेन व्यक्तकृत्येन वारितः।
ताभिस्ताभिर्यातनाभिर्भीमगुप्तं निपात्य सा। षट्पञ्चाशे ऽभवद्वर्षे स्वयं क्रान्तनृपासना।
प्रवृद्धरागया राज्ञ्या दत्तोद्रेको दिने दिने। सर्वाधिकारी तुङ्गोऽथ बभूवाधारिताखिलः।
सम्भावकेन तुङ्गेन सीदिताःपूर्व्वमन्त्रिणः। राज्यविप्लवमाधातुमयतन्त विरागिणः।
तेऽथ संमन्त्र्य काश्मीरानानिन्युः क्रूरपौरुषं। उयं विग्रहराजाख्यं दिद्दाभ्रातुः सुतं नृपं। २३५
गुण्ड्याग्रहारान् स प्राप्तो विधातुं राज्यविप्लवं। धीमान् प्रायोपवेशाय द्रुतं प्रावेशयद्द्विजान्।
विहितैक्येषु विप्रेषु लोकाः सर्व्वेऽपि विप्लुतः। असियेयान्वहं तुङ्गं तत्र तत्र जिघांसया।
कस्मिंश्चित्पिहितद्वारो तुङ्गं प्रहाय वेश्मनि। दिनानि कतिचिद्दिद्दा तस्यावास्त्रं स्वर्गहिनी।

तयो स्वर्णप्रदानेन सुमनोमत्तकादयः। ब्राह्मणाः समगृह्णन्त ततः प्रायोन्यवर्त्तत।
एवन्तस्मिन्महाक्षेपे तया दानेन वारिते। ययौ विग्रहराजः स भग्नशक्तिर्यथागतं।
अथ दार्ढ्यं समासाद्य तुङ्गाद्याः प्रभविष्णवः। शनैः कर्दमराजादीननुर्व्विहितविप्लवान्।
सुलक्कनो रङ्गसूनुस्तथान्ये मुख्यमन्त्रिणः। दृष्टैर्निर्व्वासितादेशात्तुष्टैस्तैः सम्प्रवेशिताः।
प्रवर्द्धमानवैरेण गूढदूतैर्विसर्जितैः। प्रायम्विग्रहराजेन ब्राह्मणाः कारिताः पुनः।
उत्कोचादित्सया विप्रा भूयः प्रायविधायिनः। लब्धस्थैर्य्येण तुङ्गेन सन्निपत्यापहस्तिताः।
तेषां मध्ये वसन् गूढमादित्याख्यः पलायितः। हतो विग्रहराजस्य प्रियः कटकवारिकः।
प्रस्खलतः प्रतीहारो वत्सराजाभिधः पुनः। न्यङ्कोतकादिभिर्धावञ्जीवग्राहमगृह्यत।
ते स्वर्णग्राहिणोविप्राः सुमनोमत्तकादयः। सर्व्वेऽपि बद्धास्तुङ्गेन कारागारं प्रवेशिताः।
अथ फल्गुणनाशेन दृप्ते राजपुरीपतौ। तां प्रत्यारब्धिरभवत्क्रुध्यतां सर्व्वमन्त्रिणां।
निपत्य सङ्कटे वीरः पृथ्वीपालाभिधस्ततः। चक्रे राजपुरीराजकाश्मीरिकबलक्षयम्।
शिपाटको हंसराजोविपन्नौ तत्र मन्त्रिणौ। चन्द्राद्रेर्दुर्गतिन्दृष्ट्वा मरणं यत्र भेषजं।
अथान्येन पथा कस्मात्तुङ्गः सार्धं सहोदरैः। कृत्स्नां राजपुरीं वीरः प्रविश्य सहसादहत्।
ननाश तेनोपायेन पृथ्वीपालः सपार्थिवः। शेषाणां मन्त्रिणां शैन्यं प्राप मुक्तिश्च सङ्कटात्।
अवशः सन्स भूपालस्तुङ्गाय प्रददौ करं। एवं कृतं ततस्तेन नष्टस्यार्थस्य योजनं।
प्रविश्यश्नगरं तुङ्गस्ततः स्वीकृतकंपनः। चकार डामरग्रामसंहारं सिंहविक्रमः।
दिद्दाप्युदयराजस्य भ्रातुः पुत्रं परीक्षितं। चक्रे संग्रामराजाख्यं युवराजमशङ्किता।
सा हि सर्व्वान् शिशुप्रायान् पुरोभ्रातृसुतान् स्थितान्। परीक्षितुं मुमोचाग्रे पाले वत फलावलिं।
भक्तः कियन्ति कः प्राप्तुं फलान्यचेतिवादिनी। साभवद्राजपुत्राणां तेषां कलहकारणं।
गृहीतान्यफलांस्तत्र प्रहारांस्तान्ददर्श च। सङ्ग्रामराजं तस्त्वन्यफलभाजमविक्षतं।
अनन्तफलसम्प्राप्तावक्षतत्वे च कारणं। सविस्मयं तया पृष्टस्स तामेवं तदाब्रवीत्।
अन्योन्यकलहव्यग्रानेतान् कृत्वा पृथग्मया। समवाप्तं फलान्यस्मिन्नचाभूवम्परिक्षतः।
व्यसने संप्रविश्यान्यान् स्थितानामप्रमादिनां। न काः क्लेशविहीनानां घटन्ते स्वार्थसिद्धयः।
श्रुत्वेति तस्य सा वाचमप्रमत्तत्वसूचिकां। भीरुर्भीरुस्वभावेन राज्येऽमन्यत योग्यतां।
शूरस्य सभ्यं शौर्य्येण भीरोर्भीरुतया यथा। कार्य्यं हि प्रतिभात्यन्तर्न भवेच्च तदन्यथा।
स्पष्टं वस्तुविभक्तमपि भवन्तीतमार्गेऽपि कपीनां सेचां शुद्धो सलिलमनलयाशिशैवेचिणकानां।
शक्ताभावा विदधति यथा भाविनः कार्य्यसिद्धिं तत्त्वन्तेषां क्वचन सहजं वस्तु नेनास्ति किञ्चित्।
गन्धामिरायशीत्यब्दं ग्रस्माद्भाद्राष्टमीदिने। देव्यां दिवं प्रयातायां युवराजोऽभवन्नृपः।
श्रीपमन्येन भूपालवंश्यानां भुवनाद्भुतः। तृतीयः परिवर्त्तोऽयं वर्त्ततेमुत्र मण्डले।

निनष्टकण्टककुल वसुसम्पदाढ्यं आशातवाहकुलमाप महीतलेऽस्मिन्।
दावाग्निदग्धकुतरौ जलदाम्बुसिक्ते चूतप्ररोह इव केलिवने मद्दिम्।
अथ स मृदुतयान्तर्गूढधैर्य्यानुभावः सुखमवनिमशेषां दोष्णि संग्रामराजः।
विषकुलनिभशेमानिह्नुतप्राणसारः फणकुल उरगाणामोमितिव न्यधत्त।
इति श्रीकाश्मीरिकमहामात्यचम्पकप्रभुसूनोः कल्हणस्य कृतौ राजतरङ्गिण्यां षष्ठस्तरङ्गः॥
अत्र वर्षचतुर्ष्वष्टमासेऽप्यथ दिनेषु च। अष्टस्वभूवन् भूपाला इव भूभोगभोगिनः। १०

## ॥ अथ सप्तमस्तरङ्गः ॥



मातुस्तेऽजनि निर्मिते पितृकुले श्लाघ्या तनुर्वेधसा त्वं सन्ध्याहितसन्निधिर्मम जपारक्तेऽधरे खेलसि।
सन्ध्यावन्दनसाभ्यसूयगिरिजास्तुत्येद्दृशैर्व्वाक्छलैर्यः सन्ध्यामपि वन्दतेस्म स जगत्प्रीणातु गौरीश्वरः।
क्षमां क्षमापतिर्विभिन्नमनसा च भुजेन च। गाम्भीर्य्येण च शक्त्या च सोऽजयद्वाहिनीपतीन्।
जज्ञे राज्ञः क्षये भङ्गोऽयैस्तुङ्गस्य तदाखिलैः। दिनश्रीविगमे सन्ध्याप्रसङ्गस्येव रागिणः।
तत्तत्प्रतिभटाटोपत्रोटनात्प्रत्युतास्य तैः। उदयो ददृशे श्वश्वद्गतिं कोवेत्ति वेधसः।
॥ युग्मम् ॥ नृपेण जातशान्तेय शूरः शक्तिसमन्वितः। सर्व्वाधिकारयोग्योऽगात्तदा चन्द्राकरः क्षयम्।
अन्ये भीमतिकाग्रामदिविरम्योरुसम्पदः। पुण्याकरस्य तनयाः शूरा शान्तिं प्रपेदिरे।
समर्थमन्त्रिविरहादनिच्छन्नपि वेधसा। निन्ये गत्यन्तरत्यक्तस्तुङ्गपक्षं क्षमापतिः।
संग्रामराजतुङ्गादीन्देवी कोशमपाययत्। मुमूर्षन्ती पुरा स्वातुमद्रोहेणेतरेतरम्।
क्षेमासहो महीपालस्ततः कार्य्यवशादपि। तुङ्गन्यस्तप्रजाकार्य्यो भोजाभ्यासालसोऽभवत्।
पर्य्याप्तं तस्य भीरुत्वं कियदन्यत्प्रकाश्यतां। असमैर्य्योनसम्बन्धैश्चक्षमे यशसः क्षतिम्।
साहायकार्थी यत्प्रादाच्छ्रीशार्य्यादिमते सुताम्। दिद्दामठाधिपतये प्रेमनाम्ने सलोठिकाम्।
क्व लोकोद्वहनोऽस्ट्टभूभृद्योग्या नृपात्मजा। प्रतिग्रहजलक्लिन्नपाणिः क्वाल्पमना द्विजः।
अथ तुङ्गादिभङ्गाय प्रायं ब्राह्मणमन्त्रिणः। परिहासपुरे विप्रपारिषद्यानकारयन्।
विप्रमन्त्रिमतैक्येन कृतो राज्ञः सविस्रः। दुःसहापत्रमानाग्निसमागमसमोऽभवत्।
राज्ञोऽप्युत्पाटने सम्यैः कथंचित्प्रार्थितो द्विजैः। मतिः क्षान्तिचरमाथे तुङ्गनिःसारणे कृता।
राज्ञस्तुङ्गादिभिर्यैतचावक्तेभ्यः प्रतिश्रुतम्। अन्यत्प्रार्थयितुं सम्प्राप्तावक्ते शठपुङ्गवः।
तुङ्गास्कन्देन विप्रोऽयं योग्यतस्तङ्कुरे वयम्। तं निर्दहामहत्युक्ता शवः कोऽप्यरघट्टतः।
नेरहृत्य यदानीतः शठैस्तुङ्गगृहान्प्रति। क्षेमहोमाय विहिताव्याहत्योत्थापिताभवत्।

तया प्रतीपपातिन्या निःशौचानां द्विजन्मनाम्। अकस्मान्निरगाच्छस्त्रमिनाशायोत्थिते कलौ।
तिलकं॥ ततः पलायिता विप्रा यत्तेषां मन्त्रदोऽभवत्। निगूढं राजकलशस्तद्वेश्म प्राविशद्भयात्।
स व्यक्तीभूतकौटिल्यः सङ्ग्रामं सुचिरं व्यधात्। अपद्वारैस्तु ते विप्राः पलाय्य स्वगृहान् ययुः।
विजिते राजकलशे समकार्य्या द्विजातयः। मन्त्रिणः श्रीधरसुताः सप्तागत्य व्यधुर्व्वधम्।
ते कृत्वा सुमहत्कर्म समाप्तिं समरे गताः। निर्भिद्य मण्डलं सप्त सप्तसप्तेर्द्रुतं ययुः।
जितः सुगन्धिसीहेन तेषु शान्तेषु संयुगे। बद्ध्वाथ राजकलशस्तुङ्गेनानायितो गृहम्।
नीयमानोऽधिरोप्याशु स्कन्दमार्गेषु विच्युतः। तुङ्गस्य युग्यवाहैः स नर्त्तितोपहृतायुधः।
अन्योऽपि भूतिकलशो नाम मन्त्री विनिर्जितः। सुतेन राजकाख्येन सह शूरमठं ययौ।
क्रमात्सुगन्धिसीहाद्यैर्मुक्ता करुणया ततः। स पुत्त्रः सेवमानाश्रितप्रोदेशान्तरं ययौ।
परिहासपुरादेवं जातोयोद्देशविप्लवः। स दैवयोगात्तुङ्गस्य शुभाय प्रत्युताभवत्।
ततः प्रसादिते राज्ञि गुणदेवेन मन्त्रिणा। आययौ भूतिकलशः कृतगङ्गानिमज्जनः।
पुनर्नृपगृहे तस्मिन् किञ्चिल्लब्धपदे शनैः। तुङ्गं निहन्तुं राज्ञैनं गूढं दूताः प्रयोजिताः।
ज्ञातवार्तेन तुङ्गेन तस्मिन्नर्थे प्रकाशिते। स्वपुत्त्रो भूतिकलशो राज्ञा निर्वासितः पुनः।
अवष्टम्भं मनाक् लेभे चन्द्राकरसुतः शनैः। योमथ्यामत्तक. सोऽपि तस्मिन् काले व्यपद्यत।
भूत्वा किञ्चित् क्षणं भूभृत्कन्यासम्भोगभाजनम्। राजोपकारकृच्छ्रीमान् प्रेमापि प्रमयं ययौ।
विवेदिरेऽन्ये गङ्गाद्याः सर्व्वेऽपि नृपतिप्रियाः। अवाशिष्यत भोगाय तुङ्गः सम्भावकः परम्।
इति योयो हि वृत्तान्तस्तस्य नाशाय शंकितः। स स दैवानुकूल्येन प्रत्युतोद्रेचकोऽभवत्।
कालक्रमत्रुटितसंश्रयभूः स्वमूलमात्राश्रयी तटतरुः सरितोऽम्बुपूरैः।
...धैः शंक्यते निपततीति वितीर्णदृष्टिस्तैरेव तस्य हि भवेत् स्थितिभूमिदार्ढ्यम्।
नीत्युज्ज्वलं व्यवहरन् प्रजाराधनतत्परः। प्राक् पुण्यसङ्क्षयात्तुङ्गः शनैरासीत् स्खलन्मतिः।
यत्स्वभाग्यापहाराय हीनजन्मानमाददे। साहायकाय कायस्थं क्षुद्रं भद्रेश्वराभिधम्।
विट्वाणिज्यं सौनिकत्वं काष्ठविक्रयितादि च। आरामिकस्य यस्यासीत्कृत्यं वंशक्रमोचितम्।
कण्ठलोठद्वृष्टपृष्ठोऽथ भाजनार्थमवालगत्। अल्पामर्षी भाण्डवाही यश्च पद्मानियोगिना।
अनन्तराजकार्य्यादिचिन्ताश्रान्तो विधाय तम्। तुङ्गः सहायमावुद्ध संसर्गाज्जायसङ्क्षयम्।
धार्म्मिकं तेन धर्म्मोल्कं विनिवार्य्यार्य्यचेतसम्। गृहकृत्याधिकारे स दुष्कृती विनिवेशितः।
देवगोब्राह्मणानाथातिथिराजोपजीविनाम्। अकालमृत्युर्व्विदधे वृत्तिच्छेदं स दुर्म्मतिः।
...जीवोऽपि पुष्णाति क्रूरः कापालिको निजान्। भद्रेश्वरस्तु पापोऽभून्निजानामपि जीवहृत
...ेन चैवं सर्व्वत्र कृते भद्रेश्वरे प्रभौ। सुगन्धिसीहः प्रययावाषाढे मासि सङ्क्षयम्।
...लोकं गते तस्मिन् सर्व्वभारसहेऽनुजे। तुङ्गश्छिन्नोत्तमाङ्गत्वं सदैन्योऽमन्यतात्मनः।
त्रिलोचनपालस्य शाहेः साहायकार्थितः। देशान्ततो मार्गशीर्षे मासि तं व्यसृजन्नृपः।

राजपुत्त्रमहामात्यसामन्तादि निरन्तरम्। सैन्यं तमन्वगाद्भूरि भुवनेक्षोभनक्षमम्।
अथागतेन स तथा शाहिना कृतसत्क्रियः। पञ्चषाणि दिनान्यासीत्तद्देशे स यदोन्मदः।
प्रजागरचरन्यासशस्त्राभ्यासादिवासनाः। अभियोगोचिताः शाहिरपश्यंस्तं तदाब्रवीत्।
युग्मं॥ तुरुष्कसमरे यावन्न यूयं कृतबुद्धय। आलस्यविश्वासास्तावत्तिष्ठतास्मिन् गिरेस्तटे।
एवं त्रिलोचनेनोक्तं सोऽग्रहीन्न हितं वचः। तस्थौ परं समं सैन्यैस्त्रैकादाहवोत्सुकः।
हम्मीरेण तदा सैन्यञ्जिज्ञासार्थं विसर्ज्जितम्। तौषीपारे मितप्रायैस्तत्सीर्ल्वावधीद्दलैः।
ततस्तमाहितोत्सेकमपि शाहिः पुनः पुनः। जगादाहवतत्त्वज्ञः पूर्व्वोक्तामेव संविदम्।
स तस्य नाग्रहीद्वाक्यं रणोत्सुक्यवशम्वदः। प्रत्यासन्नविनाशानामुपदेशो निरर्थकः।
प्रातस्ततः स्वयं क्रोधात्तुरुष्कानीकनायकः। सर्व्वाभिसारेणाक्रच्छ्रच्छलाहवविदारदः।
अथ तुङ्गस्य कटकं सहसा भङ्गमाययौ। शाहिसैन्यं परं संख्ये ददृशे विचरत्क्षणम्।
शाहिसैन्ये गतेऽप्यासीज्जयसिंहः स्फुरन् रणे। श्रीवर्धनश्च सङ्ग्रामे विभ्रमार्कश्च डामरः।
घोरे तुरङ्गतुमुले प्रहरद्भिस्त्रिभिर्भटैः। वीरव्रते निजे देशे रचितस्तैर्यशश्चयः।
कस्त्रिलोचनपालस्य माहात्म्यं वक्तुमीश्वरः। निःसंख्या अपि यं संख्ये न जेतुमशकन् द्विषः।
शुशुभे रुधिरासारवर्षी युद्धे त्रिलोचनः। कल्पान्तदहनज्योतिर्व्विसारीव त्रिलोचनः।
स योधयित्वा सङ्ग्रामे कोटीः कङ्कटवाहिनाम्। एकाकी कार्य्यमर्मज्ञो निर्ययौ रिपुसङ्कटात्
गते त्रिलोचने दूरमशेषं रिपुमण्डलम्। प्रचण्डचण्डालचमूशलभस्कायमानशे।
सम्प्राप्तविजयोऽप्यासीन्न हम्मीरः समुच्छ्वसन्। श्रीत्रिलोचनपालस्य स्मरन् शौर्य्यममानुषम्
त्रिलोचनोऽपि संश्रित्य दान्तिकं स्वपदाच्युतः। सयत्नोऽभून्महोत्साहः प्रत्याहर्त्तुं जयश्रियम्।
यथा नामापि निर्नष्टं शीघ्रं शाहिश्रियस्तथा। इह प्रासङ्गिकत्वेन वर्णितं न सविस्तरम्।
स्वप्नेऽपि यदसाध्यं यत्र भग्ना मनोरथाः। हेलया तद्दिधतो नासाध्यं विद्यते विधेः।
दर्पदनिरपुत्त्रे राज्ञः शङ्करवर्मणः। वृत्तान्तवर्णने पूर्व्वममुत्र प्रकटीकृतम्।
स शाहिदेशः सामात्यः सभृत्यपरिच्छदः। किमभूत्किमु वा नाभूदिति शङ्क्यतेऽधुना।
अवतारं तुरुष्काणां दत्वा क्षेपे महीतले। प्राप्तभङ्गस्ततस्तुङ्गः स्वदेशं प्राविशच्छनैः।
श्मशानायेव तुङ्गाय लब्धभङ्गाय भूपतिः। न तत्रागमि चुक्रोध सधैर्य्यमदृशाशयः।
किन्तु खेदाय समभूत्तुङ्गाय तत्समीशितुः। परायत्तमशाचित्तं पयोरप्युपतप्यते।
तुङ्गात्मजोऽपि कन्दर्पसिंहः श्रीशौर्य्यगर्व्वितः। राज्योचितं व्यवहरंस्तस्मादेगर्व्वोऽभवत्।
दृढलेखः क्षणे तस्मिन्नुद्रागेयो स भूभुजाम्। भ्राता विग्रहराजोऽपि भैरयत्तुङ्गमारणे।
पैशाचिदिष्ठरणाद्राज्ञा चिरं दोलायमानधीः। अभीक्ष्णप्रेरणोद्विग्नः प्रेरयानशङ्कितः।
स्याद्येव सपुत्र स गोचरो नः कदाचन। यद्येतद्दि क्षणे तस्मिन् पश्यामः किं विदध्महे।
अन्यथा ध्रुवमाशिन्नो हन्यादस्मानसौ पनात्। इति कामपदारार्थगुर्वाडिरितो नृपः।

तावन्मात्रं वचोवीजभूतं हृदि निधाय ते। विधातुं तदवस्थत्वं तुङ्गस्यासन् कृतोद्यमाः।
चण्मात्राभ्यन्तरे तुङ्गो भूपेनाकारितो गृहात्। ससुतो निर्ययौ दृष्टदुःस्वप्नोऽपि विधेर्वशात्।
स प्रविश्य नृपास्थानं स्थित्वा राज्ञोऽग्रतः क्षणम्। पञ्चषैः सहितो भृत्यैः प्राविशन्मन्त्रमण्डपम्।
पश्चात्प्रविष्टास्तत्रैनं पर्वमर्करकादयः। अनुज्ञाप्य महीपालं तुङ्गं शस्त्रैरपातयन्।
मन्त्री महारयो नाम योऽभूच्छङ्करवर्मणः। तदंश्यस्तुङ्गभृत्येषु श्लाघ्यः सिंहरथः परम्।
निःशस्त्रो यः क्षणे तस्मिन्परित्राणविधित्सया। हन्यमानस्य तुङ्गस्य पृष्ठे स्वं वपुरक्षिपत्।
तुङ्गस्य प्रथमाघाते रुद्धश्वासोऽभवद्भयात्। राजा तस्मिन्निरुच्छ्वासे सोच्छ्वासः समपद्यत।
आस्था न ब्राह्मणस्यासीद्दुर्गनाम्नः सुतोऽग्निके। यः पापकारी तुङ्गस्य पार्थः कह्वश्च दुर्मतिः।
ताभ्यामाश्रुविरेकिभ्यां त्राणार्थस्त्राङ्गुलीमुखे। विपन्नां पङ्गुवत्तत्र शस्त्रं चासवशाम्नहे।
अन्तरङ्गाश्च चङ्गाद्या येऽभूवंस्तत्र मन्त्रिणः। तैः स्त्रीवद्भाषितन्तूर्ष्णीं वस्त्रैः शस्त्रान्वितैरपि।
अश्रुततुङ्गमृत्युभ्यस्तमुले तत्र भूपतिः। तद्भृत्येभ्यः शङ्कमानो वह्निदानादवादिकम्।
आश्वासाय स्वभृत्यानां छित्त्वा खड्गेन सत्वरम्। पातयामास तुङ्गस्य ससुतस्य शिरोवहिः।
दृष्ट्वा स्वामिशिरश्छिन्नं सैन्ये दैन्यात्पलायिते। भृत्यतामुज्ज्वलीचक्रुः कतिचित्तुङ्गसेवकाः।
भुजङ्गनामा सामन्तदिशापत्यो गृहागतः। संग्रामराजं विदधे गेहाद्विद्धं पलायितम्।
द्वारं कनकदण्डेन भङ्क्त्वार्गलितं ततः। विंशतिं हतवान् योधान् स राजास्थानमण्डपे।
कोशाधिकारी त्रैलोक्यराजनामा हतो रणे। कम्पामत्तकथाजेयो वीरोऽप्यभिनवाभिधः।
अङ्गने चिंशदेकाङ्गा वीरास्तुङ्गोपजीविनः। श्रेणीं सवन्धुर्निहता निःश्रेणीं स्वर्गपद्धतेः।
सङ्ग्रामं पद्मराजाख्यः कृत्वापि निहतोऽञ्चतः। स्वामिभ्रमयदुःस्वामितापं तीर्थाश्रयाज्जहौ।
अन्ये लोकद्वयत्राणमिवं शस्त्रं रणाङ्गने। संत्यजन्तोऽप्ययुज्यन्त यशसा जीवितेन च।
चन्द्राख्यः सुभटमन्यो दैशिकश्चार्जुनाभिधः। हेलाचक्रो डामरश्च त्यक्तशस्त्राः परैर्हताः।
लोठितावसथस्तुङ्गो लुण्ठितश्रीर्महीभुजा। आषाढशुक्लद्वादश्यां कथाशेषो व्यधीयत।
निर्द्रोहहन्ता भूभर्त्ता तुङ्गे सतनये हते। लक्ष्मीदया व्यजृम्भत खलमाया नृपास्पदे।
राज्ञो मनः कलुषयन् गूढपैशुन्यकर्मणा। योऽभाढ्याढ्यसुतयोर्विपत्तौ हेतुतां गतः।
सदुश्रवादनिर्दग्धो नागोनिजकुलान्तकः। तुङ्गभ्राता ततो राज्ञा कम्पनाधिपतिः कृतः।
युगलकम्॥ भार्या कन्दर्पसिंहस्य चेमापरमचर्पणी। नागेन सङ्गमं चक्रे रचसेवासितत्रपा।
प्रयान्ते तुमुले ठिण्डा चतुर्भिर्दिवसैः सती। तुङ्गस्नुषा सुता शाहेः प्रविवेश हुताशनम्।
मन्त्रायामवरुद्धायां कन्दर्पो यावजोजनत्। पुत्रं विचित्रसिंहं च भार्त्रसिंहं च विश्रुतौ।
गृहीत्वा तौ स्नुषां तां च मङ्गला तुङ्गवल्लभा। देशाद्विनिर्गता दीना राजपुर्यां स्थितिं व्यधात्।
॥ युग्मं ॥ तुङ्गस्थाने ततो राज्ञा पापो भद्रेश्वरः कृतः। भूतेश्वरादिदेवानां चक्रे कोशादिलुण्ठनम्।
कियद्विवेकवैकल्यमस्य राज्ञः प्रकाश्यताम्। तादृशानपि यश्चक्रे पार्थादीनधिकारिणः।

पार्थो परमदुर्मेधाः ख्यातो भ्रातृकलत्रगः। निर्व्विचारेण यत्नेन नगराधिकृतः कृतः।
वधादिपापं पार्थेन सुकृतत्यक्तचेतसा। पवित्रे प्रवरेशस्य रङ्गपीठे प्रवर्तितम्।
चक्रे लुब्धस्य भूभर्तुर्मतङ्गः क्षपणायणोः। सिंधोः सुतः कोशवृद्धिं प्रजापीडनपण्डितः।
पुरा देवमुखाख्यस्य दिविरस्य किलाजनि। आपूपिकायां वेश्यायां पुत्रयक्षमुखाभिधः।
यस्तुङ्गोपाश्रयालब्धा सालितलं महीपतेः। वराटकाग्रभृत्यासीत्कोटीनां शतसञ्चयः।
विभूतिमध्ये लुब्धस्य प्रभृता यान्यढौकिर्तिः। अपूपैर्निजभृत्येषु विक्रियोऽभूत्कुलोचितः।
प्रभूताग्निररोगस्य भूत्वा सम्बोदयः पुनः। यो मन्दाग्निः सरोगस्य तिष्ठलोकैर्व्यहस्यत।
एकमेवाभवद्यस्य सुकृतं मरणक्षणे। कोटेस्त्रिभागं यद्दाक्षीरणेश्वरयोजने।
तदात्मजाः कृता नानाभागनंदिमुखास्त्रयः। अधीशाः शतनाङ्गस्य राज्ञा तुङ्गोपजीविनः।
हास्यं बभूव भूभर्तुस्तेषां तुङ्गपदार्पणम्। बन्धनं यवकाण्डीनां हेमस्थाने शिशोरिव।
ते तुरुष्काहवे राज्ञा तुङ्गवत्प्रहिताः पुनः। प्रत्यावृत्त्य यथादेशं निजमेव पलायिताः।
इत्थं मन्त्रिषु योग्येषु क्षान्तिशीले च भूपतौ। केचिदुद्रेकमभजन्दरद्दिविरडामराः।
सा लोठिकामठं कृत्वा लोठिका नृपतेः सुता। तिलोत्तमाया विदधे मातुर्नाम्ना मठं परम्।
पापिनामपि हन्तेयद्यापि सत्कर्मवासना। भद्रेश्वरोऽपि यश्चक्रे विहारं सुकृतोद्यतम्।
सत्यं विवेक्य सङ्ग्रामराजोयो न्याय्यतोऽर्ज्जितम्। निजं भुवाणो द्रविणं प्रपामपि न निर्ममे।
श्रीलेखा पार्थिववधूः श्रीयशोमङ्गलात्मजा। पत्यौ शिथिलसामर्थ्ये स्वैरिणीत्वमसेवत।
सुतः सुगन्धिसीहस्य जयलक्ष्म्यां बभूव यः। वल्लभो निर्भरन्देव्याः सोऽस्यास्त्रिभुवनोऽभवत्।
स जयाकरगञ्जादिगञ्जस्वष्टातितीक्ष्णधीः। कोशोपकारकृत्तस्या जारोऽप्यासोज्जयाकरः।
मठग्रामीणगञ्जादिकर्त्री सञ्चयतत्परा। साभूद्भर्तुः प्रसादेन सुभगा भूरिवैभवा।
स चतुर्थसमाषाढप्रारम्भाहे महीपतेः। हरिराजाभिधे पुत्र मा भैषीस्त्वात्ममायया।
सुमनःसेवितः कुर्व्वन्नशेषाशाप्रकाशनम्। ह्लादावहः स सर्व्वस्य चैत्रोत्सव इवाभवत्।
अमोघाज्ञेन तेनेमान्निश्चोरां कुर्व्वता महीम्। पथ्यवीथ्यां निशीथिन्यां निषिद्धाहारसम्वृतिः।
अचिरस्थायिनी राज्ञस्तस्याज्ञा चिन्तनोन्नतिः। वन्द्या नवेन्दुलेखेव पार्थिवानामजायत।
द्वाविंशतिमहान्युर्व्वीं स रक्षित्वा क्षमापतिः। क्षयं ययौ शुचिपक्षशुचिशुक्लाष्टमीदिने।
प्राणिनां क्षीतगानानां नक्षत्राणामिव क्षणात्। लक्ष्मीर्गोपिक्षपेवेयं सहृता भङ्गदायिनी।
समन्योः स्वैरिणीवृत्तिः सुतस्य जननी निजा। अभिचारञ्चकारासेत्यविगाना जनश्रुतिः।
राज्योपकरणे सज्जीकृते राज्यार्थिनी स्वयम्। सा राजमाता श्रीलेखा यावत्स्नात्वा समागता।
मिलितैस्तावदेकाङ्गैर्भ्राता क्षितिसंज्ञकेन च। सागराख्येन तत्पुत्रोवालोऽनन्तो नृपः कृतः।
॥ युग्मं ॥ एवं क्षिपृचोरन्येन हृते तत्र प्रमापणम्। तद्रक्षिणोऽहेलुब्धस्य पापायैव यथा किल।
राजमातुस्तथा राज्यलुब्धायाः पुत्रनाशनम्। अभूदन्यहृते राज्ये वृजिनायैव केवलम्।

॥ युग्मं ॥ स राज्यविप्रलम्भेन तादृशा व्यथिताशयाः। व्यसरंस्तनयस्येहं धिग्भोगाभ्याससवासनाम्।
अथाजगाम स्थविरः पितृव्यो बालभूपतेः। राज्यं विग्रहराजाख्यो हन्तुं विततविक्रमः।
स लोहरात्प्रचलितो दग्ध्वा द्वारमतर्कितः। दिनद्वयेन सार्धेन नगरं सत्वरोऽविशत्।
श्रीलेखाप्रेरिताः सेनाः प्रविष्टं लोठिकामठम्। उद्दीपिताग्नयस्तत्र निजघ्नुस्तं सहानुगम्।
मठद्वयं ततः कृत्वा स्वस्य भर्तुः सुतस्य च। तयोर्व्ययवती राज्ञी राज्यद्रोहोद्यतानिशम्।
ततो नरपतिः किंचिच्छनैः शिथिलशैशवः। अतिव्ययादिव्यसनी गर्भेश्वरतयाऽभवत्।
तस्यासन् रुद्रपालाद्याः शाहिपुत्राः परम्प्रियाः। अनल्पवेतनादानैराज्योत्पत्त्यपहारिणः।
कृतप्रत्याहनिर्वाहः सार्धलक्षेण भूभुजा। रुद्रपालो दरिद्रत्वं कदाचिदपि नात्यजत्।
दिद्दापालः क्षमापाललब्धया प्रतिवासरम्। सहस्राणामशीत्यापि शेते तस्मिन् सुखं निशि।
अनङ्गपालवेतालश्चक्रे क्ष्मापाललालितः। प्रशस्तवर्णगीर्वाणप्रतिमापाटने मनः।
रुद्रपालः परित्राता धनप्राणादिहारिणाम्। बभूव चौरचण्डालप्रायाणां वज्रपञ्जरः।
कायस्था रुद्रपालाप्ताः प्रजानां पीडनं व्यधुः। चकारान्नमठं श्रीमानुत्पलाख्यो यदग्रणीः।
विचक्षपालवाक्षम्यमन्यत्तस्याभिधीयताम्। जालन्धराधिपस्येन्दुचन्द्रस्येन्दुमुखीं सुताम्।
उपयेमे मनोज्ञलाङ्ग्यष्टामासमतिं स्वयम्। यया मठः स्वाभिधया विदधे त्रिपुरेश्वरे।
तस्याः किंचिदिव न्यूनां स्वसारं योयशीयसीम्। अथ सूर्यमतीं देवीं भूभुजे परिणीतवान्।
रुद्रेण भूपतिः सख्या स कर्णसुखदायिना। पात्रीकृतो दुर्नयानां कर्णेनेव सुयोधनः।
कम्पनाधिपतिस्तत्र क्षणे त्रिभुवनो बली। आययौ भूपतेर्हन्तुं राज्यं सम्भृतडामरः।
आकृष्टाशेषकटके तस्मिन् योद्धुमुपागते। एकाङ्गाः सहसाराहो राजपचत्र तत्यजुः।
असिना लङ्घयन् प्रासानमोघान् श्लाघ्यविक्रमः। प्रजहारानन्तदेवः स्वयन्त्रिभुवनं रणे।
सन्नाहरचिताङ्गः स दृढप्रहृतिपीडितः। विद्रुद्रो वदने वाहक् स्वप्रतापमिवोद्वमन्।
विनयच्छन्नशौटीर्यः शिशुप्रायः स भूपतिः। दृष्ट्वा बालमसम्भाव्यन्तस्मिंस्त्यक्त्वा रणं गते।
प्रमाला डामरं घ्नन्तं प्रासैरभिनवाभिधम्। शालास्थले व्यधात् श्लाघ्यविक्रमो मोघविक्रमम्।
मांसाद्यम्बिष्टनाघष्टीभूतखड्गो भ्रमन् रणे। भुवनक्षोभकृद्भूद्भैरवोऽनन्तभूपतिः।
पश्यन् प्रहारलूनाङ्गानेकाङ्गान् स पदे पदे। निर्वेद्यमानानग्रस्थैर्नामग्रहणपूर्वकम्।
चितिक्ष्मातदाचिख्यो विलम्बिस्थावरे ततः। चाञ्चन्यमचपटलादेकाङ्गानां न्यवारयत्।
॥ युग्मं ॥ एवं तत्र कृतज्ञेन भृत्येभ्यः प्रतिपादिता। विलम्बितेन दीनारकोटिप्रसवतः क्रमात्।
राज्ञो रणाविष्टस्य दुर्वर्षैकैः करात्मकः। स्थिरप्रहदृढः कष्टचिरेणेति जनश्रुतिः।
प्रहो महत्त्वं भूभर्तुर्दानो देशान्तरागतः। तादृक् त्रिभुवनो येन संविभेजे विमन्युना।
ब्रह्मराजाभिधस्तेन कम्पुर्गञ्जाधिपः कृतः। रुद्रपालकृतद्वेषो विरक्तश्चलितो ययौ।
पञ्चभिर्श्चक्रभूपालैस्तमं मिलितडामरः। तेनानीतो दरद्राजो यत्नादचलमङ्गलः।

घोरष्टष्टाभिधं ग्रामं प्राप्तस्य समरोत्सुकः। तस्याग्रं विक्रमोदग्रो रुद्रपालो विनिर्ययौ।
अव्यवस्थापिते युद्धे सैन्याभ्यां दरदीश्वरः। क्रीडापिण्डारकाख्यस्य नागस्य भवनं ययौ।
दुर्नयाचरणात्तत्र पार्श्वस्थैर्वारितोऽपि सः। प्लवमानस्य मत्स्यस्य गात्रे कुन्तमपातयत्।
अथोज्जगाम गोमायुवपुः कुण्डाद्भुजङ्गमः। स च तं मृगयौत्सुक्यादधावद्दरदीश्वरः।
तमापतन्तमालोक्य व्यवस्थोन्मूलनं विदन्। आस्कन्दाशङ्कि भूभर्तुः सैन्यं युद्धाय निर्ययौ।
अभूत्ततोऽस्त्रसङ्घर्षसंजातानलसंहतिः। कृतस्वर्गाङ्गनोद्वाहो वीराणां समरोत्सवः।
तस्मिन्महाभटाटोपे शिरश्छिन्नं दरत्पतेः। रुद्रस्य रौद्रमहसः संप्ररूढं यशः पुनः।
समरे वधबन्धादि म्लेच्छराजाः प्रपेदिरे। सम्प्राप हेमरत्नादि पुनः कश्मीरभूपतिः।
उत्तंसमुक्ताद्योताम्भःक्षालितास्त्रक्षतच्छलम्। रुद्रपालो दरद्राजशिरो भर्तुरुपानयत्।
भ्रात्रोदयनवत्सेन कृतप्रायैस्तथा द्विजैः। तथाह्येवंविधास्तस्य बभूवुरवदालिकाः।
रुद्रपाले ततो लूतामयेन प्रमयङ्गते। अन्येऽपि शाहितनयाः क्षिप्रमेव क्षयं ययुः।
पालस्नेहान्ध्यविगमे श्रद्धाश्रयजुषोऽभवत्। देवी सूर्य्यमती भर्तुर्दर्पणस्येव विम्बिता।
सुभटापरनामा सा गौरीश्वरविधायिनी। पुण्यं वितस्तापुलिने निर्ममे सुभटामठम्।
गोहेमहयरत्नादिप्रदानैः स्ववक्षन् द्विजान्। सदाशिवप्रतिष्ठायामदरिद्रांश्चकार सा।
आशाचन्द्रापराख्यस्य कल्लनस्यानुजन्मनः। नाम्ना यथापि वात्सल्यात्साग्रहारो मठस्तया।
सिल्लनाख्यस्य च भ्रातुर्भर्तुश्चाभिधया सती। मठौ चकार यत्पार्श्वे विजयेशामरेशयोः।
अष्टोत्तरं चाग्रहारशतं श्रीविजयेश्वरे। ब्राह्मणेभ्यो महापुण्यं विदग्धैः प्रत्यपादयत्।
पत्युर्नाम्नाप्यग्रहारान् प्रददावमरेश्वरे। त्रिशूलबाणलिङ्गादिप्रतिष्ठाश्च विनिर्ममे।
दम्पती राजराजाख्ये मृते पुत्रे प्रचक्रतुः। सदाशिवान्तिके राजवेश्म सन्त्यज्य तौ स्थितिम्।
ततःप्रभृति सन्त्यज्य पूर्व्वराजकुलस्थितिम्। तत्रैव रूढा भूपालास्तत्रैव वसतीर्दधुः।
पार्थिवस्याश्वशालीयाः प्रियवाजितया प्रियाः। प्रसादैर्गलुण्या च सर्व्वतः समतां ययुः।
गर्भेश्वरतया भर्तुर्ब्बल्लभो नर्मकोविदः। अलुञ्छयत्प्रजानित्यं डक्को नाम दैशिकः।
भाण्डाधिपतिर्भोजः प्रहितैः स्वर्णसञ्चयैः। अकारयद्येन कुण्डयोजनं कपटेश्वरे।
प्रतिमा भोजराजेन पापसूदनतीर्थजैः। सततं वदनस्थाने या तोयैर्व्विहिताभवत्।
अपूरयत्तस्य पद्यां दुस्तरां नियमादितः। प्रहितैका च कमनीकुम्भैर्नाद्वारिपूरितैः।
स तस्य पद्मराजाख्यः पर्णप्रात्यिकदैशिकः। प्रियताम्बूलयोगस्य त्यागिनो वल्लभोऽभवत्।
तेन नागरखण्डादिपर्णविक्रयिणा नृपः। देशोत्पत्तिधनं प्रायो निःशेषं दापितस्तदा।
पद्मस्कन्दकरोभाद्दभोर्विर्धिदापने नृपात्। प्रत्यापादस्य सञ्चये धने च धनिकोऽधिके।
तद्राजस्त्रिक्रमाप्ताने पद्मं तस्य मन्दिरम्। आभीयमानं भाण्डांशापरे मापि नाशभूत्।
खेरोक्षसदं दृष्ट्वा देवीपद्मंमतीमठः। पद्मराजोऽग्रहान्देशस्याप्रवधाप्यधारयत्।

शमिते चाश्वशालीयडङ्कादिभये तदा । प्रावर्त्तन्त पुनर्देशे व्यवस्था निरुपद्रवाः ।
ततः प्रभृति राज्ञ्येव राजकार्य्याण्यताभवत् । तस्यौ शौर्य्यकथां त्यक्त्वा राजा कार्य्यकरः पुनः
भर्तुर्नारीविधेयत्वन्तस्याभर्त्सजयस्तथा । निष्कलङ्केन शीलेन नान्योन्यं स्पृह्यतामगात् । २००
भवभक्तिव्रतस्नानत्यागशीलादिभिर्गुणैः । क्षितिनानन्तदेवेन मुनयोऽपि विनिर्ज्जिताः ।
राज्ये तस्य महीभर्तुर्दीर्घे तांस्तानलङ्घयत् । पतिम्वरेव राजश्रीर्धत्यान्नवनवोन्मुखी ।
क्षेमाभिधे राजगञ्जपूरणे बालभञ्जकः । व्यधाद्धादशभागादिप्रकारैर्ढौकयन्धनम् ।
मन्त्री ततोऽभवत्साधुस्वर्गतः केशवो द्विजः । यैशचन्द्रातपेनेव भूपालो येन भूषित. ।
भ्राम्यन् गतश्रीरेकाकी सएव ददृशे जनैः । भाग्याम्बुवाहतडितो निविडाः कस्य सम्पदः । २०५
॥ युग्मं ॥ भाग्याधीनं धनं ध्यात्वा मुधा मुग्धधियामसौ । कुलविक्रमयोर्द्दर्पो मिथ्यैव पृथुतां प्रति ।
प्रासादपालवैश्यस्य गौरीशन्दिरशालये । भूतेर्हलधरो वज्रो वराहश्चाभवन्सुताः ।
तेभ्यो हलधरः सूर्य्यमत्या विहितसेवनः । वृद्धिं दिने दिने गच्छंल्लेभे सर्व्वाधिकारिताम् ।
विधेयान् बुद्धियुक्तेन कुर्व्वतः चित्यनन्तराम् । सपत्नीकोऽभवत्तस्य मुखप्रेक्षी क्षमापतिः ।
क्षेमेण सूचितं पूर्व्वं सपादाग्रमुदग्रधीः । कर्म्मस्थानं स्फुटीचक्रे सर्व्वं स्थानधुरन्धरम् । २१०
अभूदर्णकमूल्यादिलेखनं कनकस्य यत् । राजायत्तं जनस्यार्थसञ्चयानां प्रकाशकं ।
स तन्निवारयामास भाविनां भूभुजां विदम् । स्थाने सञ्चितवित्तस्य दण्डाद्यायासकारिताम् ।
भर्त्सिनागव्यशालीयान्धनदारापहारिणः । कांश्चिद्व्यापाद्य स शमं निन्ये लोकस्य विस्रवम् ।
तेनायासह्नानीतः कश्चित्स्वर्णैः सुरालयैः । शोभां मठाग्रहारैश्च वितस्तासिन्धुसङ्गमः ।
भ्रातरश्च सुतास्तस्य लक्ष्मीपरिचयोन्मदाः । द्विरदा इव न क्वापि दानप्रणयितां जहुः । २१५
तद्भ्रातृपुत्त्रो बिम्बाख्यः श्रीमान्वीरो वराहजः । दूराधिकारकार्य्यासीद्दानप्रलयवारिदः ।
स डामरकुलाकालमृत्युः स्वल्पानुगोऽभवत् । खशाहवे जहत्प्राणान् पलायनपराङ्मुखः ।
चम्पायां सालभूपालमुन्मूल्यानन्तभूपतिः । तत्तन्नृपजयी नव्यन्धराधवमरोपयत् ।
मन्त्रशून्येन शौर्य्येण परदेशेषु भूपतिः । हठप्रवेशान्निरुधस्तोऽभूत्स्वक्रगतोऽसकृत् ।
तुरुष्कात्मजस्य कलशस्यारब्धो खिन्नसैनिकम् । अमोचयत् हलधरो युक्त्यावल्लापुरादमुम् । २२०
उरशाद्य प्रविष्टस्य वैरिरुद्धाध्वनो व्यधात् । कम्पनाधिपतिस्तस्य मार्गात्संशोध्य निर्गमम् ।
कालेऽनन्तमहीभर्तुर्व्वैरिविग्रहसङ्कटं । साहसान्युदजृम्भन्त तानि तानि क्षणे क्षणे ।
राजेश्वरो द्वारपतिः श्रीमान् भट्टेश्वरात्मजः । डामरैः क्रमराज्यस्थैरन्योऽपि बहवो हताः ।
वोढ्य नीतिदृशा कार्य्यं भीत्या व्यवहरन्नपि । भ्रत्यतां निष्परिभवां को भुङ्क्ते नृपमन्दिरे ।
दुष्प्रवादास्पदीभूतो देव्या निविडसेवनात् । श्रीशाचन्द्रादिभिः क्रुद्धैर्व्वद्धा हलधरोऽप्यभूत् । २२५
स राज्ञा हृतसर्व्वस्वो बन्धनक्लेशमन्वभूत् । भाग्यप्रभावे निःसारे सुखमेकान्ततः कुतः ।
नृपेण बन्धनात्त्यक्तं तं श्रीः प्रत्यागता पुनः । आलिलिङ्ग सितच्छत्रलक्ष्यास्मितसितानना ।

स राज्ञ्याः प्रावृष इव प्रणयेन क्षणे क्षणे । कोपप्रसादमेघार्कपर्य्यायापातमन्वभूत् ।
ततः सरलचित्तस्य क्रमेण समपद्यत । भार्य्याजितत्वं भूभर्त्तुर्दुर्व्विपाकार्पणोन्मुखम् ।
अधिकारपरित्यागाद्दोषाननुशयावहान् । वदद्भिर्व्वार्य्यमाणोऽपि प्राज्ञैर्हलधरादिभिः ।
पत्न्या संप्रेरितः शश्वत्तनयस्नेहमूढया । पुत्राय कलशायाभूद्राज्यं दातुं समुद्यतः ।
यात्यस्यनुशयं राजन्नेवं वाद्यपि कारितः । सज्जं तेन रणादित्यनाम चक्राभिषेचनं ।
एकोनचत्वारिंशस्य वर्षस्य तनयः सिते । षष्ठेऽह्नि बहुलस्याभूदभिषिक्तो महीभुजा ।
अथ स्नाने रणादित्यो राजपुत्रान्निवेशयन् । चिन्तयन् राज्यमाहात्म्यं प्रतिपत्तिषु निष्ठुरः ।
अनन्तो राजपुत्रोऽयं देवेति कथयन्वचः । छाकाटिकान्यस्तहस्तः क्षितिपालं न्यवेदयत् ।
कुपितेन स भूभर्त्ता परिदृष्ट्यावलोकितः । एवं क्षतस्मितो व्यक्तं तमूचे नीतिनिष्ठुरः ।
इत्थं यत्र निवेद्यन्ते कान्यकुब्जादिभूभुजः । तत्रैव त्यक्तराज्यस्य काऽन्या स्यात् प्रक्रिया तव ।
दिने दिने सानुशयो नियतं भविता भवान् । नाभिमानपरित्यागः कर्त्तुं शक्यो मुनेरपि ।
सुदूरदर्शिनां तत्र मन्त्रिणां हृदयङ्गमम् । राजा तस्य वचः श्रुत्वा प्रतिवाक्याक्षमोऽभवत् ।
दृष्ट्वाऽन्येद्युर्नवं भूपं राजचक्रेण सेवितम् । नवेतरस्य सहितं परिमितैः परिच्छदैः ।
धीमान् हलधरो युक्त्या छतकास्थया नृपम् । एवं निर्भर्त्सयंल्लक्ष्मीं तं प्रत्याजीहरत्पुनः ।
विधाय निःसुखं सत्यं राज्यभारार्पणाच्छिशुम् । कस्मात्त्वसुखमापेक्षो न जिह्रेष्यत्र वार्द्धके ।
तत्स्वयं राजकार्य्याणां कार्य्यमुद्वहनं त्वया । अशून्यो यौवनाभोगैरयमस्तु सुतस्तव ।
इत्युक्त्वा स पुनर्भूपमधिकारमजिग्रहत् । चक्रे कलशदेवस्य कलया युक्तिवञ्चितम् ।
पित्रोरेवान्तिके कुर्व्वन्नाहाराद्यपि सन्ततम् । ततो बभूव कलशो नाममात्रमहीपतिः ।
सर्व्वस्नानात्मपूजादिविधाने पार्थिवोचिते । पितुः सहायकल्पः स पौरोहित्यमिवाकरोत् ।
अनिमित्तप्रहृष्टानामनिमित्तानुतापिनां । न क्वापि चलचित्तानां तिरश्चामिव निश्चयः ।
दापयित्वा पतिं राज्यं निर्बन्धेनापि तावता । सूर्ना बभूव यद्राज्ञी विप्रभेदानुतापिनी ।
मेध्यां स्नुषाणामुत्कर्षं प्रार्थयमपदोषितं । वैमात्रहरणादौ सा क्व चिन्ता न चक्रमे ।
साधीरत्वं गता पुत्रमहिष्यः कारितास्तदा । स्नेहापक्षेपने यावन्न वैमुख्यमदर्शयत् ।
पुत्रो विग्रहराजस्य क्षितिराजाभिधस्ततः । राज्ञः पितृव्यजो भ्राता कदाचित्पार्श्वमाययौ ।
तस्मै न्यवेदयत् खेदं सविस्रम्भोपतापकं । पुत्रे भुवनराजाख्ये राज्यलुब्धेऽतिविश्रुते ।
स हि तस्यात्मजो लोभात् पुरा राज्यं समाश्रितः । तदन्ते. पितुरार्च्चिं विधातुं वाचमोऽभवत् ।
नाम भागवतायाद् पूर्व्वाणां स्वपितुर्यथात् । दत्तयज्ञोपवीतानां सुतानामडुपिमानमः ।
क्षितिराजः स्वपभाय विरक्तहृदयो विशुद्धधीः । मनस्तापापहे चक्रे स संन्यासागमे स्पृहां ।
राज्यं पञ्चगुप्ताय ज्येष्ठायमकरज्जन्मने । रामलेखाभिधानायां राज्ञ्यां जाताय सत्वरं ।
दत्त्वा स्वनस्त्रयाचापि नरोत्कर्षाभिराय च । राजर्षिर्विंशुधेः सार्द्धं विदधे तीर्थसेवनं ।

भुक्त्वा शमसुखं भूरीन्वर्षान् परमवैष्णवः। स चक्रायुधसायुज्यं ययौ चक्रधरे सुधीः।
स च भोजनरेन्द्रश्च दानोत्कर्षेण विश्रुतौ। सूरी तस्मिन् क्षणे तुल्यं द्वावास्तां कविबान्धवौ।
पितुः पितृव्यजाद्भ्रातुर्जातस्यानन्तभूभुजा। तन्वङ्गराजस्योत्सङ्गे नप्ता न्यासीकृतः शिशुः।
तन्वङ्गोऽपि विवृद्धिं तन्नीत्वा राष्ट्रं शिशुश्च तम्। पुनः प्रविष्टः कश्मीरानस्तं चक्रधरे ययौ।
सर्व्वसाधारणीभूतभोगानां राजवीजिनाम्। तावज्जातियमभवन्नेह द्रोहकलङ्कितम्।
इन्दुराजात्मजाज्जिन्दुराजो यो बुद्धराजतः। जातो मदनराजाख्यं वीरं पुत्रमजीजनत्।
अत्युत्सिक्त. सुतस्तस्य दरन्नृपतिमण्डलात्। विधुरे राज्ञि निर्यातः शौर्य्योद्रेकादखण्डितः।
तदानीं जिन्दुराज्याख्यो डामरोद्रेकखिन्नया। राज्ञ्या स्वयं गृहं नीत्वा साचिव्यं ग्राहितोऽभवत्।
काणः शोभाभिधस्तेन गाढोद्वेगावहः प्रभोः। देशग्रामस्थो डामरोऽथ दलास्कन्दं निपातितः।
कम्पनाधिपतां दत्वा ततस्तस्य प्रतापिनः। पार्थिवो राजपुर्य्यादीन् देशांश्चक्रे करप्रदान्।
अनन्तभूभुजो राज्ये तत्तत्स्खलितसङ्कटे। आलम्बयष्टिप्रतिमो ययौ हलधरः क्षयं।
मुमूर्षुणा चक्रधरे तेन पार्श्वस्थितो नृपः। सजानिरुपदेशार्थी स तदेत्यमकथ्यत।
मा कार्ष्ट परराष्ट्रेषु रभसारब्धिमाहवम्। युक्त्या वस्नायुरादौ वा व्यपोढं व्यसनं मया
विग्रहो जिन्दुराजोऽयं परार्घ्यां वृद्धिमागतः। भेदं वः सह पुत्रेण जयानन्दो विधास्यति।
कथितं तेन तत् स्मृत्वा जिन्दुराजं महौजसं। विघ्नेनाबन्धयद्राजा युक्तिमांस्त्याजितायुधम्।
अथ कालेन कलशस्त्वाम्भत्कलुषिताशय.। भृत्यैरसाधुसंसेव्ये प्रसक्तिं ग्राहितोऽध्वनि।
तस्याभवद्विज्जयित्यराजपाजादयः प्रियाः। उत्सेकदा राजपुत्राश्चत्वारः शाहिवंशजाः।
पुन्नागस्त्रपतेर्नागनाम्नो निकटसेवकः। सोऽपि तस्य जयानन्दः कौटिल्याध्यापको ऽभवत्।
द्विजेन्द्रेऽमरकण्ठे तु याते शिवसमानतां। राजा प्रमदकण्ठस्य ययौ तज्जस्य शिष्यतां।
दुःशीलस्य प्रकृत्यैव तस्याकृत्योपदेशकृत्। गम्यागम्यविचारस्य परिहर्ताभवद्गुरुः।
गुरोर्गताविकल्पत्वं तस्यान्यत्किमिवोच्यतां। त्यक्तशङ्कः प्रवृत्ते स्वसुतासुरते ऽपि यः।
महासमयसञ्चारचतुरैर्थ्यैरभीतितः। गण्यते स्वप्रभावेशैर्भैरवोऽपि न निर्भयः।
ते भट्टपादास्त्रासेन पतिता भग्नजानवः। विडालवणिजा स्वस्याः शिरोहस्तार्पणैः कृताः।
पुराकृत्य विडालाङ्को वणिक् कश्चिदिहाभिधां। विडालवणिगित्यात्मनामविस्मारिकान्दधे।
यो व्याजमूर्खो वैद्यत्वगुरुत्वाहङ्कृतः क्रमात्। पादूकृद्रजकादीनां शिल्पिनां गुरुतामगात्।
सभट्टपादानुप्राघांश्चक्रे मूर्द्धशधिरोपयन्। श्रेष्ठी विडालविष्ठाघर्षिहिङ्गुगन्धोत्कटद्करं।
एवं प्रकृतिनि.सारैरपि गर्जद्भिरन्वहं। आन्ध्यं स गुरुभिर्निन्ये दिवसोऽम्बुधरैरिव।
ये दीर्घजागरा रात्रौ भूरिभोजनसेविनः। अजीर्णपिशिनोद्गारनित्यदुर्गन्धकन्धराः।
अवस्करप्रणालाभाः पृष्ठे चिप्तमध.पथैः। शौचपाथ इव चिप्रमुज्झन्ति मधुनिर्झरं।
नक्तमातोद्यवाद्यैस्तै. सार्द्धं कृतसेवनः। चारणो वेणुवादज्ञो योषितां धर्षयन् हठात्।

सन्देहं प्रथमं प्रयात्यभिजनं पश्चात्पुनर्जीवितं किन्नाभ्येति विपर्य्ययं विगलने शीलस्य चिन्तामणेः ।
राजधानीमवाप्तस्य दुःशीलस्य महीपतेः । क्षपायामेव तां वार्त्तां पितरावधिजग्मतुः ।
तौ रुदित्वा सुतस्नेहलज्जाशोकान्वितौ चिरं । निश्चयं बन्धने तस्य सदोषस्य प्रचक्रतुः ।
सर्व्वविद्यानिधिं ज्येष्ठं नप्तृणां वप्पिकात्मजम् । हर्षं राज्ये चिकीर्षू च निन्यतुस्तां निशीथिनीं ।
आकारितस्ततस्ताभ्यां प्रातः कलशभूपतिः । ऊचे विज्जजयानन्दौ साशङ्कौ जनकाद्वयं ।
तन्मतेन जयानन्ददत्तहस्तः कथञ्चन । अन्वीयमानो विज्जेन सपित्रोः प्राविशद्गृहं ।
पिता प्रविष्टमाचन्तं वक्त्रे दत्तचपेटकः । अभाग्यभागिन् जहिहि छुरिकामित्ययाब्रवीत् ।
एन चासविस्रवाङ्कसन्धिमालम्ब्य पाणिना । सावष्टम्भं स्पृशन् शस्त्रं विज्जो राजानमब्रवीत् ।
राजन्मानवतां धुर्य्यो भवन्नपि भवान् कथं । न त्याज्यं मानिनां वेत्ति मानग्रहमहाव्रतं
गृहीतवेतनेनायं राजपुत्रेण शस्त्रिणा । सङ्कटेऽस्मिन्मया स्वामी जीवता त्यज्यते कथं ।
पिता भवानयं पुत्रः क्षणेऽन्यस्मिन्महीपते । मय्यसन्निहितेऽमुष्य यद्योग्यं तद्विधीयतां ।
इत्थं विमोह्य नृपतिम्वचोभिः स्निग्धकर्कशैः । विज्जः स्वामिनमादाय निराक्रामत्तदन्तिकात् ।
विज्जस्यापूजयन्धीरास्तद्धैर्य्यमतिमानुषं । अनन्तदेवस्याप्यग्रे यदेवं स व्यजृम्भत ।
चण्डी नरपतेः पत्नी भाव्यर्थबलवत्तया । असाध्यजनमानस्या तस्मिन्नवसरेऽभवत् ।
सा चेदासिष्यताद्युक्ता नाभविष्यत्तदेतरत् । नियमात्सर्व्वनाशाद्वा बन्धनात्कलशस्य वा ।
ततो विज्जेन कलशः सत्वरेण प्रवेशितः । चलन् दिद्दाभिधानाया मल्लभाया निवेशनं ।
शिरोर्त्तिरस्य सञ्जातेत्युक्त्वा भीतं पतिं व्यधात् । सा प्राज्ञा ज्ञातवृत्तान्ता तैलेनाभ्यक्तमस्तकं ।
व्याजेन तेन सर्व्वस्य सम्प्रवेशं निषिध्य सा । पतिं जुगोप विन्यस्य विज्जं द्वारस्य रक्षणे ।
ततः संमार्जैर्व्विरता राज्ञी निर्भर्त्स्य भूपतिं । कुशलान्वेषणमिषात्तनयस्यान्तिकं ययौ ।
बद्धुं व्यधामो राजानं तथैव प्रययौ यदा । दत्तप्रवेशो विज्जेन तदेकाक्येव सोऽभवत् ।
निषेधादनुगन्तॄणां ततः क्रुद्धो धराधवः । रुषितो विजयक्षेत्रं गन्तुं प्रावर्त्ततोद्धतः ।
तं प्रयातं सपत्नीकं प्राप्तं पद्मपुरान्तिकं । अवोचन्नेत्य तत्रस्था विद्यावटादयो द्विजाः ।
अधिकारं स्वयं त्यक्त्वा राजन् किमनुतप्यसे । कृतस्यानुशयो युक्तो न सतो नासतोऽपि वा ।
न च ते दुर्म्मतौ त्यक्ताः प्रजा एतामयेत्यपि । ध्यात्वा सूनोः समुचिता कर्त्तुं दुष्टस्य वाच्यता ।
न यन्त्रपुत्रकस्येव शक्तिः कापि हि भूभुजः । भवेत्साधुरसाधुर्व्वा स प्रजानां शुभाशुभैः ।
उज्झन्ति यत्पयोवाहा जलानि तडितोऽथ वा । वनस्पतीनां सदसत्कर्म्मपाकस्य तत्फलं ।
यथापथस्थितं पुत्रं त्यक्त्वेच्छस्यासितुं सुखं । कोशं त्यक्त्वा प्रस्थितस्य घटते तत्कथं तव ।
धाराधिरूढसामर्थ्यः सदंशः शुचिमानपि । संस्पृश्यते क्षीणकोशः कृपाणइव कैः पुमान् ।
श्रुत्वेत्थेच्छन्नृपो यावत्प्रत्यावृत्तिं विचारवान् । तावत्सपुत्रेणाभ्येत्य सभार्य्येण प्रसादितः ।
अथ प्रविश्य नगरं सप्रमादापवर्ज्जितां । अशान्तमन्युरादाय लक्ष्मीं भूयो विनिर्य्ययौ ।

हयायुधतनुत्रादि स्वयं स्वीकृत्य निर्गतः। देवीं प्रतीक्षमाणोऽस्थात्सरित्पारे ततः क्षणं।
नानाप्रकारानारोप्य कोशान्नौषु नृपाङ्गनाः। नार्य्यः शङ्कूनपि गृहे निर्य्यान्त्यः पर्य्यशेषयन्।
अज्ञातवार्त्तः प्राक् तूष्णीं तत्रस्थानेऽभवज्जनः। ज्ञातवार्त्तस्तदा त्वासीदाक्रन्दमुखराननः।
प्रतिमोक्तुं पुरे ताभ्यां दत्तपुष्पाञ्जलौ जनः। वाष्पविन्दुमिषादीर्ष्योद्दीर्घानर्घकणानिव।
हा मातर्हा पितः क्वेत्थं गच्छतः परिदेवितात्। इत्यस्मादपरः शब्दो मार्गेषु न तदा श्रुतः।
मार्गेऽन्तरान्तराक्रन्दविरतौ निर्झरध्वनिः। शैलानां शोकनिश्वासझात्कार इव शुश्रुवे।
तयोराक्रन्दितैः शश्वत्पथि सञ्जातसंस्तवैः। कर्णैः शून्येऽप्यशृणुतामाक्रन्दितमिवासकृत्।
पुत्त्रागसा तादृशौ तौ दृष्ट्वा मार्गे द्रुमौकसां। खगानां शावभरणमपि लोकोव्यगर्हत।
तयोः पुत्त्रानयोत्तप्तचेतसोर्व्विजयेश्वरः। मनःप्रसादं संदृष्टः स्निग्धबन्धुरिवाकरोत्।
तत्तत्र भाण्डागाराय भृत्याद्यावसथार्पणैः। संविधानक्रियाभिश्च व्यथयोरगमद्दिनं।
देशे कोशोपकरणपूर्णगोणीगणावृते। आसन्निन्धनगण्डालीच्छन्नरथ्या इवापणाः।
तन्वङ्गराजतुङ्गादि शानिपुत्त्रानृपात्मजाः। तं सूर्य्यवर्मचन्द्राद्या डामराश्चानुवव्रजुः।
डामरान् घोरभूपादीन् राजानो नगरादिषु। स्थानेषु स्वेषु निक्षिप्य रक्षिते गुप्तिमानभूत्।
विश्रान्तसर्व्ववित्तस्य श्रीमतोऽनन्तभूपतेः। प्रावर्तन्तात्मवैर्गन्तुं दिनानि विजयेश्वरे।
राजपुत्त्रहयारोहखशखिडामरमण्डलैः। छत्रैरेव स्थितिर्बद्धा सविधे वृद्धभूभुजः।
वत्सरे पञ्चपञ्चाशे ज्येष्ठे मासि विनिर्गतः। आमाद्य विजयक्षेत्रं स स्वर्गसुखमन्वभूत्।
कलशस्य गते, राज्ञि प्राप वीतवसु महीं। रत्नाद्दौ चलिते यातरत्नां निधिमहीमिव।
स्वराज्यमुज्ज्वलीकर्तुं रिक्तोऽपि विहितोद्यमः। चक्रे समस्य विज्जाद्यैः समतानधिकारिणः।
तेन सर्व्वाधिकारेषु जयानन्दो नियोजितः। द्वारे वराहदेवश्च वितस्तान्तपुरोद्भवः।
योऽग्रमराधिकार्थ्यासीज्जिन्दुराजस्य कम्पने। राज्ञा विजयमित्र स कम्पनाधिपतिः कृतः।
यथाधिकारमन्यांश्च विनिधायाधिकारिणः। राजार्थचिन्तामारेभे संरम्भः पितृविग्रहे।
जयानन्दः पदातीनां चिकीर्षुरथ संग्रहं। यस्मादनुचितेभ्योऽपि धनिकेभ्योऽग्रहीदृणम्।
स्वीकृत्य पत्तीन्बिम्बादिराजपुत्त्रगणान्वितः। अथावन्तिपुरं प्राप योद्धुं वृद्धनराधिपम्।
ऽभ्यर्थ्य कारितो येनां राज्ञा काराविनिर्गतः। शिमिकावर्त्मना योद्धुं जिन्दुराजो विनिर्ययौ।
तेषामुद्योगमाकर्ण्य क्रुद्धा वृद्धमहीभुजं। स्वे डामराश्वारोहाः संरम्भादुपतस्थिरे।
...मायत न्दसगुहर्षोऽङ्कुरगमण्डना। शशैः सवाटवी कृत्स्ना संकटा विजयेश्वरे।
...न एर्षंगती पत्नात्पतिं परमकोपनं। ययाचे पुत्त्रगात्सख्यादयुद्धं दिवरूदयम्।
...यातानय मल्लादीन् द्विजान्निशि विसृज्य सा। तन्मुखेनातिवात्सल्यादिदमूचे रहः सुतम्।
विनाशकाले पुत्त्रकस्ते मतिविपर्य्ययः। तीव्रमोर्ध्येण पितरं यदेवं योद्धुमिच्छसि।
यद ...भूमावेव ररक्षा राज्यो हताः। समरे पामरे कलशादीहशे ससभाविते।

अस्मिंस्तु वीतिमाक्रुष्टे वीतिहोत्रसमे नृपे। कस्त्राता च तदीयानां तृणानामिव शुष्मिणं।
सेनाङ्गैः कतमैः केन शौर्य्येण कतमैर्धनैः। भवाञ्छान्तिमतां धूर्य्यं योद्धुमेनं प्रधावति।
दैवात्सन्त्यक्तमेतेन भुंच्च राज्यमखण्डितं। पित्रा तीर्थोपविष्टेन किमित्रापकृतं तव।
दैधेच्छुभिः पात्यमानो व्यसनेऽस्मिन् सुदारुणे। प्रयास्यसि दिनैरेव रिक्तोऽप्यत्यन्तरिक्ततां।
नय सेनाः पितुर्भीतिर्जीवन्त्या मयि नास्ति मे। ऋजुमेनं नयस्वाहं प्रत्युतानुनयोक्तिभिः।
इति दूतमुखैर्मूढं पुत्रो मात्रा कृतार्थनः। सर्वाशाभ्योऽनयत्सैन्यं रात्रावेव निजान्तिकं।
श्रुत्वापसारं सैन्यानां दूतैश्चैत्यप्रसादितं। उपालेभे पतिं प्रातर्धृष्टा प्रत्युत वल्लभा।
राज्ञा मिथस्तयोरेवं शमिताक्षेपयोरपि। पिशुनप्रेरणात्प्राप कालुष्यं धीः क्षणे क्षणे।
वैरस्यरूपमेतद्धि भेदं याति मुहुर्मुहुः। सन्धीयमानमपि यत् छिन्नाम्बरमिवाशयम्।
वाद्यात्पादौ सुतोदन्तं श्रुत्वा तत्राशयो नृपः। गृहं प्रविष्टो दुष्टस्त्रीभाषितैर्जडतां ययौ।
एवं प्रतिदिनं तप्तस्त्यक्तताप प्रतिक्षणं। स्वच्छाशयः शरत्तुच्छतडागौपम्यमाययौ।
चकार पितृपक्षाणां पुत्रो वेश्मादिनाशनं। पिता तु पुत्रपक्षाणां न किञ्चित् स्त्रीवशीकृतः।
पुत्रस्नेहान्धया पत्न्या बाधितस्तदनुयायिभिः। रूक्षोक्तिभिस्ताप्यमानस्तस्थौ दुःस्थः सदा नृपः।
राज्यं जिहीर्षुः पुत्रस्य निःशूरं तद्बलं विदन्। दैवात् जिन्दुराजस्य गणनां पौरुषेऽकरोत्।
पुत्राज्जिहीर्षुणा राज्यं तेन तत्तन्द्रनन्दनाः। प्रार्थ्यन्ते स्म तदा राज्यकृतये तत्पराङ्मुखाः।
सम्प्रेर्य्य तं तदा राज्ञी स्वान्वयाशर्मशङ्किनी। इयं देवी नृपं कर्तुं दूतैराहूतवत्यभूत्।
स पितामहयोर्दूतैराहूतः साहसोन्मुखः। वाद्यात्यां निर्गतः सर्व्वैरक्ष्यमाणोऽपि रक्षिभिः।
दत्तपार्ष्णिकशाघातः क्षणार्द्धेनोदलङ्घयत्। मनोजवेनाश्वगोगा वाजिना पञ्चयोजनीं।
वाजिनं विजिताश्वासमनुगन्तुं समुद्यताः। अगच्छन् बहवो मार्गे दीनाः सेनाहयाः श्रमं।
प्राप्तस्य पादयोस्तस्य पतितस्य पितामहौ। आनन्दाश्रुजलस्यन्दैरभिषेकं प्रचक्रतुः।
पुत्रे तन्निकटं प्राप्ते कलशः कम्पिताशयः। अप्रियाचरणात्पित्रोः संधित्सुः स न्यवर्तत।
स तस्य नगरात्पित्रोः पार्श्वं प्राज्ञो व्यसर्जयत्। अकरोदिक्षुते राज्ञे स्वभेदस्याप्रकाशनं।
एवं प्रवर्द्धमानेऽपि वैरे कलशभूपतिः। कञ्चित्कालं मते मातुरवर्तिष्ट समागिव।
खशालाः कलशादेशान् यियासोः कम्पनापतेः। तया प्रावर्त्तितनतेर्मार्गं संत्याजितः पतिः।
अत्रान्तरे शमयितुं वैरं देशोपघातकृत्। तावुद्दिश्य पितापुत्रौ द्विजाः प्रायं प्रचक्रिरे।
सन्धिबन्धे समुत्पन्ने तत्तत्तदनुरोधतः। दम्पती सम्प्रविष्टौ तौ सार्द्धं साधद्वयं पुरं।
जयानन्दादिवुद्धाय वुद्धा बन्धोद्यतं सुतं। भूयोऽपि जयत. खेदान्निर्गत्य च जयेश्वरं।
तस्याश्वघासकूटानि पुत्रो रात्रावदाहयत्। व्यापादयत् पदातींश्च विषशस्त्राग्नियुक्तिभिः।
तया प्रवर्द्धमानेऽपि विरोधे सत्यरोधयन्। वात्सल्यविवशा राज्ञी भर्तुः प्रतिचिकीर्षितं।
लड्डाभिधाभूत्कैवर्तबन्धकी तद्विधेयधीः। थक्कडामरनामा च तज्जारः खलतिस्तदा।

स तत्रान्तिकेव दुष्टात्मा कथ्यमानो समीपगैः । शुश्राव पितरौ नित्यं लीलास्मितसिताननः ।
॥ युग्मं ॥ तौ दम्पती पुनर्हेमतुलापुरुषयुग्मदौ । चित्राभिर्धनचर्य्याभिर्म्मनस्तापममुञ्चतां ।
यदा पुनस्तयोर्द्रव्यमाव्ययात्र व्यहीयत । तदा सेर्य्यः सदुष्पुत्त्रो रात्रौ वह्निमदापयत् ।
तेनाग्निनोर्व्वरीशस्य सर्व्वोपकरणैः समं । भस्मावशेषमभवद्विजयेश्वरपत्तनं ।
सर्व्वनाशशुचा दीना राज्ञी मर्त्तुं समुद्यता । तन्वङ्गपुत्त्रैश्चलपे कथञ्चिज्ज्वलतो गृहात् ।
त्यक्तांशुकानि शय्याभ्यो निशायां सुप्तमुत्थितं । निःशेषं राजसैन्यं तदजायत दिगम्बरं ।
तद्राजधानीसौधाग्रात्पश्यन्कलशभूपतिः । तोषादनृत्यज्ज्वालौघैर्गगनालिङ्गिभिः समं ।
अतरन्नष्टसर्व्वस्वः स पारं सरितो नृपः । निममज्ज सजानिस्तु दुस्तरे शोकसागरे ।
सम्प्राप्य भ्रातरस्तुष्टं रत्नलिङ्गं नृपाङ्गना । व्यक्रीणाशु च सप्तत्या टाकानां पार्श्वमीयुषां ।
क्रीत्वा तत्प्रददौ पूर्व्वं भृत्यानां भोजनांशुके । धनेन तेन निर्द्दग्धान्यपि धामान्यशोधयत् ।
भस्मकृततलात्तावल्लब्धं स्वर्णादिभूभुजा । कयापि यावतोद्धन्त ययघत्यद्य कौतुकं ।
राजा शून्याटवीभूते पत्तने तत्र सानुगः । नडलकग्रथितच्छत्रपटलाच्छादितोऽवसत् ।
तावत्यप्यर्थसामर्थ्ये चिकीर्षोस्तत्पुरं नवम् । विना राजोचितामाज्ञां न सिद्धं वृद्धभूपतेः ।
अदृष्टाभिभवो मातुरानुकूल्यान्नवो नृपः । परितापं पितुस्तैस्तैर्दुःसन्देशैः सदाकरोत् ।
निर्व्वन्धादथ पुत्त्रेण पर्णोत्सगमनं पिता । निर्व्वासनोत्सुकेनोक्तः ग्रथ्यद्भूतमुखैर्यदा ।
प्रभवन्त्या यदा चासीत्पत्न्या तस्यैव वस्तुनः । निष्पत्तये प्रेर्य्यमाणः साधिक्षेपं क्षणे क्षणे ।
तदा जातु रहः कुर्व्वंस्तल्पन्यस्तत्कलत्रे स्थिते । उवाचानुकम्पूर्व्वं तामेवं सपरुषं वचः ।
तिलकम् ॥ अभिमानो यशः शौर्य्यं राज्यमोजोमतिर्धनं । मया जायाविधेयेन हन्त किं किं न हारितं ।
मिथ्योपकरणं नारीर्गणयन्ति नृणाधमाः । परिणामे तु नारीणां क्रीडोपकरणं नराः ।
देवोऽप्येषाप्रमत्ताभिर्व्विषकाभिरसूयया । के नाम नात्र कान्ताभिः कृतान्तस्यातिथीकृताः ।
रूपं काचिद्धनं काचिन्मज्ञां काचिच्च कार्म्मणैः । पुंस्त्वं काचिदहन् काचिद्धर्त्तृणां जन्तुरङ्गनाः ।
हरन्ति यात्रभिरिव स्वां पुत्त्रैरन्यगोत्रजैः । मत्ताः पयोधरोन्नत्याद्वत्तरङ्गिण्य इवाङ्गनाः ।
पर्य्यन्ते वेतनमिमे किञ्चीर्णा लोढ्मेरिति । पोषयन्ति सुतान् भर्त्तॄन् शोषयन्ति तु योषितः ।
सर्व्वंकालं विदित्वापि दोषान्योषित्कृतानमून् । प्रतिपत्त्यनुरोधेन मयेयं नावधीरिता ।
प्रभविष्णुर्न्निवृत्येयमेभिर्व्विकीः सुखसम्पदः । परलोकसुखन्याशामयि हन्तुं समोद्यता ।
समीपपलितपुत्रस्य नेदीयोमरणावधेः । विहाय विजयक्षेत्रं कुत्र गन्तुं ममोचितं ।
स्त्रीकरक्रमात्सेः किन्निपततमत्मना । हारोपकण्ठमेवैत्यकण्ठाकुण्ठीभवेत्कथम् ।
पुत्त्रो लोकद्वयघाती यस्तान्यस्य द्रुमो भवेत् । तीर्थान्प्रस्थापयन्मां यत् कुपथे गतमिच्छति ।
मतिभ्रात्त्वगतोऽयं मत्यादो मेऽत्र देवपि । समयान्यत्तुशोम्भूनो यद्यं सम्प्रवेक्षितः ।
विरमाद्विरमात्स्वारवात्रे मन्यु विरोधिनम् । पुत्त्रं पितुर्श्वकृतं जानीयादन्यरेतसम् ।

सुचिराविष्कृताकूतां त्यक्त्वा प्राणाय यन्त्रणाम्। एवं वदन् पतिस्तस्याश्चक्रे मर्म्मसु ताडनम्।
गोत्रजस्य पुरः पुत्रोत्पत्तिगुह्ये प्रकाशिते। आम्रष्टविप्रियालापा साभूदधिकलज्जिता।
मद्दत्तमस्य पुत्रो हि प्रशस्ताख्यस्य सोऽभवत्। विपन्नापत्ययायातस्तयेत्यासीज्जनश्रुतिः।
उत्प्रेक्षभाषितं भर्तुर्ग्योपितो जितभर्त्तृकाः। जानन्त्यान्त्याङ्घ्रिसम्पृक्तशिरस्ताडनसन्निभम्। ४४०
अतः सा सुदृढं प्रौढिसंस्कारपरुषं वचः। भाक्तप्रमर्देवोच्चैरित्युवाच रुषा पतिम्।
गतश्रीस्तापसो मन्दो जातभाग्यविपर्य्ययः। हथा वृद्धः क्व किं वाच्यमिति मूढो न वेत्त्ययम्।
स्नातोत्थितस्य यस्यास्य नाभूत्प्रावरणं पुरा। सोऽको जानात्ययं किं न तेन मां प्राप्य हारितम्।
स्वकुलस्त्रीसमुचितं यत्किञ्चिन्मामभाषथाः। क्रियते किं न कालोऽयं यत्प्रायश्चित्तसेवने।
अकर्म्मण्यो गतवया देशात्पुत्रेण वारितः। पत्न्यापि त्यक्त इत्यश्मात्परिवादान् हि मे भयम्। ४४५
कुलदोषादिष्टत्तान्तगर्भोपालम्भनिर्भरैः। वचोभिर्व्यथितस्तस्यास्तस्यौ तूष्णीं यदा नृपः।
तदा तस्यासनप्रान्तनिःसृतः प्रसरन्बहिः। निर्व्विकाराकृतेर्व्यक्तं ददृशे रक्तनिर्झरः।
सम्भ्रान्तायां ततो राज्ञ्यामपश्यत्यक्तनोरुदन्। असिधेनुं गुदे तेन क्रुधा राज्ञा प्रवेशिताम्।
ततोऽतिधीरो राजैव तं लज्जाचकितोऽन्वशात्। राज्ञो रक्तातिसरणं जातमित्युच्यतां बहिः।
विधेया नारीणां तनयनिहिताशेषविभवाः कृतस्वानो मृत्ये पुनरुदितविस्रम्भरभसाः।
नयन्तो गण्यत्वं प्रसभमभियोगं लघुमरिं नयत्यक्ताः क्ष्मापाः प्रलयमुपगच्छन्ति न चिरात्। ४५०
नृपतिर्व्याहितहृदयः शारदातपखेदितः। तृष्यन्निपीय धान्याम्बुच्युतासृक् जात इत्यभूत्।
गम्भीरैराजपुरुषैस्तथा वार्ता प्रवर्त्तिता। यथा नावुद्ध वृत्तान्तमेतं कोऽपि बहिर्ज्जनः।
॥ युग्मम् ॥ वत्सरे सप्तपञ्चाशे पौर्णमास्यां स कार्त्तिके। विजयेशाश्रितो राजा जीवितेन व्ययुज्यत।
पत्न्याः पुत्रस्य चोद्वेगैस्त्यक्तो राजा सुखोचितः। प्रसार्य्य पादौ निद्रातुं प्राप सोऽवसरं चिरात्।
चुकोपासौ न कस्मैचिच्चुकोपास्मै न कश्चन। चक्रे सुखी विमन्युश्च मरणेन महामनाः। ४५५
सङ्ग्रामराजदायादो न कस्यचिदिव प्रियः। श्मश्रुकाच्छादितो भूमावनाथ इव सोऽस्वपत्।
न प्रियाक्रन्दितैः खिद्यन्नकुप्यन्न प्रियोक्तिभिः। सर्व्वत्यागी यथौ राजा दीर्घनिद्रारसज्ञताम्।
दाक्षिण्योल्लङ्घनप्रायश्चित्तायेव त्यजन्नसून्। कृतज्ञया पतिः पत्न्या ततो निन्ये सनाथताम्।
आराजपुत्रचण्डालं देयं प्रत्याह वेतनम्। ददौ स्वस्वेव भृत्येभ्यः सा कर्तुमनृणं पतिम्।
गृहीतवेतना भृत्याः कोशं सर्व्वं तया स्वयं। पुरस्ताद्विजयेशस्य नतुः क्षेमाय पार्थिनाः। ४६०
पादन्यस्तशिराः पौत्रो रुदन्नर्पितकोशया। मूर्द्धन्याघ्राय कथितो मा पितुर्व्विश्वसीरिति।
उत्थितेव ततो भूत्वा स्वयमाकुलिता सती। प्रातिहार्य्यं यथाङ्गतुं कारयन्त्यन्तमण्डनम्।
सादिनां शतमादिश्य नप्तुस्तत्रैव रक्षणे। सा पुनः शिविकारूढमथ प्रास्थापयत्पतिं।
सपाशेकान्दिनाद्रुद्धश्च स्त्रिलैवं पतिदेवता। प्रणम्य विजयेशानं युग्यारूढा विनिर्ययौ।
निर्यान्तौ वीक्ष्य तौ प्रेतद्वय्यकल्लोलमिश्रितैः। लोकस्याक्रन्दतुमुलैर्भग्ना इव दिशोऽभवन्। ४६५

तनयो नयनाख्यस्य कल्प. सेल्यपुरौकसः। कुटुम्बिनो जयकाख्यः क्रमाद्वामरतामगात्। ४९९
स्वल्पोत्पत्तिः स दिग्देशविक्रीताल्लोवणिज्यया। सम्भृतार्थ. शनैर्लुब्धो धनेशस्पर्धितां दधे।
सार्द्धं क्रोशं खनित्वा स नित्यं दीनारराशिभिः। पूरितायाः चितेः पृष्ठे वह्नन्त्रीहीनशापयत्।
दीनारन्यसनं भृत्यैः कारयित्वा प्रतिचयं। बहवो भेदभीतेन तेन गूढं निपातिताः।
सा भाक्तिलं लब्धुमिच्छन् वल्लेऽरुस्मात्पलायिते। द्राचालतानिरुद्धास्यो हतः केनापि पत्तिना।
तदीयेनोपलब्धेन धनेन वसुधातलात्। पर्य्याप्तेनात्यजद्राजा यावदायुर्दरिद्रतां। ५००
सम्हृतु चाल्यमानेषु तद्दीनारेष्वहर्निशं। कलुषाम्भा वह्नन्मासाचितस्ता समपद्यत।
दानोपभोगरहिताः काले क्लेशेन भूयसा। अन्यार्थमर्थान् रचन्ति चित्रं लुब्धा महाशयाः।
प्राणान् धारयते निपीय मरुतः शेते तमोऽन्धे बिले सम्भोगे परदत्तमिच्छति पटं नग्नत्वपाशान्तये।
वित्तार्थ्येति कदर्थ्यतामहिरवत्यन्यस्य हेतोर्निधीन्नान्यः कोऽपि परम्परोपकृतिषु प्रौढोऽस्ति लुब्धं विना।
अन्यैश्च बहुभिर्मार्गैर्नद्यः सिन्धुमिवाविशन्। नानार्थसम्पदस्तास्ता भाग्यभाजं महीभुजं।
अर्थाभाग्योदये जन्तुं विशन्ति शतशः स्वयं। दिग्भ्योऽभ्युपेत्य सर्व्वाभ्यः सायं तरुमिवाण्डजाः। ५०५
स्रोतांसि प्रबललमेत्य वसुधां मूलेषु पुष्णन्त्यधो व्योम्नोऽम्भः पतति त्यजन्ति हरितो वारि प्रणालीमुखैः।
इत्थं शुष्कसरः पयोदसमये सम्पूर्यते सर्व्वतो भाग्यानामुदये विशन्ति शतशो द्वारैर्न कैः सम्पदः।
जनरचणदाचिण्ये ततः पितुरिवान्वहं। कुशला कलशस्यासीत्प्रजापुण्योदयैर्मतिः।
स्वयं वणिगिवार्थानां गणनाकुशलोऽपि सः। विवेका त्तपयत्यागे मुक्तहस्तः सदाभवत्।
उपस्थितौ भाविनौ च पश्यन्नायव्ययौ स्वयं। अन्तिकान्नात्यजद्भूर्जखटिकादि नियोगिवत्।
तस्य स्वल्पमूल्येन रत्नादि क्रीणतः स्वयं। नाशकन्वञ्चनां कर्तुं कोऽपि विक्रयकारिणः। ५१०
त्रिवर्गं सेवमानः स विभज्य समयं सुखी। मध्याह्नादूर्ध्वमभवदृश्यः सर्व्वकार्य्यिणां।
तस्य स्वेषां परेषाञ्च कृत्यमन्वियतश्चरैः। अज्ञातः स्वप्रवृत्तान्तः प्रजानामभवद्यदि।
स्ववेश्मेव गृहस्थस्य ध्यायतश्चास्य मण्डलं। जनो जनपदे जातु न कश्चिद्दैन्यमस्पृशत्।
कौलीनचकितो राजा कुर्व्वन् कण्टकशोधनं। प्रकटं नात्यजद्दण्डं चौरेभ्योऽपि स जातु चित्।
न तस्यार्थः कोऽपि नष्टो मन्त्रिणो यमयोजयन्। मन्त्रिणां स पुनश्चक्रे नष्टस्यार्थस्य योजनं। ५१५
विवाहयज्ञयात्रादिमहोत्सवशताकुलः। नित्यप्रहृष्टो निर्दैन्यस्तद्राज्ये ददृशे जनैः।
तेन नीतिविदाक्रान्ताः क्ष्माभुजः चित्यनन्तराः। आहाराचरणेऽप्यासंस्तदध्यचान् विना चमाः।
तन्वङ्गस्यस्वकनादींस्तोनायातान्दिगन्तरात्। व्ययितैकानुजान्मल्लप्रमुखान् गुञ्जुजानपि।
अप्रीणयदनुभृत्यान् स भव्याभिर्व्विभूतिभि.। कलाभिरमृतार्द्राभिः सोमः सुरपितॄनिव।
॥ युग्मं ॥ अवाप्तपरिपाकोऽपि दौःशील्येन न भूपतिः। कुदैशिकोपदिष्टेन दुष्टाचारेण चोज्झितः। ५२०
टक्केन वुल्लियाख्येन कन्यकाः समुपाहृताः। क्रीडास्तस्य तुरुष्केभ्यो नानादिग्देशसम्भवाः।
स ताभिः परदारैश्च लोभरूपादुपाहृतैः। अवरोधपुरस्त्रीणां दाक्षप्रतिमढौकयत्।

न यत्प्रभुः प्रियं भृत्यं गमनात्स न्यवर्त्तयत्। उपालेभे समन्युश्च न यद्भृत्यः प्रियं प्रभुं।
सहोत्थितेन कतिचित्पदानि सह भूभुजा। चिरं कृत्वा कथां नोचैर्हसन् विज्जो विनिर्ययौ।
जिन्दुराजं हलधरो मुमूर्षुर्दूषयन् यथा। तथा विज्जजयानन्दः स व्यवारोपयत्पदात्। १५५
तल्लक्ष्मीमात्रशेषां क्ष्मां कृत्वा गच्छन्विधीयतां। कृतार्थो विज्ज इत्युक्तिं नाग्रहीन्मन्त्रिणां नृपः।
निवर्त्तयिष्यति क्ष्मापस्तन्नियतं गमनादमुं। इत्याशयान्वगाद्विज्जं राजवर्ज्जं जनोऽखिलः।
आस्कन्दं शङ्कमानोऽस्माद्विज्जाद्राजा बलोर्जितात्। क्षणस्पन्देऽपि चकितो निर्निद्रः पञ्च यामिनीः।
तस्मिन् शूरपुरायाते निवृत्तेष्वनुगन्तृषु। निवृत्तशङ्कस्तां शङ्कां प्रादुश्चक्रे स मन्त्रिणां।
ते तदाकर्ण्य यं मन्त्रं विज्जार्थहरणेऽब्रुवन्। तस्याविधाने भूभर्तुरमन्यन्त नयज्ञतां। १६०
विज्जादयस्तु निर्द्रोहा यं यं देशमशिश्रयन्। तत्र तत्रैव पूज्यत्वं रत्नानीव प्रपेदिरे।
विज्जोऽधिकं प्रवृद्धोऽपि दैवतस्येव भक्तिमान्। पञ्चां कलशदेवस्य सत्यंकारः सदाभवत्।
एवं निर्वास्य विज्जादीनचिरावाप्तवैभवः। क्षिप्रं सूर्यमतीशापाज्जयानन्दः क्षयं ययौ।
राज्ञो विरोधकृद्वक्तुं शापस्याथ भिचारतां। प्रमथञ्जिन्दुराजोऽपि तस्मिन्नेव क्षणे ययौ।
तेऽपि विज्जादयः क्षिप्रमचिरावाप्तसम्पदः। प्रापुः शापोचितं सर्व्वे प्रमयं गौडमण्डले। १६५
आकस्मिकेऽथ प्रमये विज्जः प्रमयमाययौ। सुदीर्घबन्धनक्लेशं प्रापुस्तदनुजा अपि।
पलायितेषु कारायास्तेषु व्याघ्रेण भाजकः। हतस्तदनुजाः शेषा भुक्तक्लेशाः क्षयं ययुः।
छिद्रास्तद्वैधकाराणां नानशन्मदनादयः। अदीर्घेणैव कालेन दुरन्तैर्वैभवैर्थिते।
जयानन्दसहायोऽथ तत्पुत्रान् परिपालयन्। सर्व्वाधिकारी भूपेन वामनाख्यो व्यधीयत।
यस्य तास्ताश्च वहतीर्नीतिज्ञस्याद्भुतावहाः। वर्णयन्ति वयोवृद्धा गोष्ठीष्वद्यापि धीमतां। १७०
ग्रामानवन्तिस्वाम्यादिभोग्यानाहृत्य लुब्धधीः। राजा कलशगञ्जाख्यं कर्मस्थानं विनिर्ममे।
मन्त्रिणे नोनकायाथो धनोत्पादविधिं व्यदात्। कार्य्यवस्तो न पादार्थं जनरक्षणदक्षिणः।
मन्त्रिणो राजकलशपद्यान्यत्यन्तरङ्गतां। लेभिरे क्ष्माभुजः पार्श्वे प्रशस्तकलशादयः।
सुता स्वाच्छन्द्यविश्रान्तोराः सन्ध्यादिसंश्रयाः। युक्त्या निदधिरे राज्ञा निबद्धस्वाधिकारिणः।
पुनर्मदनपालेन क्रान्ते राजपुरीपतौ। साहायकाय व्यसृजत्सेनान्यं वप्पटं नृपः। १७५
प्रतापैर्भूपतेस्तेन भृत्यांशेनापि निर्जितः। बद्धा मदनपालोऽपि कश्मीरान् सम्प्रवेशितः।
भ्राता वराहदेवस्य कन्दर्पाख्यो महीभुजा। कृतोद्वाराधिपो वीरो विदधे डामरक्षयं।
बभूव जिन्दुराजाच्च शिक्षितो नयविक्रमौ। भूष्यनन्तरसामन्तमुकुटस्पृष्टशासनः।
स राजपुर्य्यादिजयी द्वारं परमकोपनः। क्षणे क्षणेऽत्यजद्राज्ञा प्रसाद्य ग्राहितः स्वयं।
मदनः क्षितिपालेन प्रापितः कम्पनेशतां। लब्धप्रकर्षान्लोपादीन् डामरान्वङ्गशोऽवधीत्। १८०
सेवावशीकृतः श्येनपालं स नगराधिपं। चक्रे त्रिजयसिंहाख्यं हताशेषमलिम्लुचं।
कन्दर्पोदयसिंहाद्यैः प्रहिते लोहरे सकृत्। राजा भुवनराजस्य दूरं निस्सारणं व्यधात्।

बह्वीः कामयमानस्य योषितः प्रतिवासरं । मत्स्ययूषादिभिर्द्रव्यैर्नास्य पुष्टिरहीयत ।
महासमयपूजासु व्यग्रः स गुरुभिः समं । महाचरुणामाहारं नीतिमुत्सृज्य चाकरोत् ।
एवं प्रवलहत्येन पुरं तेन नवीकृते । निर्दग्धे विजयक्षेत्रे शिलावेश्म न प्रज्वलितः ।
विजयेशशिलावेश्म सौवावातपवारणं । नृपोऽम्बरशिरश्चुम्बिजाम्बूनदमयं व्यधात् ।
व्ययस्थितिं चानपायां व्यधत्त त्रिपुरेश्वरे । पिनाकिनश्च प्रासादं स स्वर्णामलसारकं ।
ततः सत्कर्मकुशलश्चकार कलशेश्वरं । निःसङ्ख्यहाटकघटीपटलाङ्कशिलागृहं ।
कलशेशोपरिच्छत्रं चिकीर्षोः काञ्चनाञ्चितं । तुरुष्कदेशजः शिल्पी राज्ञोऽभ्यर्णमुपाययौ ।
सहस्रैर्भूरिभिर्हेमच्छत्रसिद्धिं वदन् कलां । स च्छादयन्निजां तासे काञ्चनारोपणं विदन् ।
कानिचिद्दिवसान्यासीत्प्राप्नुवन्नृपसत्क्रियां । ततोऽपि तीक्ष्णप्रज्ञेन नोनकाख्येन मन्त्रिणा ।
अभ्यूह्य शिक्षितकलो विलक्षोऽगाद्यथागतं । तच्च च्छत्रं ययौ सिद्धिमल्पैरेव काञ्चनैः ।
अनन्तेशाभिधं बाणलिङ्गमन्याश्च भूपतिः । प्रतिष्ठाविविधाश्चक्रे स शक्राधिकवैभवः ।
नृपे सहजपालाख्ये शान्तिं यातेऽभ्यषिच्यत । ततः संग्रामपालाख्यो राजपुर्यां तदात्मजः ।
राज्यं जिहीर्षुर्बालस्य पितृव्यस्तस्य भूपतेः । भेजे मदनपालाख्यो बलीयानुद्यमं महात् ।
तद्भयाच्छरणं प्रायान्नृपं साहायकार्थिनी । स्वसा संग्रामपालस्य जस्सराजस्य ठक्कुरः ।
कृतप्रसादो नृपतिः साहायककृते ददौ । तयोः पश्चाज्जयानन्दं शूरैर्विज्जादिभिः समं ।
तत्र विद्राविताभित्रसम्पूर्णोत्क्रान्तमण्डलः । संग्रामपालामात्यानां कार्य्यान्ते शक्यतां ययौ ।
काङ्क्ष्णो गमनं तस्य दत्त्वा तास्ता विभीषिकाः । ते त्रासमैच्छन्नाधातुं स वीरो न त्वकम्पत ।
मतिं राजपुरीयाणामसावेतामदादिति । शङ्कमानेन तेनाथ विज्जे मन्युरुपाहृतः ।
तैस्तत्र दत्तद्रविणैः प्रार्थितोऽथ महामतिः । रक्षापदेशात्तं सैन्यं स्थापयित्वा न्यवर्त्तत ।
एवं राजपुरीं तस्मिन् स्वीकृत्यान्तिकमागते । तुतोष कार्य्यमर्मज्ञः प्राज्ञः कलशभूपतिः ।
क्रमाद्राजायमानेषु विज्जादिष्वथ पस्पृशे । आमयेन जयानन्दो दैवात्प्रमयहेतुना ।
स्वास्थ्यवार्त्तोपलम्भाय भूपतिं गृहमागतं । वाच्यमस्ति रहः किञ्चिदित्यूचे स कथान्तरे ।
निर्यातेष्वथ सर्व्वेषु किञ्चिन्नैवाब्रवीद्यदा । तदा ताम्बूलनित्यचाव्याजाद्विज्जो विनिर्ययौ ।
आप्तेनाक्तोऽपि निर्गच्छत्किम्प्रयासीति भूभुजा । मन्त्रिणा चैत्य स प्राज्ञो वहिरेव व्यलम्बत ।
जयानन्दोऽभ्यधाद्भूपमुक्त्वा राजपुरीकथां । व्यक्तं मास्त्येव ते राज्यं विज्जे वृद्धिमुपागते ।
आदीयमानाद्विज्जेन कार्य्येभ्यो वेतनादपि । दर्शयामास गणनां सङ्ख्यामूल्यां महीभुजे ।
प्रातः कलुषतां राजा प्रयातः स्वगृहांस्ततः । याचितो गमनानुज्ञां विज्जेनेङ्गितवेदिना ।
निषेधन्निव दाक्षिण्यदोषान्निर्बन्धकारिणः । तस्यानुज्ञां ददौ गन्तुं मान्तखेदो महीपतिः ।
तस्मादेशो गृहान् गत्वा सर्व्वोपकरणैः समं । प्रस्थाप्य सोऽपतो भ्रातृनाप्तुं नृपतिं ययौ ।
राजधर्म्मगभीरस्य गूरयोः स्वामिभृत्ययोः । काचिदेव क्षणे तस्मिंस्तद्याभूदद्भुतावहा ।

न यत्प्रभुः प्रियं भृत्यं गमनात्स न्यवर्त्तयत्। उपालेभे समन्युश्च न यद्भृत्यः प्रियं प्रभुं।
सहोत्थितेन कतिचित्पदानि सह भूभुजा। चिरं कृत्वा कथां नोचैर्हसन् विज्जो विनिर्ययौ।
जिन्दुराजं हलधरो मुमूर्षुर्दूषयन् यथा। तथा विज्जजयानन्दः स व्यतारोपयत्पदात्।
तल्लक्ष्मीमात्रशेषां क्ष्मां कृत्वा गच्छन्निधीयतां। कृतार्थो विज्ज इत्युक्तिं नाग्रहीन्मन्त्रिणां नृपः।
निवर्त्तयिष्यति क्ष्माभृन्नियतं गमनादमुं। इत्याशयान्वगाद्विज्जं राजवर्ज्जं जनोऽखिलः।
आस्कन्दं शङ्कमानोऽस्माद्विज्जाद्राजा बलोर्जितात्। क्षणस्पन्देऽपि चकितो निर्निद्रः पञ्च यामिनीः।
तस्मिन् शूरपुरायाते निवृत्तेष्वनुगन्तृषु। निवृत्तशङ्कस्तां शङ्कां प्रादुश्चक्रे स मन्त्रिणां।
ते तदाकर्ण्य यं मन्त्रं विज्जार्थहरणेऽब्रुवन्। तस्याविधाने भूभर्त्तुरमन्यन्त नयज्ञतां।
विज्जादयस्तु निर्द्रोहा यं यं देशमशिश्रयन्। तत्र तत्रैव पूज्यत्वं रत्नानीव प्रपेदिरे।
विज्जोऽधिकं प्रहृष्टोऽपि दैवतस्येव भक्तिमान्। पद्मां कलशदेवस्य सत्यंकारः सदाभवत्।
एवं निर्वास्य विज्जादीनचिरावाप्तवैभवः। चिप्रं सूर्य्यमतीशापाज्जयानन्दः क्षयं ययौ।
राज्ञो विरोधकृद्वक्तुं शापस्याव्यभिचारतां। प्रमयञ्जिन्दुराजोऽपि तस्मिन्नेव क्षणे ययौ।
तेऽपि विज्जादयः क्षिप्रमचिरावाप्तसम्पदः। प्रापुः शापोचितं सर्व्वे प्रमयं गौडमण्डले।
आकस्मिकेऽथ प्रमये विज्जः प्रमयमाययौ। सुदीर्घबन्धनक्लेशं प्रापुस्तदनुजा अपि।
पलायितेषु कारायास्तेषु व्याजेन पाजकः। हतस्तदनुजाः शया भुक्तक्लेशाः क्षयं ययुः।
द्विजास्तद्द्वैधकाराणां नानशन्मदनादयः। अदीर्घेणैव कालेन दुरन्तैर्वैभवैः स्थिते।
जयानन्दसहायोऽथ तत्पुत्रान् परिपालयन्। सर्व्वाधिकारी भूपेन वामनाख्यो व्यधीयत।
यस्य तास्ताव्यवहृतीर्नीतिज्ञस्याद्भुतावहाः। वर्णयन्ति वयोवृद्धा गोष्ठीष्वद्यापि धीमतां।
ग्रामानवन्तिस्वाम्यादिभोग्यानाहृत्य लुब्धधीः। राजा कलशगञ्जाख्यं कर्म्मस्थानं विनिर्ममे।
मन्त्रिणे नोनकायाथो धनोत्पादविधेऽप्यदात्। क्रौर्य्यभक्तो न पादाग्रं जनरक्षणदक्षिणः।
मन्त्रिणो राजकलशापथ्यान्यत्यन्तरङ्गतां। लेभिरे क्ष्माभुजः पार्श्वे प्रशस्तकलशादयः।
सुता स्वाच्छन्द्यविश्वासैराः सन्ध्यादिसंश्रयाः। युक्त्या निदधिरे राज्ञा निबद्धस्वाधिकारिणः।
पुनर्मदनपालेन क्रान्ते राजपुरीपतौ। साहायकाय व्यसृजत्तेनान्यं वप्पटं नृपः।
प्रतापैर्भूपतेस्तेन भृत्यांशेनापि निर्ज्जितः। बद्धा मदनपालोऽपि कश्मीरान् सम्प्रवेशितः।
भ्राता वराहदेवस्य कन्दर्पाख्यो महीभुजा। कृतोद्वाराधिपो वीरो विदधे डामरक्षयं।
बभूव जिन्दुराजाख्य शिक्षितो नयविक्रमौ। भूम्यनन्तरसामन्तमुकुटस्पृष्टशासनः।
स राजपुर्य्यादिजयी द्वारं परमकोपनः। क्षणे क्षणेऽत्यजद्राज्ञा प्रसाद्य ग्राहितः स्वयं।
मदनः क्षितिपालेन प्रापितः कम्पनेशतां। लब्धप्रकर्षान्पोपादीन् डामरान्वङ्गशोऽवधीत्।
सेवावशीकृतः श्येनपालं स नगराधिपं। चक्रे त्रिजयसिंहाख्यं हताशेषमलिम्लुचं।
कन्दर्पोदयसिंहाद्यैः प्रहिते लोहरे सकृत्। राजा भुवनराजस्य दूरं निस्सारणं व्यधात्।

कीर्त्तिराजस्य तनयां स च नीलपुरप्रभोः। लब्ध्वा भुवनमत्याख्यां रिपोश्छिद्रमयोऽभवत्।
कार्य्यप्रतिग्रहे कर्त्तुं प्रवृत्तिं याचितोऽभवत्। दत्वा विजयसिंहाद्यो नृपेण नगरेशतां।
गुङ्गात्मजः स मन्त्रोऽथ तेन द्वारपतिः कृतः। राज्ञां मौलिमणिस्थाने स्वप्रतापमरोपयत्।
॥ युग्मं ॥ शौर्य्ये निष्परिवारस्य पार्थस्योत्तरगोग्रहे। उरसा सम्प्रवेशे वा द्रुतं मल्लस्य मानिनः।
पञ्चाशैस्तुरगैर्यस्य कृत्स्नां तोलां व्यपाहरत्। राज्यं वाजिगजैस्सार्द्धमभयाख्यस्य भूभुजः।
एवं वशीकृतभुवो भूपतेर्नयवेदिनः। सममेवाष्टभूपालास्त्रिषष्टेऽब्देऽविशन् पुरं।
कीर्त्तिर्लव्वपुराधीशश्चाम्पेयोभूम्टदासटः। तुक्कात्मजस्तु कलशो वल्लापुरनरेश्वरः।
राजा संग्रामपालाख्यः स च राजपुरीपतिः। उत्कर्षो लोहरोर्व्वीभृद्दोर्व्वंशो मुङ्गजो नृपः।
गाम्भीरसीह. कान्देशः काष्ठवाटधराधिपः। श्रीमानुत्तमराजोऽपि राजानमुपतस्थिरे।
॥ तिलकं ॥ राजलोक प्रवृद्धोऽपि घने जनपदेऽभवत्। दुर्लक्ष्यो वार्षिकसरित्पूरो वारिनिधाविव।
तस्मिन् क्षणे शिलीभूतवितस्तासलिले नृपैः। शीतक्षणेऽपि सङ्कीर्णं सुखं तैरन्वभूयत।
मनसापि हि भूपाला यत्ते किञ्चिदचिन्तयन्। प्राप्तमेव पुरे पश्य वामनेन तदाहृतं।
कौशलं मन्त्रिणस्तस्य रराजेतरदुर्लभं। निमित्तं तदसम्भ्रान्तो नित्यवधो न्यवाहयत्।
पार्थिवेष्वथ यातेषु मन्त्रे कार्य्यपराङ्मुखे। क्षितिपालेन कन्दर्पो द्वारं स्वीकारितः पुनः।
अभिमानधनो मन्त्री कृतारम्भैर्निजैर्धनैः। दुर्गं स खापिकं नाम युक्त्या दुर्ग्रहमग्रहीत्।
स प्रविष्टोऽपि नगरं खिन्नः केनापि हेतुना। पार्थिवाभ्यर्थ्यमानोऽपि कार्य्यं नैवाग्रहीद्यदा।
तदा प्रशस्तकलशं नित्यं दूत्यं समाचरन्। तदुक्तिकोक्तिसन्तप्तः संस्पृशन्नभिमानितां।
निजश्रियातिभूयस्या भूरीन् सङ्गृह्य शिल्पिनः। तत्पदे रत्नकलशं स्वभ्रातरमकारयत्।
सोऽर्थैः क्रीतमयोऽप्यासीन्न कन्दर्पः समः क्वचित्। किञ्चित्रोल्लिखितः सिंहः सत्यसिंहक्रियां स्पृशेत्।
ततः क्रमेण भूभर्त्रा स्थैर्यरत्नं कथञ्चन। राजस्थानाधिकारं स नगरे याचितः पुनः।
अतिताडनतश्चौरे विपन्नेऽथ कृपाकुलः। त्यक्त्वा तमप्यधीकारं विषयाजाह्नवीमगात्।
पटान्तकृतसंरोधस्ताडयित्वा करं प्रभोः। कोपाद्देशान्तरं यातस्तं प्रत्यास्ते स्म मन्युमान्।
अत्यन्तखेदितोऽप्यासीदानीतस्तान्तिकं पुनः। दर्पं हर्त्तुं नृपस्तस्य सन्नद्धो न तु जीवितं।
इत्थं पुरुषसिंहानां प्रौढदार्ढ्यो विषोढवान्। आरोहमवरोहञ्च सन्तरज्ञः क्षमापतिः।
उपाङ्गगीतव्यसनं नर्तकीसङ्ग्रहादरः। देशान्तरोचितं राज्ञा तेनैवेह प्रवर्तितं।
ततो जयवनोपान्ते निरन्तरमहागृहं। स्वनामाङ्कं पुरं कर्त्तुं प्रावर्त्तत विशाम्पतिः।
मठाग्रहारप्रासादमहाम्टहपरम्पराः। सतोयोपवनास्तत्र ययुः सिद्धिं सहस्रधा।
अत्रान्तरे राजसूनुर्हर्षः सोत्कर्षपौरुषः। गुणैर्लेभे प्रकाशत्वमन्यभूपालदुर्लभैः।
सोऽशेषदेशभाषाज्ञः सर्व्वभाषासु सत्कविः। कृत्स्नविद्यानिधिः प्राप ख्यातिं देशान्तरेष्वपि।
लुब्धेन पित्रा सम्यक्ता जना नानादिगागताः। गुणशौर्य्योज्ज्वलस्तेन गृहीताः कृतवेतनाः।

अपर्य्याप्ते पितृक्लृप्ते वेतने व्ययशालिनः। एकाहान्तरितं तस्य भोजनं त्यागिनोऽभवत्।
पितरं गायन इव व्यक्तं गीतैः स रञ्जयन्। भर्तव्यभरणं चक्रे तद्दत्तैः पारितोषिकैः।
उद्गायति पुरस्तस्मिन् कदाचिदथ पार्थिवः। सभ्येषु प्रीयमाणेषु शौचायोत्थाय निर्ययौ।
तेन प्रसङ्गभङ्गेन जाततेजोवधः सुधीः। क्षुभ्यन्नैलज्ज्यकोपाभ्यां कुमारः क्षितिमैक्षत।
प्रभुर्व्वीतक्षान्तिः सुहृदतिशठः स्त्री परुषवाक् सुतो गर्व्वोन्नद्धः परिजनउदात्तप्रतिवचाः।
इयान् सोढुं शक्यो ननु हृदयदाही परिकरो नतु श्रोतावज्ञालुलितनयनान्तं परिभवन्।
पितुरेव तदा भृत्यो विश्वावर्त्ताभिधो विटः। शाधि राज्यं निहत्येमं नर्म्मणेत्युवाच तं।
अधिक्षिपन्स तं रोषात्तानेनोक्तमसांप्रतं। इत्यासन्नेन हसता धम्मटेनाप्यकथ्यत।
अग्रे भोगेच्छवस्छन्नाः कुमारानुनुगान् पितुः। स्नेहं प्रदर्श्य स्वीकुर्य्युर्वेश्याः कामिसखीरिव।
पुनः सभां सम्प्रविष्टस्तं पिता पर्य्यतोषयत्। प्रीतिदायैस्ततस्तैस्तैः साधुवादैश्च मानिनां।
अन्येद्युस्तु पितुः पार्श्वात्स भुक्त्वा स्वगृहान् गतः। अभ्येत्य विश्वावर्त्तेन तदेव जगदे रहः।
उपपन्नं तत्तदुक्त्वा तेनाभीक्ष्णं निषेधता। निर्ब्बध्नन्नपि हस्तेन सोऽथ कोपादताड्यत।
तद्घाताभिघातं रुधिरं वमन्तं घ्राणवर्त्मना। तं वीक्ष्य सोऽभिजातोऽभूत्सदाक्षिप्तो नृपात्मजः।
भृत्यैः प्रक्षालयन्नस्वं तस्येदृक् पाप्मनो भवेत्। उक्तेनापीति कथयन् स्मित्वा वासांस्यदापयत्।
अनिच्छोरपि तस्येच्छा दानात्तेनाप्यमोच्यत। दुःशीलेनान्यकामिन्याः स्मितमात्रादिव स्पृहा।
असकृत्प्रतयत्नः स ततः कालेन भूयसा। तं प्रैरयत्तत्र कृत्ये मध्ये स्वीकृत्य धम्मटं।
स रोहद्द्रोहसङ्कल्पजन्मना पाप्मना श्रितः। संमन्त्र्य पितरं हन्तुं तीक्ष्णान् प्रायुङ्क्त सर्व्वतः।
प्रश्वस्य गोचरीभूतस्तेषां स्नेहलवस्पृशां। न घातितः स्वसुना च वर्ज्जिता नच तत्कथा।
आप्तलं तीक्ष्णवर्गोऽथ प्रतिभेदभयाद्गते। तां विश्वावर्त्त एवाशु वार्त्तां राज्ञे न्यवेदयत्।
बुद्ध्वा राजपुत्रस्तत्तस्मिन्नहनि जातभीः। भोक्तुं नागात्पितुः पार्श्वमपि दूतैः कृतार्थनः।
सोऽपि तस्मिन्ननायाते तदर्थे शान्तसंशयः। दिने तत्र मनस्तापान्नाभुङ्क्त सपरिच्छदः।
सभ्राद्धकस्य प्राप्तस्य प्रातर्दुःखं न्यवेदयत्। सुचिरं शक्कनस्याङ्के शिरो विन्यस्य सोऽरुदत्।
उक्त्वा च दम्मटोदन्तं बद्ध्वा तस्य समर्पणं। विधेहीत्यभ्यधात्तापि तं भङ्गीभणितिक्रमैः।
न कृताधिगमावावां कृत्यस्यास्येत्युदीर्य्य तं। अभाषेतां भ्रातुरर्थे पुनस्तन्वङ्गनन्दनौ।
त्वत्प्रसादबलाद्राजन्नापन्नत्राणदीक्षितौ। यावावां तत्प्रवेशार्थं व्यक्तद्वारं निशास्वपि।
कथं नु पृथिवीपाल प्राप्ते प्राणात्ययक्षणे। निर्दोषो वा सदोषो वा ताभ्यां सन्त्यज्यतेऽनुजः।
॥ युगलकं ॥ स्वामिद्रोहापवादश्च भवेत्तद्रक्षणाद्ध्रुवं। देशत्यागं तदुत्सृज्य शरणं नान्यदावयोः।
इत्यादि सभाप्य तयोः पादन्यस्तोत्तमाङ्गयोः। हृदि त्वागमनानुज्ञां कथञ्चित्पार्थिवो ददौ।
पथिकस्येदमुं हन्यान्मध्यीकृत्येति दम्मटं। तौ विनिर्जग्मतुर्देशात्ततः ससलवाहनौ।
तन्वङ्गजेषु यातेषु निविक्तीकृतमन्दिरः। सुतमानीय नृपतिः सान्त्वयन्निदमब्रवीत्।

आसंसारं जगत्यस्मिन् सर्व्वतः ख्यातकीर्तिना । जनकेनैव जन्यस्य प्रसिद्धिरुपाद्यते जनैः ।
पुत्त्रप्रीतांशुनेवात्रिं दिक्द्वीपख्यातकीर्त्तिना । भवता तु सुपुत्त्रेण माञ्जानात्यखिलोजनः ।
स त्वं गुणवतामग्र्यो निरर्गलयशाभवन् । असाधुसेव्यमध्वानं वद कस्मान्निसेवसे ।
पैतामहं निजस्वार्थं यन्न तुभ्यं समार्पयं । तत्र हेतुमनाकर्ण्य नास्थयां कर्त्तुमर्हसि । १४५
रिक्तः स्वेभ्यः परेभ्यश्च प्राप्नोत्यभिभवं नृप । इति निर्धार्य हि मया क्रियते कोषरक्षणं ।
पुरप्रतिष्ठां निष्पाद्य क्षिप्ता राज्यधुरं त्वयि । वाराणस्यां गमिष्यामि नन्दिक्षेत्रेऽथ वा पुनः ।
तद्राज्यकोशयोः स्वामी बुभूषुर्न चिराद्भवान् । अतितात्पर्य्यतः कस्मादनार्य्योचितमीहसे ।
सम्भाव्यते त्वयि न तद्यन्ममावेदितं खलैः । यथार्थकथनात्तस्मात्कौलीनं विनिवार्य्यतां ।
विशुद्धये करोत्वेष स्वकृतस्याप्रतिश्रवं । खेदादितीच्छंस्तद्राजा साभिप्रायं वचोऽभ्यधात् । १५०
अपलापवचोमात्रं निनीषुस्तस्य हेतुतां । जनप्रत्यायने सोऽभूद्यस्मात्त्वाप्तिसमुत्सुकः ।
हर्षस्तु साधुवादैस्तत्पितुः संपूज्य भाषितं । वक्ष्याम्यात्ममुखे तत्वमित्युक्त्वा निर्ययौ बहिः ।
सामान्यप्रेरणाद्देषा चिकीर्षाभूदिति ब्रुवन् । स पितृप्रहितं दूतं भीतः शावसथं ययौ ।
दूतं म्लानाननं वीक्ष्य पाणिभ्यां ताडयञ्छिरः । हा पुत्त्रेति वदन्राजा तस्यास्क्रन्दमदापयत् ।
हतेऽस्मिन् स्वशिरश्छिन्द्यामिति प्रोक्तवतः प्रभोः । निदेशाद्वेष्टयित्वैव तस्युस्तद्वेश्म शस्त्रिणः । १५५
तीक्ष्णास्तु पिहितद्वाराः परिवार्य्य नृपात्मजं । ऊचुः सुपरुषां वाचमेवं निश्चितमत्यरः ।
अस्मान् घृणी प्रमादी च विरुद्धं च्छद्म कारयन् । घातयित्वा दुराचार क्व जीवन् स्यातुमिच्छसि ।
रक्षिष्यति सुतं स त्वा स पिता रक्षितस्त्वया । ज्ञातेयं युवयोरस्ति वयमेव हताः पुनः ।
युध्यस्व मध्यगोऽस्माकं त्वां निहन्मोऽन्यथा वयं । एवं सर्व्वप्रकारं ते व्यक्तं नास्त्यत्र जीवितं ।
तां वार्त्तां भूपतेः श्रुत्वा व्याकुलस्यायतः स्थितः । हर्षान्तिकं दण्डकाख्यः प्रायान्निजमहत्तरः । १६०
तीक्ष्णैर्निजतया दत्तप्रवेशः स नृपात्मजं । प्रह्वत्योवाच मतिमानेवं सर्व्वान् विमोहयन् ।
क्षत्रियापुत्त्र जीवित्वा कल्पानल्पेतरानपि । कारणैरपि गन्तव्यं नियमान्नियतेर्व्वशं ।
तदेतस्मिन् समासन्ने मरणे व्यभिचारिणि । यदर्थं रक्ष्यते प्राक्तं समानः पाल्यतां त्वया ।
कृतश्रुतख्यातयशा युवा सुक्षत्रियो भवान् । तदाहवविलम्बेन कार्य्यं किमिव पश्यसि ।
एतेषु सुसहायेषु मयि चापेसरेऽधुना । विपत्तिर्व्विजयो वापि प्रतापिंस्तव शोभते । १६५
उत्तिष्ठ नखकेशादियोजनं कारय द्रुतं । वीरपट्टं बधानापि स्व.स्त्रीपरिणयस्त्रजं ।
इत्युक्त्वा क्षुरकर्म्मार्थं राजपुत्त्रं सनापितं । प्रावेशयत्पूज्यमानस्तीक्ष्णैराभ्यन्तरं गृहं ।
न्यस्तासिधेनुर्द्दर्पण दत्तन्नाप. क्षणात्स्वयं । पश्चात्प्रविश्य तद्वेश्म चक्रे सुनिहितार्गलं ।
ततः स राजस्थानीयं तमारादभ्रवीद्दृप । रक्षितो राजपुत्त्रोऽयं क्रियतां स्वोचितं त्वया ।
भूतपशादिभवभेषधिभिर्न्निरोधिजातं बलैः प्रहरणप्रभवं तनुत्रैः ।
निर्व्वाप्यते प्रतिभयं पृथिवीपतीनां सार्व्वत्रिकन्तु रभसाद्भुवि बुद्धिवृद्धैः । १७०

नदन्तस्तुमुलं योधास्ततो राजसुतास्पदे । आरोढुमाययुर्व्वप्रहर्म्यादि प्रविविक्षवः ।
तीक्ष्णादृढद्वारगृहस्थितं त्यक्त्वा नृपात्मजं । यावन्निर्गन्तुमिच्छन्ति हन्यमाना युयुत्सवः ।
द्वित्राः प्रसन्नसान्निध्यान्मध्यपातं समाश्रिताः । तावद्विनिर्ययुर्व्वीरा निर्द्रोहा अभिमानिनः ।
ते निर्याताः सूर्य्यमतीगौरीशाश्रयिणो गृहात् । सद्यामित्रान्तिकं प्रापुघ्नन्तो युधि विरोधिनः ।
रक्ष्यमाणोऽपि भूभर्तुर्गिरा ज्ञातेयशालिनः । राजन्यानिहतस्तेषु प्रथमं सहजाभिधः ।
द्विजस्तिव्याभिधो वीरः पण्डितः शौर्य्यमण्डितः । रामदेवस्य केशी च कर्णाटोऽरिभटैर्हतः ।
केचित्त्यजन्तः शस्त्राणि स्वं घ्नन्तः केऽपि च स्वयं । लेभिरे बधवन्धादि पापाः कापुरुषोचितं ।
सितपञ्च्यां सहस्यस्य चतुष्षष्ठे स वत्सरे । वैरं नीत्वा पितापुत्त्रौ विप्लवः कारितौ विटैः ।
हठत्यागाशक्तिः प्रिययुवतिसम्प्रेरणवचः खलासङ्गः पूर्व्वप्रणयपरिहारो जनयितुः ।
अमात्येन भ्रात्रा सममपरमात्राथ कलहः कुमाराणां बुद्धिं पितरि विपरीतां प्रतनुते ।
एवं स खलसङ्गत्या कुमारो लब्धलाघवः । बन्धं कारागृहे प्रापदसुखानि सुखोचितः ।
राज्ञी भुवनमत्यस्मिन् बद्धे माध्यस्थ्यसंविदि । स्थापिता मानिनी कण्ठच्छेदं कृत्वा जहावसून् ।
रक्षिणो मन्त्रिणामाप्तांस्तस्य विन्यस्य भूपतिः । प्राहिणोद्भुवि तान् भोगान् सुतस्नेहाद्दिने दिने ।
पक्तिकायामशक्तोऽयमिति सञ्चिन्त्य भूभुजा । भृत्यः प्रयागनामास्य निजः पार्श्वात्स वारितः ।
नोनको हर्षमुद्दिश्य स्वेनान्येद्य महीभुजं । जीवितं लोचने वास्य हृयेतामित्यभाषत ।
नृपः स शीलनैकल्ये पशुतुल्ये ह्रियं त्यजन् । रिपोरिव तनूजस्य चकमे कतिचित्प्रियाः ।
तासु श्वशुरवाल्लभ्यमवाप्य सुगलाभिधा । बभूव तुक्कभूभर्त्तनप्तृभर्त्तवधार्थिनी ।
सम्मन्त्र्य नोनकः सा च द्वौ सूदावशमान्तरे । रसं प्रदातुं हर्षस्य पापं प्रैरयतां ततः ।
अन्यसूदमुखाद्वार्तां प्रयागस्तामवाप्तवान् । प्रभुं तद्दाप्यमानान्नपरिहारमकारयत् ।
तेनान्नेन परीक्षार्थं दापितेनापजीवितौ । हर्षः श्वानौ निशम्याभून्निराशो निजजीविते ।
प्रयुक्तिं गूढदण्डस्य पितुरेव स तां विदन् । ततः सर्व्वाणि भोज्यानि स्पृष्ट्वैवाज्झीद्दिने दिने ।
प्रयागोपहृतेनासीत्परं वा स्वेन सर्व्वदा । भोज्येन येन केनापि कुर्व्वञ्जीवितधारणं ।
अवस्थाभोजनं श्रुत्वा राजा सूदैर्निवेदितं । ततः प्रयागमानीय तत्र पप्रच्छ कारणं ।
प्रयोजकौ च सूदौ च सोपलभ्य न्यवेदयत् । रसार्पणकथां कृत्स्नां तज्ज्ञानं च स्वयं प्रभोः ।
अथान्येष्वपि सूदेषु पित्रा दत्तेषु शङ्कितः । राजसूनुर्न बुभुजे प्रयागोपहृतं विना ।
स सर्व्वेषु विरुद्धेषु यद्यत्तत्नात्यशाहयत् । मेने तत्तद्दिनं लब्धं शेषेभ्यास्थापराङ्मुखः ।
अत्रान्तरे समुदभूदकस्मान्नाशसूचकः । अदृष्टपूर्व्वो भूभर्तुः सदाचारविपर्य्ययः ।
उत्पाट्य तामस्वाम्याख्यं पूर्व्वं ताम्रमयं रविं । स रीतिप्रतिमाः स्वैरं विहारेभ्योऽप्यपाहरत् ।
धनानि निरपत्यानामाहर्तुं व्यवसायिना । न्यवार्य्यतार्य्यमर्य्यादा कौर्थ्याक्रान्तेन भूभुजा ।
ततोऽभिशापसन्तापव्यञ्जकेनाञ्जसाभवत् । अतिसम्भोगजातेन धातुक्षेपेन सोऽर्दितः ।

कुम्भप्रतिष्ठासम्भारं चिकीर्षोर्हरमन्दिरे। तस्यापतन्महाकालकुम्भनामापुटादसृक्।
आकस्मिकं दुर्निमित्तं तत्प्रतीकारसम्विदा। न जनागण्यगाच्छान्तिं प्रवृद्धिं प्रत्युतायथौ।
असुस्रुत्यनुबन्धेन तेन ग्लपितसौष्ठवः। शनैः शय्याप्रणयितामन्तः सम्प्रत्यपद्यत।
बलमांसक्षतक्षैण्यमग्निमान्द्याद्युपद्रवैः। कलावशेषेण शशिना तदपुः साम्यमाययौ।
राज्यं स दित्सुर्हर्षाय दृष्ट्वामात्यान् पराङ्मुखान्। ततोऽभिषेकभाण्डं लोहराचलात्
उच्चावचास्तेन सर्व्वं संविभक्तामुमूर्षुणा। परमोर्थो विधेयेन न शुद्धान्तवधूजनः।
कृत्वा धनार्पणं कुर्य्यां देशादस्य प्रवासनं। इत्युक्त्वा हर्षमानेतुं तेनाप्रार्थन्त मन्त्रिणः।
ते तु गोप्तृन्निवार्य्याद्यांठक्कुरांल्लोहराश्रितान्। विन्यस्य रक्षिभावे तमुत्कर्षाय न्यवेदयन्।
स नाट्यमण्डपात्तेन निष्कृष्टः क्षामविग्रहः। निवेशितश्चतुःस्तम्भे बद्धा बान्धववर्ज्जितः।
अथोज्जिगमिषून् प्राणान्निःसामर्थ्योऽविदन्नृपः। मुमूर्षुरभवत्तीर्थप्रस्थानाय कृतत्वरः।
स जानन्दैवतक्रोधं तामस्वामिविपाटनात्। इयेष शरणं कर्तुं मार्तण्डं प्राणलब्धये।
सन्त्यज्य विजयक्षेत्रमतएवापवर्गदं। महीश्वरोऽपि प्रययौ तत्र चाषवशंवदः।
अधीकारमाप्ता तृणमिव विदन्विश्वमखिलं नियोगी जातार्तिर्नमति स्पृहदासीरपि रुदन्।
नदन्मूर्खो ज्ञानी बहुदुरुपदेशाधिगमतः करोति प्राणान्ते शिशुरिव च किं किं न विगुणं।
तादृश्या कृपणप्रायसेव्यया क्लैव्यसम्विदा। गुरूपदेशाहङ्कारस्तस्य हास्यत्वमाययौ।
शुक्लायां मार्गशीर्षस्य तृतीयस्यां निशामुखे। तलादेवाश्रितो युग्यं भूभृन्मर्तुं विनिर्ययौ।
स भेरीतूर्य्यनिर्घोषैर्जनाक्रन्दं तिरोदधत्। सामात्यान्तःपुरो नौभिः प्रतस्थे जलवर्त्मना।
यामशेषे दिनेऽन्यस्मिन् प्राप्तस्य चरणान्तिके। मार्तण्डस्य स्वजीवाप्त्यै सौवर्णीं प्रतिमां व्यधात्
भृत्यैरगणिताज्ञस्य दिदृक्षोर्ज्येष्ठमात्मजं। औत्सुक्येनारतिस्तस्य व्यथितस्याधिकाभवत्।
वहिर्हर्षकृतं गीतं गायनानां स गायतां। विवृतद्वारविवरः शृण्वानि स्म विनिःश्वसन्।
प्राणावसानसमये परिसङ्कुचन्ती स्वप्नप्रसङ्ग इव धावनशक्तिराज्ञां।
प्राचुर्य्यदा खलु रुजो मरणोद्भवाया मर्म्मव्यथां प्रथयते पृथिवीपतीनां।
प्रजाज्येष्ठं तनूजस्य संविभक्तुं कृतार्थनः। उत्कर्षं ग्राहयन् शिक्षां बद्धशिक्षोऽभवत्ततः।
अव्ययं वदतो हर्षं इति वाचं पुनःपुनः। निर्ङ्क्तुं नैनको भावं तस्यादर्शमढौकयत्।
स तन्निवार्य्य विहमन्दष्टोष्ठः कम्पयन् शिरः। जपन्त्किमपि माघेऽब्दे बहुवागभवद्दिने।
आसन्नप्राणनिर्याणः संशय्याक्षय मन्त्रिणः। ततः स्वन्तैरसम्मूढैर्मार्तण्डायमनाययन्।
वर्षानेकाम्रपञ्चाशद्भुक्तवान् स सितेऽहनि। मार्गस्य पञ्चषष्टेऽब्दे पष्ठ्यां निद्रामयासदत्।
तत्र सम्मनिकामुख्या देव्यः परिणयाश्रमा। अवरुद्धापि जयमत्यभिधाना तमन्वगुः।
प्रमादवित्तया तत्र पुनः कय्याभिधानया। अवरुद्धिकया कान्ता स्त्रीजातिरपवित्रिता।
सर्व्वावरोधप्राधान्यप्रदानं मामरचदि। मामार्पशाम भर्तुस्तदनुशाभिगमेच्छया।

## ॥ सप्तमस्तरङ्गः ॥

संश्रित्य विजयक्षेत्रं क्रमाद्ग्रामनियोगिनः । भेजे यत्स्ववरुद्धात्मतो दुःखाकरोति नः ।
भूपालभोग्यं स्ववपुः मा भोगाभ्यासभासुरं । निनाय ग्राम्यभोगित्वं धिक् नारीर्नीचचेतसः ।
उत्कर्षस्याभिषेकाय व्यग्रेष्वखिलमन्त्रिषु । अन्त्येष्टिमकरोद्राज्ञः क्षतज्ञो वामनः परं ।
घोषोऽभिषेकतूर्य्याणामेकोगीनमङ्गलः । साक्रन्दाः प्रेततूर्य्याणां नादोऽन्यत्र समुच्चयौ ।
जातः पद्मश्रियो देव्याः पुत्त्रः कलशभूभुजा । ततो विजयमल्लाख्यो भ्रातुर्वैमत्यमादधे ।
यददाद्धर्षदेवस्य पिता प्रत्यहवेतनं । प्रतिशुश्राव तस्मै स तदेवोत्कर्षभूपतिः ।
आश्वासाय च मध्यस्थान्ददौ सामन्तमन्त्रिणः । कथ्यात्मजस्य चक्रे च जयराजस्य वेतनं ।
अन्विष्यन्ति रुदत्यएव तरला गत्यन्तरं योषितो योगक्षेमकथाश्चितान्तिकगता एवात्मजाः कुर्वते ।
अन्येषां गतयोऽवसानसमये चर्चां विचार्य्येदृशीं स्त्रीपुत्त्रादिकृते कुकर्म्मभिरहो सञ्चिन्वतेऽर्थं जडाः ।
प्रविवेश ततः श्रीमान्नगरं नृपतिर्नवः । ननु हर्षादयाकाङ्क्षि हृदयं नगरौकसां ।
तद्राज्यलाभदिवसो जनस्याभोगदूषितः । सन्नपि प्रत्यभान्नैव सरोगार्त्तेरिवोत्सवः ।
हर्षदेवस्तु पितरि प्रयाते मर्त्तुमातुरे । नववद्धश्चतुःस्तम्भे न तस्मिन्नह्नि भुक्तवान् ।
सायम्भर्ष्टमिवाध्वन्यमन्यस्मिन्नह्नि ठक्कुराः । ते शोकमूकं सम्प्रार्थ्य कथञ्चित्तमभोजयन् ।
राज्यं दातुं निजे देशे चक्रुश्चास्य प्रतिश्रवं । राज्यद्वयं नायमर्हत्येकएवेति वादिनः ।
एवं मिलितचित्तैस्तैर्व्विपत्तिं श्रुतवान् पितुः । कृतोपवासः सोऽन्येद्युः शुश्रावोत्कर्षमागतं ।
वार्थैः पित्रे प्रयच्छन्तं निर्व्वाप सलिलाञ्जलीन् । तं दूतैरनुजो राजा स्नातुं प्रार्थयताथ सः ।
तस्य स्नानक्षणे राज्ञि सज्जे राज्याभिषेचने । घोषोऽभिषेकतूर्य्याणामुदभूज्जयध्वनिः ।
स तेन सुनिमित्तेन प्राप्तां मेने निमित्तवित् । विद्युद्योतेन जीमूतगर्जामिव नृपश्रियं ।
ततः प्रभृत्युन्मुखता सुनिमित्तैरगृह्यत । तस्यात्याप्तस्य राज्यस्य भृत्यैरिव दिने दिने ।
स भोजनं कारयितुं दूतान्भ्रात्रा विसर्ज्जितान् । देशान्निर्व्वासयतु मां राज्यात्सन्त्यज्य बन्धनात् ।
स्नातुमप्रत्यवास्थित्वा विदधा कोशसन्निः । प्रियेऽन्यदा निराशनैः सन्दिश्येति व्यसर्ज्जयत् ।
स तन्मिथ्या प्रतिश्रुत्य तं दूतैः प्रहितैस्तन । कृतकोशं सान्त्वयित्वा राजा भोज्यमभोजयत् ।
नित्यञ्च श्वो विधास्येतदर्थमान इति ब्रुवन् । कालापहारं कुर्व्वाणः शङ्कां तस्योदपादयत् ।
विश्वासार्थं स्वताडङ्कपाणिकृत्वा प्रयागकं । पार्श्वं विजयमल्लस्य सोऽथ गूढं व्यसर्जयत् ।
तदेवोक्ता तमूचे स त्वां ब्रूते दुःस्थितोऽग्रजः । कुमारे त्वयि राज्येऽस्मिन् शुच्यामो बन्धने वयं ।
सङ्क्रान्तदुःखः सञ्चिन्त्य चिरेणापि तमब्रवीत् । कार्य्यं कुर्य्यात्कथमिदं मद्विधो नीतिमान्नृपः ।
तथाप्यस्मिन् यथाशक्ति यतिष्ये त्वद्विमोचणे । त्वया तु सावधानेन रक्षणीयं स्वजीवितं ।
तं पार्श्वं हर्षदेवस्य सन्दिश्येति व्यसर्जयत । उपायांश्चिन्तयन्नासीत्तस्य कार्य्यस्य सिद्धये ।
उत्कर्षः प्राप्तराज्यस्तु दैवतैरिव मोहितः । नादधे किञ्चिदारम्भं व्यवस्थापयनं क्षमं ।
समर्पिताधिकारोऽपि कन्दर्पादीन् स मन्त्रिणः । राज्यकृत्यं न पप्रच्छ विदधे स्वं च न स्वयं ।

कुम्भप्रतिष्ठासम्भारं चिकीर्षोर्हरमन्दिरे। तस्यापतन्महाकालकुम्भनासापुटादसृक्।
आकस्मिकं दुर्निमित्तं तत्प्रतीकारसम्विदा। न मनागप्यगाच्छान्तिं प्रवृद्धिं प्रत्युतापयौ।
असुसुत्यनुबन्धेन तेन स्खलितसौष्ठवः। शनैः शय्याप्रणयितामन्तः सम्प्रत्यपद्यत।
बलमांसक्षतवैरूप्यमग्निमान्द्याद्युपद्रवैः। कलाशेषेण शशिना तदपुः साम्यमाययौ।
राज्यं स दित्सुर्हर्षाय दृष्ट्वामात्यान् पराङ्मुखान्। ततोऽभिषेकभीत्कर्षमानिन्ये लोहराद्बलात्।
उच्चावचास्तेन सर्वे संविभक्ता मुमूर्षुणा। परमौर्थाविधियेन न शुद्धान्तवधूजनः।
कृत्वा धनार्पणं कुर्यां देशादस्य प्रवासनं। इत्युक्त्वा हर्षमानेतुं तेनाप्रार्थ्यन्त मन्त्रिणः।
ते तु गोप्तन्निवार्याद्यांष्ठक्कुरांल्लोहराश्रितान्। विन्यस्य रक्षिभावे तमुत्कर्षाय न्यवेदयन्।
स नाव्यमण्डपान्तेन निष्कृष्टः चामविग्रहः। निवेशितस्ततुःसमौ बद्धा बान्धववर्जितः।
अथोज्जिगमिषून् प्राणान्निःसामर्थ्योऽविदन्नृपः। मुमूर्षुरभवत्तीर्थप्रस्थानाय कृतत्वरः।
स आनन्दैवतक्रोधं तापसस्वामिविपाटनात्। इयेष शरणं कर्तुं मार्तण्डं प्राणसंक्षये।
सन्त्यज्य विजयचेत्रमतरवापवर्गदं। महीश्वरोऽपि प्रययौ तत्र चाषवर्धवदः।
अधीकारमाप्या तृणमिव विदन्विश्वमखिलं नियोगी जातार्तिर्नमति स्वहदासीरपि रुदन्।
नदन्मूर्खो ज्ञानी वक्रदुरुपदेशाधिगमतः करोति प्राणान्ते शिशुरिव च किं किं न विगुणं।
तादृश्या कृपणप्रायपेयया क्लैव्यसम्विदा। गुरूपदेशाहङ्कारस्तस्य हास्यत्वमाययौ।
शुक्लायां मार्गशीर्षस्य तृतीयस्यां निशामुखे। तत्रादेवाश्रितो युग्यं भूभृन्मार्तं विनिर्ययौ।
स भेरीतूर्यनिर्घोषैर्जनाक्रन्दं तिरोदधत्। सामात्यान्तःपुरो नौभिः प्रतस्थे जलवर्त्मना।
यामशेषे दिनेऽन्यस्मिन् प्राप्तस्य चरणान्तिके। मार्तण्डस्य स्वजीवाप्त्यै सौवर्णीं प्रतिमां व्यधात्।
श्रेयस्गणितायास्य दिदृक्षोर्दृष्टमात्मजं। औत्सुक्यमारतिस्तस्य व्यथितस्याधिकाभवत्।
बहिर्देषस्तनं गीतं गायनानां स गायतां। विवृतद्वारविवरः शृणोति स्म विनिःश्वसन्।
आशावसानसमये परिकुपन्ती स्वप्नभङ्ग इव यावनमतिनाशा।
प्रादुर्भवेदा मनु रुजो मरणोद्भवाया मर्त्यव्ययां प्रथयते पृथिवीपतीनां।
प्रजाश्रेयं तनूजस्य संविभक्तुं कृतार्थनः। उत्कर्षं पातयन् शिरां मद्गुशिक्षोऽभवत्ततः।
श्वत्र्यं यदतो हर्ष इति वाचं पुनःपुनः। निर्दिश्याशु मौनको भावं तस्मादर्थमदीकयत्।
स संनिशाध्यं विदमन्दपौरुषः पप्यपन् शिरः। अपगिकमपि माघेऽब्दे यद्वत्वागभवद्दिने।
भाकृष्यमाणनिर्वाणः धृत्याद्य मन्त्रिणः। ततः स्वभीरक्ष्मूढेर्मार्तं ज्ञापयतापयत्।
संचान्ति स्वपथाम्नुगवान् स मिनेऽद्वनि। मार्गस्य पद्मपञ्चेऽब्दे पञ्चां निष्टामयासदत्।
हृष्ट मध्यन्दिरगुप्या देव्यः परिणयात्वता। स्वस्त्रिका वि जयमत्यभिधाना ततन्वगुः।
प्रभादर्शिकया तस्य पुण पद्माभिधानया। अवहित्तिकया हास्ता स्त्रीजातिरपविचिता।
दर्शाशेषधनाधाम्यन्दार्थं शाक्तरपदि। मात्रापस्त्रान भर्तुर्यदनुगामिनमोद्भवा।

.:.

## ॥ सप्तमस्तरङ्गः ॥

संश्रित्य विजयक्षेत्रं क्रमाद्ग्रामनियोगिनः। भेजे यस्त्ववरुद्धात्मतो दुःखाकरोति नः।
भूपालभोग्यं स्ववपुः सा भोगाभ्यासभासुरं। निनाय ग्राम्यभोगित्वं धिक् नारीर्निचचेतसः।
उत्कर्षस्याभिषेकाय व्यग्रेष्वखिलमन्त्रिषु। अन्त्येष्टिमकरोद्राज्ञः कृतघ्नो वामनः परं।
घोषोऽभिषेकतूर्य्याणामेकीगीतमङ्गलः। साक्रन्दाः प्रेततूर्य्याणां नादोऽन्यत्र समुद्ययौ।
जातः पद्मश्रियो देव्याः पुत्रः कलशभूभुजा। ततो विजयमल्लाख्यो भ्रातुर्वैमत्यमादधे।
यद्दाद्धर्षदेवस्य पिता प्रत्यहवेतनं। प्रतिशुश्राव तस्मै स तदैवोत्कर्षभूपतिः।
आश्वासाय च मध्यस्थान्ददौ सामन्तमन्त्रिणः। कथ्यात्मजस्य चक्रे च जयराजस्य वेतनं।
अन्विष्यन्ति रुदत्यएव तरला गत्यन्तरं योषितो योगक्षेमकृयाश्चितान्तिकगता एवात्मजा ते।
अन्येषां शतशोऽवसानसमये चर्चां विचार्य्येदृशीं स्त्रीपुत्रादिकृते कुकर्मभिरहो सञ्चिन्वतेऽर्थं जडाः।
प्रविवेश ततः श्रीमान्नगरं नृपतिर्नवः। नतु हर्षादयाकाङ्क्षि हृदयं नगरौकसां।
तद्राज्यलाभदिवसो जनस्याभोगदूषितः। सन्नपि प्रत्यभान्नैव सरोगार्तेरिवोत्सवः।
हर्षदेवस्तु पितरि प्रयाते मर्तुमातुरे। नववृद्धयतुःस्तम्भे न तस्मिन्नह्नि भुक्तवान्।
सायमिष्टमिवाध्वन्यमन्यस्मिन्नह्नि ठक्कुराः। ते शोकमूकं सम्प्रार्थ्य कथञ्चित्तमभोजयन्।
राज्यं दातुं निजे देशे चक्रुस्तस्य प्रतिश्रवं। राज्यद्वयं नायमर्हत्येकएवेति वादिनः।
एवं मिलितचित्तैस्तैर्विपत्तिं श्रुतवान् पितुः। कृतापवमाः सोऽन्येद्युः शुश्रावोत्कर्षमागतं।
वाप्यै. पित्रे प्रयच्छन्तं निर्व्वाय मलिनाञ्जलीन्। तं दूतैरनुजो राजा स्नातुं प्रार्थयताय सः।
तस्य स्नानक्षये राज्ञि सज्जे राज्याभिषेचने। घोषोऽभिषेकतूर्य्याणामुदभूज्जयध्वनिः।
स तेन सुनिमित्तेन प्राप्तां मेने निमित्तवित्। विद्युद्योतेन जीमूतगर्जामिव नृपश्रियं।
ततः प्रभृत्युन्मुखता सुनिमित्तैरगृह्यत। तस्यात्यासन्नराज्यस्य भृत्यैरिव दिने दिने।
स भोजनं कारयितुं दूतान्भ्रात्रा विसर्जितान्। देशान्निर्व्वासयतु मां राज्यात्सन्त्यज्य बन्धनात्।
स्नातुमप्रत्ययान्वित्या विदध्यां कोशसन्निदं। प्रियेऽन्यथा निरशनः सन्दिश्येति व्यसर्ज्जयत्।
स तत्प्रियया प्रतिश्रुत्य तं दूतैः प्रहितैस्ततः। कृतकोशं सान्त्वयित्वा राजा भोज्यमभोजयत्।
नित्यञ्च श्वो विधास्येतदर्थमानं इति ब्रुवन्। कन्यापहारं कुर्व्वाणः शङ्कां तस्योदपादयत्।
विश्वासायं स्वताडङ्कपाणिङ्कृत्वा प्रयागकं। पार्श्वं विजयमल्लस्य सोऽथ गूढं व्यसर्जयत्।
तदेवोक्ता तमूचे स त्वां ब्रूते दुःस्थितोऽग्रजः। कुमारे त्वयि राज्येऽस्मिन् शुच्यामो बन्धने वयं।
सह्यान्तदुःखः सञ्चिन्त्य चिरेणापि तमब्रवीत्। कार्य्यं कुर्य्यात्कथमिदं मद्गिरा नीतिमान्नृपः।
तथाप्यस्मिन् यथाशक्ति यतिष्ये त्वद्विमोचणे। त्वया तु सावधानेन रक्षणीयं स्वजीवितं।
तं पार्श्वं हर्षदेवस्य सन्दिश्येति व्यसर्जयत। उपायांश्चिन्तयन्नासीत्तस्य कार्य्यस्य सिद्धये।
उत्कर्षः प्राप्तराज्यस्तु दैवतैरिव मोहितः। नादधे किञ्चिदारम्भं व्यवसायपराङ्मुखं।
समर्पिताधिकारोऽपि कन्दर्पादीन्स मन्त्रिणः। राज्यकृत्यं न पप्रच्छ विदधे सं च न स्वयं।

परिमातुं परीमाणं कोशसञ्चयवीचणे। परं चमापतेस्तस्य दिगन्तव्यमशायत ।
कर्म्मणा निर्व्ययेणास्य चिन्त्यमानस्य येन वा। सुदीर्घदर्शी लोकोऽभूत्तेन मुग्धत्वनिश्चयी ।
सा तस्य लुब्धताख्यातिः समुद्रान्नप्रदायिनः। भूभर्तुः पिशुनैःपत्नीभिः स्वैरिणीभिः प्रवर्धिता ।
स श्रोत्रिय इवोत्कम्पी व्यवहारमिताशयः। महाहृदयभोग्यानां प्रजाना नाभवत्प्रियः। ७६०
ततो नियमिनां वृत्तिं तस्यास्वादनाभुवान्। कुर्व्वन् विजयमल्लोऽभूद्देशान् गन्तुं कृतोद्यमः।
स्वं रचितुं स मध्यस्थाननुमज्यास्थितेऽखिलान्। प्रार्थयामास तेनापि सज्जास्तमनुवव्रजुः।
लवणोत्से निशामेकां पुरान्निर्गत्य तस्थुषः। मध्यस्थसैन्यास्तस्यैव योधाः पक्षमशिश्रियन्।
हर्षे बद्धे त्वयि गते कृतकृत्यो भवेन्नृपः। तत्तं निष्कृष्य कारायाः गमनं तव साम्प्रतं।
इति तैः प्रेर्य्यमाणः स राजसूनुरुदायुधः। विनिवृत्त्याकरोद्यात्रां प्रत्यूषे नगरोन्मुखः। ७६५
श्रुत्वा चिकीर्षितं तस्य व्यावृत्तस्य तथाविधं। सहायाः समपद्यन्त कतिचित् डामरा अपि।
अकरोन्मधुरावर्त्तो हयसेनापतिः सुतं। राजसूनुर्यियासुर्थे मध्यस्थाननुयात्रिकं।
नागाह्वयो द्रोहहीनो राजपक्षमसन्त्यजन्। कैश्चित्सह हयारोहैः सपद्मपुरवर्त्मना।
आगच्छन्नन्तिकं राज्ञो दुर्निमित्तहतत्वरः। न यावन्नगरं प्राप चिप्रकारी नृपात्मजः।
शकुनैराहितोत्साहः शालायोद्दीपिताग्निभिः। सैन्यैर्गेहान्दहंस्तावद्राजधानीमवेष्टयत्। ७७०
॥ चतुर्भिः कुलकं ॥ समयाय विनिर्यातं त्यक्तोत्कर्षं महीभुजं। तत्पक्षं जयराजोऽपि राजसूनुरशिश्रियत्।
हस्तस्थितौ राजपुत्त्रौ तस्याचिन्तयतां गतिं। नवौ कवी व्यवहृतिं सिद्धवाचः कवेरिव।
हर्षदेवे परित्यक्ते यास्याम इति वादिनः। स हस्तिमहिषादीनां शालाः सैन्यैरदाहयत्।
त्यागप्रलयजीमूतो हर्षदेवाभिषिच्यतां। लुब्धः खर्वो वणिक्प्रायो राज्यादेष निवार्य्यतां।
एवं वदन्तः सन्तोऽपि हर्षमेत्य पुरौकसः। पुष्पैः प्राच्छादयन् बद्धं तमोरिविवरार्पितैः। ७७५
उत्पिञ्जे तत्र सञ्जाते भग्नसैन्यस्य भूपतेः। सम्प्रेष्य ठक्कुरान् हर्षस्तटस्थं तद्दलं व्यधात्।
इत्थं बद्धोऽपि तच्छ्रुत्वा वैरिकानविरोधिनः। सन्देहवेपमानाङ्गस्ततस्तानेवमब्रवीत्।
वर्तेऽद्य सङ्कटे दुष्टे तन्मां मुञ्चत बन्धनात्। न चेदाशु महीपालादनिष्टं नियमाद्भवेत्।
इत्युच्यमानास्ते यावद्विमृशन्ति स्म तन्मुखः। पादप्रहारान्यपतंस्तावद्वारगृहाद्बहिः।
उच्चचार स किं द्रोहः प्रक्रान्तोऽयं दुराशयैः। रे ठक्कुरा विघटत द्वारमित्युच्चकैर्वच। ७८०
ठक्कुरेष्वथ भीतेषु धैर्य्यादगणयन् भयं। अकारयद्धर्षदेव एव द्वारमपावृतं।
नेत्रमात्रस्थितप्राणो ददर्श विशतस्ततः। लोहरान् शस्त्रिणो हन्तुं प्राप्तान् षोडशवारिकान्।
ते हि च्छिन्नोज्झिते हर्षशीर्षे सर्व्वमिदं चणात्। शाम्येदिह भयं मन्त्रं नोनकस्येति जल्पतः।
उत्सर्पणामतश्छुत्वा तं निहन्तुं विसर्ज्जिताः। विमृश्य चोक्ता गच्छन्तः कार्य्यशेषं विमुञ्चता।
कदाचित्तेन इत्थं स्यादहतेनेति तद्वधं। निवार्य्य ठक्कुराश्वत्थो हन्तव्यस्य यदोर्म्मिकां। ७८५
इमां दद्यामभिज्ञानं यदा चेयं विसृज्यते। तदात्तबन्धनात्त्याज्य इत्युदीर्य्याङ्गुलीयकं।

पाणौ दर्शयता चोक्ता विलम्बालम्बनं यतः। निवार्य्य ठकुरास्तस्मिन् चिप्रं न प्राहरंस्ततः।
॥ कुलकं ॥ स तु प्रत्येकमाहूय नामग्रहणपूर्व्वकं। अजिग्रहत्तांस्ताम्बूलमप्युपावेशयत्पुरः।
जगृहुस्ते कृतसत्कारास्ताम्बूलग्रहणचणे। ह्रीताः करायाच्छस्त्राणि प्रजिहीर्षाञ्च मानसात्।
धत्ते श्रियं सृजति कीर्त्तिमघं लुनीते मित्त्रलमानयति हन्त विरोधिनोऽपि। ७९०
यात्यध्वभिः प्रतिपदं सुमनोऽनुकूलैर्गौः कामधुक्कमिव नापहरत्यनर्थं।
राजपुत्त्रः स तानूचे किं ह्रीता इव तिष्ठथ। निर्दोषाः सर्व्वथा प्रेष्याः स्वाम्यादेशानुपालने।
विलम्बरतां तथाप्यत्र द्रष्टव्यं महदद्भुतं। यथोदेत्यवस्थानामन्यथात्वं चणे चणे।
द्विपद्वीपिक्रव्यादुरगतुरगादिभ्रमकृतो यथाखां भिद्यन्ते दिवि किल तरवाम्बुदलवाः।
तथा सौम्यक्रूरक्रमविकृतिभाजस्तनुभृतां चणानां नानात्वान्ननु हृदि विकारोर्मयदमाः।
चणानुवृत्तिं कुर्व्वाणास्तद्यथात्र स्थिता वयं। तथा सन्तु भवन्तोऽपि कार्य्यान्तरदिदृचवः।
अपि चैवंविधा एव विलम्बन्तो रचान्तरं। आसन्नराज्यप्राप्तीनां राज्ञां स्युः प्राणसंशयाः। ७९५
ग्रीष्मस्योष्मा व्रजति घनतां नूनमासन्नवृष्टेर्नैशं गाढीभवति तिमिरं सन्निकृष्टप्रभातं।
जन्तोरेवं प्रसभविभवस्फारमसम्प्रचारान्निष्क्रामन्ती वियदुपचितोपद्रवोद्रेकमेति।
प्राणचारेण शकुनं निश्चित्येति वदन्सतां। आचचचे शुभोदर्काः स्वोदन्तसदृशीः कथाः।
कालं चेप्तुमुपन्यस्तप्रोद्भिद्यन्नीभवद्रसां। तेभ्यश्च कथयामास हरिश्चन्द्राश्रयां कथां।
तद्रञ्जने स्वरचायां वाह्यवार्तागवेषणे। व्यापृतत्वं गभीरस्य न तस्य समलक्ष्यत।
अत्रान्तरे तमुद्दिश्य मते जाते नवे नवे। राजश्रियश्च कात्याश्च शतशोऽप्यङ्गनागतं। ८००
उत्कर्षो भूमिपस्तस्य परित्यागं ह्यमन्यत। आदिदेशानुगांस्तांस्तान्भूरिशश्च प्रमापणे।
अभिज्ञानोर्म्मिकादानवधादेशे तु नास्मरत्। तेनोक्तिं तस्य दूतामामन्वतिष्ठन्न रचिणः।
स तान् वन्ध्याश्रमान्वीच्य स्वत्वाभिज्ञानसंविदं। सत्वात्मजं राजपुत्त्रं शूराख्यं व्यसृजत्ततः।
अभिज्ञानं वितरतस्तत्करे तस्य मुद्रितः। दैवयोगात्स्वणे तस्मिन्नूर्म्मिकाव्यत्ययोऽभवत्।
यः पातार्थमुपार्ज्जितोऽन्यशिरसस्तेनैव सिन्धुप्रभुर्वृद्धचत्त्रधराधवः स्वशिरसः पातं वरेणान्वभूत्।
दिव्या सैव गदा सुतायुधनृपं हन्त्वावधीदाहवे यत्त्राणाय विगण्यते विधिवशात्तेनैव नाशो भवेत्। ८०५
तथाचैकस्य विस्मृत्या व्यत्ययेन परस्य च। अभिज्ञानस्य स नृपो नाशं प्रत्युत लब्धवान्।
आभिजन्येन हर्षस्य ते चणादेव रचिणः। प्रपेदिरे हितैषित्वमुत्कर्षाज्ञाविरोधिनः।
द्वारमाक्रान्तमुल्कोषो वधायायमुपागतः। इति निर्ध्याय ते शूरं हन्तुमैच्छन्नुदायुधाः।
उद्घाटितारिपुटा दृष्ट्वा तस्योर्म्मिकां करे। तेनैव साकं नृत्यन्तो हर्षं समुपतस्थिरे।
पादन्यस्तोत्तमाङ्गैस्तैर्निर्गच्छन् प्रार्थितस्ततः। अविश्वसन्राजसूनुः चणमासीत्स चिन्तयन्। ८१०
तस्मिन् चणे हर्षदेवं हतं ज्ञात्वा रणे स्थितः। क्रुध्यन्विजयमल्लोऽभूदधिकोद्रिक्तपौरुषः।
तन्न्यधुमुद्यतं राजधानीं जीवति तेऽनुजः। अभिधायेति रुरुधुः कथंचित्पार्थिवानुगाः।

प्रत्ययार्थं ततस्तस्य राज्ञा हर्षवधूद्रुतं। गृहीतभर्तृताडङ्का सुगला प्रैष्यतान्तिकं।
तां विलोक्यैव विरते वह्निदाहान्नृपात्मजे। राजाभयप्रतीकारं हर्षत्यागादमन्यत।
गलामात्याः स्वयं नोनप्रशस्तकलशादयः। हर्षं निर्निगडं कृत्वा कारागारात्ततोऽत्यजन्।
मत्तः स तेषां शोकेन वक्त्रात्क्षतगतागतः। अन्यत्क्षणे श्वास इव प्रससार बहिश्चरन्।
हर्षः प्रच्छाद्यमानस्तु पौराणां पुष्पवृष्टिभिः। हयमारुह्य सामात्यो रणस्थं नृपमासदत्।
अभिनन्द्यानुजो राजा तमूचे भ्रातरं रणात्। निवार्य्यागम्यतां कुर्मः प्राप्तकालं ततो वयं।
तथेति प्रस्थिते तस्मिंस्त्यक्त्वा तत्र रणाजिरं। प्राविशन्मन्त्रिभिः सार्द्धं कोशं हेमादिसंश्रयं।
उत्तीर्णं महतः कृच्छ्राद्धर्षदेवमुपस्थितं। दृष्ट्वा विजयमल्लोऽभूत्प्रहर्षान्निष्क्रियः क्षणं।
ततो ववन्दे तत्पादौ स चोत्क्षाम्यालिलिङ्ग तं। तास्ताः कथास्तयोरासन्नुपकर्त्तृपकार्य्ययोः।
व्यापाद्यैनमेवादौ हर्षोत्कर्षं ततो नृपः। निष्कण्टकोऽसि भवितेत्याप्तस्योपांशु जल्पतः।
ततो विजयमल्लेन नाद्रोहेणादृतं वचः। ज्ञातेङ्गितज्ञो हर्षस्तत्ततस्तु चकितः क्षणं।
॥ युग्मं ॥ स्वदेहमामिषीभूतं स भ्रात्रोः श्येनयोरिव। निष्पन्नपक्षप्रतिमो ररक्षावेगतश्चरन्।
आसन्नाभ्रजलस्य दावविगमे विशुद्धयं शाखिनो नक्राद्याकुलतस्य मज्जनमयी शङ्का भवेद्वारिधौ।
शोकव्यस्य विधिः शुभस्य रभसात्स्वादुत्वनिष्पत्तये जन्तोः सन्तनुते निराकृतभियो भीत्यन्तरोत्पादनं।
तं हयभ्रमणव्याजाद्रक्षितुं निजजीवितं। ज्ञातवार्ता निजाः केचित्पत्तयः पर्य्यवारयन्।
सार्कं विजयमल्लेन ततः संमन्त्र्य स क्षणात्। चचाल विश्वापायमाख्यातुं तं महीभुजे।
अयं तदेमनः प्राप्तं विनिर्धान्तं नृपात्मजात्। ततो विजयसिंहस्तं सम्प्रवेशात्र्यवारयत्।
ऊचे च मरणात्तीर्णं मर्तुं विशसि किं पुनः। निष्प्रज्ञ गत्वोपविश त्यक्तशङ्कं नृपासने।
एवमुक्तवतस्तस्य भृत्यैः कोशादुपाहृते। सिंहासने हर्षदेवस्ततस्तूर्णमुपाविशत्।
वेशात्यक्षादितामात्यमातिकृत्यात्तदन्तिके। उपाविशच्च सुगला महादेवीत्वसिद्धये।
तस्याभिषेकशब्देन समघध्यन्त सर्वतः। रक्षितेनाम्बुवाहस्य पातकादिव मन्त्रिणः।
सदार्तोऽश्रवणेनात्ममुखस्थं मन्दिरात्ततः। धूर्तो विजयसिंहोऽपि कष्टान्यमनयद्गृहं।
आस्थानमस्य भूभर्तुरग्रेण समितानुगः। नष्टश्रीर्द्रुमे गच्छन् स्थिराः कस्य विभूतयः।
तस्य संभ्रमनिष्ठस्य बहिर्निर्यस्य रक्षिणः। राज्ञो विजयसिंहस्तत्कृतं कार्य्यं न्यवेदयत्।
कारायां संस्थितापाजपार्श्वमानीय ठक्कुरान्। तथैन्योऽन्ये स्थितेऽथाचीद्वयं विजयमल्लतः।
सोऽप्यपरं प्राप्तराज्यं श्रुत्वा तादृविधं प्रजम्। निन्ये समान्य तद्भूतैः स्वामेव वसतिं क्षणात्।
तथैन्यं स्वामिकं प्राप्तमय सोऽस्य क्षमापतिः। आनिनाय तमभ्यर्यं क्षणमात्रेण नीतिवित्।
गत्वं प्राणाय राज्यस्य मया दत्तमिति ध्रुवम्। स प्राप्तसिंहमकरोत् क्रमशाकश्यशायिनं।
तस्य देवानुपृष्ठेन शौर्य्यैः सुमधुमया। तत्कालमेव तद्राज्यमय्यायां समुपाविशत्।
सारात्मदाक्षाः संशोभामिव वासांसि धारयन्। सिंहासनस्य शुशुभे शोभास्वध्यायितो नृपः।

तादृक्प्राहवसंरम्भपरिश्रान्तो दिनात्यये। कृतारोहोऽथ शय्यायां त्यक्तभारइवापतत्।
पश्यन्निवसतामिव सर्व्वतो विशरारुतां। न स निद्रासुखं तत्र मीलिताक्षोऽपि लब्धवान्।
उत्कर्षो युधि वहूस्तु मन्त्रं पृच्छन् स्वमन्त्रिणः। आक्षिप्यान्यद्वचो रूक्षं नोनकेनेत्यकथ्यत।
प्रातः प्रोक्तोऽसि यन्मन्त्रं तन्नाकार्षीर्महीपते। पतितामनयादस्माद्भाविनीं शृणु संविदं। ८४५
अध्याक्षिपो बन्धनस्थं त्वं तमुच्छिष्टभोजिनं। श्वः श्वमांसार्पिणां हस्ते स तु त्वामर्पयिष्यति।
शरणं मरणादन्यत्तस्मादस्मिन् क्षणेऽस्ति किं। त्यक्ताहवानामस्माकं तदप्यप्राप्यतां गतं।
अविश्वासफलास्वादकालेऽत्यन्तमरुन्तुदं। यद्दोपालम्भपाण्डित्यं न विपक्षेषु शोभते।
त्वयापायमनालोच्य य उपायः प्रवर्त्तितः। सर्व्वमेकपदे तेन मुहूर्त्तेनैव हारितं।
संस्थाप्यमानो दुर्नीत्या सूच्येव जरठः पटः। प्रत्युतोपद्रवोऽल्पोऽपि शतद्वारः प्रजायते। ८५०
एवं श्रुत्वा स तन्मध्यान्निर्गत्याभ्यन्तरं गृहं। अवरुद्धिकया सार्द्धं विवेश सहजाख्यया।
तत्र सन्ध्यासमाधिस्थस्तिष्ठामीत्यभिधाय तां। क्षणं तिरस्करिण्यन्तरेकार्थेवाकरोत्स्थितिं।
निःशस्त्रेण गले क्षिप्ता पटच्छेदनकर्तरीं। नाद्यः प्राणहरास्तेन च्छिन्नाः खिन्नात्मना ततः।
क्षणत्कारेण कर्त्तर्य्या च्युता या भुवि शङ्किता। अपश्यत्सहजा रक्तं च्योतज्जवनिकान्तरात्।
सोऽथ लम्बशिरोनिर्यत्सार्द्रासृग्ददृशे तया। वज्रावभग्नशृङ्गान्तःश्च्योतद्धातुरिवाचलः। ८५५
तस्यास्तदानीमौचित्यं निर्व्यूढं येन योषितां। भर्तृप्रसादमात्राणामप्यत्युच्चैस्तरां शिरः।
व्रजति रजनी त्यक्त्वा क्वापि क्षये क्षणदाकरम्परमुपगतस्यास्तं सन्ध्या रवेरनुगच्छति।
इति परिणतौ प्रेमण्युच्चावचे परिचिन्तिते क्वचन नियमान्निन्द्या वन्द्या नवा सुधियां स्त्रियः।
कुलाचारपतिप्रेमसादृश्येऽप्यभवत्तदा। कय्यासहजयोर्यस्मान्निन्द्या वन्द्या च पद्धतिः।
॥ युग्मं ॥ सापि हि द्युपदो वेश्म नर्तकी नाट्यमण्डपे। दृष्ट्वा तेनावरुद्धात्वं निन्ये राजवधूः पुरा।
कान्तास्तगैरिकास्यन्दकृतसान्द्राङ्गरागया। प्रेम्णोहेव द्वौज्ज्वल्यं प्रविश्याग्निं तयार्पितं। ८६०
हर्षदेवस्यापि पूर्व्वं वेश्यात्वे साभवत्प्रिया। अतस्तेनार्थ्यमानापि मरणान्न न्यवर्तत।
चतुर्व्विंशाब्ददेशीयो दिनद्वाविंशतौ नृपः। स्तस्तिष्ठन्निशामेकां प्रातः सोऽक्रियताग्निसात्।
तस्यावरोधलोलाक्ष्यो लोहराद्रिस्थिता अपि। क्षमानुवर्त्मना काश्चित्पदवीं द्रुतमन्वयुः।
शस्त्रं सन्त्याज्यमानेषु तन्मन्त्रिषु नृपानुगैः। मुमूर्षुर्नोनकः शस्त्रं न तत्याज क्षणं तदा।
विनास्मान्मन्त्रदोराज्ञः कोऽन्यः स्याद्द्विनैरसौ। मोचत्यस्मांस्ततः प्राणान्नोपेक्षिष्टाविचारयन्। ८६५
स्वयूथ्य एवेति वचः प्रशस्तकलशो वदन्। तदा सन्त्याजयामास स्वयं तस्य समर्पितं।
॥ तिलकं ॥ नोनसिह्वारभट्टारप्रशस्तकलशादयः। बद्धाथ हर्षदेवेन कारागारं प्रवेशिताः।
इत्येवमेकेनैवाह्ना तादृग्राजविपर्य्ययः। कृतश्च हर्षदेवेन दैवेनेव महाद्भुतः।
यथाकथञ्चिद्व्युत्क्रान्ता बहवः पृथिवीभृतः। प्रतीतिविषमो मार्गः कष्टमापतितोऽधुना।
सर्व्वोत्साहोदकक्षेत्रं सर्व्वानुल्लासदूतिका। सर्व्वव्यवस्थाजननी सर्व्वनीतिरपोहकृत्। ८७०

उद्रिक्तशासनस्फूर्तिरुद्रिक्ताज्ञाचयचितिः । उद्रिक्तत्यागसम्पत्तिरुद्रिक्तहरणग्रहा ।
कारुण्यौत्सेकसुभगा हिंसौत्सेकभयङ्करी । सत्कर्मौत्सेककलिता पापौत्सेककलङ्किता ।
स्पृहणीया च वर्ज्या च वन्द्या निन्द्या च सर्व्वतः । निषेव्या चोपहास्या च काम्या गोप्या च धीमतां ।
अभ्यास्या चापकीर्त्या च श्लाघ्या त्याज्या च मानसात् । हर्षराजाश्रया चर्चात्रया व्यावर्णयिष्यते ।
॥ कुलकं ॥ नूनं स तेजसैरेव सहजे परमाणुभिः । कुतोऽन्यथाभूत्प्रसवे दुष्प्रेक्ष्यो महतामपि ।
न मर्त्येषु न देवेषु तद्वेषो दृश्यते क्वचित् । दानवेन्द्रेषु स प्राज्ञैः परमुत्प्रेक्ष्यते यदि ।
प्रतिमार्कपरीमाणज्वलत्कुण्डलमण्डितः । उत्तुङ्गमुकुटानद्धविकटोष्णीषमण्डलः ।
प्रसन्नसिंहविप्रेक्षी नीचश्मश्रुच्छटाचितः । वृषस्कन्धो महाबाहुः श्यामलोहितविग्रहः ।
व्यूढवक्षाः क्षाममध्यो मेघघोषगभीरवाक् । सोऽमानुषाणामपि यत्प्रतिभाभङ्गकार्य्यभूत् ।
॥ तिलकं ॥ सिंहद्वारे महाघण्टाश्चतुर्दिक्कमबन्धयत् । ज्ञातुं विज्ञप्तिकामान् स प्राप्तांस्तद्वादसंज्ञया ।
आर्त्तानां वाचमाकर्ण्य तेषां तृष्णानिवारणं । प्रावृषेण्यः पयोवाहश्चातकानामिवाकरोत् ।
अछिन्नवस्त्रो निर्वर्मभूषणोऽल्पपरिच्छदः । ददृशे विगतोत्तापो न कश्चिद्राजमन्दिरे ।
सिंहद्वारे नरपतेर्नानाजनसमाश्रिते । सर्व्वदेशश्रियोऽश्रान्तमासन्नाशोकतादिव ।
अपेतसंख्याः सौवर्णशृङ्खलाकटकाञ्चिताः । भ्रेमुर्मन्त्रिप्रतीहारमुख्याः क्ष्मापतिमन्दिरे ।
एवं स्फूर्जस्य नृपतिर्नवसाम्राज्यसुन्दरः । अभूद्विजयमल्लस्य गुरोरिव मते स्थितः ।
आदीयमानवचसः कृतज्ञेन महीभुजा । तस्याभूत्पार्थिवस्येव सेवकैः सङ्कटा सभा ।
स्वसेवकाननादृत्य रक्षन् संस्थाव्यतिक्रमं । पित्र्येभ्य एव मन्त्रिभ्यः सोऽधिकारान् समार्पयत् ।
द्वारे चकार कन्दर्पं मदनं चापि कम्पने । अन्यान्विजयसिंहादीन् कर्त्तव्ये च निजे निजे ।
तेन प्रशस्तकलशप्रमुखाः शान्तमन्युना । बन्धात्सन्त्यज्य कार्य्येषु निजेष्वेव नियोजिताः ।
स्मृतापकारान् स बहूनमात्यो सेनकः परं । धात्रेयेण समं भ्रात्रा कोपाच्छूले विपादितः ।
काले काले तु कार्य्येषु सङ्कटेषु महामतिं । संस्मरन् स्वामिभक्तं तं पश्चात्तापेन पस्पृशे ।
योग्यः कृतापकारोऽपि कदाचिदुपयुज्यते । विहितागारदाहोऽग्निः शरणभोज्यसिद्धये ।
सन्दर्शये स्वभार्य्यायाः कर्णनासावकर्त्तनं । विश्वाभट्टै राजभृत्यैः शूलेनैव विपादितः ।
उदये संविभेजे स भृत्यान् काराविनिर्गतान् । अधो प्रफुल्लः शाखीव भृङ्गान्भूविवरोत्थितान् ।
राज्ञः क्षेमस्य यः पौत्रो वज्रजः स महीभुजा । सर्व्वामात्यप्रधानत्वं निन्ये सुन्नः सहानुजः ।
राज्ञो यात्रादिसमये प्रेक्षकाणां पदे पदे । एक एवाभवन्मन्त्री महीपालभ्रमप्रदः ।
सर्व्वप्रतीहारघटामूर्धानमधिरोपितः । याचराजोऽनुजस्तस्य जीवितादधिकोऽभवत् ।
जाह्नवीयाचया भ्राचीरानृसंस्यादिचक्षणः । धम्मटः सोऽपि तान्वङ्गैर्भ्रातृपुत्रैः सहायधौ ।
संमान्य तं नरपतिः स्वकृते हारितायजं । सभ्रातृपुत्रमद्राक्षीत्स्वविशेषेण सर्व्वदा ।
विभज्य भुञ्जतो राज्यं तथैवं प्रेरितः खलैः । प्रमादिजयमल्लोऽथ दुदुषुर्व्विकृतिं दधे ।

राज्यं मादाः किमन्यस्मै जितेत्युक्तः स दुर्नयैः । तल्लिप्सुर्मन्त्रयामास वधं प्रथमजन्मनः ।
विजने मन्दिरे हन्यामिति सम्मन्त्र्य भूपतिः । यागं विधायव्याजेन तेनागन्तुं निमन्त्रितः ।
मन्त्रे श्रुतिङ्गते राज्ञः सोऽप्यास्कन्दविशङ्कितः । आदिदेश स्वसैन्यानां द्रुतं सन्नहनोद्यमं ।
सन्नद्धे राजसैन्येऽथ द्रुतं निर्गत्य भूपतेः । हता विजयमल्लेन मन्दुराभ्यस्तुरङ्गमाः ।
संहरंस्तुरगान्वीक्ष्य प्रहरन्नृपतेर्बलं । कुर्वन्महाहवे वीरो निर्गन्तुं तत्वरे पुरात् । ९०५
आश्लिष्य पृष्ठं तिष्ठन्त्या जायया सहितो व्रजन् । स चकार तुरङ्गस्थः सङ्ग्राममतिमानुषं ।
धारासारैः चणे तस्मिन्नकालजलदोज्झितैः । विपर्यस्तेव पृथिवी सर्वतः समलक्ष्यत ।
भाङ्कारमारुतारब्धभूरिभैरीरवे रणे । आसारेण शरैश्चासीच्छाद्यमानो नृपात्मजः ।
तं चोद्यमाणप्लवनं यान्तं हन्तुं समुद्यताः । कर्माणि प्राकृतानीव न चण्डकसुता जहुः ।
भग्नसेतुं पयोवेगैर्वितस्तासिन्धुसङ्गमं । सत्रानिरतरङ्गाभ्यामवतीर्य स वाजिनः । ९१०
सत्त्वानकरोत्पत्न्या मज्जनं रिपुसङ्कटे । सिन्धुं प्रहृष्टामुत्तीर्य तुरङ्गोऽपि तमन्वगात् ।
द्विषां दृग्गोचराद्यातः स तमारुह्य वाजिनं । दरदेशोन्मुखो वीरः प्रायाल्लहरवर्त्मना ।
कन्दर्पदारपतिना सर्वतो रुद्धपद्धतिः । गिरीनुल्लङ्घ्य चाविचद्गिरिगुप्तां दरत्पुरीं ।
दरदाभ्यर्चितं तत्र श्रीविद्याधरदेहिना । केचिन्निजाः परिजनाः शनकैस्तं प्रपेदिरे ।
श्रुत्वा स्वीकार्यमाणञ्च संरम्भं डामरादिभिः । प्रायुङ्क्त हर्षपृथ्वीभृदुपायांश्चकितोऽन्वहं । ९१५
तेषु बन्धेषु शीतस्तु सोऽतिवाह्य दरत्पुरे । डामरैः प्रहितालापाश्चैत्रे यात्रामदात्ददात् ।
उत्तीर्य सङ्कटांस्तिष्ठन्मार्गान्तःपटमण्डपे । अकस्मादभवन्मानी हिमानीहतजीवितः ।
यदुल्लासाय संरम्भो धीरैर्विस्तार्यते महान् । हन्त्यं हिनस्ति तद्दैवमत्यल्पेनैव वस्तुना ।

उन्मीलनं तिग्मरुचिः प्रयत्नाद्येषां सहस्रेण करैः करोति ।
उन्मूलयत्येककरेण तानि पद्मानि धाता कुपितो द्विपेन ।

द्वैराज्यशङ्कया कञ्चित्कालं संकुचितस्ततः । भूयः प्रभवतो लग्नं राज्यं हर्षमहीभुजः । ९२०
राजशब्दस्तदा सेहे न क्वाप्यधिरोपणं । अत्युदग्रतया तस्मिल्लघुत्वेनान्यराजसु ।
स शोभादायिनीर्भङ्गीः प्रावर्तयत मण्डले । निर्मत्सरो नरपतिः पुष्पर्तुरिव कानने ।
मुक्तकेशानिरुष्णीषा निष्कलाभरणाः पुरा । सन्त्यज्यैकं महीपालमभवन्निह देहिनः ।
धम्मिल्लशयनाद्यच्च मदनः कम्पनापतिः । जयानन्दोऽथमात्याद्याश्चिग्गर्धीरुकधारणात् ।
अचभूत्पार्थिवक्रोधमविशेषेण मण्डले । तेन राज्योचितो वेषस्तत्र राज्ञा प्रवर्तितः । ९२५
॥ युग्मं ॥ स केषाञ्चिदमात्यानामाकल्पोल्लासशोभिनां । निर्मत्सरः स्वदासीभिरारविकमकारयत् ।
दाक्षिणात्याभवद्भङ्गिः प्रिया तस्य विलासिनः । कर्णाटानुगुणष्टङ्कस्ततस्तेन प्रवर्तितः ।
सडत्तालीदलाः स्थूलचन्दनश्यामसुन्दराः । रेजुर्जनास्तदास्थाने श्लाघ्यदीर्घासिधेनवः ।
स्वर्णकेतकपत्राङ्कजूटलस्त्रोर्जितस्रजः । चटुलास्तिलकाश्लिष्टविलोलतिलकाङ्कुराः ।

अपाङ्गश्रीचयोर्व्वद्धसन्धयोऽञ्जनरेखया । निर्मारङ्गिककेशान्तबद्धहेमोपवीतका: । ९२०
अधराम्बरपुच्छान्तैर्लम्बैश्चुम्बितभूतला: । प्रच्छादितार्धदोर्लेखकञ्चुकाङ्कपयोधरा: ।
कर्पूरोद्धूलनस्मेरा भ्रमन्त्यस्तरलभ्रुव: । वधुरा श्रितपुंवेशा झषाङ्कच्छलदक्षतां ।
॥ चतुर्भि: कुलकं ॥ अन्योपजीव्यतां प्रापुस्तद्यार्थितेन मार्गणा: । विश्वाप्यायकतां मेघा: प्रणयेनेव वारिधे: ।
प्रसादैस्त्यागिनस्तस्य राज्ञ: कनकवर्षिण: । समस्ता गायकगणा: पार्थिवस्पर्धितां ययु: ।
विद्वच्चूडामणिर्भूभृत्पण्डितान्वत्नमण्डितान् । चकार युग्यतुरगच्छत्त्रादिप्रक्रियाभृत: । ९२५
काश्मीरेभ्यो विनिर्यान्तं राज्ये कलशभूपते: । विद्यापतिं यच्चकर्णाटश्चक्रे पर्माडिभूपति: ।
प्रसर्पत: करटिभि: कर्णाटकटकान्तरे । राज्ञोऽग्रे ददृशे तुङ्गं यस्यैवातपवारणं ।
त्यागिनं हर्षदेवं स श्रुत्वा सुगविबान्धवं । रिह्लणो वञ्चनां मेने विभूतिं तावतीमपि ।
सौवर्णामलसाराढ्याराजधान्यो धरापते: । सुवर्केशाऽभ्रंलिहग्टहा भेजिरे भुवनाद्भुता: ।
तदीये नन्दनवने द्रुमेभ्यो न व्यधु: स्थितिं । त्यागिना निर्ज्जितास्तेन केवलं कल्पपादपा: । ९३०
विविधाभिरपृन्यासु विहङ्गमृगजातिभि: । तेन व्याप्तदिगाभोगं चक्रे पद्माभिधं सर: ।
सोऽज्ञासीद्यावतीर्व्विद्यास्तासां नामापि निश्चितं । वक्तुं नास्त्येव सामर्थ्यं व्यक्तं वाचस्पतेरपि ।
गीतमाकर्ण्यतेऽद्यापि तस्य वाग्गेयकारिण: । विपश्चैरपि पञ्चाग्रलुठद्वाष्पोदबिन्दुभि: ।
स्वपतो दिनयामौ द्वौ सर्व्वकालं विलासिन: । दत्तस्थानस्य तस्यासीद्यामिनीषु प्रजागर: ।
तस्य दीपसहस्राङ्के स्थितस्यास्थानमण्डपे । विद्वद्गोष्ठीगीतनृत्यप्रस्तावेन क्षपा ययु: । ९३५
कथान्ते शुश्रुवे तत्र न पर्णचर्मज: परं । कान्ताधम्मिल्लशेफालीत्रुटिजन्मा च मर्मर: ।
वितानै: सपयोदेव साग्निवभेव दीपकै: । रुक्मदण्डै: सपर्वेव सधूमेवासिमण्डलै: ।
सासुरादिव कान्ताभि: सनक्षत्रेव मन्त्रिभि: । सर्पिषव्द्यौरव विबुधै: सगन्धर्व्वेव गायनै: ।
नित्यमद्वैतवसतिर्धनदस्य यमस्य च । एकं विहरणारण्यं दानस्य च भयस्य च ।
सभास्थानस्थितिस्तस्य राज्ञ: शक्राधिकश्रिय: । कस्य वाचस्पतेर्व्वाचा वक्तुं कार्त्स्न्येन शक्यते । ९४०
॥ चतुर्भि: कुलकं ॥ रौद्रोऽस्य राजतेऽस्यासीद्धवहारस्तदा घन: । मण्डले विरलोऽमुष्मिन्दीनारैस्ताम्रजै: पुन: ।
दण्डनायकतां प्राप्य सुन्न: सर्व्वोन्नतिं भजन् । तस्मिन् काले लभ्यसौभाग्यश्चोभो मुष्टिंपच: परं ।
निजाजयवने स्थ्यां मूलके विजयेश्वरे । आख्यान्ति यस्य सुव्यक्तं निर्व्ययस्थितयो मठा: ।
क्षुधितव्याधितानाथदीनार्तिनिवारणं । सुसत्रं प्राप यद्रम्य राज्यलक्ष्मी: कृतार्थतां ।
नन्दिक्षेत्रे व्यधीद्यस्य प्रत्यब्दं सप्त वासरान् । चम्पक: सफलां चक्रे सर्व्वकालार्जितां श्रियं । ९४५
कृष्णाजिनोभयमुखी मुख्यैर्दानै: सभाभुजा । अदरिद्रीकृता विप्रा नि:शेषार्तिच्छिदार्थिनां ।
राज्ञो वसन्तलेखाख्या शार्दिवंशप्रियाकरोत् । मठाग्रहारानगरे पूर्व्वे च त्रिपुरेश्वरे ।
माहेश्वर्य्यमयो काषदित्यं त्वामिव मोचयो । उदारव्यवहारस्तु स तद्राज्ये प्रवर्त्तते ।
अथ प्रवृद्धिं सम्प्राप्त: प्रमर्केनरमन्त्रिण: । पूर्व्वामात्यदिपोराशीमतिमोहं प्रचक्रिरे ।

कुष्ठार्ताङ्घ्रियुगः शिखी व्रजपदं स्खलति धावन्नहिं भानुः पादसहस्रभाक् प्रतिपदं सञ्चार्यतेऽनूरुणा।
वञ्च्यन्ते बलिनोऽपि यल्लघुबलैः सामर्थ्यहीनैश्च यद्भ्राम्यन्ते परिपूर्णशक्तय इदं दैवस्य लीलायितं। ९९०
स सर्व्वशास्त्राधिगमप्रौढः परिष्टढो धियां। यन्मोहितमतिश्चक्रे वैधेयैरपि मन्त्रिभिः।
विपन्नस्य पितुर्व्वैरप्रतिकारविधित्सया। स राजधानीनामाङ्कमठादिभिरलोठयत्।
त्यागी तत्कोशसम्भारं व्ययीकुर्व्वन्नितस्ततः। लुब्धस्य चाभिधामस्य पायसेन इति व्यधात्।
शृङ्खान्ते शृङ्खशीलानां ढौकितं मूढचेतसा। स्पष्टं पञ्चाधिकं दात्रा स्त्रीणां तेन शतत्रयं।
यादृशीस्तादृशीस्तत्र नाडीर्व्विन्यस्यतानिशं। नाग्रस्थान्तपरं डामजनंगमकुचाङ्गनाः। ९९५
अत्रान्तरे पूर्य्यमाणे गूढं कोटपदातिभिः। पुनर्भुवनराजोऽभूल्लहराबन्धिलुब्धधीः।
मदर्पितपुरं प्राप्तः कन्दर्पद्वारनायकं। श्रुत्वा योद्धुं विनिर्यान्तं ययौ भूयोऽप्यदृश्यतां।
तस्मिन् प्रघट्टेऽपि नृपोदृप्यद्राजपुरीपतिः। सङ्ग्रामपालः केनापि हेतुना विक्रियां ययौ।
कन्दर्पं कोटभृत्यानां भिन्नानां सङ्ग्रहोद्यते। क्रुध्यन् राजपुरीं राजा व्यसृजद्दण्डनायकं।
स महद्भिः समं सैन्यैर्गच्छन्शौङ्गरवर्त्मना। अधीरः कोटकच्छेषु सार्द्धं मासं व्यलम्बत। १०००
प्रत्यासन्नाच्छुचेर्मासात्प्रतापाच्च विरोधिनां। चलतस्तस्य यात्रायां न सङ्कल्पोऽप्यराजत।
अविशेषज्ञभावेन भर्त्तुस्तिष्ठन्निरुद्यमः। ततो जगाम कन्दर्प एवोपालम्भमात्रतां।
कृतप्रतिज्ञोऽनाहारतया राजपुरीजये। उपालम्भार्दितः सोऽथ निःसामर्थ्योऽप्यशाचरत्।
निराहारस्य वसतः कन्दर्पस्याद्रिगह्वरे। षष्ठेऽह्न्यभूद्राजपुरीयोजनेऽभ्यधिके स्थिता।
अव्याहतः सोऽरिबलाद्द्विपच्छस्त्राणि पातयन्। कदलीपत्त्रशस्त्रूनृन् वनं सिंहइवाविशत्। १००५
दण्डनायकसैन्येभ्यः परमेकस्तमन्वगात्। सेनानीः कुलराजाख्यो बुद्धराजकुलोद्भवः।
तं वाह्याल्यां राजपुर्य्याहता संख्याद्विते द्विषः। निहत्य शूककच्छवाद्दं कन्दर्पं मेनिरे हतं।
मध्याह्ने स तु कन्दर्पः स्वयं सम्प्राविशद्बली। राजधानीं राजपुर्य्या विंशत्या विंशैः समं भटैः।
द्विषां त्रिंशत्सहस्राणि योधानामनिवर्त्तिनां। रुरोध राजपुर्य्यग्रे तत्पदातिशतत्रये।
काश्मीरकाणां निहतं रणे तत्र शतद्वयं। चत्वारि तु शतान्युर्व्वीं खशानामथशेरत। १०१०
भग्ने रिपुबले दूरमसंख्येयैश्चिताग्निभिः। संस्कुर्व्वद्भिर्हतान्वाशीन्नणोमृत्योर्महानसः।
तेनैवं स्वाम्युपालम्भवेतालो रभसार्पितः। रणश्मशाने वीरेण शमितो मांसशोणितैः।
याममात्रावशेषेऽह्नि पुनरेवाथ संहताः। द्विषः परिभवोत्तप्ताः कन्दर्पं योद्धुमाययुः।
ततस्तानथ नाराचान्निचिक्षेप स संयुगे। लिप्तानौषधितैलेन विद्धा यैः प्राज्वलन्द्विषः।
आग्नेयं वेत्त्ययमस्त्रमिति मूढा विशङ्किताः। ते दूरं प्रययुर्भीता निन्दन्तः पुनरागमं। १०१५
प्रगल्भभावः प्रतिभानमोजः प्रयोगचातुर्य्यमसम्भ्रमश्च। महाशयानामतिसङ्कटेषु धैर्य्योपनद्धा न धियं जहाति।
राजधानीं प्रविष्टस्य मानान्स्ताभिलाषिणि। भूयोऽप्यपश्यत्स च्छन्नां वाह्यालीं वहलैर्बलैः।
योद्धुं यियासुः शुश्राव प्राप्तं तं दण्डनायकं। घोरां रणाटवीं दृष्ट्वा भयात्स्थगितसैनिकं।

स्वीयैर्दृष्टैः हतैः कैश्चिद्दृष्यन्त्यधिकमाहवे । परकीयैस्त्वमन्यन्ये कोऽन्तरं वेत्ति देहिनां ।
आनीतोऽथ विनिर्गत्य तेनैव सभये व्रजन् । सद्धमानो यथाम्भोधौ मज्जन् हंसेन वायसः ।
रक्तप्रजस्वीतसैन्यमभिन्नं वज्रकोशवत् । परराष्ट्रं विशेदेवं स्ववीर्येणैव कोऽपरः ।
प्रणतात्करमादाय ततो राजपुरीपतेः । मासमात्रेण कन्दर्पः पुनः स भुवमाययौ ।
प्रत्युद्गमादिसत्कारैः कृतपूजो महीभुजा । स दण्डनायकादीनां शिरःशूलावहोऽभवत् ।
परिहासपुरे पारिपाल्यं कुर्वन् कठोरधीः । वातगण्डाख्यया ख्यातिं निन्ये यस्तत्र पर्षदा ।
प्रभूतोत्कोचसम्प्रीतसचिवप्रेरणस्पृशा । अपास्य वामनं राज्ञा पादाग्रादौ नियोजितः ।
आनन्दः स चणे तस्मिन्निच्छन्द्वाराधिकारितां । कन्दर्पद्वेषिणामासीन्मन्त्रिणामतिसम्मतः ।
तत्प्रेरितस्ततः पातुं लहरं विप्लुताहितं । मण्डलेश्वरतां दत्वा कन्दर्पं प्राहिणोन्नृपः ।
मन्त्रविक्रमसम्पन्नः कुभृत्यैः क्षोदयेप्सुभिः । युक्त्या तया राजपर्षः समीपात्सोऽतिवाहितः ।
दूत्याहोयमिति प्रहाय निकटाद्देशान्तरं वाग्मिनं स्वरं बन्धुवियोगकृत्तनुवचोऽमुष्येति सन्त्यज्य च ।
शूरं राज्यमसौ हरेदिति तया हित्वा विचारोज्झितो धूर्त्तप्रेरणया बुधो नृपपशुर्नायाति नाशङ्कितात् ।
अदर्शनात्स्ववद्धापि कन्दर्पप्रीतिराश्रयात् । राज्ञो जगाल कालेन सा मुष्टेरिव वालुका ।
उत्कर्षपुत्त्रावादाय चिकीर्षुर्लोहरेशतां । कन्दर्पो वर्तत इति चितिपं मन्त्रिणोऽवदन् ।
तथेति नृपतिर्गृह्णन् बन्धुं हन्तुमयाशु तं । ससैन्यं व्यसृजत्पट्टं टङ्कं चासिधराभिधं ।
तयोः सम्प्राप्तयोर्वार्तां तां लेख्यव्यत्ययाद्विदन् । विमुखश्शङ्किताश्मा च कन्दर्पोऽभूद्यथा मुहुः ।
केलिद्यूतक्षणे हस्तं स्पृष्ट्वैवकवत्पुरः । आसीदसिधरस्तस्य बन्धुमभ्युद्यतस्तदा ।
ततः पाणिं विनिष्कृत्य सोऽङ्गुष्ठाग्रेण तत्करं । अस्पृष्टा येन निसार्य क्षिप्तः पत्नीव सोऽगमत् ।
अनन्तराजो भूभृच्च तेनात्मा च नृपाश्रितः । विगच्छते स खिन्नेन पट्टस्यैवमकथ्यत ।
नैयाशयो नरपतिः कुटुम्बं प्रहिणोतु मे । अर्पयित्वा ततः कोटं प्रयास्यामि दिगन्तरं ।
आनीय दत्तांस्तैर्श्रांतीनादाय द्रोहवर्जितः । स विमुक्ताधिकारोऽथ मन्त्री वाराणसीं ययौ ।
हत्वा गयायां मामन्तमेकमन्यं निवेश्य च । काश्मीरकाणां चक्रे स श्राद्धशुल्कनिवारणं ।
स हत्वा चोरसेनान्यं ससैन्ये दुर्गमेऽध्वनि । पूर्वाग्राममध्वनीनां स व्यधान्निर्धूतकण्टकं ।
स्थापं निहत्योयमत्त्वं वाराणस्यां निरस्तता । पूर्वा दिक् भूषिता तेन मठैः सुकृतकर्मठैः ।
ते तन्निर्वासनादेव लब्धलक्ष्याः कुमन्त्रिणः । अन्योन्यासूयया जग्मुरप्यकार्याणि भूभुजः ।
स्वैरगाहारोदितगुरुमदाः स्पृष्टकण्डूनिशान्ते दुर्वारैर्ष्याकलुषमतयो यत्र दुर्मन्त्रिमुख्याः ।
प्रत्यन्योन्यं भवति गणितैर्वासरैरेव कश्चिन्मध्यस्थाणोरिव नरपतेस्तत्र सर्वाङ्गभङ्गः ।
चलितनामति कालेऽथ पार्थिवं हन्तुमुद्यमं । दुर्दुर्गोत्तराज्ये च्छलात्ममर्त्सिधर्मपटोऽभजत् ।
द्रोहापवादभागेव भवेद्राज्यमिदं पुनः । मामेव वेश्यापुत्त्रत्वादनर्होऽस्मिन्नुपेष्यति ।
इति सम्मन्त्र्य सुचिरं निहन्तुं पृथिवीभुजं । प्रेरितो जयराजोऽभूत्तेनापरस्वचेतसा ।

॥ युग्मं ॥ विश्राव्यग्रामजान् चिह्ना तीक्ष्णं द्रोहाय भूपतेः । सावरोधवधूर्हित्वा विदधे मध्यपातिनौ ।
क्रमात्सिद्ध्युन्मुखे तस्मिन् कार्ये राजपुरीं नृपः । दूत्याय व्यसृजज्जातु वज्रमानेन धम्मटं ।
मद्दस्वमङ्गलगृहे सुदिनापेक्षया स्थितिं । तं सिद्धिभङ्गचकितो जयराजः समाययौ ।
तमर्थं मण्डपे गूढं तयोर्मन्त्रायमाणयोः । प्रयागानुचरः कश्चिद्भित्तिव्यवहितोऽशृणोत् ।
तदावेदिततद्वार्तात्प्रयागात्तत्कथां ततः । बुद्ध्वा निवर्त्तयामास धम्मटं गमनान्नृपः ।
कुलक्षयभयात्तिष्ठंस्तत्प्रतीकारमन्थरः । स्वमेव केवलं रक्षन्नासीत्स चकितोऽन्वहं ।
असिद्धिं जयराजस्तु दृष्ट्वा दूतैः स्वपक्षगौ । प्रमालडामरौ घोरौ नागपाशाभिधौ व्यधात् ।
स्वभृत्यैर्मर्द्दनिर्यातैर्यियासुस्तं निवेदितं । श्रुत्वा क्षपायां क्षितिभृद्दिक्षु चिक्षेप रक्षिणः ।
व्याजाद्यार्तो वदन् मज्जः प्रातस्तान्वह्निरेव तं । चतुष्के पूजने धूर्तौ जयराजमुपानयत् ।
राज्ञोदत्तार्गले धाम्नि स्थितस्य स्नानमण्डपं । सत्रासो भ्रातृपुत्रेण धम्मटेन ततोऽविशत् ।
रक्षिणोऽथ वहिर्न्यस्य प्रयागः पार्थिवाज्ञया । जयराजं वधानेति नीचैर्धम्मटमभ्यधात ।
धम्मटे विश्वसन् शस्त्रं जयराजस्त्यजेद्ध्रुवं । निर्देशेनामुना वेत्ति स्वमज्ञातश्च धम्मटः ।
द्वयोरेकस्य वा युद्धे तयोर्मृत्यौ हितञ्च न । व्यक्तीकृतैक्ययोर्व्वापि वधो लोकेऽप्यगर्हितः ।
इति निर्ध्यायतः शश्वदविरोधेन वेधसः । प्रज्ञास्य सत्यभाग्राज्ञो मन्त्रो युक्ततमस्तया ।
॥ तिलकं ॥ नावुद्ध मां ध्रुवं राजा तान्यक्षिरिति विश्वसन् । जयराजमुपागत्य ततोधार्ष्याद्वचोऽब्रवीत् ।
अप्रसन्नस्त्वपि नृपो यद्यद्रोहोऽसि निश्चयात् । तत्त्वयाऽद्यविशङ्क्यार्थमसिधेनुः समर्प्यतां ।
दैवेन वा मोहितः स तद्विश्वासेन वात्यजत् । आक्षिप्यमाणः शस्त्रास्त्रकोविदः शस्त्रमन्यवत् ।
वैक्लव्यदर्शनात्स्थैर्यस्ततः स परुषां गिरं । तन्वङ्गपौत्रष्टुमारब्धस्तं जगादाञ्जकात्मजः ।
न त्वं निःसत्त्वकथाया जातः कलशभूभुजा । आसीज्जनयिता नूनं क्लीबो यः कश्चिदेव ते ।
निष्ठायां धैर्यचर्याणां परिणाममजानता । तेनेत्युक्तः स शीताम्बुसिक्तसुप्तोपमोऽभवत् ।
॥ युगलकं ॥ द्रोहोदन्तं प्रच्छमानोधीरस्तन्मध्यपातिनं । यातनाक्लेशितोऽप्यूचे स्वमेव नतु धम्मटं ।
विपन्नमन्त्रवीर्येण मोघीकृतविषाशनः । रज्ज्वा निपीड्य ग्रीवायं ततो निन्ये विपादितः ।
जयकेन प्रतीहर्त्रा शिरश्छित्त्वोज्झितं ययौ । भट्टारनड्वलातोये तद्वपुर्मत्स्यभोज्यतां ।
तमेकषष्टे वर्षे हत्वा भाद्रपदे नृपः । वधं गभीरहृदयो धम्मटस्याप्यचिन्तयत् ।
आदिदेशाथ तत्सिद्ध्यै रहः शस्त्रभृतां वरं । शूरं कलशराजाख्यं ठक्कुरं लोहराश्रयं ।
प्रहिणोति यदा दूतं प्रयागस्ते तदा त्वया । सम्पाद्यमेतदित्यूचे तं चोपचितसत्क्रियं ।
असिद्धिभीत्या स्वं दूतं स प्रहिण्वन् प्रयागकः । समक्ष्य क्रियतामेतदित्यूचे कुपितो नृपं ।
राज्ञि मन्त्रीयमाणेऽथ पञ्चानीयाथ्यमन्त्रिणः । वामनः सार्गले द्वारे त्यक्तदेहोऽब्रवीद्वचः ।
मन्त्रश्च मन्त्रिणश्चैते न यावन्निःसृता वहिः । तावत्क्रियेत चेदेतन्न भद्राणि दरिद्रति ।
राजाज्ञया प्रयागेण ततो दूते विसर्ज्जिते । तीक्ष्णः कलशराजाख्यस्तनयाभ्यां सहाययौ ।

तस्मिन् प्रसङ्गे ताम्बङ्गिः श्येनस्य दददातपं । राजधान्यन्तरेवासीद्द्वित्रैरनुचरैः समं ।
पुरः कलशराजं तं दृष्ट्वा पश्चाच्च तत्सुतौ । यावत्सशङ्कमाचष्टौ तावद्भृत्यैर्निजैर्जहे ।
शक्कोऽपि धम्मटः क्रष्टुं कृपाणीमिति वादिनं । हन्तुं कलशराजन्तु यावच्छक्तो व्यधात्करं ।
तावत्तेनाग्रतः पश्चात्तत्पुत्राभ्यां कृताहतिः । आसनादुच्चलन्नेव क्षिप्रं प्राणैरमुच्यत ।
मुमूर्षुणा हतस्तेन ज्यायान् कलशराजजः । छिन्नमायुधवैगुण्यान्नाभीक्ष्णमणितोऽभवत् ।
तस्य स्वभाग्ययोगेन तेष्ववाहःसु धन्विनः । निजा कृपाणी तुत्रोट तेनाभद्रायुधोऽभवत् ।
निहत्य पातितः पृष्ठात्स तैर्व्याधैरिवाण्डजः । शुनां ग्रासाय सन्त्यक्तः श्वपाकैः पार्थिवाज्ञया ।
राज्ञा तन्वङ्गनप्तारौ स्वयं रिल्हणसल्हणौ । आगत्य प्राङ्गने त्यक्तकृपाणौ परिरक्षितौ ।
दत्तास्कन्दास्तु टुक्काद्याः संरम्भेण युयुत्सवः । माययोदयसिंहेन दाम्भिकेनैत्य वञ्चिताः ।
यूयं पुत्रा ममेत्युक्तवतस्ते धार्म्मिकस्य यत् । प्रत्ययात्तस्य शस्त्राणि तत्यजुर्जीवितेच्छवः ।
राज्ञो विशुद्धिः क्रियतां पार्श्वमेत्येति तद्वचः । तैः समागत्य जगृहे मार्गो राजगृहान् प्रति ।
तन्वङ्गजगृहोच्छिष्टैर्बाल एव विवर्धितः । दुस्सन्ततो विहस्यैनं स्वच्छत्रग्राहकोऽवदत् ।
तन्वङ्गनप्तर्यत्पूर्व्वं जयराजमभाषथाः । न त्वं निःसत्त्वकथ्याया इति तद्विस्मृतं तव ।
स ते तादृश एवायं वर्त्तते सङ्कटक्षणः । किं धैर्य्यावसरे मूढ वैक्लव्यमवलम्बसे ।
तस्माज्जातोऽसि नियतं मत्पित्रोच्छिष्टमुष्टिना । अहन्तु तेन वीरेण त्वत्पित्रा कीर्त्तिभागिना ।
इत्युक्त्वा मरणे गृह्णन् खड्गधाराचलज्जलं । पपात जन्ममालिन्यं मानी प्रक्षालयन्निव ।
नृपान्तिकं प्रयास्याम इति निश्चयतस्ततः । टुक्कादीन्राजपुरुषाः कारागारे निचिक्षिपुः ।
ते यौवनभरोन्मत्ता द्रुमा वासन्तिका इव । प्रत्यभासन्त कारुण्याद्रक्षणीयाः क्षमाभुजः ।
टक्कस्तु बिम्बियोनाम पापः सम्प्रेक्ष्य भूभुजं । न्यजिग्रहत्तान् ग्रीवासु निशि पाशान्निवेशयन् ।
गुल्लो विजयराजश्च वुल्लोगुल्लश्च तेऽनुठन् । तन्वङ्गपौत्राश्चत्वारो हता वध्यमहीतले ।
हतानामपि सौन्दर्य्यं तेषामद्यापि वर्ण्यते । कथान्तरे वयोवृद्धैर्बद्धाश्रुस्यन्ददुर्दिनैः ।
सततास्यस्तताम्बूलैः स्वस्वैस्तद्दशनाङ्कुरैः । कोणंगोणाश्ममालेव सुचिरं वध्यभूरभूत् ।
वृद्धिमानीतयोराज्ञाप्युत्कर्षापत्ययोस्तयोः । ज्यायान् प्रसिध्ये डोम्बाख्यो गूढदण्डैः कुलच्छिदा ।
स्फुलिङ्गमिव सम्भाव्य तेजोविस्फूर्जितं शिशुं । जघान नयमल्लस्य तद्वद्विजयमल्लजं ।
गोभृत् स्वगोत्रजान् हत्वा भोक्तुमेकस्य कस्यचित् । कुर्व्वन्ति दैवोपहता राज्यं निष्कण्टकं नृपाः ।
संरूढं मधुगोलमुग्धविटपव्यूहावलीगह्वरे मूढः कर्त्तुमकण्टकं हार्य्यमभितः कस्यापि भव्यात्मनः ।
दैवप्रेरणया प्रकम्पविवशः पश्यप्रहारैर्दृढं तद्भोक्तॄन्मधुपान्निहत्य समयत्यचत्यपृथ्वीरुहः ।
ज्ञातिद्रोहमहापापनष्टधीरस्य पार्थिवः । डिम्बानामप्यसम्भाव्यामभजद्विटभोग्यतां ।
वामनस्यात्मजः क्षेमसञ्ज्ञामगात् जनकद्विषं । प्रैरयत्कलशोऽसौ स्वच्छमहेममित्रहर्षणे ।
तामिच्छामच्छिनत्तस्य भक्तो युक्त्या प्रयागकः । धावतां श्वभ्रपातेच्छां धीरोऽयं ते वदन्ति नः ।

अनियमस्पष्टचेष्टानां भवानामिव भूभुजां । अन्तःप्रवेशकुशलो यो वेताल इवाभवत् ।
नप्ता हलधरस्याथ विटो लोठधराभिधः । जगाद निर्जने जातु राजानं रञ्जनेच्छया ।
॥ युग्मं ॥ ह्रियतां ग्रामदेमादि कलेशस्वरसंश्रयं । तत्प्रसादागमभिः सेतुं वितस्तायां करोमि ते ।
आलेख्यं गगने लिखामि विसिनी सूत्रैर्व्वयाम्यम्बरं स्वप्नालोकितमानयामि कनकं गृह्णामि वप्रं हिमैः ।
इत्याद्युक्तमपि स्फुटं जडमतिर्जानाति सत्यं नृपो यत्तादृक् त्रपया न वक्ति सगतप्रौढिः परम्वञ्चते ।
निषिषेध चिकीर्षान्तु प्रयागस्तामपि प्रभोः । सदुपस्थायिकोऽपथ्याभ्यर्थनामिव रोगिणः ।
अथ लोठधरो हास्यावसरे जातु भूपतिं । वद्ध्वस्य मोचो देहस्य क्रियतामित्यभाषत ।
स्मित्वा किमेतदित्युक्तवन्तं तं स व्यजिज्ञपत् । तदभुण्डपुरे भीमस्वामिहिरण्मयमभूत्पुरा ।
विरोधात्परिपत्थानां तत्कृतो भीमकेशवः । राज्ञे कलशदेवस्य वद्धद्वारोऽभवच्चिरं ।
तैः शान्तवैरैर्व्विदधे यदाथ विहतारररिः । चौरापहृतदुर्व्वर्णकवचो दृदृशे तदा ।
भूयोऽपि चक्रे तद्भीत्या कोशसामग्र्यभागिति । ततः प्रभृत्यय यावदद्वद्धारारररिः स्फुटं ।
आदीयतां तदीयस्तत्कोशश्चौरभयावहः । सोऽपि बन्धादिमुक्तोऽस्तु पुष्पदीपादिभोगभाक् ।
इति सम्प्रेरितस्तेन तथा चक्रे स भूपतिः । कोशन्तदा प्रपेदे च मणिस्वर्णादिनिर्भरं ।
अचिन्तयच्च यद्दृव्यस्य शून्यसुरास्पदे । कीदृक् तत्रापरेषु स्यादाढ्येषु सुरवेश्मसु ।
क्षतप्रायः स तत्त्वैः पारिषद्यैस्ततो नृपः । निष्क्रयं रूढभारोढिवारणेन प्रदापितः ।
क्रमेण सेनानानाङ्गव्ययव्यसनशालिनः । सुराकुहरणे रूढा धीःसम्भावनया तया ।
पूर्व्वराजार्पितान् कोशांस्ततः स भुवनाद्भुतान् । सर्व्वगीर्व्वाणवेश्मभ्यो लुब्धबुद्धिरपाहरत् ।
हृतेषु कोशेष्वानेतुं देवानां प्रतिमा अपि । चकारोदयराजाख्यं देवोत्पाटननायकं ।
वदनेषु सनम्राढैः शीर्णघ्राणाङ्घ्रिपाणिभिः । मूर्त्तिनाशाय देवानां शकृन्मूत्राद्यपातयत् ।
स्वर्णरूप्यादिघटिता गीर्व्वाणाश्चतयोऽलुठन् । अश्वखिन्नगण्डाश्च इव सावस्करेष्वपि ।
विबुधप्रतिमाशङ्कुराङ्घ्ष्टा गुल्फदामभिः । थूत्कारकुसुमच्छन्ना रथ्यनश्राटकादयः ।
ग्रामे पुरेऽथ नगरे प्रासादो न च कश्चन । हर्षराजतुरुष्केन न योनिष्प्रतिमीकृतः ।
तस्य देवावशिष्टौ द्वौ परमास्तां प्रभाविणौ । नगरे श्रीरणस्वामी मार्त्तण्डापत्तनेष्विव ।
द्वौ सद्दा प्रतिमामध्याद्बुद्धदिम्बावरचतां । दानप्रसङ्गे तं जातु याचित्वा त्यागिनं नृपं ।
परिहासपुरे जन्म मेदिन्यां कनकाभिध. । गायनः कुशलश्रीश्च श्रमणो नगरान्तरे ।
अधिगतवतां लोके विश्वाद्भुतामपि सम्पदं न खलु विरतिर्दुष्कर्मभ्यो धनार्जनकाङ्क्षिणां ।
किमपि कमलावाप्त्यै पद्माकरोद्धृतिपातकं भजति कमला लीलावासो भवन्नपि हि द्विपः ।
पैतामहेन पित्र्येण तथा राज्यचिरार्पिया । लोहरादाहृतार्थेन कोशेनात्कर्षकृन्मतिः ।
युक्तोऽपि पूर्व्वराजार्थं दिवौकोभ्यो जहार यः । ऐश्वर्यार्जनं हा धिक् [illegible] ।
॥ युग्मं ॥ तदाज्ञामात्रमादाय सचिवैरथ पापिभिः । ते ते [illegible] ।

कालानुवृत्तिपरतां धिग्धिग्राजोपजीविनां । यत्र मन्त्री वयस्यः सन्सदाचारोऽपि गौरकः ।
सर्व्वदेवस्वहृद्ग्रामसर्व्वस्वापहृतिव्रतं । स्त्रीचकाराज्ञया भर्तुरर्थनायकतामपि ।
॥ युग्मं ॥ पार्षदः समरस्वामिदेवागारे च हेलकः । आप्तो विजयमल्लस्य यो राज्ञो द्वेष्यतां ययौ ।
द्विगुणोत्पत्तिदानेन सोऽर्थनायकतां गतः । लब्धावकाशो राजाग्रे क्रमेणासीन्महत्तमः ।
किमन्यद्धूरता तेन सर्व्वार्थान् सर्व्वनायकैः । व्यधीयत धनावाप्त्यै पुरीशस्यापि नायकः ।
श्रीगर्भपदपर्य्यायच्छन्नजाड्यप्रभावतः । तयार्जितस्य कोशस्य सोऽनुरूपव्ययोऽभवत् ।
मृगीदृशां दुर्लभतां हयानां श्वासान्वितानां कुवच.सहलं ।
वैतालिकानाञ्च विकत्थनत्वं क्रेतुं क्षितीशाः क्षपयन्ति लक्ष्मीं ।
कोपप्रसादैर्दयिताजनस्य हयादिवृत्तान्तगवेषणेन ।
भृत्यानुवृत्त्या मृगयाकथाभी राज्ञां शिशूनामिव याति कालः ।
विलासहासासनपानदानयानाशनाद्या असतीः सतीर्व्वा ।
च्छायेव चेष्टाः क्षितिपालवर्गः परानुकारेण करोति सर्व्वाः ।
अमानुषत्वं पुरुषाधिराजा विटस्तवैः स्वस्य विचिन्त्य सत्यं ।
तृतीयमक्ष्यभ्यधिकं भुजौ वा ममेति मत्वा न विदन्ति मृत्युं ।
निशासु येषां प्रभवन्ति दारादिमेष्वमात्या नियताधिकाराः ।
अहो भ्रमः स्वल्पयदृच्छ तेऽपि विदन्ति भूपाः प्रभविष्णुभावं ।
स्वादूचितं स्वादुतयैव भुंक्ते थूत्कृत्य मुञ्चत्यपि थूत्कृतानि ।
विवासितप्राशमुपेत्यकस्माद्भूभृच्च बालस्य समानभावः ।
जाड्यमित्यादि यत्किञ्चित्क्षितिपानां कटाचितं । तत्सर्व्वं हर्षदेवस्य जाड्येन लघुतां ययौ ।
तुष्टः पटहवाद्येन ह्यातोद्यविदे ददौ । भीमनायकनाम्ने स करिणं करिणीसखं ।
स्वभिव्यक्तेन तस्यासीद्गायनः कनकोऽथ सः । चम्पकावरज. खेदाद्गीताभ्यासकृतोद्यमः ।
प्रसादीकृतमस्मै च खेदच्छेदनमिच्छता । तेन काञ्चनदीनारलक्षमचतचेतसा ।
कर्णाटभर्तुः पर्माण्डेः सुन्दरीं चन्दलाभिधां । आलेख्यलिखितां वीक्ष्य सोऽभूत्पुष्पायुधक्षतः ।
उत्तेजयन्ति सहर्षे हास्ये जडमतीस्थिटाः । सारमेयानिवाजस्रं प्रोत्साह्य प्राकृताशयाः ।
सविटाद्रिक्षितो वीतत्रपस्तस्मै सभान्तरे । प्रतिज्ञां चन्दलावाप्त्यै पर्माण्डेश्च विलोडने ।
कृता पश्चिमदृपूर्वपरिग्रहणां प्रतिज्ञया । तस्य स्तुतिमिषादेवं जहसुः कविचारणाः ।
भाषावेषविशेषत. परिगतस्तन्दाक्षिणात्योऽध्वगो गन्धादप्यवधारितं यदुत ते कर्पूरकोलाहरे ।
सद्यःखदिरमग्न हर्षनृपते लम्बकपर्णोपायनं मोचेत्तिष्ठतु नारिकेलकुहरे सम्प्रत्यमुष्मिन्यतः ।
यावत्पाटपगुम्मराधवयथादाचन्दमालिङ्गमादा कन्यासपुरप्रवेशनविधेरापिष्टवादर्शनात् ।

प्राराजाश्रयकाननान्तवसुधापारर्द्धिकोठहलाद्देवेन प्रतिषिद्धमिद्धमहसा पोतामपञ्चर्वणे।
विटः प्रसादनृपतिर्मदनः कम्पनापतिः। मदत्तरलं जयाद्य तस्याश्चिचार्पिनाकृतेः।
स्त्यालङ्कारनिर्वाहकृते ऽमुष्याय वेतनम्। नित्यमादत्त भूपालादायमौर्व्याश्रमाय च।
विटत्वे निस्त्रपत्वे च मदनस्य कथाक्रमः। मौग्ध्ये पारिप्लवत्वे च नृपस्य निकषोऽभवत्।
मातेयं विद्धि कम्पाकान्तवानीतेति वादिभिः। सन्दर्श्य जरतीं नारीं मुषितः सोऽपरैर्विटैः।
दासीयं देवता एता इत्युक्तान्यैः प्रवेशिताः। उन्नतिश्च श्रियं चौज्झत्प्रणमन् जहसे जनैः।
दास्यो मदनसंलापमन्त्राद्युल्लेखकारिभिः। अध्यापिता विटैस्तस्य मतिमोहं प्रचक्रिरे।
ताभ्यः काभिरपि श्लाघ्यसुरतं समयोचितं। वाञ्छन्तीभिः कृतः स्वाङ्गस्पर्शाङ्गागाश्रयोज्झितः।
आयुष्कामाय भूयांसं कालं जीवितकाङ्क्षिणे। आयुर्वर्षशतान्यस्मै ता मूढमतये ददुः।
डोंवेन पिण्डसिद्ध्यर्थी केनाप्येतद्रसायनं। पिण्डसिद्धिकृदित्युक्त्वा पेयं किमपि पायितः।
किं तस्य कथितैरन्यैर्मौग्ध्यैर्यो याचितो विटैः। विद्यमानादिव धनादायुषोऽपि व्ययं व्यधात्।
वलहपेच्छुरपरानुपायान् यानसेवत। कथयेत्कः सदाचारस्तानतोऽपि त्रपावहान्।
स एवमन्धतामिस्रे निचितः शाश्वतीः समाः। मुग्धबुद्धिः खजन्येन दुर्जातश्च कुमन्त्रिभिः।
मेघवाहनमुख्यानां कृत्ये लोकोत्तरे यथा। सन्त्यद्यान्यधियः केचित्सन्देहान्दोलिताशयाः।
तथास्मिन्नपि दुष्कृत्ये वर्धमानेऽद्भुतावहे। भविष्यतीव कालेन नूनमप्रत्ययो जनः।
राज्ये वङ्कच्छले तादृक् दुर्नीत्योपहतोऽप्यभूत्। आयुःशेषेण न वशे स रन्ध्रान्वेषिणां द्विषां।
नर्तकीः शिक्षयन्वाद्यनृत्याद्याभिनयं स्वयं। तिष्ठन्दीपोज्ज्वले धाम्नि दूरात्केनापि शत्रुणा।
क्षिप्तैरपि नाभूच्चनिहतो जनितोऽथ वा। फलं तस्यायुःशेषस्य प्रजानां कुकृतस्य वा।
कश्चिदेवाथ शङ्कान्ते पातदूतो महीपतेः। सर्वशुद्धिनिषेधः प्राभून्नारीचारित्रविप्लवः।
ते युवानो मदोन्मत्तास्ताः स्त्रियो यौवनोन्मदाः। नाशाय हर्षदेवस्य तस्मिन्नेवाभवन् क्षणे।
निगृहीतास्तेन रोषात्स राजा काश्चन स्त्रियः। काश्चित्त्वाकृष्य शङ्कान्ताज्जारैर्नीता दिगन्तरम्।
स्वेन दौःशील्यदोषेण सर्व एव विशङ्किताः। भृत्यास्तस्याशुभान्यैच्छन्नयनन्त च शान्तये।
तस्यापि शीलकैवल्यं तावत्सर्वेच पप्रथे। यावत्कलशभूपालात्सञ्जातस्रोपपद्यते।
शैशवे वर्धितो याभिरङ्कमारुह्य मातृभिः। सोऽङ्कमारोप्य ता एव चुम्बन्संबुभुजेऽनिशम्।
सम्भोगभगिनीवर्गे कुर्वता दुर्वचो रुषा। निगृहीना च भुक्ता च नागा पुत्री पितृस्वसुः।
स तुरुष्कशताधीशाननिशं पोषयन् धनैः। निधनावधि दुर्बुद्धिर्बुभुजे ग्राम्यशूकरान्।
अथ सेवाभिसारेण कदापि कुपितो नृपः। स मन्दबुद्धिरास्कन्दमदाद्राजपुरीं प्रति।
विलोक्य सैन्यसामिश्रीमनन्यसदृशीं पथि। त्रैलोक्याक्रान्तिसामर्थ्यं पार्थिवैस्तस्य शङ्कितं।
स तु पृथ्वीं गिरिं दुर्गं दृष्ट्वा तद्ग्रहणोद्यतः। अप्रविष्टो राजपुरीं तन्मूले समुपाविशत्।
मासमभ्यधिकं तेन तत्क्षुपा परिपोडिताः। प्रक्षीणत्वादिधंभारा सम्रद्दुर्गरक्षिणः।

तत्पुत्रौ दैवविख्यातौ राज्यप्राप्तौ तदिच्छया । मानं व्यवर्धिषातां यौ वीरावुच्चलसुस्सलौ । ११८५
अत्युद्दामस्तयोर्ज्यायान् द्विषन्नपि नृपासनं । आसीद्भाव्यर्थमाहात्म्याद्यात्रायामत्र निर्गतः ।
अवग्रहेण भूपालप्रतापेन च शोषिताः । यथाकथञ्चित्तद्दुर्गं ररक्षुर्डामरा भटाः ।
अथात्रैव विधेर्हर्षप्रतापपरिपन्थिनी । पपात महती वृष्टिरेकीकृतजलस्थला ।
दुर्गग्रहं हिमैः क्लान्तं दुर्भेदैः पर्यवार्यत । अनुकूलेन विधिना सन्नाहैर्निहितैरिव ।
उत्थाने पातयन् कांश्चित्पतने कांश्चिदुत्क्षिपन् । वेधाः कन्दलयत्येव कन्दुकक्रीडितभ्रमं । ११९०
ततः स्तुत्वा महान् वृष्टिदुःस्थास्ते दुष्टमन्त्रिणः । चक्रिरे पूर्ववद्राज्ञः स्कन्धावारे विद्रवणं ।
ऊर्ध्वस्रोतोनुसारीव तिमिः शैलहताननः । ततोऽपि चक्रे व्यावृत्तिं राजा जयपराङ्मुखः ।
मुक्तापणः शीर्णकोशः त्यक्तश्रीकश्च्युतायुधः । कटकः सर्व्व एवाभूत्पलायनपरायणः ।
धावतः पथिभिस्तैस्तैस्त्वाक्रन्दात्राजसैनिकान् । पृष्ठलग्नरिपून्दोर्घा मार्गेऽप्यविष्यतापगा ।
हैमैः सहंसमालेव साब्जपण्डेव खेटकैः । सशैवलेव खड्गौघैः सशिलेव तुरङ्गमैः । ११९५
सौवर्णैः सरथाङ्गेव राजतैर्भाजनैरपि । सफेनेव जनन्यङ्कैरासीन्मधुमती सरित् ।
नीतानाञ्च हतानाञ्च दरदैः प्रहृतोद्यतैः । अभून्नदीहतानाञ्च सङ्ख्या काचिन्न देहिनां ।
अनाथवत्तथा भूतं सैन्यं त्रातुं कृतोद्यमः । एकस्तु सानुजो मानी नाचलन्मल्लिरुच्चलः ।
दरदलाम्बुधिर्धावन्स वियाक्रमणोद्यतः । ताभ्यां वेलागिरीन्द्राभ्यामिव संस्तम्भितोऽखिलः ।
तौ रचित्वा बलं प्राप्तौ प्रसिद्धिमतुलां गतौ । पतिम्वरेव राजश्रीर्भेजे लक्ष्येण तेजसा । १२००
ततः प्रभृति लोकस्य सर्व्वस्यासीदसौ मतिः । राज्यार्हौ मानिनावेतौ क्लीबोऽयं ननु भूपतिः ।
तथा कृत्वापि यद्राज्ञे दर्शनं परिजह्रतुः । तौ प्रीतिदायविमुखौ बबन्धास्थां ततो जनः ।
अथ शान्तरिपुस्त्रासोन्नगरं प्राविशन्नृपः । प्रतापस्तु दिशः प्रायान्मल्लराजतनूजयोः ।
तौ रामलक्ष्मणावेताविति सर्व्वस्तदाब्रवीत् । रावणप्रतिमे राज्ञि माध्यस्थ्यानुगुणं वचः ।
राजा तु गतलज्जश्च नित्यकृत्योपमं जडः । कर्त्तुं प्रारभताखिन्नः पुनर्मण्डलपीडनं । १२०५
अल्पापकारमपि पार्श्वगतं निहन्ति नीचो न दूरमसमागसमप्यरातिं ।
श्वा निर्दशत्युपलमन्तिकमापतन्तं तत्त्यागिनं ननु विदूरगमुग्रदोषः ।
ततः प्रविष्टः सम्प्रीतः सेवया दत्तकम्पनं । मदनं सोऽग्रहीत्स्वैरं शंसन्तं तत्पराभवं ।
तद्द्वेषिणं जिघांसुस्तमागो जग्राह सोऽपरं । तस्य देवी विसृष्टाज्ञा लेखोद्भवनलक्षणं ।
प्राप्तो मडवराज्यात्स क्ष्माभुजा दत्तदर्शनः । भीमो लक्ष्मीधरस्यागान्मन्दिरं शक्रमन्त्रिणः ।
राजा प्रसाद्यमानोऽपि तत्स्नेहोऽन्येन मन्त्रिणा । अस्मितं वीचितं सैन्यैस्तं स पुत्रमघातयत् । १२१०
कोपस्मितं नरपतेरकालकुसुमं तरोः । वेतालस्याट्टहसितं नैवमेव प्रशाम्यति ।
ये सम्प्ररूढविपुलप्रणयाभिमाना निःशङ्कमीश्वरनिषेवणमाचरन्ति ।
मन्त्रानुपत्तरभसाद्भुजगेन्द्रसख्यं प्रख्यापयन्त इव ते प्रलयं प्रयान्ति ।

कर्णेजपकुले तावन्मदनप्रत्ययावधिः। शापः सूर्य्यमती देव्याः प्रसारितभुजोऽभवत्।
विक्रमालोकनोत्कम्पी निचिक्षेप चमापतिः। बद्धा कलशराजं तं लक्ष्मीधरनिवेशने।
विरुद्धं तस्य बद्धस्य भिचापेचामिषान्नृपः। तेजोवधाय सविषमुद्याख्यं व्यसर्जयत्।
दृष्ट्या जाज्वल्यमानं तं वीक्ष्य प्रज्वलितः क्रुधा। सत्त्वासिधेनुः कस्माच्चिन्मनस्वी सहसावधीत्।
तद्भृत्यैरधमं क्रुद्धैर्निपत्य स विपादितः। दुर्बुद्धेस्तस्य भूभर्तुरेवं मत्या विपेदिरे।
मण्डले राजदण्डेन चतेनेव परिचते। चारपातोपमान्यापि प्राऊर्दुःखपरम्परा।
अहारि काञ्चनस्थाली यैः पार्थिवसद्मादपि। असत्यहस्कैर जन्तुतस्करास्ताद्दृशा विभः।
प्रवर्द्धमाने मरके क्रन्दितध्वनिनिर्भरः। निर्घोषः प्रेतवाद्यानां न व्यरंसीद्दिवानिशम्।
उदीयक्रीडितग्रामे वत्सरे पञ्चसप्तते। अखण्डं सर्वभाण्डानां दुर्भिक्षमुदजृम्भत।
दीन्नाराणां धान्यखारिः प्राप्याभूत्पञ्चभिः शतैः। दीन्नारेणाभवल्लभ्यं मार्द्वीकस्य पलद्वयं।
ऊर्णापलस्य दीन्नारैः क्रयः षड्भिरजायत। लवणोपणहिंग्वादेरभिधाप्यास्त दुर्लभा।
शवैर्नद्योऽभवन्नम्भःसंसेकोच्छूनविग्रहैः। छन्नतोया गिरिप्रस्थैश्छिन्नदारुवनैरिव।
एतद्ग्रस्ता राजधानी दूरान्न दृश्यते। ध्यात्वेति सर्वतोराजा द्रुमाणां छेदमादिशत्।
सप्रसूनफला वृक्षा गृहस्था इव पातिताः। कुटुम्बैरिव रोलम्बैरशोचन्त पदे पदे।
प्राणापहं महादण्डं तयान्तेऽपि जने नृपः। हलावलम्बे हड्डोचे गण्डशैलमिवाक्षिपत्।
निपीड्य लोकं कायस्थैर्महादण्डयवस्थया। पुरग्रामादिषु क्वापि नाभून्मृदवशेषिता।
अथोल्बणलं सम्प्राप्तान्निहन्तुं सर्वडामरान्। स दण्डभृद्दिव क्रुध्यन्नादिचन्मण्डलेश्वरम्।
पूर्वं मडवराज्योर्व्यां लोहरान्तः स डामरान्। दत्तास्कन्दोऽवधीत्तांस्तान् कुलाये विहगानिव।
घ्नता लवन्यानुन्नद्धकुन्तलोविकटाकृतिं। जीवन्मडवराज्यान्तस्तेन विप्रोऽपि नोज्झितः।
लावन्यबुद्ध्या शूलानि पार्श्वे गण्य रोपितैः। भीमरूपाभवद्भूभिर्भैरवस्य महानसः।
शूले लवन्यसैकस्य क्रूराभिन्यस्तोतावधूम्। ययुः सर्वे दिशो भीता लवन्यामण्डलेश्वरात्।
केचिदभुञ्जिरे तेषां गोमांसं म्लेच्छभूमिषु। अरघट्टघरट्टादिकृष्टाः केचिदवादयन्।
प्राहिणोत्प्राभृतं भूरि भैरवाय महीभुजे। लवन्यमुण्डमालाभिरखण्डामण्डलेश्वरः।
तोरणावनयोराजदारेऽदृश्यन्त सर्वतः। डामराणां करोटीभिर्घंटीभिरिव निर्भराः।
द्वारे कल्हणवक्त्रादि लम्बमानं नृपौकसः। नेता डामरमुण्डस्य यः कोऽपि स किलासदत्।
भोक्तुं डामरमुण्डानि ध्याता विस्तीर्णतोरणाः। विदधुर्ग्रध्रकङ्काद्या राजद्वारोपसेवनं।
यत्र यत्राप्तभूपालास्तत्र तत्र व्यधुर्भ्रमाः। लवन्यमुण्डैर्दण्डैर्बिसतोऽशेषोऽरणास्रमः।
गन्धेनाप्यसहिष्णा घ्राणं कर्णौ भीभिः शिवारुतैः। अच्छिद्यत शवाकीर्णे श्मशानइव मण्डले।
वंशेरच प्रजाप्राप्तालोकपुण्यावधि व्यधात्। रक्तश्रेणी मण्डलेशो डामरैः शूलकीलितैः।
एवं मरुद्राज्यं च कृत्वा निर्निष्टडामरम्। अधावत्क्रमराज्योर्व्यां कर्तुं तामिव पद्धतिम्।

अवश्यं न भविष्याम इति निश्चित्य डामराः । चक्रिरे क्रमराज्यस्था लोलाहे सैन्यविग्रहं ।
तैः सर्वैर्दत्तसङ्ग्रामैः कुर्व्वद्भिः कदनं महत् । आस्ते स्म तत्र सुचिरं निरुद्धो मण्डलेश्वरः ।
किमन्यद्राक्षसः कश्चित्सुरतीर्थर्षिपूजितं । निहन्तुं मण्डलमिदं हर्षव्याजादवातरत् । १२५५
उल्लासो रात्रिषु दिने स्वापः क्रौर्य्यमुदग्रता । अनाश्रयत्वं कर्त्तव्ये दक्षिणे शोचिते रतिः ।
इत्यादयस्तस्य केचिद्धर्म्मा नक्तञ्चरोचिताः । तथापि तत्कालभवैः प्रियाः प्राज्ञैः प्रकीर्त्तिताः ।
अत्रान्तरे मल्लसूनुः कनीयान् योवनोन्मदः । लक्ष्मीधरस्य गेहिन्याहृदयाह्लादकोऽभवत् ।
सा हि राजसुते तस्मिन्संसक्ता प्रातिवेश्मिके । नारज्यत निजे पत्यौ वानरप्रतिमाकृतौ ।
ज्ञातीनगण्यान्हत्वान्यान्कस्माद्राज्यार्हचरौ । नावधीरद्भुतावेतौ राजन्नुच्चलसुस्सलौ । १२६०
इति लक्ष्मीधरेणेर्ष्यारोषादुक्तोऽपि भूपतिः । नच क्रोधानुतापार्त्तिं पूर्वज्ञातिवधाद्गतः ।
स्वयमन्यमुखेनापि स तेनोक्तस्ततोऽसकृत् । तेषां घाते तदौद्धत्यं ध्यात्वा साध्वसमादधे ।
ज्ञातिप्रीत्यनुवृत्त्यादि तेन विस्मरता ततः । समम्य मन्त्रिभिः सार्धं दध्रे तद्वधनिश्चयः ।
आसन्नवारवनिता शङ्कनाख्या तु तं व्यधात् । भूभर्तुर्दुरभिप्रायं तयोः कर्णपथातिथिं ।
सख्या दर्शनपालेन तन्नार्थे च्छिन्नसंशयौ । निरगातां निशीथिन्यां द्वित्रैस्तावनुगैः समं । १२६५
षट्सप्ततेऽब्दे नगरान्मार्गशीर्षेऽथ निर्गतौ । तत्रासवसतेः प्राप्तौ डामरस्योपवेशनं ।
प्रशस्तराजो दुधुतुः भिक्षराजं निजानुजं । सोऽभिसन्धाय तौ निन्ये लवन्यो मण्डलान्तरं ।
ततो राजपुरीं ज्यायान् प्रायात्कल्हस्य भूपतेः । कनीयान् प्रययौ पार्श्वं कलिञ्जरधरेशितुः ।
तयोर्निर्गतयोराज्यं न कश्चिच्छृद्दधीयत । निमित्तज्ञेन राज्ञैव दुर्निमित्तैस्त्वशङ्क्यत ।
लक्ष्मीधरमुखेनैव प्रार्थनां हन्तुमुच्चलं । चक्रे सङ्ग्रामपालस्य सोऽङ्गीकृत्य धनं ततः । १२७०
स लन्तिकागतस्येपन्मलस्सूनोः कृतादरः । तया विशङ्कया शत्रोरासीदधिकगौरवः ।
आसन्नाभ्युदयं शत्रुर्दैवेव विधिचोदितः । शङ्काविष्करणाल्लोके नयत्सम्भावनाभुवं ।
राजपुर्य्याः प्रकृत्यैव काश्मीरानयकाङ्क्षिताः । प्रभविष्णौ रिपौ प्राप्ते चक्रिकायां किमुच्यते ।
कांश्चिन्निकृतिकप्रायान् पार्श्वयातानथोच्चलः । गमागमान् कृतोद्योगो डामराणामकारयत् ।
डामरास्तु महोत्साहास्तमानेतुं व्यसर्जयन् । राज्ञा विप्रकृता दूतान्वितीर्णोपायनान्बहून् । १२७५
तं सूर्यवर्मचन्द्रस्य तनयो जनकाभिधः । चकारोपचितोत्साहं मायादूतैर्विसर्जितैः ।
वीक्ष्य डामरदूतांस्तान् जहता राजतोभयं । व्यक्तं सङ्ग्रामपालेन निन्ये साहाय्यमुच्चलः ।
स कार्य्यगौरवात्सक्तो मूर्ध्नि कर्पूरचूर्णनं । कृत्वा तमविनाशाय यावद्दिसृष्टुमैहत ।
तावत्कदमराजाख्यस्तद्देशे मुख्यठक्कुरः । हर्षदेवार्पितोत्कोचस्तमेत्य विजनेऽब्रवीत् ।
राज्ञः प्रसादनं त्यक्त्वा तवोच्चल हितैषिणः । कामधेनुं विनिर्धूय छागकण्ठग्रहे ग्रहः ।
कोऽयं काश्मीरभूपानां कास्य शक्तिस्तपस्विनः । आराधनेन तद्राज्ञो विधेहि स्वमसाध्वसं । १२८०
अयं राजगिरौ दुर्गे स्थापितो पार्थिवस्ततः । स्वात्मनोपितव्योऽपि वाचामिन्नु सर्व्वदा ।

तेनेति प्रभुराख्यातः खशानां शमिताशयः । तन्नीतः स्वार्थलुब्धस्य तथेति प्रत्यपद्यत ।
तमभ्यधाच्च नो बन्धुं शक्तोऽहममुमुद्यतं । त्वयैव वध्यतामेष मिषतः प्रेषितोऽन्तिकं ।
इत्युक्त्वा तं स्ववसतिं विसृज्यावददुच्चलं । प्रातः कलशराजस्य त्वया गन्तव्यमन्तिकं ।
इह प्रधानामात्योऽसौ तेन ते स्यादनत्ययः । ततो विपत्त्युच्छित्त्यै त्वां प्रतिमोक्ष्यामि सानुगं ।
अथ तद्वसतिं गन्तुं चलितोऽन्येद्युरुच्चलः । प्राक् दुर्निमित्तैस्तत्कालमाप्तैरथ विरोधितः ।
मन्त्रे भिन्ने निवृत्तं तं श्रुत्वा खशनृपान्तिकं । कुप्यन् कलशराजोऽथ सन्नसैन्यैः समाययौ ।
तमास्कन्दाय सम्प्राप्तं जानन् शस्त्रभृतांवरः । रैच्छद्द्रष्टुं निर्गन्तुं निजभृत्यैस्तुदोच्चलः ।
चोभे सम्प्रस्तुते तं स सान्त्वयित्वा खशाधिपः । तिष्ठन् कलशराजेन सहानिन्ये निजां सभां ।
निषेधाधायिनो भृत्यान्स विधूयौजसां निधिः । सज्जं खशसमाजं तं कोपकम्प्राधरोऽविशत् ।
द्रष्टुं तन्नाशकल्पस्थितिकल्पान्तात्किमिवोल्बणं । क्रुद्धं कलशराजो वा राजा वा तेजसां निधिं ।
स विविक्तीकृतो धाम्नि खशाधीशं समन्त्रिणं । सान्त्वयन्तं महातेजाः कोपरूक्षाक्षरोऽब्रवीत् ।
पूर्वं दार्वाभिसारेऽभूद्राजा नरो नृपः । नरवाहननामास्य सूनुः फल्गुमजीजनत् ।
स सार्थवाहनं तस्माच्चन्दनोऽभूत्सुतासुतौ । गोपालसिंहराजाख्यौ चन्द्रराजोऽप्यवाप्तवान् ।
वक्रात्मजः सिंहराजो दिद्दाख्यां तनयान्ददौ । क्ष्माभुजे क्षेमगुप्ताय सा वीरा भ्रातृनन्दनं ।
राज्ये सङ्ग्रामराजाख्यं व्यधादुदयराजजं । भ्रातापि कान्तिराजोऽस्या जस्सराजमजीजनत् ।
पितानन्तस्य सङ्ग्रामो जस्सस्तन्वङ्गगुङ्गयोः । अनन्तः कलशक्ष्माभृद्दुङ्गात्मल्लोऽप्यजायत ।
कलशाद्धर्षदेवाद्या जाता मल्लात्तथा वयं । कोऽयमित्यादि तन्मन्दैः क्रमेऽस्मिन् कथ्यते कथं ।
पृथिव्यां वीरभोज्यायां क्रमो वा क्वोपजायते । वीरस्य च सहायोऽस्तु कः स्वबाहूदयात्परः ।
दिष्ट्या तदनुकम्प्यानां मूर्ध्नि हस्तमिवास्पृशन् । काश्मीरकाणां भूपानां नाभूवं कुलपांसनः ।
तस्माद्गृह्यस्व मे शक्तिमित्युक्त्वा निर्गतस्ततः । विजयाय स पत्तीनां शतेनानुगतोऽचलत् ।
निहतं शशमादाय तस्याग्रे कश्चिदाययौ । स तेन सुनिमित्तेन प्राप्तां मेने रिपुश्रियं ।
अरघट्टघरट्टादि क्ष्मामुत्सृज्य निर्गतः । डामरावट्टदेवाद्यास्तं यान्तमुपतस्थिरे ।
कटकस्थस्य संग्रामपालस्यायातमन्तिकात् । तद्देव्या राजपुर्यन्तः खिन्नं निन्युः प्रसन्नतां ।
भुक्त्वा तद्वसतेर्गच्छन् स्वावासं स दिनात्यये । सैन्यैः कलशराजस्य दत्तास्कन्दोऽभवद्बहिः ।
राक्षीभिर्निर्गमात्तस्मिन्द्वारं सम्बध्य वारिते । तदीयाः सैनिका युद्धे लोष्टावट्टादयो हताः ।
मध्यं प्रविश्य शमिते प्रधानैस्तत्र संयुगे । सोऽल्पसैन्योऽपि सम्भूतः सुतरामल्पसैनिकः ।
चैत्रस्य पौर्णमास्यन्तः क्षुत्क्लममप्यनुभूतवान् । वैशाखासितपञ्चम्यां यात्रामत्रस्तधीर्व्यधात् ।
विसृज्य वट्टदेवादीन्विश्वासाय स्ववर्त्मभिः । आललम्बे प्रवेशेच्छां क्रमराज्याध्वना स्वयं ।
यं राजोदयसीहान्ते कपिलं क्षेमजात्मजं । अस्थापयल्लोहरोर्व्यां स विशन्तं मुमोच तं ।
स्वयमप्यसमर्थाणां खङ्गचर्मधरोऽमजन् । पलायने पूर्वमिथ्यात्पर्णोत्से तद्भटान् व्यधात् ।

बद्धा निःशङ्कमासीनं द्वारेशं सुज्जकाभिधं। कश्मीरानामिषाकाङ्क्षी क्षिप्रं श्येन इवापतत्।
तं डामराश्च कतिचित् खाशिकाश्चाद्रिसंश्रयाः। राजद्विषः प्राप्तमात्रं सर्व्वतः पर्य्यवारयन्।
तमाकाशादिव स्रस्तं भुवोगर्भादिवोत्थितं। निशम्यातर्कितं प्राप्तं चकम्पे हर्षभूपतिः।
माभूद्वैरी बद्धमूलः क्रमराज्यान्तरस्थितिं। माबधीन्मण्डलेशञ्च ध्यायन्नित्याकुलोऽथ सः।
विलम्बमाने सन्नद्धसैनिके दण्डनायके। त्वरितं प्राहिणोत् पट्टं वितीर्णासह्यनायकं।
दैवोपहतवीर्य्यो वा क्रान्तो वा द्रोहचिन्तया। अभ्यमित्रीणतां त्यक्त्वा स तु मार्गे व्यलम्बत।
अन्यांश्च यान्यांस्तिलकराजादीन् व्यसृजन्नृपः। ते ते पट्टं समासाद्य नाकुर्व्वन्नग्रनिर्गमं।
दण्डनायकमुख्येऽपि लोके राज्ञा विसर्जिते। याते विमूढतां प्राप बद्धमूलत्वमुच्चलः।
वराहमूलं प्रविशन्नागतां द्विपतामलात्। अश्वां सुलक्षणोपेतां राजलक्ष्मीमिवासदत्।
महावराहमौलिस्तस्य मूर्ध्नि पपात च। तदंसस्थितया पृथ्व्या वरणार्थमिवार्पिता।
काकाद्यैस्त्र्यधकुलजैर्य्योधैस्संरुद्धपद्धतिः। स ऊष्कपुरमुत्सृज्य क्रमराज्योन्मुखो ययौ।
अत्रान्तरे तमायान्तमाकर्ण्यात्मिकमागतैः। विद्रवोन्मुखतां निन्ये डामरैर्मण्डलेश्वरः।
तैर्हि प्रागेव भङ्गं स नीतो हत्वा महाभटान्। यशोराजमुखान्शूरान् ययौ मन्दप्रतापतां।
शनैरपसरन् सोऽथ तारमूलकमासदत्। उच्चलाधिष्ठितास्तेऽपि विद्विषन्तस्तमन्वयुः।
समेता ननु सैन्येन तेन तत्र चिरं धृतः। उच्चलप्रलयाभ्रस्य पौरस्त्यानिलविभ्रमः।
सैन्ययोरुभयोस्तत्र जयश्रीकरिणीकृते। बभूव तुल्यसंघर्षस्स्पर्ध्धयोरिव दन्तिनोः।
आनन्दनामाप्युत्पिञ्जोत्थानमुच्चलमातुलः। चक्रे मडवराज्येऽथ निविडीकृतडामरः।
तद्दिने डामरौघादिग्देशेभ्यः सहस्रशः। उन्ममज्जुर्हिमापाये रन्ध्रेभ्य इव पन्नगाः।
तत्क्षणं क्षीणभाग्यस्य यथा द्वारपतिस्तथा। कार्य्यस्थः कम्पने राज्ञः सहेलोभूमहत्तमः।
आनन्देन कृतास्कन्दो बड्डशो विहिताहवः। औज्झीत् मडवराज्यं स नयत्तद्दक्कभर्त्तदा।
अथाद्भुतप्रतापेन वेष्टयित्वा महाचमूं। उच्चलेनाहवे बद्धस्ससैन्यो मण्डलेश्वरः।
न विद्मः किं तदा हन्त योधानां यत्किलाविदन्। ते सखड्गाः ससन्नाहा बद्धावयमिति स्फुटं।
तथा बद्धोऽपि निर्दध्यौ स भव्यः प्रभवे हितम्। स्वामिभक्तिर्विपर्य्येति पर्य्यन्तेऽपि न मानिनां।
तूर्णं पुरप्रवेशाय सोऽथ प्रैरयदुच्चलं। विश्वास्य नेदृगन्योऽस्ति क्षण इत्यसकृद्ब्रुवन्।
विशतस्तस्य चानेकैः पुरग्रामाद्यलुण्ठयत्। कर्म्मणानेन कौलीनमस्यास्त्विति विचिन्तयन्।
परिहासपुरे तेन सततः सम्प्रवेशितः। श्वभ्राम्बुविषमाद्यस्मान्निर्गमोऽत्यन्तदुर्गमः।
तत्रोच्चलं चतुःशाले स्वञ्च दग्धुमचूचुदत्। निजान् स निशि ते तत्तु न चक्रुस्तद्धितैषिणः।
यथा चित्तं तथास्य स्यात्कायस्तेत्साहसक्षमः। तदात्मनिरपेक्षस्य किं न सिद्धेन्मनीषितं।
क्लीवश्छन्नवपुस्त्वचा सह वसत्यच्छेद्यया कच्छपो निर्व्वर्मा रणकर्म्मसाहसमहोत्साहश्च सिंहः सदा।
धिक् प्रादुष्कृतपक्षपातरभसो नीचेषु मुग्धोविधिर्व्वीराणां कुरुते शरीरमभितो वैकल्यशल्याहतं।

सन्दिदेशाथ स क्ष्मापमाक्रष्यायं भयाद्यतः। शृगाल इव ते क्षिप्रः क्षिप्रं निर्गत्य वध्यतां।
ततः समस्तसामन्तसैन्यसन्ततिसंयुतः। अद्य मृत्युर्जयो वेति निश्चित्य निरगान्नृपः।
स प्राणसंशये सर्वायासप्रशममादिशत्। पट्टहोद्घोषणेनासीत्परैरनुगतोऽखिलैः। १२४५
प्राप्तं भरतसेतुस्थं घ्नन्तः सैन्यं विरोधिनं। आजानेयराजभृत्याः क्षणान्मार्गमलङ्घयन्।
क्षुभितेऽथ विवायाते राजसैन्ये द्विषद्बलं। मण्डलेश्वरएवान्तः प्रविष्टो निरनाशयत्।
अथोच्चलबले भग्ने विदुद्रुः केऽपि जाङ्घिकाः। श्रान्ता राजविहारश्च प्राविशन्केऽपि डामराः।
त्रिल्लसेनाभिधं दृष्ट्वा प्रविष्टं डामरं परे। उच्चलोऽसाविति भ्रान्त्या विहारं तमदाहयन्।
सोमपालाभिधेनारिहयारोहान्तरे चिरं। कुर्वन्दर्शनपालस्य पितृव्येन महाहवं। १२५०
यत्नाज्जनकचन्द्राद्यैर्मानी व्यावर्तितो रणात्। परिहासपुरात्प्रायान्मृत्युनक्रादिवोच्चलः।
वितस्तां गौरिकावालग्रामात्तीर्त्वा हयान्वितः। स डामरैः सह पुनः प्रययौ तारमूलकं।
जयेन तावन्मात्रेण कितवोऽल्पद्रवोन्मदः। राजा प्रशंसन्नानन्दं राजधानीं न्यवर्तत।
जीवन्तमप्यरिं श्रुत्वा न पश्चादलगल्ल यत्। आश्वनुच्छ्वसितास्तेन भङ्गभाजोऽपि डामराः।
यातान्पलाय्य तान्ज्येष्ठामूलीये मासि सर्वतः। भूयोऽपि सङ्घट्टयितुं स्थिरधीरैच्छदुच्चलः। १२५५
स्वदेशमात्रसहायस्य परायत्तस्य मानिनः। दुर्भिक्षान्तर्महोद्योगः स तस्य विषमोऽभवत्।
तन्मध्येऽतिदरिद्रोऽपि सम्प्राप्तं स ररक्ष यत्। तमुत्पाट्यानयद्राजा श्रीपरीहासकेशवं।
तस्मिन्विघटिते पांसुः कपोतच्छदधूसरः। रोदसीच्छादनं हर्षशीर्षच्छेदावधि व्यधात्।
प्रागन्धकारदेशेऽस्मिन्दिवसेऽपि व्यजृम्भत। क्षपिकादिवसालोक इति यत्प्रथये जने।
निवेशिते परीहासकेशवे प्रशशाम तत्। तस्मिन्नुन्मूलिते भूयः सार्द्धं मासमजृम्भत। १२६०
किञ्चिदुच्छ्वसिते राज्ञि मन्दोद्रेकतया रिपोः। दिशा शूरपुरस्याथ सुस्सलः प्रत्यदृश्यत।
अवनाहे सहि वसन्नुपालम्भपरैः पितुः। सन्देशैः शंसतोज्येष्ठमौदासीन्यादपाकृतः।
दत्तान्कल्पचितीशेन कांश्चिदादाय वाजिनः। चिरेण राजदाक्षिण्यमौज्झीत्तेन व्यलम्भत।
आरम्भादुदयान्ताश्च तिष्ठन्वैरेऽपि निष्ठुरे। साम प्रयुयुजे मोहान्तत्ममायानिधी रिपोः।
जित्वा माणिक्यनामानं तेन सेनापतिं रणे। प्रापि शूरपुराद्गङ्गाज्जयश्रीः श्रीश्च भूयसी। १२६५
तस्याभ्युदयपात्रस्य तया सम्प्राप्तया श्रिया। आरब्धिसमयः क्लृप्तः स विभूत्यद्भुतोऽभवत्।
मण्डलेश्वरपट्टादीनविचिन्त्योच्चलन्ततः। प्राहिणोन्नृपतिर्योद्धुं सुस्सलं क्षिप्रकारिणं।
तेन शूरपुरे भग्नास्तद्योधाः शौर्यशालिना। भूयांसः प्रलयम्प्रापुर्मग्ना वैतरणीजले।
तत्र दर्शनपालस्य स्वामिद्रोहहतो वपुः। विक्रामतोन संस्पृष्टं खिन्नयेव जयश्रिया।
राजसैन्यं तदन्येद्युर्हतशेषं पलायितं। लोकपुण्ये निवसतः सहेलस्यान्तिकं ययौ। १२७०
सुस्सलापातकल्पान्तं विशंक्यापि सहेलकः। तैस्तैर्भग्नैर्बलैः सार्द्धं नगरं प्राविशत्ततः।
एवमभ्येत्य नृपते। सुस्सलेन विरुद्धचित्ते। अवाप तारमूलस्थः प्रतिष्ठां पुनरुच्चलः।

विध्यद्भिस्तुरगानीकान् पत्तिप्रायैः स डामरैः । आनिन्ये गैलदुर्गेण भूयो लहरवर्त्मना ।
राजाप्युदयराजाख्यं कृत्वा द्वारपतिं पुनः । प्राहिणोदुच्चलं जेतुं लहरं मण्डलेश्वरम् ।
ततः पद्मपुरं प्राप्ते मातुले मल्लजन्मनोः । न कोऽपि कम्पनं भूपान्मन्त्री चामातुरोऽग्रहीत् । १२७५
कोऽमेऽस्तीति विनिश्चित्य वदतोऽथ महीपतेः । अधिकारस्रजं हस्ताच्चन्द्रराजः समाददे ।
अनाप्तोः शयने मृत्युर्धियां तेषां सर्वगजः । आजिन्दुराजमुख्यानामौचित्यं प्रत्यपद्यत ।
स द्रौणिरिव निर्णिष्टे काले सेनापतिः कृतः । निर्गत्य तत्पद्मपुराद्रिसैन्यं न्यवारयत् ।
विपक्षः कम्पनेशः स तेन क्ष्मां क्रमता शनैः । नवम्यां शुक्लनभसो हतोऽवन्तिपुरान्तरे ।
स हि गोवर्द्धनधरोपान्ते कुर्व्वन्निराहवं । स्वसैन्यैर्भर्जितो गोनं शृङ्खलन् परिमितानुगः । १२८०
प्रविश्यारिद्वयारोहैर्वितस्तातीरवर्त्मना । प्राप्तोऽकस्माद्वधं लेभे प्रमत्तानां शुभं कुतः ।
प्रहितं चन्द्रराजेन क्ष्मापतिर्वीक्ष्य तच्छिरः । भूयो जयाशामकरोदानुकूल्यं विदन्विधेः ।
वैमुख्येन व्रजन् कुर्य्यात्साम्मुख्यैरन्तरा विधिः । प्रत्यागमभ्रमं सिंह इव व्यावृत्य वीक्षितैः ।
अथ लब्धबलश्चन्द्रराजो मन्दिरमप्रविशत् । विजयचैत्रमाकर्णन् कटकं द्विधाष्टधा ।
तुलाधर इव स्रष्टा स्वाम्यभङ्गं न चचमे । तदा द्वयोः कटकयोस्तुलायाः पुटयोरिव । १२८५
प्राप्ते यतस्तृतीयेऽस्मिन्दिवसे मण्डलेशितुः । अकालवृष्टिविवशं लहरे व्यद्रवद्बलम् ।
शीतवातहता योधा मग्नाः केदारकर्द्दमे । तुरगाश्चिनिनुदादि द्राक्तिर्य्यञ्च इवामुचन् ।
उच्चलेन ततो रक्ष्यमाणमपार्द्रचेतसा । प्राप्तं जनकचन्द्राद्या निजघ्नुर्मण्डलेश्वरं ।
हर्षभूभृद्व्ययवर्गे द्रोहशङ्काङ्किते परं । कलेवरव्ययात्कीर्त्तिः क्रीता तेनैव मन्त्रिणा ।
ध्रुवं संस्पर्धतो वन्द्या देवशर्म्मादयोऽस्य ते । न चेत्कोऽपि विपर्य्यासे दोषमुद्वेपयेज्जनः । १२९०
लवन्योन्मूलनारातिव्यूहव्यामोहनादयः । विध्यधीने फले धाते स्तुत्याः कस्य न तत्क्रियाः ।
किं पातालतमो न हन्ति हिमगुः किं नो विषं भीतये पानीयं गिलतः किमान्तरशिखिध्वंसेन धान्वन्तरिः ।
सर्व्वैकपदे प्रयात्यफलतां वाच्यो जडो नाम्बुधिः सिद्धैर्दैवविधेयतां विमृषतां स्तुत्यैव वस्तुज्ञता ।
स्वामिकृत्योचमस्तुत्यमूर्त्तिषु स्त्रीषु पूज्यतां । राज्ञा तज्जननी स्वस्य नमस्यन्त्यविशश्चितां ।
साहसे साहितनये यत्र तत्र महीभुजा । प्रहीयमाणे तं स्नेहमोहिताहमभूभुजं ।
अनन्यसन्ततेरेकं सुतमेतं प्रभोर्मम । मा नियुंक्था यत्र तत्र कार्य्ये सन्देहितासुनि । १२९५
स तामकथयन्मातर्यया तेऽनन्यसन्ततिः । तथा मेऽनन्यभृत्यस्य स्वयमेकोऽवलम्बनं ।
स्वसश्चविध्यतोभर्त्तुर्भक्तिसम्भावनामधां । प्राप्तप्रतिष्ठानिष्ठायां मेने मानवती सती ।
उच्चलस्य च्रणे तस्मिन्हिरण्यपुरमीयुषः । राज्याभिषेकं सम्भूय तत्रत्या ब्राह्मणा ददुः ।
नृपमत्यन्तविश्रब्धं प्रसङ्गे तत्र मन्त्रिणः । भूयांसः सन्ति तैः सार्द्धं व्रज तस्योद्दरायर्त्तं ।
प्रजा एव ततः शान्तोत्कण्ठा नवनृपं प्रति । त्वामानेष्यन्ति नचिराद्दिनैस्त्वं स्वयमेष्यसि । १३००
सोऽभ्यधादवरोधस्त्रोकोशसिंहासनाद्यहं । असामान्यं परित्यज्य गन्तुं सपदि नोत्सहे ।

पुनस्तेऽकथयन्नाशी यान्तोऽध्यारुह्य वाजिनः। पृष्ठे विन्यस्य नेष्यन्ति कोशान्तःपुरयोषितः।
श्वपाकीकामुकोऽप्यासीदस्मिंस्तत्परोऽपि चेत्। सिंहासनं समारोहेत्काभिमानक्षतिस्ततः।
आस्तामेतत्परं ब्रूथ मन्त्रमित्यथ चोदिताः। ते पार्थिवेन भूयोऽपि ससंरम्भं बभाषिरे।
क्षत्रधर्मं पुरस्कृत्य शासतां क्ष्मां क्षमाभुजां। को दैन्यस्यावकाशः स्यादाशौर्यैर्या स्वधे वधः। १४०५
अनुयोगश्च लज्जा च भयं द्वैधञ्च मन्त्रिणां। भूभुजां व्यसनोल्लासे शत्रवो ननु शोषिणः।
कार्य्यं न पश्येदलसः स्वयं यो भृत्येषु विन्यस्तसमस्तकृत्यः। यष्ट्याश्रयस्येव विनष्टदृष्टेः पदे पदे तस्य किलोपघातः।
लब्धोऽहमस्य स्वयमात्तशस्त्रः स्वल्पस्य शत्रोः कलयन्नवज्ञां। एवं किलादीर्घमतिर्ददाति स्वयं प्रवृद्धिं त्रपया विमुग्धः।
कालेन याति क्रिमितां महेन्द्रो महेन्द्रभावं क्रिमिरप्युपैति। अयं प्रयोधानयमप्रतिष्ठ इत्येष निष्ठानुचितोऽभिमानः।
पराभवाधायि भयं जिगीषोस्सर्वाङ्गवैकल्यवता हि तेन। येनाभियुक्तः स समस्तसम्पत्पूर्णोऽपि वैकल्यहतत्वमेति। १४१०
दृश्यस्थितिः स्फीतविभूतिपात्रं दीनोऽभियोक्ता परपिण्डवृत्तिः। आद्ये कथं नाम पराभवः स्याद्भयं भवेच्चेद् न तत्प्रभावः।
अमात्यवैमत्यवशेन निष्ठा दृष्टा न कार्य्यस्य तनीयसोऽपि। वैशाखरज्ज्वोरिव कर्षकाभ्यां पर्य्याययोगेन क्षते विकर्षे।
समग्रशक्तेरेकेनाप्याशाक्रान्तस्य भूपतेः। वैरी सर्व्वाङ्गहीनोऽपि राज्यमायुश्च कर्षति।
यत्र द्विपस्तत्र याहि क्रान्तां क्रान्ताञ्च मेदिनीं। पातार्थी न चिरादेवं पुनर्जयमवाप्स्यसि।
विधुरेऽपि विधौ शूरसहस्रपरिवारितैः। पतद्भिराहवे भूपैः ख्यात्याभिख्योपलभ्यते। १४१५
नृत्यच्छिन्नशिरोधरोद्धुरनटोद्यालाबुवीणागुणक्वाणिन्युरु यच्छिवामुखशिखिज्वालाप्रदीपाङ्कुरे।
धन्यः कोऽप्युपलभ्य वीरशयने शान्ताभिमानज्वरोऽसाधश्लाघ्यशरीरता सफलितस्निग्धाशिषः शेरते।
उदात्तमित्थं तत्कृत्यं सञ्चिन्त्य कितवा इव। राज्ये भजन्ते दीव्यन्तः क्षत्रियास्त्रासहीनतां।
मन्त्रान्तरानुयोक्तारं तदप्युत्सृज्य मन्त्रितं। पुरुषं प्राप्तकालञ्च ते निःश्वस्य तमब्रुवन्।
उत्कर्षवदसंस्थातुमपि शक्नोषि सङ्कटे। अन्यथानुचितं किञ्चिन्नास्त्यस्मद्धितचिन्तितं।
स तानुवाच स्वं हन्तुं न शक्तोऽहं ततो मयि। भवद्भिरेव विषमे प्रहर्त्तव्यमुपस्थिते। १४२०
गिरं कापुरुषस्येव क्लैव्यग्रस्तस्य तां प्रभोः। सबाष्पास्तेऽनुशोचन्तः पुनरेवं बभाषिरे।
प्रतीकाराय नः शक्तिर्न देहैर्वहतोजसां। प्रत्युतैवंविधे कृत्ये प्रसरेयुः कराः कथम्।
पश्यन् पुरुषरूपान् स नूनं भूभृत्पुपोष तान्। दुःखेनादाय नस्तस्य ये तादृग्दैन्यमीयुषः।
युगान्तानपि जीवित्वा कायः सापाय एव नः। तत्त्यागमात्रसाध्येऽर्थे धिग्दैन्यमनुजीविनां।
याविज्ञोऽपि विश्रम्यद्भिं धं ध्यात्वा विशतिं भजेत्। भर्त्रैवेदं स पुंसोऽपि यस्य कोऽन्यस्ततोऽधमः। १४२५
सेवकस्येव ये शोकभयदैन्याद्यविक्रियाः। भर्त्तुः पश्यन्ति तैरेषा भूरसतीयप्यपावनी।
पुष्टाः स्मस्समयोऽद्य धूः परगृहप्रेष्यायसश्च सुवदुग्धा गौरगमनाद्यनावविवशा हम्भारवोद्गारिणी।
निष्पन्नो पितरावदूरमरणो स्वामी द्विषन्निर्जितो दृष्टो येन परं न तस्य निरये भोक्तव्यमस्त्यप्रियं।
भूयोऽपि मानुपपन्नान् स तान्नृपतिरब्रवीत्। तदा सत्त्वोऽप्याविश्य भूतैरिव विमोहितः।
एकस्मिन् पदिने काले भुक्तं राज्यं यथा मया। जाने विशालेच्छतया तथान्यो नोपभोक्ष्यते।

यमः कुबेरश्चोष्टाग्रे राज्ञां तिष्ठत इत्यसौ। मदेकशरणैवाभूत्ख्यातिरस्मिन् कलौ युगे। १४१०
रुद्रोपेन्द्रमहेन्द्राद्याः प्रयातारो यदध्वना। उपस्थितायां नियतौ तस्य मर्त्यस्य काः शुचः।
किन्तु दूये यदेषा भूर्भुक्ता कुलवधूरिव। मद्दोषाद्दुष्टचेटीव प्राप्ता प्रसभभोग्यतां।
इतः प्रभृति यः कश्चिद्राज्यस्यास्य गतौजसः। चक्रिकामात्रसाध्यत्वं जानन्नाशां करिष्यति।
अलौकिके कृते यद्यत्तदीक्ष्य फलवन्ध्यतां। प्राशोदयैरल्पसत्त्वैर्दर्पान्नूनं हसिष्यते।
कार्य्यारम्भः फलोल्लासमनालोक्य प्रायशो जनैः। अनानुगुण्यगणनां कुर्व्वाणैर्न विगर्ह्यते। १४२५
पश्चात्कोऽरिरवलम्बनभूस्तनेनं दुग्धेन यस्य मरणम्बिधि कैरिवेत्थं।
पारङ्गते मथनकर्म्मणि मन्दराद्रेर्दोषोऽर्प्यते विगुणहेतुपरीक्षणेन।
शास्त्रसन्दर्भवित्त्वेऽपि श्रीगर्भलमदर्थयं। जनोपजीवनार्थं यत्तज्ज्ञातं जाड्यसिद्धये।
उच्चलेनापि सत्कृत्ये हस्ताग्रोच्छ्रयचेतसा। दर्शितश्यामदशनं करिष्यन्ते विडम्बनाः।
ततोऽवमानात्त्रासात्सम्प्राप्तोऽस्मिविहस्ततां। स मन्थनेच्छुर्व्वाञ्छामि मृत्युमीदृशमप्यहं।
स्वैरेव महतो नोचेत्कस्तस्मादसुधां हरेत्। लब्धां रक्षितुमिच्छामि ख्यातिमेतेन हेतुना। १४४०
मुक्ता पीडा पुरा राजा ज्वलिता मूर्ध्नि भूभुजां। कार्पण्यप्रलयं प्राप लब्धरन्ध्रो विरोधिभिः।
स ह्युत्तरापथे नानापथस्थगितसैनिकः। मितानुगो हितैरुद्धमार्गोऽभूद्दुर्गमेऽध्वनि।
तं शम्भो नाम सामग्र्यैरल्पविवशं नृपः। बद्धुं प्रतिज्ञामकरोदाजिलक्षैर्हतोऽष्टभिः।
स सामप्रमुखोपायापायध्यानावसन्नधीः। भवस्वाम्यभिधं कृत्यमपृच्छन्मुख्यमन्त्रिणं।
असाध्योऽसावपि निर्ध्याय विनिपातप्रतिक्रियां। न्याये निश्चित्य नैपत्यं कर्त्तव्ये प्रत्युवाच तम्। १४५५
उपाययुक्तिमत्युक्ते कृत्ये कीर्त्यभिमानिनां। निःसम्भ्रमैव प्रतिभा लोभेनाक्षोभिते हृदि।
कृत्यं कृत्यविदो लब्धप्रसिद्धिपरिरक्षणं। साम्राज्योपार्जनमुखो व्यापारस्तत्रानुषङ्गिकः।
गच्छन् शरीरविच्छेदादपि भस्मावशेषतां। कर्पूरः सौरभेणैव जन्तुः ख्यात्यानुमीयते।
शान्तयोर्जीवितस्थानं द्वयमत्यद्भुतं द्वयोः। अनङ्गस्याङ्गनापाङ्गः स्तोलजिह्वा यशस्विनः।
ख्यातिर्धरक्षणं नाम जन्तोः कल्पान्तरस्थितिः। वर्त्तन्ते कीर्त्तिकायस्य सम्पूर्णाः परमाणवः। १४७०
धीरैर्व्विधस्य निर्ध्यायो विरोधिष्ववधानवान्। यस्तेषामुन्नतिधनध्वंसाय यततेऽन्वहं।
तुङ्गावपातनहठव्यसनो विधाता स्वोत्पत्तिपद्मकुलजेऽपि सरोजषण्डे।
सङ्कोचिनि द्विजपतावपि शुद्धिबन्ध्ये मातङ्गहस्तपतनैः कुरुतेऽवमानं।
ये हठापातिनो धातुरियं ख्यातिनिपातने। रक्षितुं समुपेक्षन्ते तैः किं नाम न रक्षितं।
जाति. क्ष्माभृति वंशजाश्रयतया ख्यातिप्रतिष्ठामिमामुद्दीप्यानलमुज्झितस्ववपुषः कोऽप्यत्र वेत्राङ्कुरः।
त्रातुं हन्त विशन्ति येन विधिना कुद्धेन पृथ्वीभृता द्वारि द्वाःस्थकरैर्गतागतखलीकाराणि सम्प्रार्थिताः।
भोगान्निर्व्वाणभूयिष्ठानिष्ठान् प्राप्तानवेत्य तत्। प्रतिष्ठाधौव्यवत्राणे संरोद्धुं देव साम्प्रतं।
दण्डकालसकारस्य तद्रोगस्याशुकारिणः। पार्थिवाकस्मिकोत्थानं मिपाद्ल्यः प्रकाशनं।

श्रावकास्ययं कर्त्तव्यं व्यापन्नचपणचमं । उक्तेति स महामात्यो निर्गत्य स्वगृहानगात् ।
दण्डकालधकं दण्डधरोऽयज्ञन्निपातनः । अधीर इव चक्रन्द लुठन्निष्यन्दलोचनः ।
खेदसम्वाहनखेदवमनार्थैरुपक्रमैः । निःशैथिल्यव्ययं तेन मुमूर्षुं तं जनोऽवदत् ।
ततो निश्चितमृत्युत्वं पत्युः कथयता हृतः । वह्निप्रवेशोऽमात्येन हृतज्ञलनिवेदकः ।
कर्त्तव्यमेवं दाक्षिण्यादनाचचाणमग्रतः । युक्तोक्तानिष्ठुराचारमन्तःशुश्राव तं नृपः ।
अप्रौढः सोढुमुद्रामां व्यथामसोति वादिना । राज्ञाप्यनलसाद्देहं ततश्चक्रेऽभिमानिना ।
तेन प्राणानुपेक्ष्यैवमन्यख्यातिर्मनखिना । ऊर्ध्वाधिरोहे सोपानं हृतं न निजकीर्तनात् ।
एवं दैवोपनीतानामख्यातीनां चिकीर्षितं । खधियामात्यबुद्ध्या वा पारमेति मनखिनां ।
इत्युक्ता विरतो वंशबीजरचार्थमात्मजः । भोजो विसृज्यतां कोटमेवमूचेऽथ मन्त्रिभिः ।
तं राजपुत्रं प्रस्थानमङ्गलान्ते विनिर्गतं । पुनर्व्यावर्त्तयामास दण्डनायकमोहितः ।
सा धीः स साहसारम्भस्तदवैक्लव्यमापदि । नष्टमेकपदे तस्य नाशकाले ह्युपस्थिते ।
लक्ष्मीस्तडिन्नताकीर्तिर्वलाकाशौर्य्यगर्जितं । प्रतापशक्रचापश्च भागधेयाम्बुदानुगं ।
धी शौर्य्यादिगुणेन भाग्यसमये प्रागेव एको नृपः शक्रस्याक्रमणं क्रियेत न कुतोऽनेनेति सम्भाव्यते ।
भाग्यं पङ्कजखान्यवस्र स ततो गच्छत्यभाग्योदये दत्तोऽनेन पदक्रमो भुवि कथं नामेति सच्चिन्त्यते ।
विरोधिप्रतिबोधाय तन्निधैर्य्यं विवर्ज्जितं । नगरस्थमपि स्मापत्रवासधनमादधे ।
दायादाश्रयणं राजभृत्याः सर्व्वेऽपि चक्रिरे । ये केचित्त्ववसन् गेहे तदैवैरेव केवलं ।
परायत्तपरं दिवा न मद्भक्त्यमपि व्यधुः । किं वा मृतैस्तैर्यैः क्लीवदमुष्वदचिरादसून् ।
यां काणश्रावती नर्तकान्वये कापि नर्तकी । पुत्रीचक्रे क्षापि जातां जयमत्यभिधाय सा ।
भूत्वा स्फीतकौमारा तरुणुघलरागिणी । धनलुब्धावरुद्धात्वमभजन्माण्डलेशितुः ।
तस्मिन्मृते नरेन्द्राम्नापत्रपोषसमाययौ । तथैव दैवयोगेन पट्टदेव्या भविष्यते ।
आयहर्षकयर्थामुपमाश्रयिणीं व्यधुः । भूपालदर्शनेऽप्यसभीतयो राजसेवकाः ।
क्षेत्रमध्ये हतैः सर्व्वैः शिवाधायी पुरस्थतः । सोभावमात्मानुद्दिश्य योधशृङ्गं हरन् युधि ।
कन्दमनापतावाप्तो मर्म्मार्गा सर्व्वभेदहृत् । आहारादिगुणे कर्त्ता प्रक्रियार्थनया कृतेः ।
कलीव समुदानादिमाहात्म्याख्यानकोविदः । एकएकोऽकरोद्योधः हतनानां विसूचणं ।
योनिदाभातृएनार्थस्तमपार्थ्यद्गमन्नः । मलशालीपकोपेन स राज्ञास्कन्द घातितः ।
मातुलस्यात्मजा महापाद्यपोसाम गेहिनी । यस्यश्च ममं स्वजनीरारीय दहने गता ।
भोगमतानिभिदमाहवसैधर्याम्नपोपमः । करोत्यभ्यन्तरान् भिन्नःगमनः परमद्राम्भिकः ।
तदेव दुसराश्चिन्दुर्बध्नतां निर्भयं रिपुः । मात्रिपुत्रीभिर्विष्णूर्वे नगात्मसमरे नृपः ।
स्वयं मारागमात्मानन्दं हारि जिनवता पुरः । मम्र माणाविनो सान्ध्यपूर्व्यं गमस्य निर्ययौ ।
यदि देवान्दर्शसार्थां पुत्रार्था माधितोऽपि सन् । मुनिमनः सदाचारानुगोधाम्नाध्यमग्रं ।

विश्वासाय परं राज्ञो भ्रातृन् राज्ञोर्भविष्यतोः । द्वैमातुरान् सल्हणादीन्नीविं दत्वाववन्दे ।
आसेदुषे मुनिद्ग्रामाजन्मशोणिताग्रये । तदा स तस्मै चुक्रोध प्रत्यासन्नवधो नृपः ।
स सुराभ्यर्चनं कुर्व्वन्नाहूतः परिपन्थिभिः । रेजे तेनैव वेशेन समराय विनिर्गतः ।
उपवीत्यसव्यचाङ्कपाणिर्दर्भोज्ज्वलाङ्गुलिः । भस्मश्वेतललाटाङ्को जामदग्न्य इवापरः ।
स्नानार्द्रधवलश्यामलोलधम्मिल्ललीलया । देहत्यागे प्रयागाम्बु धारयन्निव मूर्द्धनि ।
उष्णीषी वीरपट्टेन खेटकेनोष्णवारणी । सोऽसिधारातीर्थपान्थो दण्डी खड्गेन दिद्युते ।
भोगे पुरस्कृताः केचित्तत्कृत्याः पूर्व्वनिर्गताः । असमर्थनारीभोगेऽपि तस्यासन्नग्रभागिनः ।
द्वौ रथावट्टविजयौ द्विजौ पौरोगवास्तथा । कोष्टकः सज्जकाख्यस्य योधा युद्धे हता बभुः ।
हतोऽभ्युदयराजाख्यः हतायुः शेषसत्तया । प्राणैर्नियोगभागाजौ नाज्जकोऽपि व्ययुज्यत ।
विरोधियोधैर्नीरन्ध्रं द्वारमालोक्य सर्व्वतः । त्यक्तकार्य्यो ददौ झम्पां स तेषामेव मूर्द्धनि ।
शैवलेष्विव खड्गेषु खेटकेष्वम्बुजेष्विव । जरसा धवलोभ्राम्यन्राजहंस इवाबभौ ।
क्षणाच्च ददृशे शातशरशङ्कुशताचितः । प्रवीरो वीरशयने सुप्तो भीष्म इवापरः ।
शाच्यङ्गतायुषो राज्ञः किं नाभूत्तस्य तादृशः । चिच्छेद यः शिरः पृष्ठे हयस्य भ्रमयन् स्मयात् ।
राज्ञी कुसुमलेखाख्या मल्लस्यालापवल्लभा । स्नेहस्वजुङ्गा वीतिहोत्रे गात्राणि सम्भृते ।
राजावकल्पयोः पल्न्यौ वाले सल्हणरल्हयोः । स्नुषे मल्लस्याग्रसती सहजा चाग्निमाहृते ।
सर्व्वोपभोगभागिन्यस्तदन्तःपुरयोषितां । परिवाराङ्गना वह्नौ षट् चात्रैव विपेदिरे ।
महागृहाग्नितापेन शोकोष्णैश्च जलाम्बुभिः । तप्ताम्भसो वितस्तायास्तीरे वामे बभूव तत् ।
प्रवर्द्धितायाः स्तन्येन द्रष्टुमक्षमया पयः । दास्यमानं निवापेषु पुत्र्याश्चान्द्राख्यया समं ।
धात्र्या परस्मिन् वितस्तितीरे स्वान्तःपुरे स्थिता । माता भविष्यतो राज्ञो नन्दानिन्द्यकुलोद्भवा ।
महानसाग्निधूमेन संलक्ष्या वीक्ष्य पुत्रयोः । सोत्कण्ठकटकौ शाधादुद्गदचिरादिक्क्षयोः ।
कियता दिवसैरेव पुत्रौ शत्रोः पितृद्विषः । जामदग्न्यार्पितं वंशे शपेति नृपतिं सतो ।
अनिषण्णेव दीप्ताग्नौ गृहे स्वं निरदाहयत् । प्रनृत्यन्तीभिरालीभिरिव ज्वालाभिरावृता ।
वधं दर्शनपालस्तु नृपे प्राप्ते प्रतिश्रवं । अत्यद्भुतैरन्तरायैरायुःशेषेण रक्षितः ।
वर्षमात्रावशेषायुर्यद्दा द्रोहेण रक्षितः । सोऽवमानस्य पूयस्य रोगजस्य च भुक्तये ।
कृष्णभाद्रनवम्यां तं वधं श्रुतवतः पितुः । मल्लात्मजन्मनोः शोकः कोपेन निरधीयत ।
आवक्तिपुरकग्रामान् प्रज्वलन् क्रोधवह्निना । अधावद्विजयक्षेत्रं सोऽन्येद्युरथ सुस्सलः ।
योद्धुमस्यापतन्तं तं चन्द्रराजोऽथ निर्गतः । पट्टदर्शनपालाद्यैः ससैन्यैः पर्य्यवर्ज्यत ।
निर्जैरुपेक्षितश्चक्रे स चिरं तत्र दुष्करं । स्वल्पसैन्योऽपि सङ्ग्रामं भूरिसैन्येन सच्युगा ।
अचोटमल्लः समरे तत्र मल्लस्य चाचरिः । स्वंगातां राजगृह्यौ द्वौ स्वर्गस्त्रीभोगभागितां ।
रजोन्धकारे च्छन्नेन्दुद्योतिन्यालिङ्गितो हतः । चन्द्रराजः सुरस्त्रीभिरिन्दुराजोऽस्य चानुगः ।

तस्मिन्नपि हते वीरे चक्रे हर्षमहीभुजः। श्रासारविन्दिनीमूलकन्दनिर्दलनं विधिः।
पट्टादयः प्रविश्याथ विटवेशाङ्गनं भयात्। प्रविष्टे सुस्सले देश्यं द्वारं दत्तार्गलं व्यधुः।
श्रास्थानीयः परं पद्मनामा युद्धाहतो बहिः। लक्ष्मीधरोमर्तुमिच्छुर्वैड्डा नीतः स डामरैः।
विजयेश्वरगङ्गाग्रसौधारूढोऽथ सुस्सलः। अधो ददर्श तान् सर्व्वान् पशूनिव भयाकुलान्।
धूर्त्तः स दत्तमध्यस्थो हस्तानानीतवान् पुनः। पट्टदर्शनपालौ द्वौ तेषां पूर्व्वं निजान्तिकं।
निःश्रेण्यभावादारोढुमक्षमौ सुस्सलानुगैः। तौ मृताविव निर्व्वद्धपाणी रज्ज्वाधिरोपितौ।
तयोर्व्विदेशगमनं व्रीडादर्थायमानयोः। प्रतिश्रुत्याकरोद्धीमान् सुस्सलोऽस्थानिमार्ज्जनं।
स्निग्धोक्त्या भ्रष्टमांसादिभोगैस्तस्याथतस्तयोः। तस्मिन्नेवाह्नि मन्दलश्विदेशैरात्सुखमाययौ।
केनाप्यधिष्ठितश्चक्रे परेद्युर्यत्स सुस्सलः। जाने विश्वसृजोऽप्यद्य रोमाञ्चयति तत्स्मृतिः।
जाम्बटो नृपतिर्हर्षस्य भर्तुर्मातुलात्मजः। उमाधरमुखास्तान्ये राजानो यत्र च त्रयः।
राजपुत्रहयारोहतन्त्रिणामन्नसन्ततेः। न यत्र गणनाः काश्चित्सैन्येष्वष्टादशस्वभूत्।
विजयेशाङ्गनस्थानां द्वारमुत्पाट्य सोऽविशत्। एकाक्येवान्तरं तेषां सासिराक्षेपरूक्षवाक्।
स तत्र साचिव्यं कृत्वा चमावान्विजयेश्वरं। प्रतिश्रुत्याभयं तेभ्यः प्रणतेभ्यो विनिर्ययौ।
पुनः सौधाग्रमारूढस्तान् सर्व्वानर्पितायुधान्। रज्जुबद्धकरान् भृत्यैरानिनाय ततोऽन्तिकं।
स्वर्गेहृष्यत्स्वश्रेणिपूर्णायुधपरिष्कृता। कीर्णपुष्पोपकारेव सुस्सलास्थानभूरभूत्।
विन्यस्य पशुपालानां पशूनिव स तान् करे। संरचितं डामराणां त्र्यहं तत्राकरोत् स्थितिं।
ततः सुवर्णसानूरग्रामं संप्राप्य बन्धनात्। पट्टदर्शनपालौ द्वावौज्झीद्देशान्तरोन्मुखौ।
पट्टः शूरपुरं प्राप्तो भार्य्यया गतया गृहात्। संहृष्टमानोऽप्यस्मार्षीदल्पसत्त्वोदिगन्तरं।
यावन्मात्रार्थोचितो मा विदेशोन्मुख्यलक्षणा। द्रोग्धुर्दर्शनपालस्य पट्टमैत्र्या विसूचिता।
अहंपूर्व्विकया राज्यञ्जिघृक्षुरथ सुस्सलः। नगराधादनादैच्छदभिसन्धातुमग्रजं।
समानप्रियवयसोः सर्व्वदोद्दामयोरभूत्। यस्माज्ज्येष्ठं कनिष्ठत्वं प्रक्रियारहितं तयोः।
दिनेष्वहस्सु यातेषु क्रामंस्तान्तो भुवं बली। उदतिष्ठद्राजधान्याः सविधादेव सुस्सलः।
निर्देग्धुं कलशाख्यं तत्प्रसूत भूपतेः सुतः। बुप्यापराभिधो भोजदेवो योद्धुं विनिर्ययौ।
भ्रातृवच्छद्मनोनेन कुमाराणां प्रदुष्टतां। योभाव्यर्थवशात्पित्रा हतौजा विदधे सदा।
हतो गत्यन्तराभावात्तदासीत्तु निरङ्कुशः। केषु केषु न युद्धेषु योधानामग्रणीरभूत्।
अपितामहतुल्यः स स्याधेमागेव यर्द्धितः। कुर्य्यादुत्साहसंपन्नो निर्दायादाम किं द्विषः।
नासौ निविश्राम कश्चित्प्रयोगस्तु विक्षीयते। अस्त्रविश्रम्यते सर्व्वो त्रिपयश्चास्तु दुर्लभः।
स नागरगुरुद्दामविश्रमश्रृविरोधरभूत्। अत्युद्दामोऽधिकं जातस्तिमेरिव तिमिङ्गिलः।
एतत्प्रभावं पितरि प्रपेत्र विगर्हितं साध्वंति तत्प्रसूतिः।
हस्ते भवेषेक्तिसमुद्भ्यते किं तेनेन दृशः कुसुमाधिवासः।

देवेश्वरात्मजः पित्र्यः पार्थिवेनाधिगौरवं। वर्द्धितोऽप्यभजत् पापः प्रतिपक्षसमाश्रयं।
ततस्तदात्मजो मल्लः प्रस्थिते सुस्सलाहवे। नृपेणार्थ्यायमानश्च खेदात्तावन्नदीचितः।
शाम्यस्त्वद्यान्तरं राजन्नमेत्युक्त्वा विनिर्गतः। खड्गधाराजलैर्मानी मानिमक्षालयद्रणे।
सर्व्वनाशादभूद्दुःखं तथा न हृदि भूपतेः। तदन्तरापरिज्ञानात्क्षतस्य यथाधिकं।
विभवैर्नित्यसंमूढा जानते ह्यन्तरं नृपाः। सदा शक्त्या यदा तेषां प्रतापैरेव सत्क्रिया।
भोजेन निर्जितानीको विद्रुतस्सुस्सलो रणात्। लवणोत्सम्पत्ताप्यागाद्दुर्दर्शितगतागतः।
प्रत्यावृत्तस्ततो भोजस्तीव्रातपकदर्थितः। उद्यानान्तस्तनुं तल्पे पित्रा सह मुञ्जर्जहौ।
अथोत्तरेणोदतिष्ठन्नादः पारान्नृपौकसः। व्यायान्मल्लात्मजः प्राप्तः सेतुराच्छिद्यतामिति।
सुस्सलेन हृतं राज्यं नाद्याप्यास्ति हृतं यदि। स दण्डनायकेनाभूत्सन्दिष्ट इति पापिना।
अतो जवेन चाविक्षत्प्रथमश्चावधीन्मृधे। नरेन्द्रेश्वरदेवाग्रवर्त्तिनं देवनायकं।
अथोज्जगाम स्यामस्यः सह व्यूहेन सादिनां। नगराधिकृतो नागस्तस्याग्राद्भूरिसैनिकः।
यत्रास्थां पार्थिवोऽबध्नात् प्रधानपृतनान्विते। बभार नोच्चलाशङ्कां सुस्सलाहवनिर्गतः।
अल्पसैन्यो मल्लसूनुर्यावत्तस्मादशङ्कत। अपनीतशिरस्त्राणस्तावत्स तमवन्दत।
मण्डलेश्वरवत्तंसप्रियं शत्रोरविश्वसन्। कुम्भे स्वर्वेश्म याहीति स च पापस्तथाकरोत्।
तस्य द्रोहफलं दृष्टमेतस्मिन्नेव जन्मनि। मण्डले यदनन्यस्मिन्निश्चिरं जीवितं जहौ।
ततो राजा सरित्तीरं प्राप्त. प्रैक्षत डामरान्। सेलये श्यामविकृतान्दावदग्धान् द्रुमानिव।
वलचवारवाणस्य तेषां मध्ये वपुर्बभौ। परं जनकचन्द्रस्य शुक्रस्येव तमोन्तरे।
महाहेतुः स घटितो राज्ञा नौभिः स्वसिद्धये। पर्य्यवस्यन् विधिवशाच्छत्रूणां सिद्धये पुनः।
अथारुरुक्षुरादाय वह्निं हर्म्यचतुष्किकां। शतद्वारे मर्तुकामा देव्याः शाहिसुतादिकाः।
लोके विरक्तः सेलये दायादैस्सह सङ्गरं। ददर्शाश्वयुजीनाग्निमिव निर्व्विक्रियः प्रभोः।
विजये सावेशषोऽसौ वह्निदानोद्यताः प्रियाः। अनिशं वारयन्राजा सेलये रणमग्रहीत्।
अथ विन्यस्तवर्म्माणं राजसेनागजं शरैः। सेतोर्जनकचन्द्राद्याः प्रमुखस्थमताडयन्।
स विद्धोमर्मसु शरैः फुत्कारोद्गारकुञ्जरः। स्वचमूमेव चरणैरमृद्नाद्विमुखीकृतः।
विधिनेव विरुद्धेन सिन्धुरेण कदर्थिता। भ्रश्यत्पत्तिहयारोहा समपद्यत वाहिनी।
सेतुं तीर्णस्ततो वैरिसैनिकैर्व्विमुखीकृत.। शतद्वाराङ्गनं चलः साश्वारोहोऽविशन्नृपः।
तदा तु वेशरहितो रक्षोऽपि ददृशे न यः। भुञ्जानस्यापि यस्यास्य मुद्रा नैव व्यभाव्यत।
सभयद्विगुणाकीर्णस्वेदप्रक्लिन्नविग्रहः। पुन. पुनः च्छिद्यमाणस्तनत्राणसंयोनिजैः।
अनवस्थितपार्ष्णिन्त्राघातप्रचलितं हयं। निरोद्धुमक्षमः कर्षन्नष्टवल्गाग्रहं करं।
खल्वाटशीर्षपर्य्यन्तलम्बिनो कुन्तलच्छटा। प्रापयन् श्रवणोपान्तं करेण गलितासिना।
लडत्प्रलंबनिर्भूपश्रोत्रपालितताच्छलात्। कालाहिनेव मूर्त्तेन वेष्टितोकुम्भकन्दरः।

निस्ताम्बूलतयोच्छुष्कौ जतुपीतौ विधासकृत् । ओष्ठावुल्लिखन्नष्टच्छेण विक्लवो जिह्वया लिहन् ।
कनीनिकासङ्करेणुश्यामधूसरमाननं । उत्तानीकृत्य पृष्ठस्थाः पश्यन्दीनमनाः प्रियाः ।
परिभ्रमन्नङ्गनान्तः स्रस्तः स ददृशे जनैः । वह्निदानोद्यतांस्तांश्च वारयन् करसंज्ञया ।
मल्लराजस्य वेश्माभूद्राजधान्यन्तिकेऽपि यत् । तीर्त्वा जनकचन्द्रेण तत्र वह्निरदीप्यत ।
राजधान्युन्मुखं दृष्ट्वा ज्वलन्तं वह्निमागतं । भेजे पलायनं भोजो राज्यं निश्चित्य हारितं ।
स धूमैर्विद्विषां भीमैर्नवैरिव तिरोहितं । द्वारं भित्त्वा तुरङ्गस्थः प्राङ्गणान्निर्ययौ बहिः ।
पञ्चषैः सादिभिः सार्द्धं लोहरोन्मुख्यमाश्रितः । प्रतस्थे सेतुमुत्तीर्य्य सिंहराजमठाग्रगं ।
या तस्य दृक्पथात्सूनोः सास्रुरालोकयन्दिशं । राजाश्ववारैः सहितो वेश्मनां बहिरभ्रमीत् ।
अत्रान्तरे मर्तुकामास्त्रातुं काश्चिन्नृपाङ्गनाः । अश्मभिस्तत्परिजनैरभज्यन्त चतुष्किकाः ।
शाहिपुत्र्यस्तदा ज्ञात्वा श्वश्रूवः पतिता इति । मत्वा चतुष्किकाशृङ्गे ततोऽग्निमुददीपयन् ।
तास्तथा डामराश्चाथ घ्नन्तोऽन्योन्यमुदायुधाः । ज्वलतः क्ष्मापतिगृहाद्भाण्डागाराद्यलुण्ठयन् ।
केचित्तत्र वधं प्रापुर्व्विपदं केच नात्यजन् । अदृष्टवस्तुसम्प्राप्तिः केषाञ्चिद्धास्यदाभवत् ।
सितेयं शर्करेत्येकः कर्पूरं वदनेऽक्षिपत् । ततः सरिति नष्टाण्डं निर्दग्धवदनोऽव्यधात् ।
पामरैः स्वर्णचित्राणि कैश्चित्स्वर्णग्रहेच्छया । विनिर्दग्धानि वासांसि विचित्रं भस्म सादरात् ।
अविद्धमौक्तिकस्तोमसिततण्डुलविभ्रमात् । क्वचित्पामरनारीभिर्घरट्टेषु विचूर्णितः ।
वरत्यदृश्ये देशेऽस्मिन् खलीकारेण तादृशा । एवं विडम्बिता लक्ष्मीर्न पुनः क्वापि दृश्यते ।
विद्याधरीरिवोदात्तवेशाः क्ष्मापतिसुन्दरीः । हरन्तो डामराः क्रूरा दृश्यन्ते स्म पदे पदे ।
वसन्तलेखाप्रमुखाः सस्नुषास्तत्र चक्रिरे । निर्यातशेषाः स्वान्देहान्नाग्नः सन्तादृशाग्निसात् ।
रत्नानां दह्यमानानामश्रूयत चटत्कृतिः । गाढोपक्रम्यमाणाभ्रसिन्धुघोषप्रतीतिकृत् ।
श्रीपद्मश्रीप्रपापार्श्वस्थितस्तद्वीक्ष्य पार्थिवः । आर्यं श्लोकमिमं शोकात्सृलापाठीत्पुनःपुनः ।
प्रजापीडनसन्तापात्समुद्भूतो कृतत्राणः । राज्ञः कुलं श्रियं प्राणान्नादग्ध्वा विनिवर्त्तते ।
दग्धाय राजधानीत्यमुच्चलोडामरान्वितः । अत्यक्तसैन्यं वीक्ष्यारिं पारमयातरत्पुनः ।
ततो युद्धामर्तुमिच्छन्निन्ये राजा कुलात्मतां । उच्चावचैर्मतिद्वैधैः पदातीनां क्षणे क्षणे ।
गच्छन्ननन्तपालादिराजपुत्रधिया मृधं । दण्डनायकवाक्येन न्यषिध्यत पदे पदे ।
पुत्रस्य लोहरं वापि याहीत्यूचे च चम्पकः । प्रयागस्योत्तरः पक्षः प्रत्यभान्नाग्रिमः पुनः ।
वाष्पामपुत्रा पुत्रस्य नृपतिर्व्याकुलोभवन् । पदवीं भोजदेवस्य याहीत्याह स्म चम्पकं ।
प्रयागमाश्रामुपरो राजन् संपरायेण घणात् । तस्मान्मामपि मा त्याक्षीरित्यूचे तं स निःश्वसन् ।
सोऽस्त्वेवाप्यस्मि प्रभावे निर्द्रोहोऽस्मीति कथ्यते । त्वयाप्यस्मिन् क्षणे कस्मात्तस्मादुन्मह्यते वचः ।
विना पुत्रं न पश्यामि सार्केऽपि दिवसे दिशः । त्वं तस्मिन्द्रुसमृद्धे न मन्युं कर्तुमर्हसि ।
पश्चान्निमित्तं कनकस्येव दिवसेऽस्मभूत् । मन्त्रिणा राजपुत्रेण तेन तथाभिमानिना ।

गिरा प्रभोरुपालब्धस्तदा गूरणगर्भया। स लज्जानम्रवदनो राजपुत्रानुसार्य्यगात्। १६०५
पश्चागताश्ववारैः स भ्रातृभृत्यादिभिः समं। उत्तीर्णः सरितः पारमात्मना पञ्चमोऽभवत्।
भ्रातृदारेऽश्वसारे च शेषा राजात्मजे पथि। हताश्वे पतिते सोऽभूद्धनकेनान्वितोऽभ्रमन्।
अनाप्नुवन्राजसूनोर्व्वार्त्तां वा वर्त्मनाप्यटन्। गलितेऽहनि सम्प्राप वितस्तासिन्धुसङ्गमं।
एवमाप्तान् परान् पुत्रमन्वेष्टुं प्राहिणोन्नृपः। अन्येऽपि तन्मिषं लब्ध्वा तस्य पार्श्वादवाचलन्।
उत्कोचदायिना क्रुद्धं राजपुर्य्यादिविग्रहे। योग्या न संहता भृत्याग्निसारः कटकः कृतः। १६१०
लोहरप्रस्थितो विघ्नं राजपुत्त्रस्य कारितः। प्रवेशितः पुरं वैरी राजन्यन्याहवाकुले।
सर्व्वस्वध्वंसिना येन सएव नृपतेरभूत्। तदाप्युचितकृतव्यं निषण्णाद्दण्डनायकः।
राज्ञः स्वात्मावसन्नस्य शृण्वतोपकृमन्त्रितं। नैकत्र रूढिकर्त्तव्ये काप्यधीरधियोऽभवन्।
सर्व्वैर्यथा निखिलरन्ध्रमुखेन वंशः संपूरितो न खलु शब्दमपाकरोति।
तैस्तैस्तथा वहुपथप्रथयेन मन्त्र सङ्कल्पितः किल न निश्चयमभ्युपैति।
भाग्यचयस्यैतदेव लक्षणं प्राकृतोऽपि यत्। अपृष्टः कथयेद्वार्थान्मन्त्वं स्वहृदयोचितं।
त्रैलोक्यनाम्ना सूतेन शंसता दण्डनायकं। निरोध्य वल्गामित्यूचे भूयः क्ष्माभृद्रणोन्मुखः। १६१५
एकाङ्गैः साश्ववारैः प्राक् जिगाय तत्पितामहः। तद्गच्छामोऽचपटलोपान्तात्तत्संग्रहेच्छया।
पदातिप्रायसैन्यांस्तान्निहन्मः संहतान्रिपून्। पश्चान्निपत्य तैः सार्कं श्येनादव विहङ्गमान्।
ततश्चिचलिषाविव राज्ञि तत्कटको दिश.। सद्यश्चमुहतो रङ्गप्रेचिलोकद्दवागमत्।
पारेवितस्तां प्राशेभ्यः पाथेयायात्मजन्मनः। समय्य राजजन्मभ्यो रत्नग्रैवेयकाद्यदात्।
आरामिकैस्तैः सम्प्राप्ते राजचिह्ने चणादिव। तेज.स्फारोर्जितो राजा गतश्रीर्ददृशे जनैः। १६२०
पदे पदे भञ्ज्यमानः सैन्योऽचपटलादिषु। स्थानेषु चाभ्रमीत्कश्चिन्न च तस्य पदान्तिकं।
संश्रयार्थीय वभ्राम सार्यं वेश्मानि मन्त्रिणां। प्रवेशं प्रददौ चास्य न कोऽपि द्वारि तस्युषः।
प्रायोपवेशकुशलाः शक्तास्त्वन्तेन कुर्वचित्। मिथ्यासम्भावनाभूमिर्भूपानो ब्रह्मवन्धवः।
ये केऽपि देशे सन्त्यस्मिंस्तद्गेहेष्वास्थया भ्रमन्। प्रविविक्षुर्गृहान् प्राप कपिलाख्यस्य मन्त्रिणः।
तस्मिंल्लोहरकोट्टस्थे तत्पत्न्या स्थातुमर्थितः। नैभिश्च कोट्टं गन्तुं न प्राविचद्दैवमोहितः। १६२५
आर्तस्य तस्य तत्पुत्रै. पितृवद्द्रोहकारिभिः। क्षणिकैरुत्तमर्णस्य स्वं निःस्वैरिव गोपितः।
सदोषोऽस्मीति सोऽज्ञासीत् स्वयं शृण्वन्विगर्हणां। तदेव गोपिताशेषकृत्यो दुर्मन्त्रिभिः पुरा।
गृहीतसर्व्वनैराश्यः पार्श्वस्थेष्वप्यविश्वसन्। अभूत्प्रद्युम्नमुत्तीर्णो नितरां विरलानुगः।
प्रख्यापयन्तः सद्भूतिं षट्त्रिंशतिकुलेषु ये। तेजस्विनो भास्वतोऽपि सहन्ते नोच्चकैः स्थितिं।
तेऽप्यन्तेऽनन्तपालाद्या राजपुत्रास्तमत्यजन्। साद्रतां दधति ध्वान्ते स्थगिताश्वाः पदे पदे। १६३०
वाहनाज्जोहिलकण्ठोपान्तं प्राप्यावतीर्णवान्। सदण्डनायकेनापि तत्यजे सोऽनुजन्मना।
इहास्मच्छ्वशुरावासस्तत्र वस्त्रमिदं निजं। वोढ्यते स्थानमेष्यामीत्युक्त्वा व्याजेन सोऽचलत्।

यियासोरनुजं तस्य पाथेयार्थं प्रयागकः। ययाचेऽङ्गदमस्मै स प्रादात्सक्तून्न तत् पुनः।
एकांशुकावशेषश्रीस्ततो वा शेषजीवितः। प्रयागशेषानुचरो नृपतिः समपद्यत। १६३५
सुदर्शनकभृत्यस्य जेलकाख्यस्य तत्क्षणं। मुक्तो नामान्तिकं प्राप्तोनृपतेराप्ततामगात्।
उदीपविहितैः खातैरग्रे दुःसञ्चरा क्षितिः। भ्राम्यतस्तानुवाचेति नारी काचिद्गृहान्तरात्।
ततस्तीरे वितस्ताया निषणेऽस्मिन् प्रयागकः। गन्तुं जयपुरं कोट्टमाजुहाव स नाविकान्।
स हि प्राक्संविदं चक्रे तत्रत्यैः सह शस्त्रिभिः। नृपं प्रेष्याश्रयं नेतुं भीमादेवस्य मन्दिरं।
उच्चलाश्रयिणाप्यूचे भीमादेवेन येन सः। राज्ञोऽनुगो गमिष्यामि प्रविष्टस्यापवेशनं।
नौचरैराहृतां नावमारुरोह न भूपतिः। नाशोन्मुखः समासन्नदृष्टिपातभयाकुलः। १६४०
पर्य्यापतत्कालकरस्थभोगिसन्दर्शनेनेव मतिप्रदीपः।
क्षिप्रं प्रशान्त्युन्मुखतामुपैति विनाशकालेषु शरीरभाजां।
तस्मिन्द्रोहस्पृभिश्चेऽपि यस्य मानवतः परं। अनन्यालोकिनो दृष्टिर्भेजे कुलवधूव्रतं।
नीलाश्वीयः स विस्वाख्यो डामरामिलितो हितैः। तदापि प्रययौ राज्ञो विस्तृतिं संश्रयार्थिनः।
युगलकं॥ ततः प्रावर्त्तत त्यक्तुं वारि वारिमुचां गणः। क्षमामिव क्षालयितुं द्रोहस्पर्शेन दूषितां।
भूर्निर्जना दृष्टिपाततमिस्रा दुःसहायिता। वैरिभीतिरिति प्राभूत्किन्किं तस्य न दुःखदं। १६४५
इति वृत्तानुरोधेन धिक् दुष्कर्मविधायिनां। अस्मर्तव्यमपि व्यक्तं नाम ग्राहिष्यतेऽधुना।
सोमानन्दाभिधानस्य पूज्याः सिद्धस्य देवताः। सोमेश्वराभिधाः सन्ति काश्चित्पितृवनान्तरे।
तत्प्रान्ते तांगना तुङ्गतरुप्रच्छन्नवाटिका। अभूच्छिन्नाभिधानस्य कुटी कुहतपस्विनः।
वारस्त्रिया सविरहभुजङ्गीति प्रसिद्धया। भिक्षाख्यया समं भेजे चेष्टितं कुट्टिनोचितं।
तस्य प्रतापगौरीश देवागारान्तिकस्थितं। कुण्डी मुक्तेन तां निन्ये क्ष्मामृदस्तं सतां क्षमं। १६५०
मुक्तमालम्ब्य नृपतिस्तमालम्ब्य प्रयागकः। यान्ति स्म विद्युद्द्योतेन क्ष्मां पश्यन्तोऽन्तरान्तराः।
निरुष्णीषोऽङ्गसंसक्तस्यूतवासाः स्खलन्नृपः। सतां प्रयागमुक्ताभ्यां कथञ्चित्प्रापितः कुटीं।
तदा कुमन्त्रिनिष्कृष्टं सव्यापद्वारणक्षमं। शोचन् सस्मार कन्दर्परुद्रं दैत्यमिवोत्पलः।
प्राकारमूर्ध्ना मुक्तेन प्रविष्टेन हृतार्गलां। नृपः कुटीप्राङ्गणोर्व्वीं विवेशाश्रिततापसां।
विशतोऽग्रतः पादस्तस्यामृदक्षिणोऽत्यजत्। मेने तेनानिमित्तेन स मृत्युं समुपस्थितं। १६५५
क्षुत्क्षामगंलरुद्धायां निपत्स्याङ्गने यथा। रात्रिर्भीतिमती भीमा तस्य घोराभ्रमालिनी।
पहोपन्नितः पद्माङ्कस्थण्डिलस्थो निनाय तां। दासकम्बलिकाच्छन्नगात्रोऽत्युत्तरां निशां।
विषमारामारा दुःखमासीनप्रचलायितैः। मिर्निद्रस्तभवच्छ्वभ्रादुत्थन्निव समाकुलः।
कोऽहं केनाभिभूतोऽद्य क वर्ते कोऽनुगोऽधुना। किङ्कुर्व्यामिति निर्ध्याय मुहुर्मुहुरकम्पत।
धनं राज्यं प्रिया दग्धा भ्रष्टा समुत्थान्यवः। आतोऽस्म्येकाक्यपाथेयोलुठन् भिक्षाभुजोऽङ्गने। १६६०
इत्येकैकस्य निर्ध्याय दुःखं नैक्षिष्ट सोऽपरं। प्राप्तावसानं शोचन्नमात्मतुल्यं कथास्वपि।

युग्मं ॥ भोजस्तु वाजिभिर्द्वित्रैरवशिष्टैः समं व्रजन्। हस्तिकर्णान्तरं प्राप निर्गत्य नगरान्तरात्।
व्रजतस्तस्य धीरस्यानियतं पञ्चषैर्दिनैः। पुनः सम्प्राप्नुयां राज्यं यदीन्द्रोऽपि भवेद्रिपुः।
गर्भवास इव पौरुषे स्फुरन् किन्न कर्म पुरुषश्चिकीर्षति।
कर्म वायुरिव संस्पृशन् हठान्मूढमेव कुरुते तु तं विधिः।
मातृभिर्दत्तपाथेयं भृत्यं नागेश्वराभिधं। प्रतीक्षमाणश्चक्रे स गङ्गावाटान्तरस्थितिं। १६६५
शून्ये देवगृहे तत्र तिष्ठन् श्रुत्वा तमागतं। स निर्ययौ तेन तस्मिन्निःशङ्कं प्रहृतं पुनः।
तत्र प्रादुर्भूतद्रोहे क्षत्रधर्मादविच्युतः। राजपुत्त्रः स यच्चक्रे न तत्कस्याद्भुतावहं।
स सिंह इव संहारं कृत्वा युधि विरोधिनां। अस्राङ्गरागलिप्ताङ्गो वीरशय्यामभूषयत्।
भ्रातास्य मातुलापत्यं विपेदे पद्मकाभिधः। खेलोलालिनवश्चैव मल्लोऽसह्यपराक्रमः।
मठं सूर्य्यमतीदेव्याः शर्व्वर्य्यामुच्चलोऽविशत्। भ्राताप्यस्य रणश्रान्तो लवणोत्सात्समाययौ। १६७०
हतं भोजं श्रुतवतोर्हर्षमात्रे स्थिते तयोः। मनस्युत्खातशूलेऽरिरेवैका पर्य्यशिष्यत।
प्राप्तमप्राप्तवद्राज्यं तथापि प्रत्यभात्तयोः। प्रवासे विस्मृते राज्यं सुखे लब्धे च कुत्रचित्।
प्राह्णे कुतश्चिदानीतो मुक्तेनाविश्य तापसः। प्रणम्य नृपतिं चक्रे स्वकुटीं तां निरर्गलां।
तां दंशमशकाकीर्णामास्तीर्णतृणविष्टरां। कृताभ्युपेकां मुक्तेन नृपतिः प्राविशत्कुटीं।
यद्गिरा वङ्कमानोऽभूच्छ्रुतया भूभुजामपि। स भूभृच्चाटुकारित्वं भीतो भिक्षाभुजोऽप्यगात्। १६७५
भिक्षाकस्योचितोग्रास्यमनुदातुं त्रपावहं। आलापव्यवहाराभ्यां तस्य श्लथन् स विव्यथे।
स भिक्षाकः प्रयागेण विक्रियायाधरांशुकं। निजं दत्वा त्रिसहजे विपणिं भोज्यसिद्धये।
कटूक्तिः कटुवागग्रे परोक्षं भेदभीतिकृत्। कुतापसो दौःस्थ्यहेतुर्नृपस्यारिर्यथाप्यभूत्।
मध्याह्ने स्कन्धविन्यस्तभोज्यभाण्डकरण्डिका। तपस्विन्याप्यथानिन्ये तेन क्षुद्रतपस्विना।
भृत्यभिक्षाकयोः पूर्व्वं स्त्रिया अप्यय पार्थिवः। स्वं वीक्ष्य गोचरीभूतं निराशो जीवितेऽभवत्। १६८०
तेन प्रयागोपहृते भोज्ये तदनुरोधतः। स्पृष्टमेव न भुक्तन्तु तीव्रदुःखोल्वणात्मना।
का वार्त्तेति प्रयागेण प्राङ्गनस्थेन पृष्टया। तापस्या ग्राम्यया मुक्तो व्यक्तभोजो वधस्ततः।
मिथ्यैतदिति तेनार्द्धकथ्यमानोऽपि पार्थिवः। श्रुतिं तामङ्गशकुनं परीक्ष्याबुद्ध नान्यथा।
नारोहति गिरं शत्रोरप्रियाख्यायिनोऽपि यत्। तस्य सम्बहते दुःखं निमग्नस्य तदापदि।
स शोचन्नात्मजं बाल्ये नीत्यै यां यन्त्रणां व्यधात्। आजन्मदुःखदायित्वं मेने तस्यात्मनस्तया। १६८५
हतः स समरे वृत्त्या प्रवीरस्पृहणीयया। यच्च तेनातिवात्सल्यादङ्कशायीव घातितः।
गात्रेषु हारान् पुत्रस्य यौवनव्यूढवक्षसि। पश्यन्नात्मनि सङ्कल्पैर्व्विक्लवः सोऽकृताशिषः।
रक्षणीयो हतो बालो वृद्धस्त्वेवं स्वजीवितं। रक्षाम्यनुचिताचारैर्जिह्रीयेति स चिन्तयन्।
एवं स पुत्त्रशोकेन धृतावाच्यव्यथोव्यथन्। निनाय तापसावासे द्वितीयामपि यामिनीं।
कृतार्थनः प्रयागेण प्रयातुं भगवन्मठं। शोकहारितधीराज्ञो न सङ्कल्पमपि व्यधात्। १६९०

तमिन्दुवदनं सान्द्रावश्यायोऽश्रुवर्षिणी। रथाङ्गाक्रन्दिनी रात्रिः सखी.केवाय सागमत्।
क्षुत्पिपासापरिक्षामं प्रभुं वीक्ष्य स तापसः। प्रार्थ्येत स्म प्रयागेण प्रातर्भोज्यसिद्धये।
उपनिन्ये विनिर्गत्य प्रविष्टस्तापसस्तयोः। सव्यंजनान्नपूर्णे द्वे पात्रे तद्दीवणत्पुरः।
कस्यापि गृहिणो योगात्संवादेन मया हृते। तस्मिन्नित्युक्तवत्यूचे विनिश्वस्य प्रयागकः।
राजन् स्वामिवियोगेऽस्मिन् पश्य लोकस्य सुस्थतां। स तां जगाद विहसन् किं मूढ इव भाषसे। ९९५
योगतो गतएवासौ तत्त्वतो नापरः जनः। सर्वो निजसुखापेक्षी न कश्चित्कोऽपि शोचति।
लोकैकचक्षुषि गते परलोकमर्के लोकः स्वपित्यखिलएव सुखं गृहेषु।
कोऽन्यो विचिन्तयितुमर्हति विश्रमेत तिष्ठन्मया विरहमेत्य कथं कियेति।
पुत्रस्य स्नेहविश्वासः पूर्वमाप्तचये श्रुते। यथैकः प्रभवेन्नायुस्तथा स्नेहोऽपि देहिनः।
अहमेव हतं पुत्रं श्रुत्वा जीवितजीविनं। तिष्ठामि स्वस्थवत्त्वत्र तत्रान्यो निन्द्यतां कथं।
इत्युक्त्वा विरते राज्ञि पुनर्गूढं प्रयागकः। प्रैरयत्तापसं भोज्यं कर्त्तुं ते भाजने त्यजन्। १०००
ह्यस्तनव्ययमिष्टं मे पर्याप्तं नास्ति वेतनं। यते तथापीत्युक्त्वा स सखेद इव निर्ययौ।
गोप्यं रहस्यमणितमत्यन्यहृदयातिथि। अम्लतं पारतमिव नाल्पसत्त्वैस्सुदुर्जरं।
कुन्त्यो मनोरथो नाम विप्रस्य वनवासिनः। सुवृत्तपक्षिनस्तस्य तां कथामुपलब्धवान्।
राज्ञः सन्दर्श दायादं भवावो भूतिभाजनं। इत्युक्त्वा तेन निन्ये स दोग्धृतां क्षुद्रतापसः।
जज्ञे भृत्येन गर्द्धेण जातः सोऽन्येन केनचित्। सदृशं यत्सदसतोर्व्यापकं जन्मकर्मणोः। १००५
इन्द्राराजदां प्रवृत्तिं बुद्ध्वा ताभ्यां न्यवेदयत्। उच्चलाय समादिक्षत्कार्यं तत्र तमेव सः।
केचित्तु भूरि भिक्षाख्यमिक्षाराजोपसर्पणे। कायस्थं कारणं प्राहुस्तयोस्तापसविप्रयोः।
वार्त्ता चेदत्रगोत्रेयं सुरडश्चात्र मङ्कुते। काले तद्भृत्यपादस्य तस्यैव द्रोहमुख्यता।
श्वपाकस्कन्धमारूढो लब्ध्वा तास्ता विमाननाः। विपेदे यत्प्रकारायां युक्तं तत्तस्य कर्मणः।
क्षुत्क्षामो हर्षदेवस्तु प्रयागेणार्थितोऽसकृत्। प्रत्यपे पुत्रशोकेऽपि भोजनायाकरोन्मनः। १०१०
गृहीतभोजनं जानन् प्राप्तं प्राप्तं स तापसं। तमोरेर्भ्रहिरैचिट नीडाद्विहगुरिवाण्डजः।
अपश्यच्च कुटीं कृत्स्नां वेष्टितामेत्य शस्त्रिभिः। शुश्राव चाङ्गनद्वाराद्दार्यमाणार्गलाध्वनिं।
जातं जातं ततो द्रोहमङ्गनात्तापसाधमं। सशस्त्रिणं मुक्तमेहीत्याक्रयन्तं व्यलोकयत्।
मुक्तं विहस्य कृत्वा च द्वारमुद्घाटितारररिः। त्यक्तभीरादधे सव्यं क्षुरिकामन्तिकस्थितां।
एवमात्मविधं क्रूरस्याहमाहं क्रियोन्मदः। आरुरोहाय त्वष्टासिधनुः कवचितो भटः। १०१५
तं राजा मत्कुटिकुटौ कहाश्रयाभोऽप्यपातयत्। क्षितौ व्यायामकुशलो नावधोत्कृपया पुनः।
पतितेन हतेनाधो यतः केणामुना न मे। इत्यूचे दुरहङ्कारप्रलम्भस्मिन्नपि क्षणे।
भीषमुत्पाद्य निपतस्त्रैक्रोऽन्योऽप्युत्पतन् भटः। भयाक्रमौ न्यपततां तं विलोक्योद्यतायुधं।
पृष्ठे पूर्वं प्रविश्य तिष्ठन् श्यामकनिष्ठुरः। स हराविव चामुण्डा रेजे दण्डाहतिः क्षणं।

न सिंहनादैर्नो भेरीढक्काघोषैर्नवोन्मदैः । शस्त्रशब्दैः स शुशुभे भूपस्यान्तक्षणे रणः ॥ १०२०
आखोर्भाण्डप्रवेशस्य विडाला इव डामराः । परं प्रवेशितास्तस्य निःशब्दं शस्त्रिणः कुटीं ॥
अथान्यो नीध्रमार्गेण सम्प्रविष्टः प्रयागकं । हत्वा दोष्णि च शीर्षे च राजानं समुपाद्रवत् ।
राज्ञः प्रहरतः शस्त्रं वञ्चयित्वा स शस्त्रभृत् । वक्षसि छुरिकाघातद्वयं प्रादात्कृतत्वरः ।
वर्णान्महेश्वरेत्येतान् द्विरुक्त्वा गतजीवितः । पपात निहतो भूमौ छिन्नमूल इव द्रुमः ।
पलाय्य सम्भ्रमविशतो योग्यशौरस्य यादृशः । चक्रवर्त्त्यपि स प्राप वधं वेश्मनि तादृशं । १०२५
नान्यः सदृक् कालेऽस्मिन्ददृशे भूतिमान्नृपः । गर्ह्यं निर्हरणलक्ष्म तस्यैवान्यस्य नेक्षितं ।
यदेकेनैव संग्रामवैमुख्येनोन्नतात्मनः । सर्वप्रकारं सुभगं माहात्म्यं तस्य खण्डितं ।
नैयबुद्धिलमेवासीदथ तातस्य दूषणम् । सर्वक्लेशावहा दोषाः कृत्स्नास्तन्मन्त्रिणां पुनः ।
द्वाचत्वारिंशतः साष्टमासा यस्य वयःसमाः । स शुक्लभाद्रपञ्चम्यां हतोऽब्दे सप्तसप्तने ।
राजा दुर्योधनइव स्ववंशच्छेदमिच्छता । सोऽभूज्जातकयोगेन कारितः स्वकुलक्षयं । १०३०
तस्यासीत् क्ष्मार्कजौ जीवबुधौ शुक्रोष्णगू शशी । तमयामित्रजामित्रखेषु कर्कटजन्मनः ।
चन्द्रेदैत्यज्यपापेषु स्वमदात्मजगेषु यत् । आहुः सुसंहिताकाराः कौरवादीन् कुलान्तकान् ।
निर्वेद्ध्यजनः कृत्स्नो देशेऽस्मिन् वैरिणोऽन्तिकं । दस्योरिव शिरश्छित्वा स्वामिनोऽपि निनाय तत् ।
तस्योत्तमाङ्गे भूभर्तुश्छिद्यमाने ससागरा । चकम्पे भूर्निरभ्रापि द्यौर्वृष्टिं महतीं जहौ ।
तन्मुण्डे लगुडाक्रुष्टे यदयुक्तं जनोव्यधात् । अभूत्तेनाभिशापेन सोऽग्रे दीर्घोपसर्गभाक् । १०३५
मण्डले देवबिम्बानां यथास्मिन् विपाटनं । तथा नवं प्रवृत्तं भूपतेर्मुण्डखण्डनं ।
नैच्छिष्ट तच्छिरः प्राप्तमौचित्यादुच्चलो नृपः । भूत्वा चिरमुदग्रस्तु कारयामास वह्निसात् ।
धिक्कष्टं तस्करस्येव तादृशश्चक्रवर्त्तिनः । नीचलाज्ञां विना प्राप्ता शरीरेणान्त्यसत्क्रिया ।
भृत्यत्यक्तोनष्टवंशो गौरकाख्येन केनचित् । स काष्ठागारिणा चक्रे नग्नो नाथ इवाग्निसात् ।
दीर्घा हर्षनृपोदन्तः सोऽयं कोऽप्यद्भुतावहः । रामायणस्य नियतं प्रकारो भारतस्य वा । १०४०
भाग्याम्बुवाहतडितस्तरलाः श्रियस्तास्तच्चावसानविरसं प्रसभोन्नतत्वं ।
तत्रापि नैष बत मोहहताशयानां शान्तिं प्रयाति विभवानुभवाभिमानः ।
तावत्यप्यवरोधिकापरिकरे नैकापि चक्रन्द तं तावत्यप्यनुगेऽधुनानुमृतवान् कोप्यास्त तीर्थेन वा ।
लोकस्य स्वसुखोपलिप्समनसो वीक्ष्येति निःस्वहतां निर्वेदं समुपेत्य नाश्रयति धिक् स्वान्तं वनान्ते रतिं ।
नादौ किञ्चिद्भवति नियतं यच्च पश्चान्न किञ्चिन्मध्ये कस्मात्स्पदि घटयन्दौस्थ्यदौस्थ्यानुरोधं ।
निःशीर्षाहिर्नट इव मुहुः कोऽपि जन्तुर्नटित्वा नो जानीमो भवजवनिकान्तर्हितः क्व प्रयाति ।
श्रीसातवाहनकुले छतकान्तराजवंशे त्यजन्युदयराजकुले प्रतिष्ठां ।
प्रद्धं सुनेर्विरहितं जहती हिमाद्रेर्दिश्ये तटे सुरगिरेरिव वासरश्रीः ।

इति श्रीकाश्मीरिकमहामात्यचम्पकप्रभुसूनोः कल्हणस्य कवेः कृतौ राजतरङ्गिण्यां सप्तमस्तरङ्गः समाप्तः ॥
समाष्ट नवतावब्दां व्यहोनायां महीभुजः। यडचोदयराजस्य वंशे जाताः प्रकीर्त्तिताः।
राजानः ॥ ६ ॥ श्लोकाः ॥ १७३२ ॥



## ॥ अष्टमस्तरङ्गः ॥



प्रौढाः कञ्चुकिनो जरद्गवहयः कुञ्जस्तुषारद्युतिर्नित्यान्तोऽपि बहिष्कृतः परिकरस्तोऽयं समस्तोऽप्यहो ।
अर्धाद्यद्वहतीकृताद्भगवता चारित्रचर्याविदा सा भिन्द्याद्दुरितं चराचरगुरोरन्तःपुरं पार्वती ।
छन्नकोपप्रसादोऽभूत्कञ्चित्कालं नवो नृपः । प्राङ्मन्थादिव पाथोधिरव्यञ्जितविषामृतः ।
सोदरो डामरैराघस्य तस्याभूतां भृशोन्मदौ । मेघेष्विव पुरो वातावग्रहौ स्फूर्तिहारिणौ ।
यत्किञ्चनविधाय्यासीज्ज्ञाता यथावनोन्मदः । राज्ञो दुष्प्रक्रिया दौःस्थ्यकरो वात्सल्यशालिनः ।
सोऽनिशं हि गजारूढो विकोषासिः परिभ्रमन् । आत्तसारां महीं पीतरसां रविरिवाकरोत् ।
एकीभूतानमून्सर्वान् डामरान्निर्दहाग्निना । इत्युक्तं तेन नोर्वीभृत्सैकार्यवचोऽग्रहीत् ।
इत्थं वा मन्त्रिसामन्तैर्द्राज्येच्छुः सहोदरः । भूर्निष्कोपेत्यभूत्किं न भूपतेस्तस्य सङ्कटं ।
अधिराज्याभिषेकेण सत्कृत्य भ्रातरं ततः । पातुं लोहरसंबद्धं प्राहिणोन्मण्डलान्तरं ।
द्विरदायुधपत्त्यश्वकोषामात्यादि स व्रजन् । निनाय सर्वं वात्सल्यादनिषिद्धोऽग्रजन्मना ।
आशङ्क्य कोटभर्तृभ्यः प्रवेशं सत्यवासितिं । तत्कर्पजं प्रतापाख्यं सह निन्येऽनवधि तान् ।
कुर्वाममुं नृपमहं प्रातिहार्यं समाचरन् । नष्टाः स्वभृत्यवत्तस्थुर्भूभुजो भूम्यनन्तराः ।
दिनानि सप्त संरुद्धे मार्गे तदनुयायिनां । गायनः कनकोलब्धान्तरोदेशान्तरं ययौ ।
वाराणस्यां विजहता निर्वेशात्तेन जीवितं । हर्षभूभर्तृभृत्येषु व्यक्तं निन्ये कृतज्ञता ।
ऊर्ध्वाधिरोहं दाक्षिण्याद्दस्यूनामुच्चलः पुनः । सेवास्तत्या सुधीः सेहे चन्दनो भोगिनामिव ।
तथा जनकचन्द्रेण दर्पाद्यवहृतं तदा । राजान्ये डामराश्चासन् यथा नष्टप्रभा इव ।
अभयस्यौरसा भर्तुस्तनयायामजीजनत् । राज्ञ्यां विभवमत्यां यं भोजो हर्षनृपात्मजः ।
जातं मृतद्वित्रिपुत्रानन्तरं गुरुभिः शिशुं । आयुष्कामैस्तमावद्धाभव्यभिक्षाचराभिधं ।
द्वाब्दमप्यरिसन्तानतन्तुलेनाप्रियोचितं । ररक्ष तद्गिरा राजा राज्ञ्यास्वाङ्के समार्पयत् ।
तिलकं ॥ तमादाय स्वयं वार्धौ यावद्राज्ञ्योऽकरोन्मनः । तावद्भारेङ्गितज्ञो नीतिकौटिल्यमुच्चलः ।

तुल्योत्साहासहिष्णुत्वादस्मै कुप्यत डामराः। एष एवातिसत्कारायदासुविशदाशयः।
इति सञ्चिन्त्य स द्वारदिक्षां तस्योदघोषयत्। यथाविकारं प्रययुर्भीमादेवादयोऽखिलाः।
तेषां तस्य च मात्सर्यं यदापर्य्याप्तिमाययौ। तदान्योन्याश्रिता भृत्याः पणं चक्रुर्युयुत्सवः।
दिदृक्षुः क्ष्मापतिस्तेषां सेतुपृष्ठे रणं मिथः। वार्य्यमाणोऽपि सचिवैरारुरोह चतुष्किकां।
द्वन्द्वयुद्धे प्रवृत्ते तु डामरैरुभयाश्रितैः। अथ प्रारभताकस्मात्संरम्भैर्दारुणो रणः।
सेतुत्रयाध्वना युद्धे लग्ने राज्ञि सरित्तटात्। योधा जनकचन्द्रस्य शरवर्षमवाकिरन्।
यान्तः शराः सशीत्कारास्ते स्पृष्टनृपविग्रहाः। मग्नास्तस्मिन्नदृश्यन्त कोपेनेव प्रकम्पिनः।
आकृष्य दोर्भ्यां भूपालं बलादिव ततोऽनुगाः। प्रविष्टं मण्डपद्वारं चक्रिरे निहतार्गलं।
शस्त्रज्जनकचन्द्राद्या भीमादेवादयोऽपि ते। चतुष्किकार्थं चक्रुपुस्ततोऽन्योन्यं जिघांसवः।
तुमुले तत्र शस्त्राङ्कं भीमादेवानुगोऽभिनत्। तीव्रेण जनकचन्द्रस्य कालपाशात्मजोऽर्जुनः।
स वीक्ष्य स्वं चतं द्रोहं प्रयुक्तं भूभुजा विदन्। पादप्रहारादिदधे क्रोधाद्द्वारि नृपौकसः।
अभग्ने तत्र संत्रासात् स्वान्द्रोणुत्तरं गतं। अधावत्कृष्टशस्त्रोऽसौ भीमादेवो जिघांसया।
स्तम्भच्छन्नस्तद्विलोक्य तद्वृद्धगणनापतिः। मध्ये जनकचन्द्रस्य कृपाणेन द्विधा व्यधात्।
तस्मिन् हते तदनुजौ गग्गसड्डौ प्रधावितौ। सएव करवालेनालक्षितोऽहत विद्रुतौ।
अवभज्य तदं वज्रः सुचिरं नावतिष्ठते। उदग्रकर्मा च पुमान्निहत्यात्युन्नतं रिपुं।
स हि दिभाद्रे तत्राब्दे हर्षोत्साहादनन्तरं। अन्यूनानतिरिक्तैर्यस्त्रिभिः पक्षैरहन्यत।
यद्दोपकर्त्तुरप्येष द्रोहं यत्स्वामिनो व्यधात्। औत्कंठ्यात्पाशमतस्तस्य क्षिप्रमेव चयं ययौ।
सान्तस्तोषे कोपशोकावाविष्कुर्वति क्षत्रिमौ। भीमादेवः पलायिष्ट गग्गस्तु व्यश्वसीन्नृपे।
प्रहिते लोहरं गग्गेऽच्छमुत्सादयितुं चतं। त्रस्तास्तेन व्यसृज्यन्त स्वोर्व्यामन्येऽपि डामराः।
उपप्लवापसृतैः प्राप्तराज्यं दस्युभिरुज्झितं। एवं शनैरवष्टम्भं भेजे भूपतिरुच्चलः।
तेनाथ लब्धस्थैर्य्येण दिनैरेव जिगीषुणा। त्याजिताः क्रमराज्यान्तद्वयसैन्यादिडामराः।
ततो मडवराज्यं स प्रस्थितो विप्रियप्रियान्। डामरान् कालियमुखान् बद्धा शूले व्यपादयन्।
इन्नाराजोऽपि सलवांस्तेन क्रान्तचितिः क्रमात्। वलैर्नगरएवोग्रैरवस्कन्देन घातितः।
प्राग्जन्मप्रेमसंस्कारादन्तरङ्गतयाथवा। तस्य पुत्त्र इव प्रीतिर्गग्गे एव व्यवर्द्धत।
न सेहे नाममात्रं यः कण्टकानां प्रियप्रजाः। नृपो गग्गाय चुक्रोध सापराधं न कुत्रचित्।
राज्यारम्भेऽनुयुक्तेन भीमादेवेन धीमता। उक्तं शुभावहं शिवे दे स मन्त्रवदस्मरत्।
एकदा लोकवार्त्तार्थं प्रासादप्रभृति निर्गतः। बहिरद्द्रिश्य वाससा चोरचारीदादिनचयं।
अन्यायोत्थानभीतेन श्रुत्वा नामापि वैरिणः। अर्धरात्रेऽपि यात्राभिस्तेनर्क्ष्च्छ्रदत विश्वतः।
सत्वैनानुप्रधैर्य्यस्य राज्ञां मध्ये मनस्विनः। कार्मणोपहतं हृत्तं न प्राभूदमलीमसं।
पयोधन सदाधारआक्रन्दीजलमज्जना। कुनृपादीरणोद्भूता गिरः पापापनेष्यते।

तेनानुपर्चिताङ्गेन प्रायशो विनिवारिताः। अनूरुणेव सद्दृष्टिध्वंसिनो ध्वान्तसञ्चयाः।
प्रायोपविष्टप्रनये देहत्यागप्रतिज्ञया। निर्बद्धया प्रत्यवेचां धर्माध्यक्षानकारयत्।
निशम्य क्षपणस्यान्तं क्रन्दितं तदनिष्टकृत्। बभूव तस्य स्वात्मापि नानिग्राह्यो महात्मनः।
कार्य्यिणो यस्य वा दोषाद्धत्ताक्रन्दितमुच्चयौ। तस्य स्वबान्धवाक्रन्दैस्तस्मिन् क्रुद्धे शशाम तत्।
अवलानुग्रहव्यग्रे तस्मिन् राजनि सर्व्वतः। वास्तव्यावन्तिनस्तस्युरबलास्वधिकारिणः।
सोऽर्थ्यैनेकश्चरन् राजेत्यज्ञात्वा कथितं जनैः। यं यं स्वदोषमश्रौषीत्तं तं त्वरितमत्यजत्।
येन केनापि सम्प्राप्तः प्राप्त्युपायेन पार्थिवः। अमोघदर्शनः सोऽभूत्कल्पवृक्ष इवार्थिनां।
सुधावर्षी प्रियालापप्रीतिदायजनप्रियः। नायकत्वेनकांस्यक्तुं विसम्भभवनेष्वपि।
श्लाघ्यः श्रमैः प्रतिकलं तस्य सेवाविधायिभिः। प्राप्तन्विचतुरान् वारान् चणदास्वपि दर्शनं।
सेव्यमानः सदाविघ्नः क्षणेनैव फलप्रद। कल्पैन्द्रजालिकैरुग्रः शाखीव न बभूव सः।
वास्तव्यानां निशम्यार्तिं तेन दैन्यनिवारणं। चक्रे पित्रेव पुत्राणां सन्यक्तेतरकर्म्मणा।
स्वसञ्चितानि स्वर्णानि विकीर्णानोऽल्पवेतनैः। दुर्भिक्षमुद्भतावेव जघान जनवत्सलः।
निवार्य्य चौर्य्याचरणात्कृपार्द्रस्तस्करानपि। कोशाध्यक्षान् स त्रिदशचक्रारागद्धजीविकान्।
कस्मिन्विभाग्यः च्छेत्तव्या विपदः कस्य मण्डले। इतोऽन्विष्यन् सदैकैकं चारैश्चिन्तापरोऽभवत्।
तस्य काऽप्यर्थनैस्पृह्यं नाम कोऽपि महान् गुणः। अनुपक्तो गुणैस्तैस्तैराज्ञः पक्षविनोऽभवत्।
स स्थित्यै दण्डयन्दण्ड्यानधाक्षेपभयाद्धनं। तेषां नादत्त सत्कर्माभ्युद्धये तांस्तकारयत्।
प्रस्तुतस्यार्थिने दातुं वस्तु तस्यैकसङ्ख्यया। सहस्रसङ्ख्यया दानग्रहागात्पूर्णता यदि।
श्रूयतेऽर्थी यथा मह्यं देहि देहीति गां वदन्। तथास्मै देहि देहीति वदन् दाता स शुश्रुवे।
अनुदातुं चिरकालं चोणसङ्ख्यं न सत्यतं। नेत्यदूतादिनीतार्द्धं न तद्धत्तमदृश्यत।
उत्सवे दैन्यविघ्नो रञ्जने कार्य्यसाधने। आलेख्यलीनसाक्षीव नाधा लब्धफलोऽभवत्।
उत्सवे चिरराव्यादो जनतां सोऽभिचद्धनैः। सद्दयोगे पयःपूरैर्महेन्द्र इव मेदिनीं।
ताम्बूलदानव्यसनं परार्थ्यात्स्वरता तथा। नाभूद्धर्षनृपस्यापि तादृक् तस्यास्त यादृशी।
सोष्टमाचावशेषेऽपि लब्धे नृपपदे व्यधात्। स दानविभ्रमांस्तान् ये धनदेनापि दुष्कराः।
निर्माणलोठनैर्धाम्नामजस्रं वाजिनां क्रयैः। काश्मीरकोऽपि चक्रे स न म्लेच्छस्करसाद्धनं।
अध्वन्यध्वनि योगेन प्राणविन्यासनैस्तया। बभूव सर्व्वशत्यज्ञः सोऽन्तरात्मेव देहिनां।
भोगापाजीवितान् विप्रा भैषज्यं व्याधिपीडिताः। वेतनं वृत्तिहीनाय तस्मात्समुपलेभिरे।
पित्र्योपरागकेल्वादि दुर्निमित्तोपमार्तिषु। गोसहस्राश्वहेमादिसम्भवैः सोऽभजद्द्विजान्।
नन्दिक्षेत्रे पुरं कृत्स्नं दग्धमुत्पातवह्निना। पूर्व्वाधिकगुणं तेन नवं राज्ये व्यधीयत।
श्रीचक्रधारयोगेशस्वयम्भूत्यानयोजनं। जीर्णोद्धृतिव्यसनिना कृतं तेन सुकर्म्मणा।
हर्षदेवेन यो निन्ये श्रोपरीहासकेशवः। परिहासपुरे तं स नवं नरपतिर्व्यधात्

भूतेशस्य यथा पुरी कृतवद्दृष्टा तदाशावलाद्भूयः स्वां श्रियमाससाद सहसा तद्वत्समस्तामिमां ।
तं कायस्थकुटुम्बिकृतमचिरप्रायाश्च पश्चाननीलीढामुच्चलदेवनिर्वृतिसुखस्थित्या पुरीं स्वां क्रियां ।
शिवगाव्युत्सवे श्लोकममुं शिवरथाभिधः । विद्वान् पठंस्तेन हठात्सम्बोध्यचो व्यधीयत ।
व्यवहारानभिज्ञोऽपि कश्चित्कालमदीदृशत् । शुचिलादार्य्यभाजः स क्रमन् कृतयुगस्थितिं ।
शीघ्रदण्डत्वमुच्चण्डतेजसस्तस्य भूपतेः । क्रूरानुद्दिश्य कायस्थान् धीमद्भिर्वक्रमन्यत ।
नहि क्षुद्रस्वकायस्थपिशाचाविष्टवैरिणां । शंसन्त्यन्तरितं दण्डं दण्डनीतिविशारदाः ।
चिरेण दण्डिताह्येते कुर्य्युर्दण्डधराद्ध्रुवं । लब्धान्तराः प्राणहरं कृच्छ्रं किञ्चित्प्रमाद्यतः ।
दण्ड्यानान्दण्ड्यमानानां पुत्रस्त्रीमित्रबान्धवाः । राज्ञां विचारशीलेन न तेनोपद्रुताः क्वचित् ।
कर्णेजपांश्चाष्टधरप्रमुखांस्तेन दुःखदैः । कर्म्मभिः क्षिपता चापि पैशुन्यस्य खिलीकृताः ।
विस्मृतिं लब्धराज्यानां पूर्व्वसद्धन्यवासनाः । प्रयान्ति प्राप्तजनुषां गर्भवासस्पृहा इव ।
प्रायाज्याधिगमात्किञ्चित्सदसद्वाचिन्तयत् । राज्ये तत्र विसस्मार जातिस्मर इवोच्चलः ।
ददर्श शत्रोरद्रोहान् यान् द्रोग्धॄन् वा पुरानुगात् । कर्त्तव्यानुगुणं तेषां प्रतिपत्तिमदर्शयत् ।
स्मरेत्कोपपतिः पूर्व्वपतिद्रोहं कुयोषित । पूर्व्वस्वाम्यरितां चाद्य कुभृत्यस्योद्धुरो जडः ।
शेषाद्दिदेहान्मेदिन्या समं सद्मापि राज्यभृत् । तस्मिन् परिणता नूनं कृत्याकृत्यविवेकरि ।
तथाह्येकस्य वणिजो व्यवहर्त्तुंय सोऽभवत् । विवादे संशयं छिन्दन्नेवं स्वेयाद्यगोचरे ।
सोढ्दारूढसद्भावे व्यापदेपयिके धनी । न्यासीचकार दीनारलक्षं कोऽपि वणिग्गृहे ।
तेनोपयुज्यमाना च व्ययेषु वणिजः करात् । कियत्यपि गृहीताभूद्लुमाचान्तरान्तरा ।
विंशतिंशत्सु यातासु समासु न्यासधारिणं । गृहीतशेषं दातुं स धनं प्रार्थयताथ तं ।
वणिक् तु कुशली तस्य न्यासयाप्राय सोद्यमः । कालापहारमकरोत्तैस्तैः कनुपधोर्म्मिभिः ।
स्रोतोभिर्व्यस्तमम्भोधौ लभ्यं मेघमुखैः पयः । प्राप्तिर्भूयात्तु नास्त्येव वणिक्हस्तस्य वस्तुनः ।
तैलस्निग्धमुखः स्वल्पालापोऽमृदाकृतिर्भवन् । न्यासपाशविवादेषु वणिक् व्याधार्दिमिष्यते ।
विवादे श्रेष्ठिना शाब्यं स्थितः प्राक् सत्यदर्शने । सूक्ष्मं सुम्यं ज्ञायमानं प्राणान्तेऽपि न मुच्यते ।
निसर्गवञ्चका वेश्याः कायस्थोऽपि वरो वणिक् । गुरूपदेशोपस्कारैर्विशिष्टाः सविषाशिषः ।
चन्दनाङ्कालिके श्वेतांशुके धूपाधिवासिनि । विश्वस्तः स्यात्किराटेया विमृष्टेष्वनापदः ।
ललाटदृक्कुचश्रोचदन्दद्गन्धचन्दनः । षड्विन्दुवृश्चिक इव घ्राणात्प्राणान्तकृद्वणिक् ।
पाण्डुश्यामोऽग्निधूमार्द्रः सूच्यास्यो गहनोदरः । तुम्बीफलोपमः श्रेष्ठी रक्तं मांसञ्च कर्षति ।
सोऽथ निःशेषितन्यासः क्रुद्धो निर्बन्धकारिणः । गणनापत्रिकां तस्याः सभ्रूभङ्गमदर्शयत् ।
यदादौ श्रेयस इति न्यस्तमग्रेऽपि पदं । भ्रातरेव्यत्यये सेतोर्गृहीता पट्टमुधोल्वया ।
छिद्रशोपानत्कयामन्ते शतं चर्म्मकृतेऽर्पितं । विपादिका कृते दास्या नीतं पञ्चाशतो घृतं ।
स्फोटने भाण्डसारस्य कन्दर्याः रूपयार्पितं । कुलाल्या सद्भसः पश्य भूर्जे सप्त शतद्वयं ।

प्राग्वर्धितशुकावस्था भूषितो हर्षनीतया । तेन त्रिभुवनस्वामी निर्नीतो न महीभुजा ।
जयापीडाहृतं हर्षोत्पाटने भुट्टमन्त्रिणा । सिंहासनं नवं चक्रे स्वराज्यककुदं नृपः ।
लब्ध्वा तदङ्काध्यारोहं भर्तुः प्रेम्णातिदुर्लभं । सामान्ययापि देव्योलं जयमत्या न दूषितं ।
सा ह्यानृशंस्यमाधुर्य्यत्यागप्रियतान्वयैः । अस्तथा तु परित्राणमुख्यैर्भव्याभवद्गुणैः ।
लब्धभूपालवाल्लभ्या नार्य्यः क्रोधात्प्रजास्वयं । राचस्य इव भङ्गाय लावण्यललिता अपि ।
प्रियप्रजस्यायमन्यो गुणः सर्व्वगुणाग्रणीः । उत्पलक्ष्मापतेरासीदर्थनैस्पृह्यशालिनः ।
जिघांसवः पापकामाः परस्वादायिनश्च ताः । रक्षांस्यधिकृता नाम तेभ्यो रक्षेदिमाः प्रजाः ।
तेनेतिहासिनीं नीतिं श्रद्दधानेन सर्व्वदा । येन सम्पठता श्लोकं कायस्थोद्दलनं कृतं ।
यत्ते विषूचिकाशूलसंन्यासेभ्यः किलेतरे । प्रत्याशुकारिणो विश्वं प्रजा रोगा नियोगिनः ।
पितरं कर्कटो हन्ति मातरं हन्ति पुत्त्रिका । हन्ति सर्व्वन्तु कायस्थः कृतघ्नः प्राप्तवैभवः ।
गुणान् समर्थ्य स्फुरता येनैवोत्पाद्यते शठः । वेताल इव कायस्थस्तमेवाहन्ति हेलया ।
विषवृक्षो नियोगी च यदेवाश्रित्य वर्द्धते । चित्रं करोति तस्यैव स्थानस्थानतिगम्यतां ।
तेन ते क्ष्माभुजा मानचतिकार्य्यनिवारणैः । कारामवेश्यैव खलाः श्रमं नीताः पदे पदे ।
कार्य्यान्निवार्य्य सज्जमः सहेलस्याप्यहेतुमान् । भङ्गाख्यत्रमयं वासः कारायां पर्य्यधापयत् ।
सकार्य्यवेषं हास्याय सभायां वरणोचितं । अकारयद्भूतिभिश्च धावनं डोम्बयोधवत् ।
स प्रांशुर्वेष्टितश्मश्रुरुष्णीषेणोत्पतन् पुनः । शूलहस्तः सजानूरुः केयामासीन्न हास्यकृत् ।
स शीर्षदशनं साम्यवादवेश्या विटान्वितं । प्रियवेश्यं कश्चिदयेऽनृतवंशमकारयत् ।
बद्धान्यं शकटे नग्नं क्षुरलूनार्द्धमस्तकं । अकारयत्स्वटान्यस्तचीनपिष्टकटाङ्कितं ।
ते कुम्भवादनैर्मुण्डमण्डनैश्चाङ्किताभिधाः । नियोगिनो भग्नमानाः सर्व्वतः ख्यातिमाययुः ।
काव्यभ्रष्टाश्छन्नक्षिन्नचीणवस्त्रावगुण्ठनाः । सर्व्वार्थिनो व्यभाव्यन्त केऽप्यटन्तः प्रतिचयं ।
हत्यावृद्धासुखप्राप्यं पाण्डित्यं भूर्जवत्परे । मत्वा बाला इवाचार्य्यगृहे प्रारेभिरे श्रुतं ।
केऽप्युच्चैरट्टभिक्षाकाः सादरं स्तोत्रपाठिनः । कृतानुपाठाः स्वापत्यैः प्राह्णे लोकमहासयन् ।
माता स्वसा सुता भार्य्या स्वापि कैरप्यकार्थ्यत । सामजं सेवनं कार्य्यप्राप्तैः सुरतसेवया ।
जातकस्वप्रश्नकेन स्वलक्षणनिरीक्षणं । कारयद्भिः शुभैरन्यैर्गणकाः परिखेदिताः ।
पिशाचा इव शुष्कास्या रुक्षश्मश्रुकचाः कृशाः । बद्धाः पर्य्यभाव्यन्त शृङ्खलामुखराङ्घ्रयः ।
नृपेण कार्थिणां दर्पविह्वनाशे विपाटिते । अन्त्योज्ज्योतिःपरिज्ञानक्षमत्वं समजायत ।
भारतस्तवराजादिस्तोत्रपाठमशिश्रयन् । ते दुर्गोत्तारिणी विद्या जपंश्चादस्खलोचनः ।
इत्थं दैःस्थ्योदये दीर्घं मज्जन्तो नित्यदुर्जनाः । तस्मिन्राजनि कायस्थाव्यलोक्यन्त पदे पदे ।
भिक्षसन्धानभूर्य्यर्पयदानभोज्यादिढौकने । नहि मोहयितुं शक्ताः प्राज्ञं तं तेन राजवत् ।
तान् प्रजाकण्टकान् पुष्टान् कृतधीरकृतान्निधं । तैस्तैः शुचिभिरध्यक्षैः सविश्रामीश्वरोऽत्रसान् ।

भूतेशस्य यथा पुरी कृतवहलुष्टा तदाशावशाद्भूयः स्वां श्रियमाससाद सहसा तद्वत्समस्तामिमां ।
त्वं कायस्थकुटुम्बिकृतमचिवप्रायाच्च पञ्चाननीलीढामुच्चलदेवनिर्वृतिसुखस्थित्या पुरीं स्वां क्रियाः ।
शिवराज्युत्सवे श्लोकममुं शिवरथाभिधः । विद्वान् पठंस्तेन हठात्सर्वाध्यक्षो व्यधीयत ।
व्यवहारानभिज्ञोऽपि कश्चित्कालमदीदृशत् । शुचिलादार्य्यभाजः स क्रमन् कृतयुगस्थितिं ।
शीघ्रदण्डलमुच्चण्डतेजसस्तस्य भूपतेः । क्रूरानुद्दिश्य कायस्थान् धीमद्भिर्वक्रमन्यत ।
नहि क्षुद्रस्वकायस्थपिशाचाविष्टवैरिणां । शंसन्त्यन्तरितं दण्डं दण्डनीतिविशारदाः ।
चिरेण दण्डिताश्चेति कुर्य्युर्दण्डधराद्भवं । लब्धान्तराः प्राणहरं कष्टं किञ्चिन्मशास्ततः ।
दण्ड्यानान्दण्ड्यमानानां पुत्रस्त्रीमित्रबान्धवाः । राज्ञा विचारशीलेन न तेनोपद्रुताः क्वचित् ।
कर्णेजपंक्लिष्टधरप्रमुखास्तेन दुःखदैः । कर्मभिः क्षिप्तताश्चापि पैशुन्यस्य खिलीकृताः ।
विस्मृतिं लब्धराज्यानां पूर्व्वसङ्कल्पवासनाः । प्रयान्ति प्राप्तजनुषां गर्भवासस्पृहा इव ।
प्रायाज्याधिगमात्किञ्चित्सदसच्चाप्यचिन्तयत् । राज्ये तत्र विमस्मार जातिस्मरदवोचलः ।
ददर्श शत्रोरद्रोहान् यान् द्रोग्धॄन् वा पुरानुगात् । कर्त्तव्यानुगुणं तेषां प्रतिपत्तिमदर्शयत् ।
स्मरेनोपपतिः पूर्व्वपतिद्रोहं कुयोषित । पूर्व्वस्वाम्यरिता चास्य कुस्थल्यस्योद्धरो जडः ।
शेषादिहिद्दान्मेदिन्या समं प्रज्ञापि राज्यभृत् । तस्मिन् परिणता नूनं कृत्याकृत्यविवेकरि ।
तथाह्यकस्य वणिजो व्यवहर्त्तुस्य सोऽभवत् । विवादे संशयं च्छिन्दन्नेत्रे स्वेयाद्यगोचरे ।
सौहृदादृढसद्भावे व्यापदौपयिके धनी । न्यासीचकार दीनारलक्षं कोऽपि वणिग्गृहे ।
तेनोपयुज्यमाना च व्ययेषु वणिजः करात् । कियत्यपि गृहीताभूदनुमाचान्तरान्तरा ।
त्रिंशद्विंशत्सु यातासु समासु न्यासधारिणे । गृहीतशेषं दातुं स धनं प्रार्थयताय तं ।
वणिक् तु कुकृती तस्य न्यासयाचाय सोद्यमः । कालापहारमकरोत्तैस्तैः कलुषधीर्मिषैः ।
स्रोतोभिर्व्यस्तमम्भोधौ लभ्यं मेघमुखैः पयः । प्रातिभूर्यास्तु नास्त्येव वणिक्प्राप्तस्य वस्तुनः ।
तैस्तैस्त्रिशमुखः स्वल्पालापाल्पदाकृतिर्भवन् । न्यासग्रासविवादोयो वणिक् व्याप्तादिह्रियते ।
विवादे श्रेष्ठिना सार्धं स्थितैः प्राक् सत्यदर्शनैः । सुखं सुखं श्रायमाणे प्राणान्तेऽपि न मुच्यते ।
निसर्गवञ्चका वेश्याः कायस्थोऽपि वरो वणिक् । गुरूपदेशोपस्कारैर्विशिष्टाः सवियाशिषैः ।
चन्दनाद्धालिके श्वेतांशुके धूपाधिवासिनि । विश्वस्तः स्वाल्किराटेया विमलष्टेष्वनापदः ।
ललाटदृक्चत्वरश्रीचदन्दद्रुमचन्दनः । पञ्चबिन्दुष्टस्थिक इव घणाभ्राणान्नाकृदणिक् ।
पाण्डुश्यामोऽग्निधूमार्द्रः सूच्यास्यो गहनोदरः । तुम्बीफलोपमः श्रेष्ठी रक्तं मांसञ्च कर्पति ।
साऽथ निःशेषितमिषः क्रुद्धो निर्बन्धकारिणः । गणनापत्रिकां तस्याः सभूभङ्गमदर्शयत् ।
यदादौ श्रेयस इति न्यस्तमश्रेयसे पदं । भ्रातरेष्वत्यये सेनोर्गृहीता पटसुधोल्वया ।
च्छिन्नोपानत्कमानेभ्यः शतं चर्म्मकृते ऽर्पितं । विपादिका कृते दास्या नीतं पञ्चाशतोघृतं ।
स्फोटने भाण्डमारस्य क्रन्दत्याः रूपयार्पितं । कुलाल्या वक्त्रमः पश्य भूर्जे लग्नं शतत्रयं ।

शिशुभ्योऽस्य बिडालस्य क्रीताः पोषाय मूषिकाः। त्वया शतेन वात्सल्यात्पट्टाम्भास्यरसस्तया।
चरणोदत्तनं सर्पिः शालिचूर्णञ्च सप्तभिः। क्रीतं शतैः श्राद्धपक्षस्थाने च घृतमाचिकं। ५४०
नीतं चौद्राद्रकं का सा या माया दर्भकेण ते। सोऽव्यक्तजिह्वः किं वेत्ति वक्तुं सर्वं शतं ततः।
तृणोत्पाटको भिक्षाचरस्ते इव याचकः। यो वारितो युद्धपट्टस्तस्मै दत्तं शतत्रयं।
आनीते भट्टपादानां मध्यं सर्व्वव्ययोपरि। शतं शतद्वयं धूपचन्द्रामूलपलाण्डुषु।
इत्याद्यचिन्तता युक्ता परिहार्थं व्ययानसौ। तस्यैकीकृत्य गणनां लाभेऽपि शनकैर्व्यधात्।
वर्षमासग्रहतिथिप्रत्यावृत्तिः पुनः पुनः। संसारमेव तस्यान्ते न ययौ नर्त्तिताङ्गुलेः। ५४५
समूलग्रहणं पिण्डीकृत्याथ सकलान्तरं। प्रसारितोष्ठस्तन्नेत्रे मीलयन्नभ्यधान्मृदु।
शल्यमुद्धरनिक्षेपं नयोद्धासधनन्त्विदं। विश्रम्भदत्तं निर्दम्भं दीयतां सकलान्तरं।
तस्य धर्म्यमचोजानन् क्षणमुच्छ्वसितोऽभवत्। चुरं चौद्रोपलिप्तन्तु ध्यात्वा पश्चादतप्यत।
युक्तापकृतसर्व्वस्वं क्रौर्य्यानार्थ्यमथार्थकः। विवादे नाशकज्जेतुं नापि स्थेया विचारकाः।
स्थेयैरनिश्चितन्यायं पुरोन्यस्तं ततो नृपाः। तदित्थमिति निश्चित्य वणिजं तमभाषत। ५५०
अद्यापि न्यासदीनाराः सन्ति चेत्तत्प्रदर्श्यतां। अंशः कियानपि ततस्ततो वच्मि यथोचितं।
तथाकृते तेन वीक्ष्य दीनारान्मन्त्रिणोऽब्रवीत्। राजाभिर्भाविना राज्ञो नाम्ना टङ्कः क्रियेत किं।
न चेत्कलशभूपालकालीन्याशीकृतैव्यमी। दीनारेष्वकृतटङ्कामनामाङ्का अपि स्थिताः।
निश्चितेनैव लक्षेण वणिक् तस्मात् व्यवाहरत्। वणिजोद्रविणेनायमथ्यातेनान्तरान्तरा।
तस्माद्यदा यदेतेन गृहीतं दीयतां ततः। तदा प्रभृत्ययथावल्लाभोऽस्मै वणिजोऽर्थिनः। ५५५
न्यसनानेहसश्चैव प्रभृत्यस्मै प्रयच्छतु। लक्षादखण्डितालाभं किम्बाच्यं लौलिके धने।
अवधारयितुं शक्यं मादृशैस्सुघृणैरियत्। श्रीयशस्करवद्राज्यमीदृक्षेषु व्ययुज्यत।
विवादे सन्दिहानस्य युक्तं चाप्यनुशासनं। भाव्यं दण्डपराचारैः प्रयुक्तं कुशलैः पुनः।
अनिर्धार्य्येषु शास्त्रेषु महामसंगतेष्विव। सविवादेषु चोपेक्षां कालापेक्षी व्यधान्नृपः।
पश्ये पार्थिवस्थैर्य्यं निरोधं तस्य पालनं। प्रजास्वजागरूकस्य मनोरिव मनस्विनः।
सख्यं कारणनिर्व्यपेक्षमिनताहङ्कारहीना सती भावोवीनजनापवाद उचितोत्थितं समस्तप्रियं। ५६०
विद्या विभवान्विता तरुणिमा पारिप्लवत्वोज्झितो राजञ्च विकत्थं कमत्र चरमे काले किलेत्यन्यथा।
स तादृशोऽपि राजेन्द्रचन्द्रमाः स किलाभवत्। मात्सर्य्याविष्टवैरस्याद्दोषोल्कावर्षपोषणः।
औदार्य्यशौर्य्यधीधैर्य्यगुणतारुण्यमत्सरः। बभूव संख्यातीतानां मानप्राणहरो नृणां।
मानोद्यतस्य भूयोऽपि वाक्पारुष्यरूपाहतैः। लाघवं प्रत्युपालम्भैः पार्थिवोऽप्यनुभावितः।
प्रशस्तानां फणीन्द्राणामिव कोपोद्भवं विना। तेजोविस्फूर्जितं श्रेयं नहि नाम शरीरिणां। ५६५
विविधे भूतवर्गेऽस्मिन्न कश्चित् जिये। वपुर्न्नखरिवादि यस्य दोषैर्न्न दूषितं।
जातिः पक्षहतादपुः कपिलता शार्तं शिरःखण्डनं प्रश्रयत शुचिशीलता दिविगुणाचारमदुष्टं यशः।

विश्वस्त्रष्टुरिति प्रभूतविषयव्याप्तिस्पृशो दुस्सहा दोषा यत्र पुरस्तु तत्र कतमो निर्दोषतोत्सेकभूः ।
अविचार्य्येति भूपालः स चकारानुजीवनं । वंशचारिचदेहादिदोषोद्घोषेण सन्वहं ।
अन्योन्यदोषमुत्पाद्य संख्यातीता महाभटाः । युद्धश्रद्धालुना तेन द्वन्द्वयुद्धेषु घातिताः ।
मासार्द्धदिनमाहेन्द्रमहावसरेषु सः । निनाय योधान् सन्नद्धानन्योन्यं प्रधनैर्धनं ।
स नाभूदुत्सवः कश्चित्तदा यत्र नृपाङ्गने । भूमिर्न सिक्ता रक्तेन हाहाकारो नचोद्ययौ ।
नृत्यन्त इव निर्याता गृहेभ्यो वंशशोभिनः । बांधवैर्निन्यिरे योधा लूनाङ्गाः पार्थिवाङ्गनात् ।
स्निग्धश्यामकचाश्चारुश्मश्रूनाकल्पशोभिनः । हतान् वीक्ष्य भटान्राजा मुमुदे न च विव्यथे ।
नार्य्यो राजगृहं गत्वा प्रत्यायातेषु भर्तृषु । मेनिरे दिवसं लब्धमनास्था नित्यमन्यथा ।
भवेत्तद्यदहं कुर्यामित्यहंक्रियया वदन् । साचिव्यमथाहनवालैस्तैर्भृत्यैरजिग्रहत् ।
प्रवर्द्धमानांस्तानेव विदुषः कनुषाशयः । हृताधिकारान् विदधे वञ्चयन् विमानितान् ।
दंशकः कम्पनाधीशः मट्टद्वे तत्र सक्रुधि । विद्रुतो शिषलाटायां निपत्य निहतः खशैः ।
तेन स्ववर्द्धितो द्वाराधीश्वरो रक्ककाभिधः । हृताधिकारो विदधे विभूतिं वीक्ष्य भूयसीं ।
माणिक्यसैन्यपतिना द्वारेऽकस्मान्निवारिते । खिन्नेन विजयचेचे चक्रे छत्तपरिग्रहः ।
कम्पनाद्यधिकारस्थाः प्रवीरास्तिलकादयः । काकवंशादिमन्त्रिले न तत्कोपेन भाविताः ।
भोगसेनो निरनुग. चीणवासोऽभवत्ततः । तेनातिसेवाप्रीतेन राजस्थानाधिकारभाक् ।
यस्त्रेन्द्रदादशीयुद्धे मान्द्रसैन्योऽपि विद्रुतः । चुद्रवङ्गगचन्द्रोऽपि रौद्रमालोक्य विक्रमं ।
येऽपि मङ्काभिधानस्य पुत्त्राः सामान्यशस्त्रिणः । तान् मङ्कच्छुड्डव्यड्डासमन्त्रिणः समपादयत् ।
पुत्त्रौ विजयसिंहस्य तत्सेनात्यक्तदुर्दशौ । तिलको जनकश्चास्तामामात्यश्रेणिमध्यगौ ।
यसैलाभायवाणादिमुख्या द्वारादिनायकाः । कस्तान् समर्थः सङ्ख्यातुं तद्वित्तरत्नसम्पदः ।
द्विजाः प्रशस्तकलशादयः पूर्वे तदन्तरे । प्रापुर्बालद्रुमान्तस्थजीर्णानोकहविभ्रमं ।
कन्दर्पः क्ष्माभुजा दूतैः समानीतोऽपि नाददे । तस्यासहनतां वीक्ष्य प्रार्थितोऽप्यधिकारितां ।
आम्नानाचारसंलापव्यवहारादिमण्डले । नवमेवाभवत् सर्वं तस्मिन्नभिनवे नृपे ।
लक्ष्मीः कार्म्मणचूर्णाद्धवेश्यायावेशवर्त्तिनः । धीरानपि विधायेयं करोत्युन्मार्गवर्त्तिनः ।
सपिण्डानामपि व्यक्तशूलवीचणतत्परा । सततेव नरेन्द्रश्रीर्जातिखेदापकारिणी ।
समस्तसम्पत्पूर्णोऽपि यस्मात् सुस्सलभूपतिः । दध्यौ भ्रातुरवस्कन्दं राज्यापहरणोद्यतः ।
अकस्मादग्रहणेच्छेनमिव तं शीघ्रपातिनं । स्थानं वराहवार्त्ताख्यमुसंध्यायातमग्रजः ।
चिप्रकारी विनिर्गत्य तमप्राप्तपदं ततः । निपत्य सैन्यैर्नडुले सोऽपकारमकारयत् ।
विद्रुतस्यास्पदे तस्य नानोपकरणैस्तुतैः । ताम्बूलवेनाकूटैश्च सामिग्री समभाव्यत ।
हतकार्य्यः परावृत्त्यासावरूढोऽपि पार्थिवः । प्रत्याहन्तं तमग्रहणादन्वैद्युः क्रूरविक्रमं ।
गगचन्द्रस्तदादेशाद्गत्वा वहसमैनिकः । चक्रे सुस्सलभूपालपत्तनिर्दलनं ततः ।

असह्यैः सैास्सलैर्योधैराहवायामनिस्सदैः। क्लान्तिर्विमानोद्यानेषु सुनारीणाममुच्यत।
भर्तुः प्रसादस्यानृण्यं प्राणैर्युधि समर्पितैः। राजपुत्रौ गतौ तत्र सहदेवयुधिष्ठिरौ।
वराश्वान् सुस्सलानीकान् गगसान् प्राप विद्रुतान्। चक्रे भूरितुरङ्गस्य यैर्भूपस्यापि कौतुकं।
निविष्टकटकं तं स श्रुत्वा सेल्यपुराध्वना। कमराज्योन्मुखं यातुं द्रुतमन्वसरन्नृपः।
अन्विष्यमाणसरणिः प्रयत्नादग्रजन्मना। प्रविवेश दरद्देशं परिमेयपरिच्छदः।
दत्तमार्गं तस्य राजा डामरं लोष्टकाभिधं। स सेल्यपुरजं हत्वा नगरं प्राविशत्ततः।
तस्मिन् दूरं गते वैरे कलुषोऽपि स नाददे। भ्रातृखेदैरसंरम्भं ग्रहीतुं लोहरं गिरिं।
कल्हः कालिन्दराधीशो दौहित्री पुत्रवद्गृही। यामवर्द्धयत स्नेहादपुत्रः पितृवर्जितां।
राज्ञो विजयपालस्य सुतां सुस्सलभूपतिः। उपयेमे स तां श्रीमाननघां मेघमञ्जरीं।
तस्य प्रभावाधिष्ठानाच्छिबिरेऽपि न लोहरे। शक्तिरासीत् विरुद्धानामपि बाधाय वैरिणां।
धीरः सुस्सलदेवोऽपि मार्गैर्निर्गत्य दुर्गमैः। आसदद्भूरिभिर्मासैः लोर्व्यां दुर्गैरिवात्मना।
प्रशान्ते व्यसने तस्मिन् धीरस्योच्चलभूपतेः। अन्येऽपि व्यसनाभासा उत्पन्नध्वंसिनोऽभवन्।
भीमादेवः समुत्थाय भोजकलशदेवजं। साहायकार्थमानिन्ये दरद्राजं जगद्दलं।
सल्हाहर्षमहीभर्तुरवरुद्धात्मजोऽभवत्। भ्राता दर्शनपालस्य सञ्जपालस्तु तद्दलं।
नीतिज्ञेन ततो राज्ञा साध्वेव दरदीश्वरः। आक्षेपात् पारितप्रायात्प्रत्याहृत्य निजां भुवं।
सह्यस्तमन्वनाच्छन्नं भोजोऽविचलत्तमण्डलं। भेजे सुस्सलदेवभ्या सञ्जपालानुजीवितां।
गृहीतार्थेन भृत्येन निजेनैव प्रदर्शितः। भोजः क्षिप्रं नृपात्प्राप निग्रहं तस्करोचितं।
देवेश्वरात्मजः पित्थकोऽपि दैराज्यलालसः। डामराना श्रिते राज्ञि निर्याते व्यद्रवद्द्विषः।
विचारपरिहारेण धावन्तः सर्व्वतो जडाः। तिर्य्यञ्च इव हास्याय प्रसिद्धशरणा जनाः।
मल्लस्य रामलाख्योऽहं सूनुरासं दिगन्तरे। अर्द्धस्वदः कश्चिदेवं चक्रिकाचतुरो वदन्।
निन्ये प्रवृद्धिं व्यामूढैर्वेऽभिर्विश्वविप्रियैः। धनमानादिदानेन भूमिपैर्भूम्यनन्तरः।
ग्रीष्मे प्रविष्टः कश्मीरानेकाकी घर्मपीडितः। व्यधीयत छिन्ननासः परिज्ञाय नृपानुगैः।
कटके पर्य्यटन्नाशः स एष ददृशे पुनः। स्वजात्युचितभल्यादिविक्रयी सस्मितं जनैः।
मिथ्यैव नीतिकौटिल्यैः क्रियतेऽभ्युदयश्रमः। शक्यतेऽपरथा कर्त्तुं न दैवस्य मनीषितं।
शान्तापि ज्वलति क्वापि क्वचिद्दीप्तापि शाम्यति। दैववातवशाच्छक्तिः पुंसः कक्षाग्निसन्निभा।
पलायनेन नापयाति नियता भवितव्यता। देहिनां पुच्छसंलीना वह्निज्वालेव पक्षिणः।
नाच्छिद्यवक्त्रविषयस्य शरप्रयोगैर्न श्वभ्रपातरभसेन न चाभिचारैः।
मृत्युर्निहन्ति सुमपेतो विधुरैरकाण्डे भोक्तव्यभोगनियतोच्छ्वसितस्य जन्तोः।
भिक्षाचरः समादिष्टवधो जयमतीगृहात्। मल्लं मध्यभुवं निन्ये वधकैः पार्थिवाज्ञया।
पार्थ्व प्रसह्य निहितो वितस्तायां समीरणैः। क्षिप्तस्तटान्तरे स्यन्दमानश्चक्रे कृपालुना।

द्विजेनैकेन सम्प्राप्तश्रिया दुर्गतचेतनः। आसमत्यभिधानायाः ज्ञातिर्दिद्देति गौरवात्।
सा हि पुत्रीति हत्यायादत्तश्चतुरया तया। नीतो देशान्तरं गूढं वद्दधे दक्षिणापथे।
स कृतप्रत्यभिज्ञोऽथ पुत्रवन्नरवर्म्मणा। मालवेन्द्रेण शास्त्रास्त्रविद्याभ्यासमकार्य्यत।
अन्यदीयं घातयित्वा तत्तुल्यवयसं शिशुं। रक्षितो जयमत्येव स किलेत्यपरेऽब्रुवन्।
देशान्तरागताद्दूतात्तद्वार्त्तामुपलब्धवान्। अतएवाभवत्तस्यां भूभृद्विरचितादरः।
बहिरप्रतिभिन्दंस्तत्स धीरो मार्गवर्त्तिभिः। चक्रे तदप्रकाशाय सम्बन्धं पार्थिवैः समं।
ईर्ष्यामगोपयन्नार्य्याः शङ्कामाच्छादयन्निपोः। स्वयमन्याभिगम्यत्वं करोति हि जडो जनः।
भिक्षाचरे हते बालं कञ्चिदादाय तत्समं। तन्नाम्ना ख्यातिमनयद्दिद्देवेत्यपरेऽब्रुवन्।
तथैवैषोऽस्तु मिथ्या वा प्रतिष्ठां तां तथाप्तवान्। यथा लघुत्वमानेतुं न दैवेनाप्यशक्यत।
स्वप्नेन्द्रजालमायानामपि निर्व्विषया इमाः। कर्म्मैश्चित्यजनिताः काश्चिदाश्चर्य्यविप्रुषः।
सराजबीजी नाशाय विशां गूढं व्यवर्द्धत। पुरग्रामादिदाहाय कक्षान्तइव पावकः।
रोहत्यन्तिकभौमनि प्रतिविषा वीरुद्विषघ्नाशुदः काले प्राक्कुपद्रुताच्छमलिले मूर्च्छत्यगस्त्योदयः।
सर्गच्छेदविधिक्षमानुदयतो दृष्ट्वा किलोपद्रवान् सन्धत्ते प्रतिकारकल्पनमहो दीर्घावलोकी विधिः।
अजायत विपन्मज्जज्जगदुद्धरणक्षमः। तस्मिन्नेव क्षणे यस्मात्सुस्सलक्ष्मापतेः सुतः।
तज्जन्मकालादारभ्य सर्व्वतो जयमर्ज्जयन्। नामान्वर्थं नृपस्तस्य जयसिंह इति व्यधात्।
शास्तुः मन्त्रार्थसिद्धाख्यां यथा सर्व्वार्थसिद्धिभिः। तथा तस्याभिधान्वर्था नात्यजद्रूढिमन्दतां।
मुद्रां तां कुङ्कुमस्याङ्घ्रिस्तदीयस्याभ्युपागतां। विलोक्योच्चलदेवोऽभूद्विमन्युर्भ्रातरं प्रति।
यालस्यैवाङ्घ्रिमुद्रास्य वैरं पितृपितृव्ययोः। निवारयन्ती विदधे सुस्थितं मण्डलद्वयं।
स स्वर्गिणः पितुर्नाम्ना ततः सुकृतसिद्धये। चकारोच्चलभूपालः पैतृके स्थण्डिले मठं।
गोभूमिहेमवस्त्रान्नदाता तस्मिन्महोत्सवे। आश्चर्य्यकल्पवृक्षत्वं त्यागी सर्व्वार्थिनामगात्।
प्रसादैः प्रहितैस्तेन महार्घैः श्लाघ्यसम्पदा। महान्तोऽपि दिगन्तेषु पार्थिवा विस्मयं ययुः।
भर्त्तुः प्रसादाधिगतां श्रियं नेतुं परार्थतां। विहारं समठं देवी जयमत्यपि निर्ममे।
केषाञ्चित्पूर्व्वपुण्यानां विरहेण महीभुजः। सुताभीष्टाभिधानाभून्मठे नवमठाख्यया।
स्वलं स्मारमुद्दिश्य परस्मिन् स्थण्डिले पितुः। विहारोऽपि कृतस्तेन नोचितां ख्यातिमाययौ।
मत्योद्देशकपालिलं तस्याः कलयता किल। न निष्ठा स्वप्रतिष्ठासु सम्प्रपेदे व्ययस्थितिः।
कदाचित् क्रमराज्यस्थो दृष्टमग्निं स्वयंभुवं। ययौ वर्हराचकाख्यं गिरिग्रामं स भूपतिः।
तद्गम्वेनस्वरग्रामाध्वना यातुमचेष्टयन्। अकस्मादेत्य तत्रत्या धौरायणडामरक्षिणः।
प्रजिहीर्षुभिरप्याप्य तस्मिन्नत्यल्पसैनिके। न तैः प्रहृतमह्योजीवष्टम्भस्तम्भितायुधैः।
अथ हारितमार्गः स गहने गिरिगह्वरे। भ्रमन्नल्पानुयाय्येको चण्डामत्यवाहयन्।
उच्चचार क्षणे तस्मिन् स्कन्दावारेषु दारुणः। न चिरं प्रातर्दुर्वार्त्ता सर्व्वतः क्षोभकारिणी।

कटकाग्निः स्रुतात्यल्पा वात्येव गिरिगह्वरात्। सा दुष्प्रवृत्तिदीर्घत्वं पुरेऽरण्यइवासदत्।
नगराधिकृतस्तस्मिन् क्षणे च्छुड्डाभिधोऽभवत्। अस्थिणः कामदेवस्य कुल्योरङ्गादिसोदरः।
छला पुरचोभयान्तिं अक्षोधैस्य नृपास्पदे। प्रविश्य भ्रातृभिः सार्द्धं कार्य्यशेषमचिन्तयन्। २९०
नृपं कं कुर्म इत्येवं तान् विचिन्तयतोऽब्रवीत्। सङ्गाभिधोऽपि कायस्थः कुटुम्बिकुटिलाशयः।
यूयमेव सुहृदन्धुभृत्यवाऽऽत्यदुर्जयाः।
राज्यं कुरुत सम्प्राप्य राष्ट्रमेवमकण्टकं।
तेनैवमुक्तास्ते पापाजातराज्यस्पृहास्ततः। सिंहासनाधिरोहाय चिप्रमासन् समुद्यताः।
श्रीयशस्करदेवस्य वंश्यायत इति श्रुतिः। तदन्वयेऽभूत्सर्व्वेषां राज्योत्सुक्यप्रदायिनी।
अतएवाभजत्क्रोधं तेषां कुसुहृदुक्तिभिः। सा वासनान्तःसंलीना सदाचारानपेक्षिणां। २९५
कथं वः प्रतिभात्येषां सङ्गस्यापि कुपद्धतिः। भारिकस्य कुले जातो लवटस्य हि सोऽधमः।
क्षेमदेवाभिधानस्य पुत्त्रोऽप्यल्पनियोगिनः। क्रूराशयत्वमभजन्महासाहसिकोचितं।
चौर्य्येण स्वर्णभृङ्गारं हृतवान् भूपतेर्गृहात्। सम्भावितोऽपि गाम्भीर्य्यान्नाज्ञाय स किलेङ्गितैः।
सामिधेनुर्निरुष्णीषे विहसन्नखिलान् स्मयन्।
राजपुत्त्रइवात्यल्पं स त्रैलोक्यममन्यत।
तस्य चिन्ता काचिदासीत् सदा दोलायतोऽङ्गुलीः। या राज्यहेतुकूरेण फलेन समभाव्यत। ३००
तद्गिरानिजसङ्कल्पादपि ते राज्यलालसाः। नृपं जीवन्तमाकर्ण्य ततोऽभूवन् हतस्पृहाः।
न स्फुरन्न च संमीलन्नवा सुप्त इवानिशं।
तेषां चेतसि सङ्कल्पस्तदाप्रभृति सोऽभवत्।
असुखिराद्रेणाथ शनकैः पृथिवीभुजा। निन्यिरे मध्यमां वृत्तिं राजस्थानान्निवार्य्य ते।
प्रकृत्या रूढबाधाजा सर्व्वेषामेव सर्व्वदा। तेषामथकरोदन्तान्तरमर्मस्पृशः कथाः।
ते राज्ये हर्षभूभर्तुः पितरि प्रभयं गते। मातुलारूढमत्ताया विधवाया गृहेऽवसन्। ३०५
तैर्मेधावसक्तो नाम शस्त्रभृत्प्रातिवेश्मिकः। सुहृद्धृतोऽथ विश्वस्तो जननीजारशङ्कया।
असतीमपि किं मैते न्यस्यन्निति भूपतिः। विचार्य्य कोपात्तन्मातुर्नामच्छेदमकारयत्।
तां कथां स नृपस्तेषां परोक्षमुद्घोषयत्। क पुव्याच्छिन्ननासाया वदन्तित्यन्वियेव च।
इत्यहङ्काद्दिगन्धोशं छला कार्य्याण्यवारयत्। स कायस्थः छतान्तत्वं भजन् सङ्गमपि प्रभुः।
पीडितस्तेन रौद्रेण निजोऽथ गणनापतिः। कोशोत्पत्त्यपहर्त्तारं तं नृपाय न्यवेदयत्। ३१०
प्रवेशभागिकपदे हृते राज्ञा रुषा ततः। स क्रूरोरङ्गकुड्डादीन् प्रेरयत् पूर्व्वचिन्तिते।
जिघांसवस्ते नृपतिं प्रमङ्गप्रेक्षिणः परैः। समगंसत दुष्प्राशैरथ हर्षरथादिभिः।
प्रजिहीर्षुभिरर्थ्याशं पीतकोशैः समेत्य तैः। चतुष्पञ्चानि वर्षाणि नावाप्यवसरः क्वचित्।
पञ्चभिर्बहुधा भिन्नैर्भेदकालं विचिन्तितः। स भेदमगमग्मन्त्र मषितं लोकदुष्कृतः।
नवैतां कुरुते मध्यनृपो मर्यस्पृशं कथां। इति प्रत्येकमुक्ता ते विरागं पार्थिवेऽभजन्। ३१५
नैत्रः पार्श्वशतादि गूढैर्मभिरायधैः। मध्याह्ने पार्थिवोऽभ्यस्तनुमस्ते जिघांसुभिः।
यशसो विरुद्धं सोढुं यां प्रसादयितुं न कां। राजापि मन्दधीचेष्टा माक्प्राकृतमुपमन्नवत्।

स्वभाववैपरीत्येन नाशचिह्नेन स स्थिरां। जयमत्या महाप्रीतिं तदादाद्वत्सरद्वयं ।
रचां भिचाचरस्याऊर्निमित्तं तत्र केचन। केचित्तु विद्युत्सदृशीं प्रेम्णां तरलवृत्तितां ।
अथ वर्त्तुलम्भर्तुरात्मजा विम्बलाभिधा। कृतपाणिग्रहास्त्यागादाप्तभ्यं वसुधाभुजः।
सङ्ग्रामपाले नृपतौ तस्मिन्निर्भरं मृते। तत्सूनुः सोमपालाख्यः पितृराज्यं समादधे।
राज्यार्हमग्रजं बद्धा सोऽभ्यषिच्यत चाक्रिकैः। इति कोपान्नरेन्द्रोऽभूत् क्रुध्यन् राजपुरीं प्रति।
लक्ष्मीस्थैर्य्यप्रतिभुवः पुत्र्याः पाणिमजिग्रहत्। तं प्रेष्ठं सर्व्वलोकानां श्रेष्ठं सर्व्वक्षमाभुजां।
अर्थिचिन्तामणेस्तस्य प्रीणतो निखिलाः प्रजाः। नानाव्ययोर्जितो रेजे पश्चिमः स महोत्सवः।
याते जामातरि क्ष्माभृच्चक्रे निखिलतन्त्रिणः। निर्वृत्तीन् किमपि क्रुध्यन् दुश्रुत्तुं व्यसर्जयत्।
भोगसेनोऽपि भूपेन काले तस्मिन् समन्युना। निवारितो दारकार्य्यात्स्वैरः समपद्यत ।
विक्रान्तः स हि कार्य्यस्थो निर्जितः खिल डामरः। सुस्सलक्ष्मापतिं जेतुं प्रतस्थे लोहर पुरा।
वात्सन्यमिश्रवैरेण वारितोऽथ महीभुजा। तत्परीवादमकरोत्क्रोधावेत्य तत्र सः।
प्राविशयत् रङ्गकङ्कमुखान् स समया ततः। तमादिसुखदं वीरं तदा राज्ञा विमानितं।
विमानिताविशालिप्साः संहता हतवृत्तयः। न ते वहिष्कृतास्तेन यमराष्ट्रं जिगीषता।
तान् भोगसेनत्रिन्यस्तसद्भावान् कुटिलाशयः। सङ्घो निनिन्द वीरत्वात्तज्ञानन् सरलान्तरं।
ऊचे चाद्यैव हित्वापि प्राणान् व्यापद्यतां नृपः। भोगसेनोऽन्यथा भेदं कुर्य्यादगहनाशयः।
अन्यथाभूय सङ्घार्कं भोगसेने यदब्रवीत्। किञ्चिद्द्रोहेऽस्मि वक्तेति नृपतिं भेदलालसः।
स तु किं दक्षिणद्वारं तव दद्यामिति ब्रुवन्। दुश्रुत्तुपत्तप्रणयं निन्ये तमवमानयन्।
प्रबोधाधायिनो दैष्टि नियतिप्रणयी भवन्। तापात्ययाद्दनिद्रान्तइव जन्तुर्गतस्मृतिः।
तस्मिंश्च यामिका भूत्वा स्वस्मिन्वारे ततोऽविशन्। ते राजधानीं सन्नद्धैः स्वसैन्यैः सह संहताः।
यामिन्यां यं वयं हन्मस्तं हतेत्यभिधाय च। प्रावेशयन् न्यस्तचिह्नांश्चण्डालान्मण्डपान्तरं।
भुक्तोत्तरं स्थिते राज्ञि ते वाह्ये मण्डपे स्थिताः। सरोषनृहत्युक्ता सेवकोत्सारणं व्यधुः।
राजा च विच्छलविश्र यियासुर्मण्डपान्तरात्। दीपिकाभिःकृतालोको निर्ययौ मदनालयः
मध्यमं मण्डपं तस्मिन् प्राप्ते स्वल्पैः सहानुगैः। तत्यक्तं मण्डपं सङ्घो रुद्धान्यानरुणाज्जमान्।
अन्यैरप्यपिमे द्वारे निरुद्धे सर्व्वएव ते। जिघांसवः समुत्थाय नृपतिं पर्य्यवारयन्।
विक्रमिदभादेकेन खड्गमये निवेदुषा। तं द्विजोदीर्घभक्तेजाः ग्रस्त्या कृष्टकचोऽभिनत्।
ततः काञ्चनगौराणि तस्याङ्गान्यसिधेनवः। वहवः सुमेरुशृङ्गाणि महोरगाइवाविशन्।
स द्रोही द्रोहहत्युक्ता केशान् कृष्टान्विमोचयन्। क्रोडामस्त्या कर्या खड्गमुष्टिं दन्तैर्व्यपाटयत्।
सुजनाकरनामा हि भृत्यः कट्टारकं वहन्। तस्यान्तिकात्पलायिष्ट प्रहरत्सु विरोधिषु।
भतो वामोषितां लघ्वीं छुरिकां स चकर्ष तां। मुष्टावर्गमिता कोशात् सा कृच्छ्रेण विनिर्ययौ।

चक्रेऽथ सासिकवचोरङ्गः शोणितमंडितः। श्मशानाश्मनि वेतालइव सिंहासने पदं। १४५
तस्यावरोहतः सिंहासनाथाद्धुं पुरोयुधि। विक्रामन्तौ बन्धुभृत्यौ युद्धभूमिमभूषयन्।
तन्विणौ बट्टपट्टाख्यौ युद्धा तद्वाम्भवौ चिरं। योधाश्च कट्टसूर्य्याद्याः सिंहद्वारेऽपतन् हताः।
रणरङ्गनटोनृत्यन्निव राजा स्महाङ्गने। सखड्गखेटकोरङ्गः खंडयन्नहितान् बभौ।
दिशन् विजयसन्देहमहितानां चणे चणे। प्रहारैः सुवहून् भित्वा स चिरेणापतद्रणे।
राजद्रोहोचितं तस्य निहतस्यापि निग्रहं। वैशसत्यक्तमर्य्यादो गर्गः कोपादकारयत्। १५०
दिद्दामठान्तिकोव्यङ्ग. पौरैर्भस्माश्मवर्षिभिः। अवस्करप्रणालान्तर्मग्नवक्त्रो न्यपात्यत।
ते गुल्फदामभिः बद्धाः स्थाने स्थाने प्रभुद्रुहः। तत्वणं लोकथूत्कारपूजाकृत्योचितां दधुः।
पलाय्य ययुः क्वापि सङ्गहंसरथादय.। मरणाभ्यधिकां कश्चित्कालं सोढुं विपद्भयाम्।
दृष्ट्वं पराजितं गर्गं नष्टे तदनुजे विदन्। भोगसेनोऽथ तां वार्त्तामश्टणोत्प्लवोपमां।
व्यावृत्य प्रत्यवस्थातुकामः पश्यन् पलायिनः। योधान् स्वैः सहितः कैश्चित्ततः क्वापि भयादगात्। १५५
इत्थं निहतविध्वस्तनायका द्रोग्धृसंहतिः। स्वदोर्मात्रसहायेन गर्गचन्द्रेण सा कृता।
सत्वं साहससिद्धिश्च नेतिहासेष्वपि क्वचित्। अश्रोषन्तादृशं यादृक्तस्यास्ते स्म प्रतापिनः।
निशाम्प्रहरमक्षय्य राज्यं कृत्वा स लब्धवान्। द्रोहकृच्छ्रं खराजाख्यां गतिं कुकृतिनामगात्।
यशस्करकुले जन्म द्रोग्धृभिस्तैः प्रमाणितं। चणभङ्गुमभजद्राज्यं यस्माद्वर्णटदेववत्।
दावोद्दीपनकूटयन्त्रघटनैः सिंहादिसंहारिणो यान्त्याकस्मिकगण्डशैलपतनैरन्तं किरातावने।
एकेनैव ननु प्रधावति जनः सर्व्वोऽपि मृत्योः पथा हन्ता हन्ति हतोऽयमेष तु वृथा कालस्य भेदग्रहः। १६०
स्वाहाहे ललनौघमङ्गलरवो यैर्हर्षुलैः श्रूयते दीनैस्तैर्दयिताविलाप उदयन्नाकर्ण्यते तु चणे।
योऽपि प्रन्नहितं प्रद्धयति परः स्वं प्रन्तमन्ते मुदोद्वृत्तं सोऽप्यवलोकयत्यहह धिङ्मोहोऽयमान्ध्यावहः।
सायं विचिन्तितो रात्रौ फलितोऽन्यत्र वासरे। दुर्व्विपाकप्रदाताभूद्द्रोग्धृणां साहसद्रुमः।
अथ सिंहासनस्यान्तः काष्ठान्ते त्यक्तविग्रहः। गर्गः प्रचालितामर्षश्चक्रन्द स्वामिनं चिरं।
तस्मिन् रुदति सर्व्वोऽपि पौरलोकोभयोज्झितः। संप्राप्तावसरो भूपं व्यज्ञापोल्लोकवत्सलं।
कारुण्योत्पत्तये दत्वा कोशं जीवितकामया। जयमत्या तदावादि गर्गः कपटशीलया। १६५
कुरु मे संविदं भ्रातरिति सत्वभयस्तु सः। तत्प्रक्रियावचो ज्ञात्वा चिन्तितस्याप्यकल्पयत्।
चिकुरनिचये यत्कौटिल्यं विलोचनयोश्च या। तरलतरता यत्काठिन्यन्तथा कुचकुम्भयोः।
वसति हृदि तद्यासां पिण्डीभवन्ननु ता इमा। गहनहृदया विज्ञायन्ते न कैश्चन योषितः।
दौःशील्यमप्याचरन्त्यो घातयन्त्योऽपि वल्लभान्। हेलया मविश्रन्त्यग्निं न स्त्रीषु प्रत्ययः क्वचित्।
युग्याधिरूढा सा यान्ती यावन्मार्गे व्यलम्बत। श्रयतो विम्लना तावन्निर्गत्य प्राविशच्चितां।
अथ तस्याश्चितारोहं कुर्व्वन्त्या भूषणार्थिभिः। लुण्ठ्कैर्लुप्यमानाया व्यया गात्रेषु पश्यते। १७०
सच्छत्रचामरे राज्ञो दह्यमाने विलोकयन्। लोकः सर्व्वोऽपि साक्रन्दो दग्धदृष्टिरिवाभवत्।

औचित्यं तेन च तदा निन्येऽत्यन्तपवित्रतां । सर्वैर्यदर्थ्यमानोऽपि नोपाविशन्नृपासने ।
सुतमुच्चलदेवस्य बालमङ्के निधित्सता । राज्येऽभिषेक्तुं ते केचित्तेनान्विष्यन्त यत्नतः ।
लोको येष्वद्य केषाञ्चित्तत्त्वमालोक्य सस्मितः । भिक्षामप्यटितुं जाने नैष जानाति योग्यतां ।
राज्ञ्यां श्वेताभिधानायां मल्लराजस्य ये सुताः । सल्हणाद्यास्त्रयोऽभूवन् मध्यमे प्राक् क्षयं गते ।
हन्तुं ज्येष्ठकनिष्ठौ द्वौ शेषौ सल्हणलोठनौ । चन्निष्टौ शंखराजेन भयात्स्वमठङ्गतौ ।
निर्लज्जैर्निहतान् द्रोग्धॄन् विज्ञाय मिलितैः पुनः । तत्र्यधारोहमचिरैरानीतः शतचाक्रिकैः ।
दृष्ट्वा राज्यार्हमप्राप्यं कश्चिज्ज्यायांस्तयोस्तदा । गर्गेण राज्ये संरम्भादभ्यषिच्यत सल्हणः ।
हा धिक् चतुर्णां यामानामन्तरेण पतित्रयी । अहस्त्रियामे तत्रासीद्दृश्या या पुरुषायुषैः ।
ये सायमुच्चलनृपं प्राह्णे रड्डं सिषेविरे । मध्याह्ने सल्हणं प्रापुर्दुष्टास्ते राजसेवकाः ।
अथ लोहरकोट्टास्थः सार्द्धेऽह्नि गलिते नृपः । सुस्सलो भ्रातृमरणं श्रुत्वा ह्रान्तमानसः ।
गर्गेण प्रहितो दूतः सक्रन्दं खं क्षिपन् क्षितौ । ततस्तं वीतसन्देहं चकारार्त्तप्रलापिनं ।
आद्यात्क्षणवृत्तान्तपर्य्यासां नाशृणोत् कथां । गर्गदूताद्भ्रातृवधं स्वस्याह्वानञ्च केवलं ।
अश्रद्दधानस्तं शीघ्रमरिच्छेदं सुदुष्करं । तदाह्वानाय गर्गीयं प्राहिणोत्तत्स्खलन् गृहात् ।
आक्रन्दमुखरो भूत्वा तां रात्रिमरुणोदये । कश्मीराभिमुखो यात्रामसम्भृतबलोऽप्यधात् ।
अन्येद्युः गर्गदूतस्तं पथि संगदितोऽभ्यधात् । कृत्स्नमावेद्य वृत्तान्तं नागन्तव्यमिति ध्रुवं ।
क्षिप्रं हतेषु द्रोहेषु स्वयंसन्निहितेऽनुजः । कृतस्तु सल्हणो राजा कृत्यमागमनेन किं ।
श्रुत्वेति गर्गसन्देशं कोपादसहनो नृपः । अप्रयाणैषिणो भृत्यान् विहस्यैवं वचोऽब्रवीत् ।
नास्माकं पैतृकं राज्यं यदि रिक्थहरोऽनुजः । मज्ज्यायसा मया चैतद्भुजाभ्यामर्जितं पुनः ।
राज्यं स्वीकुर्व्वतोरन्यो नादाताभूत्तदावयोः । येनाहृतमिदं पूर्व्वं स क्रमः क गतोऽध्वनः ।
इत्युक्त्वा विरतैरेव बहुशासीत्प्रयाणकैः । दूतांश्च पार्श्वं गर्गस्य स्तोकत्वे प्राहिणोदहन् ।
स काष्ठवाटं सम्प्राप सल्हणस्य हितैषिणा । निर्गत्य गर्गचन्द्रेण चक्रे क्रम्पपुरे पदं ।
प्रवृत्तायां विभावर्य्यां दूतैः कृतगतागतैः । तस्याज्ञोत्तनसामापि गर्गो द्रोग्धाभ्यधीयत ।
कार्य्यमध्यगतो राजा तथापि प्राहिणोत्तदा । धात्रेयं भ्रातरं गर्गाभ्यर्णे हितहिताभिधं ।
भोगसेनः क्षणे तस्मिन्नायसैव देवमोहितः । खाश्यकान् विच्छनजात्मध्येकृत्य नृपान्तिकं ।
सोऽभ्यर्णे कर्णभूत्याख्यमश्वारोहं महीपतेः । विसृज्य गर्गं जेष्यामीत्युक्त्वाभूल्लोभमोहितः ।
बालापेक्षामपि त्यक्त्वा हन्तुं भ्रातृद्रुहं स तं । योऽयं प्रसङ्गमन्विष्यन्न्यग्रे लोकैरसज्जनः ।
यत्र भ्रातृद्रुहः पार्श्वे स स्वमाश्रोयसे कथं । गर्गोऽपि तमुपालेभे दूतैरित्यादि संदिशन् ।
स तु मार्गात्पलाय्यायन्नस्मीति विलम्बकृत् । दत्तास्कन्दः क्षपापाये तं सानुगमघातयत् ।
सम्पन्नं कर्णभूतिर्वीरहत्या व्यरोचत । तस्य द्वैमातुरो भ्राता तेजःसेनोऽप्यनूनया।
तेजःसेनस्तु सम्प्राप्य नृपादेशाद्विवेश्यत । सरितो सत्रराज्यस्य तद्गोऽश्वपतेरपि।

अवष्टम्भेन भूपोऽभूत्त्रियहावग्रहचमः। नयेनासितुमखस्थं तावदामीत्तु तद्बलं।
पुरोगोऽपि हतः पश्चाद्योऽतीतेऽह्नि महीभुजा। स सङ्घपालस्तत्पार्श्वमयादायाययौ हयान्।
तेष्वायातेष्ववष्टम्भं यातं किञ्चिच तद्बलं। प्राप्तश्च गर्गसेनानीस्तुराप्योऽनल्पसैनिकः।
दुधुवून् वीच्य तानाप्तैर्नृपोऽश्वमधिरोपित.। उत्क्षिप्तकण्ठधोर्ध्वमं छत्त्राच परिधापितः। ५०५
गगणं शलभच्छन्नमिव कुर्वन्नथापतत्। शराशारोरिपोर्वल्गन् सर्वतोऽच्छिन्नसन्ततिः।
ओंकारं शरभूत्कारैः कृत्वा द्रोहस्य दुःसहाः। प्राहरन्वाजकटके सर्वाङ्गसर्वायुधैर्द्विषः।
हतविचत्तविध्वस्तसैन्य. साहसिको नृपः। वेगादपससारैको मध्यान्निर्गत्य वैरिणां।
गर्जेत्क्षिन्खुरयाश्रान्तनत्युन्नतिरलङ्घयत। सवाजिना तेन सेतुर्नालङ्घ न. पक्षिणामपि।
सङ्घपालादयोद्विजाः सेकुस्तमनुवर्त्तितुं। घृष्टमाना निरुन्धन्त स्थाने स्थानेऽवरोधिनः। ५१०
वीरानकाभिधन्त्वौरः स खशानान्निवेशनं। विंशद्विंशैः समं भृत्यै. प्रविष्टस्तत्यजेऽरिभिः।
निरम्बरैर्निराहारैस्तिष्ठन् कतिपयैः समं। स तत्र चित्रमाक्रम्य निर्भयाद्दण्डयन् खशान्।
क्रमेण च हिमापातदुर्लङ्घ्याध्वनि सङ्कटे। अविपन्नोभाग्ययोगात्प्रययौ लोहरम्पुन.।
पदे पदे प्राप्तमृत्युरायुःशेषेण रक्षित.। तथाप्यासील्स कश्मीरप्राप्तिमेव विचिन्तयन्।
वराकं द्वारसेलग्नाङ्गर्गोहितहितं क्रुधा। विरुद्धधीर्वितस्तायां वद्ध्वापाण्डुमचिरत्। ५१५
तस्मिन् प्रचिप्यमाणेऽप्सु चेमाख्यः स्वङ्गिपन् पुरः। दासोऽस्याचे पदारोहमथ.पातेऽपि लब्धवान्।
राज्यप्रदः घतारिश्च गर्गः प्राप्तोऽन्तिकन्ततः। प्राप सल्हणराजस्य सविश्रम्भधीमतां।
स भूभृत्मन्त्रिविक्रान्तिहीनो राज्यमवाप्तवान्। चक्रभ्रममिवापश्यत्सर्वतो भ्रान्तमानुष.।
न मन्त्रो न च विक्रान्तिर्न कौटिल्यं नचार्जवं। न दातृता न लुब्धत्वं तस्योद्रिक्तं किमप्यभूत्।
तद्राज्ये राजधान्यन्तर्मध्याह्नेऽपि मलिम्लुचः। लोकं मुमुषुरन्याध्वसञ्चारस्य कथैव का। ५२०
पङ्गुरप्यङ्गनाकान्तं कान्त्या यत्रात्यजाहयत्। पुमानप्यभवत्तत्र साध्वसाध्वन्तधीरसौ।
यामथ सल्हणोऽन्वियुर्भेजे तां लोठन श्रियं। साधारण्यं गतौ राज्यभोगहत्यमवत्तयोः।
पुरुषान्तरविज्ञानविहीनस्य प्रमाद्यतः। सर्वोऽपि तस्य तन्त्रश्रैर्व्यवहारो व्यहस्यत।
अप्रयोरोठनस्तोज सूर्यस्तेन व्यधीयत। द्वारे तापसगोष्ठीषु योग्यो विक्रमनिष्ठुरे।
यः सकलभयोच्छेदमङ्गीकुर्वंस्तदागमे। स्वमन्त्रजपजापेन सिद्धिं मन्त्रवणेऽभ्यधात्। ५२५
जिह्मो गर्गाभ्रया राजा तदप्रियमपातयत्। वहाम्भसं वितस्तायां विम्बं नीलाश्वडामरं।
राजानुग्राहको गर्गस्तांस्तान् व्यापादयन् रिपून्। हावाहां डामरान् भूरीन् दत्तभोज्यानघातयत्।
राज्यकिञ्चित्करे गर्गात्यत्तजीवितमृत्यवः। वहिर्याभ्यन्तरे चासन्नन्ये वा पृथवोऽपि वा।
कदाचिल्लोहराद्दुर्गं प्रविष्टेऽथ नृपान्तिकं। चुक्षोभ नगरे लोकः सर्व एव भयाकुलः।
तदा चुद्धरदालो प्रसूतान्यारोप्य नौषु यत्। क्रुध्यन् गर्गोऽयमायातो हन्तुं सर्वान्नृपाश्रितान्। ५३०
गर्भिणीगर्भपातिन्या तादृग्या भयवार्त्तया। द्विवाप्यहान्यनभावि जनैर्ज्वरद्रवाखिन्नै.।

ततस्तिलकसिंहाद्यैरुद्रेकाट्टागदीयत। अनवेक्ष्य नृपादेशमास्कन्दो गर्गमन्दिरे।
देशस्यात्युल्बणः क्षत्त्रो धावति स्म धृतायुधः। सत्यगृहीत्तानखिलान् गर्गचन्द्रस्तु विह्वलः।
निर्लज्जा दिल्हभट्टारलक्ककाद्यास्तुरङ्गमैः। भ्राम्यन्त स्तत्रादृश्यन्त गर्गावसथवीथिषु।
निषिषेध न तान्राजा प्रत्युतास्कन्ददायिनां। लोठनं कुण्ठशक्तीनान्तेषां स्फूर्त्यै व्यसर्जयत्।
तेनापि योधैर्गर्गस्य रुद्धमार्गेण मन्दिरं। न रुद्धं नापि निर्दग्धुं पारितं दत्तवह्निना।
धानुष्कैश्चवीनाम मठोधीलोठिकामठे। अबाधतैव नाराचैस्तद्योधान् घातयन् परं।
प्रकाशेन समं राजलोके विरलतां गते। सायं सानुचरो गर्गो हयारूढो विनिर्ययौ।
समरैरप्रतिहतो निनाय लोहरं व्रजन्। बह्वोजःस्वैर्यमस्वस्थमासीनं त्रिपुरेश्वरे।
तापसेन किमेतेनेत्युक्त्वान्यैर्मुमोच तं। तं सुस्सलेऽपि विधुरे नृपतिं नोदपाटयत्।
क्षणे क्षणेऽभवद्देशस्ततःप्रभृति सर्वतः। गर्गागमनसन्त्रस्तैरार्गलितमन्दिरः।
अथार्त्तस्य महीभर्त्तुर्गर्गसन्धानमिच्छतः। महत्तमः सहेलोऽभ्रश्लोहरे दूत्यमाचरन्।
तेनाङ्गीकारितो गर्गः कथंचित्कन्यकार्पणं। भृत्यास्तु तेन सम्बन्धं नैच्छन् भूतस्य भूपतेः।
ततः सुस्सलदेवेन सह सन्धिं निबद्धवान्। पश्चात्सम्प्रार्थ्यमानोऽपि सम्बन्धं न व्यधत्त सः।
मण्डले विग्रहाकूतमेवं याते नृपोऽब्रवीत्। सङ्कं हंसरथं नोनरथश्चासादितांस्वरैः।
तानग्निकणकच्छ्यादिप्रवेशैरिह दुर्जनः। अत्यक्तानसुभिर्घोरामवस्थामन्वभावत्।
भोगसेनाङ्गनामक्षामनुमेने स्वयं नृपः। अनुसर्तुं पतिं छन्नं वसन्तीं साधु तद्व्रतात्।
तादृग्दृष्ट्वापि वैक्लव्यं शुद्धितेन तदन्तरे। प्रमिम्ये दिल्हभट्टारो रसदानेन भूभुजा।
न राजयोगी नोचण्डविक्रमो वा बभूव सः। प्रमितो गूढदण्डेन यत्तया तेन पापिना।
तं या निनिन्दानिष्पक्षपातं तत्वसुस्सदा। तस्या वह्निप्रवेशेन सिद्धं मानवतीमतं।
सोऽन्योऽपि राज्यकान्तोऽभूदेवमातङ्कदुःसहः। दीर्घचपादृश्यमानदीर्घदुःस्वप्नसन्निभः।
काश्चित् सुस्सलो गर्गादङ्गमन्त्रिरपि भ्रमन्। न्ययुङ्क्त सञ्चपार्श्वं काश्मीरैस्मुखभाक्ततः।
दारैश्च सह दत्तार्थो लक्ष्मकः सल्हभूभुजा। सराहमूलं सम्प्राप कथञ्चिन्मस्तितं भजन्।
गर्गः कारवस्कन्दं पयादभ्येत्य मासयन्। सराहमूलेन समं तस्य सैन्यमनुष्ठयत्।
विद्रुतो स तु सद्योऽपि दंतेय परिचय्यजे। अदिग्धैर्नदिनी दिग्धैर्देहस्तदारम्भं गणः।
नायकैर्गमिते. शुद्धहस्तैः सर्वतोऽभवत्। पतितैश्चम्पचूडाद्यैर्भूषिता मौक्तिकैरिव।
सागच्छता क्षितभीति सप्तपादेन लक्ष्मकः। निराश्रयः सम्प्रपेदे पार्श्वं सुस्सलभूपतेः।
सोऽप भूपलाप्रपाने दूरं शान्तरिपौ गते। आजगामाशिकं माप्तैः सेवितः पौरडामरैः।
धर्म्ये मत्र विधाय्गानि सार्द्धं सुस्सलभूभुजा। रत्युक्ता सस्हवं मायापादभ्यधं सहेलकः।
सर्वहिताद्गुह्यं पौरेदायकैरिव मादिदं। प्रविभिमिषव जवथ्यं सर्वं एवोषमागुनं।
गौढ सरिणी इद्धाभिधानाया मदन्मिकं। फन्दकाह्वयमादाय परिणेतुमुपाययौ।

उपयेमे स्वयं राजा राजलक्ष्म्यभिधां तयोः । गुणलेखां सुस्सलेन स्वीचक्रे तद्यवीयसी ।
मल्हणे सानुजेऽभ्येत्य सज्जपालेन वेष्टिते । राजापि राजसद्मः सिंहद्वारं समासदत् ।
साचाद्विरोधिभृत्येन द्वारमेकेन पातितं । अभ्यन्वाध्यं तमप्राप्य साङ्गं वैरिमनोरथैः ।
ससैन्ये गलितद्वारराजवेश्मस्थिते रिपौ । गर्गास्कन्दविशङ्काशीचकितं सोऽस्खलं वचं ।
गर्गे वितीर्णकन्येऽपि राजसैन्यमविश्वसत् । तस्थौ स्वातन्त्र्यमित्येव त्वणस्पन्देऽपि शङ्कितं ।
अस्ताभिलाषिणि दिने तादृक्कासहते बले । स्नेहाददहति च्छापे दुर्भेदौकस्थितान्रिपून् ।
प्रविश्य ग्रामनिर्भुग्नकवाटेन तमोरिणा । द्वारं विहत्याङ्गनस्थैः सज्जपालोऽप्यहीरणं ।
तस्य निश्चित्य पातङ्गी वृत्तिं भूयस्तरिमजे । अनुप्रवेशं विदधे पदा तिलककाभिधः ।
दरदानयने काष्ठवाटसङ्कटविक्रमे । यस्तस्य सदृशो योधः प्रतिबिम्ब इवाभवत् ।
स केशवस्य स मठाधीशस्तमनुसस्तुः । शैनेयमारुतो पार्थमिव प्रार्थितसैन्धवं ।
निर्गत्य मण्डपाश्मप्रहारैस्तैः कथञ्चन । विहते प्राङ्गनद्वारे धीरो राजाविशन् स्वयं ।
निर्विभागे वर्तमाने सङ्गरे सैन्ययोर्द्वयोः । प्राङ्गने प्रमयं प्रापुर्भूयांसस्तत्र शस्त्रिणः ।
सचिवः सल्हराजस्य पतंगग्रामजो द्विजः । आज्ञो प्रापाज्जको नाम स्वस्त्रीसम्भोगभागितां ।
कायस्थेनापि रुद्रेण लब्धा गञ्जाधिकारिता । स्वामिप्रसादः साफल्यं निन्ये त्यक्त्वा तनुं रणे ।
सायं वनस्पतिर्लीने. खगैर्व्याचालितो यथा । धाम्नि प्रविष्टे मोड्डोननि शब्दविहगोऽभवत ।
आयोधनोर्वी वाचाला चक्रे चित्रार्पितेव सा । तया सुस्सलभूपेन तुरङ्गस्थेन तर्जिता ।
अनारूढेऽङ्गनान्त.स्थे तस्मिन् सिंहासने ध्वनिः । सुस्सलो जयनीयेत ढक्कावाद्यश्च शुश्रुवे ।
मल्लराजस्तदे तादृक्सान्यस्याप्युदपद्यत । अगातां तत्र वैक्लव्यं यादृक् मल्हणलोठनौ ।
आबद्धकवचावश्वारूढावालिङ्ग्य सुस्सलः । बालौ युवामिति वदन् धूर्त्तोऽत्याजयदायुधं ।
आदिश्य मण्डपेऽन्यस्मिन् बद्धयोश्च स्थितिं तयोः । प्राप्तराज्यस्ततो राजा विवेशास्थानमण्डपं ।
व्यहेनायत्पुरोमासान् भुक्तराज्य बबन्ध तं । सितस्य सोऽष्टाशीतेऽब्दे राधस्य त्रितयेऽहनि ।
तेन सिंहासने क्रान्ते भास्वतेव नभस्तले । चणादेवाखिलो लोकः चोभनभ्रैरिवात्यजत् ।
विकोशशस्त्र.सन्दोहावेचणचोभतः सदा । व्याधलोके व्यात्तवक्त्रो मृगराजइवाभवत् ।
भ्रातृद्रुहः कुलच्छेदमन्विशान्विय कुर्व्वता । न तेन नीतिनिष्ठेन रिपवोऽप्यवगोपिताः ।
जनस्य वीच्य दौर्जन्यमधृष्टाकारतां वहन् । स कार्य्यापेचयाऽप्यासीन्न काप्याहितमार्दवः ।
वस्तुतस्त्वार्द्रहृदयः क्रूरन्दमयितुं जनं । अवाप्तवं तद्गोमत्वाद्भित्तिं व्यालइवादधे ।
कालवित्स मतत्यागी प्रगल्भः प्रतिभाववान् । इङ्गितज्ञो दीर्घदृष्टिः सदृवान्यो न कोऽप्यभूत् ।
अधिकः कोऽपि कोऽप्यूनः कोऽपि तस्य समोगुणः । दोषोऽस्य वा पूर्वजस्य स्वभावैर्योऽप्यदृश्यत ।
अभ्यकारि समानेऽपि कोऽपि तत्पूर्व्वजन्मनः । वैपिन विषमातङ्कं तदीयेन तु मारधं ।
न बभूव स वेदादौ मात्सर्योऽनुचितं पुनः । स्थितिभिरभपात्तेहे नात्मेरुमनुजीविंसा ।

भूयः प्रविष्टः कश्मीरान् सेव्यः सर्व्वातिशायिभिः । गर्गं प्रसादैरनयत्प्रवृद्धिमधिकाधिकैः ।
श्रीमार्कप्रतिमे तस्मिन् ह्लादिनावनुचक्रतुः । महादेवी कुमारश्च द्रुमच्छायावनानिलौ ।
डामरौ देवसरसोद्भवौ विजयगोत्रिणौ । हृदृट्टिकस्तथा सुज्जटिको वेलां प्रचक्रतुः ।
सानाथ्यकाङ्क्षिणौ पार्थिवेऽस्य प्रविशतः पुरः । लोकपुण्ये तस्थतुस्तौ क्रन्दद्भिः स्वानुगैः समं ११२५
विजये गर्गसम्बन्धात्सदा चिण्णौ महीपतिः । सदाचारं परित्यज्य वेत्त्रिभिस्तावताडयत् ।
तौ मानिनश्च तद्भृत्याः कष्टशस्त्रास्ततोऽव्यधुः । साहसं सुमहत्सैन्ये प्रहरन्तौ महीपतेः ।
श्वपाके भोगदेवाख्ये कृपाण्या प्राहरन्नृपं । धीरो गज्जकनामा च करवालेन पृष्ठतः ।
सावशेषतया भूपस्यायुषोमोघतां ययुः । द्विषत्प्रहृतयोवाहतुरगो तु व्यपद्यत ।
नृपस्यान्तरयैद्दरिप्रहृतिं वाणवंशजः । निहतस्तत्र शृङ्गारसिंहः सादी समस्तकः । ११३०
सैनिकैस्तैर्हृदृट्टिकभोगदेवादयो हताः । सुज्जटिकस्तु निस्तीर्णो हेतुभाविनि विप्लवे ।
शूले व्यापादिता गज्जकादयो द्रोहसंश्रिताः । सन्देहितास्तु रित्यासीद्राजा गर्गानुकूल्यभाक् ।
न भवेत्परिपातेऽपि प्रमयः समयं विना । प्रस्तनमयस्तन् हन्ति जन्तोः प्राप्तावधेः पुनः ।
ज्वालाभिरौर्व्वदहनस्य पयोधिमध्ये न म्लानतामपि हि यानि मुहुः स्पृशन्ति ।
तान्येव यान्ति विलयं किल मौक्तिकानि कान्ताकुचेषु युवभावभुवोष्मणापि ।
प्राक्सेवामपि विस्मृत्य परोत्सेकासहिष्णुना । मण्डलात्सज्जपालाद्या निरावास्यन्त भूभुजा । ११३५
सम्बन्धी कादंवश्यानां यशोराजाभिधस्ततः । सहस्रमङ्गलाभ्यर्णं राज्ञा निर्वासितो ययौ ।
तमन्यांश्च विनिर्य्यातान् देशाद्भ्रष्टसमृद्धिमान् । ऐच्छल्लब्धप्रतिष्ठः स राज्ञः प्रत्यभियोगिनां ।
तत्पुत्रः कान्दमार्गेण विविक्षु क्ष्मापसैनिकैः । यशोराजे हते प्रासः प्रत्यावृत्य ययौ भयात् ।
अथान्येष्वपि भृत्येषु राज्ञा निर्व्वासितेषु सः । मिलितेषु प्रथां यावत् यथावदुपलब्धवान् ।
उपरागे नवे सञ्जे पर्व्वतीयास्त्रयोनृपाः । चाम्पेया आसटोवज्रधरो वल्लापुराधिपः । ११४०
राजा सहजपालश्च वर्तुलानामधीश्वरः । युवराजौ त्रिगर्तार्वल्लापुरनरेन्द्रयोः ।
कद्ध आनन्दराजश्च दश्च सङ्घटिताः क्वचित् । प्रस्थानार्थं कलपणाः कुरुक्षेत्रमुपागताः ।
आसमत्याहतं तावदभ्येत्य नरवर्मणः । प्रापुर्भिक्षा चरन्तेन दत्तपाथेयकाञ्चनं ।
कुलकं ॥ स आसटेन सम्बन्धिस्नेहादिहितसत्कृतिः । नीतोऽन्येश्च प्रथां भूपैर्वल्लापुरनयायनैः ।
देशादिनिर्गतैर्व्विश्वप्रमुखैर्वर्द्धितप्रथे । तस्मिन् प्राप्ते सहस्रस्य प्रतिष्ठा लघुतामगात् । ११४५
आश्रेयं हर्षदेवस्य क एते राज्य इत्यय । उक्त्वा त्यक्त्वा सहसादींस्तमेवाशिश्रियज्जनाः ।
कृतघ्नभावमुत्सृज्य सम्बन्धिस्नेहमोहितः । दर्पको राजपुत्रस्तं राज्ञा निर्व्वासितोऽप्यगात् ।
पुत्रः कुमारपालस्य तत्पितुर्भ्रातुरस्य सः । वृद्धिं द्रत्तदेवेन पुरा निन्ये हि पुत्रवत् ।
प्रेरितो युवराजेन आसटेन च कन्यकः । वल्लापुरेश प्रदधौ भिक्षवेऽस्य सपत्नकः ।
तद्देशठक्कुरो भूपान् सङ्घट्याखिलांस्ततः । तमैच्छद्व्यपालाख्यः कर्तुं पैतामहे पदे । ११५०

तां वार्त्तां श्रुतवान्राजा सोऽवदासीत्समाकुलः। गयपालो हतस्तावद्दामरैश्छद्मना वली।
पत्नके तान्प्रतिगतो योद्धुं प्रधनमध्यगः। भिक्षाचरचमूधुर्य्यो दर्पकोऽपि व्यपद्यत।
तेन प्रधननाशेन ततो भिक्षाचरो ययौ। अकिञ्चित्करतां मेघदूवावग्रहवारितः।
आसमत्यां प्रयातायां चणे पाथेयकाञ्चने। श्वशुरोऽपि ययौ तस्य शनैर्मन्दोपचारितां।
चतुःपञ्चानि वर्षाणि तिष्ठन् जासटमन्दिरे। ग्रासाच्छादनमात्रं स ततं क्लेशात्समासदत्।
ठक्कुरो देवपालोऽथ चन्द्रभागातटाश्रयः। दत्वा सुतां धम्मिकाख्यां तं निनाय निजान्तिकं।
प्राप्तसौख्योऽवसंस्तत्र कञ्चित्कालं भयोज्झितः। स राजवीजो दैन्येन शैशवेन च तत्यजे।
तदन्तरे साहसिकः प्रासः साहसिरुन्मदः। गतागतानि कुर्व्वाणः संरम्भमनयन्नृपं।
स सिद्धपथमार्गेण विविक्षुर्विशेषोन्मुख। तैरेव भृत्यैर्भूभर्तुर्व्वद्धा पापैः समर्पितः।
तन्नोत्पिञ्जे परं सत्वं सज्जपालस्य पप्रथे। खिन्नोऽपि द्रोहविमुखो यस्य देशान्तरं ययौ।
तस्मिन् शूरे कुलीने च किं वाच्यं स दिगन्तरे। शौर्य्येण च यशोराजः पप्रथे यत्तदद्भुतं।
अथ राजा निवासाद्यान्सहोलादीन्महत्तमान्। सर्व्वाधिकारे विदधे कायस्थं गौरकाभिधं।
स तापसस्य सम्बन्धी कथञ्चिद्विजयेश्वरे। सेवया लोहरस्थस्य तस्य वाल्लभ्यमाययौ।
शमिते पूर्व्वकायस्थवर्गे तेन ततः क्रमात्। नीतः सर्व्वाधिकारित्वं सोऽन्यामेव स्थितिं व्यधात्।
अशेषकर्म्मस्थानेभ्यो वृत्तिं राजोपजीविनां। निर्व्वादकोशे भरणं तेनाकार्य्यनिशं प्रभोः।
सद्दिव्या पापिनस्तस्य नाज्ञायि क्रूरता जनैः। मधुरिम्णो विषस्येव शक्तिः प्राणापहारिणी।
न्यधात्कृपणवित्तं स पूर्व्वसञ्चितनाशकृत्। विशुद्धे नृपतेः कोशे हिमे हिममिवाम्बुदः।
कोशः कृपणवित्तेन प्रविष्टेन हि दूषितः। भुज्यते भूमिपालानां तस्करैरथवारिभिः।
लोभाभ्यासेन भूपोऽपि सञ्चितं कोशमन्वहं। आसीत्स लोहरगिरौ संदिहानस्स्वसंपदः।
गौरकार्थिभिर्भट्टपद्मसाद्यैर्नियोगिभिः। विधीयते स्म नि सारा महोत्पातैरिव चितिः।
उद्यन्नापतेः शान्ते मूर्द्धारूढशिलापदे। अथासंस्त पुनर्लोकं व्याधा इव नियोगिनः।
प्रशस्तकलशस्यान्ते तद्भ्रातृतनयः परं। कायस्थकनकोनाम श्लाघ्यामकृत सम्पदं।
नानादिगन्तरायातो दुर्भिक्षपतितो जनः। येनाविच्छिन्नसत्रेण शान्तव्यापद्व्यधीयत।
मज्ञातमुचलस्यान्तो येषां तत्परीक्षणं। त एव चक्रिरे राज्ञा प्रमत्तेनाधिकारिणः।
दारे तिलकसिंहस्य तादृक्तेन व्यधीयत। राजस्थाने च जनकः कणस्वस्य सहोदरः।
प्रतापैर्नृपतेस्तोऽत्ले. करमाक्रान्तमण्डलः। जितान् द्वाराधिपः सोऽपि स्वीचकार रणाधिपान्।
शाकंभरस्तु तिलकः क्षमाभुजा दत्तकम्पनः। निन्ये प्रकम्पमहितान् प्रकम्पन इव द्रुमान्।
पादाग्रप्रभुता शेषराजस्थानाधिकारिणा। नृपाः प्रतापैरहिताः सज्जकेनापि निर्जिताः।
साकं मार्गपथायातराजदारेण धीमता। अट्टमेलकस्थलेनाप्यवापिटेन मन्त्रिताः।
एवं स्वार्हदृशां त्यक्ता गुणापेक्षेण मन्त्रिणः। कुर्व्वतोऽपाचचांसेन कथित्कालोऽत्यवाहत।

वितस्तापुलिने सोऽथ कर्तुं प्रारभतात्रतं । स च श्वश्रूःस्वपत्न्याश्च नाम्ना सुरमठद्वयं ।
उत्पातवह्निना दग्धो निःसंख्यधनदायिना । तेन दिङ्‌विदिग्गोऽपि नूतनत्वमनीयत ।
पुरीमट्टिलिकां जातु स प्रयातोऽन्तिकस्थिते । आप्ते प्रैर्यत कल्पः श्रेर्गर्गोच्छेदाय भूपतिः ।
गार्गि: कल्याणचन्द्राख्यस्तानतिक्रम्य हि स्फुरन् । मृगयादिच्छगते तेषामक्षयामुदपादयत् ।
सर्वाभ्यधिकसामर्थ्यं तन्निग्राह्यं निवेद्य ते । नित्योपजपनैर्गर्गे विक्रियामनयन्नृपं ।
बद्धा त्वां लोहरे भ्रष्टदिच्छति चेप्रुमित्यय । गर्गः प्रयद्धे भयेन राज्ञा चैकेन बोधितः ।
ततः स ससुतस्तत्र पलाय्य स्वभुवं ययौ । दिनैर्भूपोऽपि संप्राप्तः प्रविवेश स्वमण्डलं ।
अन्योन्यशङ्कया भेदं यातयोराजगर्गयोः । चाक्रिकैः कृतसञ्चारैर्वैरं प्रौढिमनीयत ।
प्रयाले गर्गस्य विजयं स्वेदमेषवशंवदः । समीपात्संत्यजन्राजा पद्मात्तापिन पश्चुते ।
कारायां गर्गमचुर्यस्तेन पूर्वं न्यधीयत । स मल्लकोष्टकस्तस्मिन् कालेऽमुच्यत बन्धनात् ।
निबन्धे येन सोऽबद्ध डामरैरपरैः समं । तद्धारयित्वा सामर्षो निनाय स लतां नृपः ।
प्रनैर्युद्धेषु निर्याते राजसैन्येऽथ पूर्ववत् गर्गेण कदनं चक्रे योधानाममरेश्वरे ।
तत्र सर्वातिशायिन्या वीरवृत्त्या नृपाश्रितः । श्रमालोडामरः प्राप प्रथां पृथ्वीहरः परां ।
रणे द्वारपतेर्गर्गनिर्जितस्य पलायने । शैर्थ्यं तिलकसिंहस्य प्राप सर्वोपहास्यतां ।
हृतशेषाः चताः शस्त्रवस्त्रादि त्याजिता भटाः । तदीया गर्गचन्द्रेण कारुण्यात् केऽपि रचिताः ।
वह्निसात्क्रियमाणेषु वीरदेहेषु सर्वतः । राजसैन्ये विनाशीनां गणना कापि नाभवत् ।
हृष्टसैन्येन राज्ञा गर्गो निर्दग्धमन्दिरः । सन्त्यज्य लोहरं प्रायाद्गिरिचूडावनाभिधं ।
गिरिमूलोपविष्टस्य भूपतेः सैनिकैः समं । तेषु तेष्वकरोन्नित्यं गिरिमार्गेषु सङ्गरं ।
कूटयुद्धैर्नृपानीकं प्रतिरात्र्युपतापयन् । रणे त्रैलोक्यराजादिप्रमुखांस्त्विणेऽवधीत् ।
फाल्गुणे हिमसम्भारभीमे परिमितानुगः । स धीरो रात्र्यपि रिपौ न धैर्येण व्ययुज्यत ।
धैर्यवान् काकवंशस्तु तिलक कम्पनापतिः । परं शिखरिशृङ्गस्थं शक्तोऽभून्न प्रधावितुं ।
पीडितस्तेन सम्प्रेष्य स्वभार्यां तनयान्तिकं । निन्येऽनुकूलतां भूपं प्रसादाच्छादितक्रुधं ।
गूढमन्युर्नृपः सन्धिं बद्धा प्रचलितस्ततः । तं मल्लकोष्टकं वृद्धिं निनाय न पुनः समं ।
सोढेऽथ लोहरे दिवान्मामानविमर्दे नृपे । स मल्लकोष्टकार्थेऽथ लब्धां नीचविमाननां ।
तन्मध्ये नृपतिर्गूढं विभेदं तद्वलं नयन् । तदीयानकरोद्भृत्यान् कर्णाशीनहितान्नदान् ।
स खिन्नो नीचदायादसमग्रीविकयाय तैः । प्रेरितः पार्थिवाभ्यर्णं मदारतनयोऽविशत् ।
स्थानप्रवृत्तः पार्श्वस्थानद्रोणपरिस्थितः । अथैकदा तमाचिन्नमल्लमयाजयन्नृपः ।
कुर्यादास्थामतन्वथ कोऽन्यः पौरुषगर्वितः । आक्षेपसमये सोऽपि यत् क्रोधं भोऽवदयो ।
उत्खातरोपितनृपः क्व नु सोऽभिमानः कार्पण्यभागितरलोकसमा क्व वृत्तिः ।
यद्वा वंश नदयति प्रकटं विधातुरिच्छेव सत्त्वगुणपंक्तिरिवात्र जन्तुं ।

अशकन् युधि ये द्रष्टुमपि तं नासते शठाः। केऽपि राजप्रिया वाह्ये ग्रन्थिबद्धो तथा व्यधुः। ६१०
श्रीमद्गानमठाभ्यर्णमन्दिरस्था नृपे स्वयं। सङ्ग्रामोपस्थिते युद्धात्कल्याणाद्या व्यरंसिषुः।
जीवन्तं पितरं श्रुत्वा विदेशे गर्गनन्दनः। सत्त्वमान. स्वयं राज्ञा कच्छाच्छन्नं समार्पय
गर्ग. मदारतनयो राजोकस्येव भूभुजा। उपाधर्ष्यत दाक्षिण्याद्वद्धोभेनैर्निर्गोचितै.।
गार्गिः पलाय्य यातोऽपि चतुष्कं निजमन्दिरात्। श्रवणभाजा कर्णेन दृष्ट्वा राज्ञ. समर्पित
दृढच्छन्नप्रकोपस्य प्रसादस्य महीभुजः। अतः शुद्धिविहीनस्य हीनस्येव न निश्चयः। ६१५
दरद्राज्ये मणिधरे दिदृक्षावागते नृपः। उत्संगमाय निर्यातो गर्गं भृत्यैरघातयत्।
दिनान्मासान् सोऽनुभूतकारागारस्थितिर्निशि। सलात्रिभिः सुतैः कण्ठबद्धरज्जुर्न्यपात्यत।
निष्ठां विम्बमुखो निन्ये यथैव स नृपानुगैः। तथैव कण्ठबद्धात्मा सपुत्रोऽक्षिप्यताम्भसि।
तं चतुर्नवते वर्षे हत्वा भाद्रपदे नृपः। सुखेच्छुः प्रत्युत प्राप दुःखमुद्भूतविप्लवः।
यद्दे कालिञ्जराधीशे महादेव्याश्च मातरि। भल्लाभिधायां श्रान्तायां स ततोऽभूत्सुदुःखितः ६२०
तन्मध्ये नागपालाख्यः क्षेमपालस्य सोदरः। तेन प्रतापपालाख्ये हते द्वैमातुरेऽग्रजे।
सद्भिन्तमन्त्रिहन्तारं हत्वामात्यं पलायितः। त्यक्तस्वदेशः शरणं ययौ कुसुलभूभुजं।
क्रुद्धः स शारणात्तस्माप्रणयं वशवर्तिनः। भग्टहन् क्षेमपालस्य निश्चिकायाभिषेणनं।
निश्चित्य सर्वोपायानामसाध्यं विधुरं नृपं। स भिक्षाचरमानिन्ये तस्य वल्लापुराद्रिपुं।
निशम्य नीतदायादं तं प्रकोपाकुलो नृपः। दत्तास्कन्दोऽविशत्तीक्ष्णतेजा राजपुरीं ततः। ६२५
दत्वा राज्ये नागपालं क्षेमपाले पलायिते। भग्न सामान्स तत्रासीत्तांस्तान् संत्रासयन्रिपून्।
राज्ञां वज्रधरादीनां राजा वज्रधरोपमः। सेनावमरदामेन प्रसादविजयोऽभवत्।
भ्रमतां चन्द्रभागादिसरित्तीरेषु सर्वतः। तान् सैन्यानां मुखमपि द्रष्टुं सेकुर्न वैरिणः।
ययापास्पभवत्तस्य तिलकः सम्पनापति.। हृषीहरो डामरस्य मार्गरचणदोक्षितः।
धार्मिको नृपनिर्मग्नपुरी देवस्थाय सः। मण्डलं दिपतोरचन् प्रपेदे सौनिकं फलं। ६३०
गच्छेन्द्रविभवश्लाघ्यसामर्थ्यं वर्ण्यते कियत्। श्रापयाज्यघासोऽपि सैन्यं तस्य स्वमण्डलात्।
तत्र सप्तषी तत्र सोऽभवत्स्वजनवर्द्धनः। दूरस्थमानयद्वृद्धिं गोरक्षस्योपरि क्रुधं।
वाहपुरे स्वयं राजा स्थापितः स समण्डले। स्थापि पैरुषाद्दुर्वृत्तिना निखिनार्यदत्।
तत्समन्त्रेण तिलकं स निन्दन् नगराधिपं। सनन्निनरुधिरस्य तद्भातुरदवेशयत्।
क्ष्माधिराजं समाप्य मुद्रा पर्वतमभवं। कमलाधिपमानन्दाभिधं द्वाराधिपं व्यधात्। ६३५
सिंसपामरच्च डाघामरा मरनवोऽभवन्। राज्ञमुदाश्रितस्यापि न याः मदिधमाययुः।
स पद्मकेन दर्पे वराधिश्च छमण्डलं। माथिप्रयागशानोऽपि राज्यप्रत्यागमागत्।
दुःखरानद्दुतेन मेलेन चिभमण्ण। करेणुयष मालव्यानगपाश्या
लिशार्द्ध मोरकं क.न्तःक्षिप्तसामधिनाम्। तच्च दण्डपतः हर्षे

अकाण्डव्यवहारेषु स विपर्य्यासितेष्वभूत् । अवमन्नधनो गाढमप्राज्ञान्नवमन्त्रिणः ।
सौवर्णीरिष्टिकाः कृत्वा प्राङ्क्षिणात् लोहरान्तरे । काञ्चनाद्रिप्रतीकाशान् स्वर्णराशीनढौकयत् ।
अथ दण्डयितुं गर्गभृत्यान् दण्डाधिकारिणं । लहरेऽकृत गर्गस्य मन्त्रिणं गज्जकाभिधं ।
तं दण्डभीतैर्गर्गस्य सेवकैराश्रितस्ततः । विश्वस्तमवधीत् क्रुध्यन् च्छद्मना मल्लकोष्टकः ।
लहरे विप्लुते राजा द्वैमातुरमयापरं । मल्लकोष्टस्यार्जुनाख्यं ववन्ध सविधस्थितं ।
हस्ताच्च सङ्घचन्द्रस्य पुत्त्रं गोविन्दमग्रधीः । बद्ध्वा व्यधादिन्दकाख्यं तस्य तद्भ्रातरं हितं ।
पूर्व्ववैरं स्मरन् सूय्यं सपुत्त्रं तं पराङ्गया । ववन्धानन्दचन्द्रादीनीत्युसह नमाचरत् ।
निर्गते लहरं मल्लकोष्टके विद्रुते ततः । आरोप्यार्ज्जुनकोष्टं तं शूले कोपाद्व्यपादयत् ।
निवेश्य सैन्यं तत्राथ प्रविष्टस्य पुरं ययुः । डामरा निखिलास्तस्य वैरं विश्वस्तघातिनः ।
क्रुध्यन् पृथ्वीहरायापि कृतसेवाय मन्त्रिभिः । आदिष्टैः कम्पनेशाद्यैरवस्कन्दमदापयत् ।
कथञ्चित्स तु निर्म्मोणो जयन्तीविषयाक्रमः । सन्धेः चोराभिधानस्य प्रविवेशापवेशनं ।
दिनेऽवन्तिपुरादीनां पुराणामन्तरेण तं । व्रजन्तं विधुरं केचिन्नाशकन् बाधितुं द्विषः ।
तद्वैधुर्य्यविधानं तत्प्रगार्भहारकार्य्यभूत् । प्रमादाद्भूपतेः कुद्धवेतालोत्थापनोपमं ।
चोरोऽथ तीक्ष्णधीर्दृढैः सह पृथ्वीहरेण सः । अढौकयच्छमागामान्तरेऽष्टादश डामरान् ।
अभेद्यघट्टांस्तान् जेतुं निर्यातो विजयेश्वरं । न्ययुङ्क्त भूभृत्संभ्रान्तस्तिलकं कम्पनापतिं ।
संग्रामैः खण्डशः कुर्व्वन् स तानतुलविक्रमः । विद्रावयामास रयैः पुरोवायुरिवाम्बुदान् ।
संमानावसरे तस्य जित्वा यातस्य डामरान् । सेर्ष्यं सत्पुत नृपो न प्रादादवमानकृत् ।
स भग्नमानो नगरं प्रविष्टे नृपतौ ततः । खिन्नः स्ववेश्मन्यवसत् स्वामिकार्य्ये निरुद्यमः ।
सम्प्राप्ताः समधीर्पिकां विनद्र्मेसत्त्वैर्निरुद्धोदया वैरे विद्विषतां कृता धुरि पदं सन्धौ बहिः स्थापिताः ।
कार्य्यान्तेऽद्भुतकर्णकोमलकृतावज्ञाविरागस्पृशः । सर्पाकीर्णमिवाशु वेश्म स्फटिको भृत्यास्त्यजन्ति प्रभुं ।
त्यक्तकार्य्यानुसन्धाने तस्मिन् सर्व्वत्र डामराः । सम्भूतिं विकिरांश निन्युः क्षपिं चयधनादिव ।
आतङ्कादेङ्जितैर्विप्रैः कृतप्रायैः पुरे पुरे । वङ्कौ ऊताग्निभिर्घोरा कुकीर्त्तिरुदपद्यत ।
उपसर्गेण तुरगाः करभाश्च क्षयं गताः । न्यवेदयन्मण्डलस्य प्रत्यासन्नमहाभयं ।
प्रत्यासन्नाशुभा कम्पं भयेन जनता दधे । आसन्नवज्रपतना वातेनेव द्रुमावलिः ।
अथ पञ्चवताब्दस्य प्रारम्भे डामरावलिः । उष्णस्पृष्टा हिमानीव बभूवापतनोन्मुखी ।
प्रथमं देवसरसादिसन्नमसरस्ततः । मुख्यं व्ययावशोगण्ड इव पाकं व्यदर्शयत् ।
एककार्य्यत्वमानीय टिक्कादीन् गोत्रजान् बली । स्यामन्तं विजयोऽभ्येत्य राजानीकमवेष्टयत् ।
तत्र कायस्थपुत्रोऽपि स्यामस्यानीकनायकः । धम्मं नागवद्दाख्यखण्डे तस्य चिरं युधि ।
कथञ्चिदथ भूपेन प्रार्थितः कम्पनापतिः । निर्ययौ स्वामिदौर्य्यं आत्मंष्ठतिसयेषाटव ।
विजयेन समं तस्य सद्भूसूनेन संयुगे । सन्देहं प्रारुहत्तिय सयश्रीयाषकृयो ।

मट्टड्डिं मल्लकोष्टेऽपि प्रयाते लहरान्तरे। वैशाखे निर्ययौ राजा ग्रामं चन्द्रोरकाभिधं।
सैनिकाः शत्रुभिस्तस्य भ्रामितास्तत्र रात्रिषु। अरातिं निन्यिरे धीरैः स्वप्नैरिव मुमूर्षवः १७५
याऊमा चसहायेन सर्व्वशक्तिमतां वरः। येन हर्षनरेन्द्रोऽपि विधुरेणोदपाद्यत।
भूरीर्ष्यया जितवतो विक्रमेण महीमिमां। साहसानां न सङ्ख्यास्ति जामदग्न्यस्य यस्य वा
स सङ्कुचितविक्रान्तिः कालस्य बलवत्तया। तत्र भग्नवतोऽकस्माद्वियुज्यत जयश्रिया।
ततः पलायिते तस्मिन्नकस्मादेव सम्भ्रमं। हामिग्रामस्थितो वीरं भङ्क्त्वा पृथ्वीहरोऽनयत्।
पलायिनस्तानुघरंस्तस्य पृष्ठं स निष्ठुरः। प्रतापी नगराभ्यर्णे दग्ध्वा नागमठं ययौ। १८०
स चान्ये च ततः क्रूरा डामराः सर्व्वतोऽनयन्। राज्ञो राजाश्रितानाश्च चरकेभ्यस्तुरङ्गमान्।
निस्त्रिंशतां तीव्रकोपस्ततो भूपः समाश्रयन्। अभाग्यभागिनां योग्यामाललम्बे कुपद्धतिं।
मीगे पृथ्वीहरस्याथ हता डामरमन्तिकं। पृष्ठन्यस्तविषं भोज्यमिव राज्ञा व्यसर्ज्जयत्।
त्रिशल्य भ्रातरं हर्म्मं विन्दकस्य तथैव सः। अन्येषां माहिणोत्पार्श्वं भ्राहन् पुत्रांश्च त्रिगुतः।
मातरं जयकाख्यस्य सिफिन्नाग्रामवासिनः। विच्छिन्नकर्णघ्राणाश्च हलाभ्यर्णे व्यसर्जयत्। १८५
सपुत्रं सुय्यकं शूलेऽधिरोप्य नगरे परान्। भूरीन् वध्यानवध्यांश्च क्रोधाक्रान्तो न्यपातयत्।
कालस्यैवं स्वरूस्याथ तस्य सर्व्वेऽपि शङ्किताः। आभ्यन्तराश्च वाह्याश्च विरागं प्रतिपेदिरे।
येनैवानीतिमार्गेण हारितं हर्षभूभुजा। निन्दन्नपादधे तं स राज्ये व्यवहरन् स्वयं।
प्रविष्टानां युद्धे गहनकरिकर्म्मप्रणयिनां प्रसक्तानां द्यूते नरपतिधुरायां विहरतां।
तटस्थले दक्षु स्खलितमसकृत्सोऽर्हति परं प्रयोगे वैकल्यं स्वयमविकलो यो न भजते।
तीव्रमर्ष्यो नृपतिस्तत्रापि विहितोद्यमः। निनाय मल्लकोष्ठादीन् किञ्चिन्मन्दप्रतापतां। १९०
अथानिनाय निशयो त्रिपनाप्टाध्वना शनैः। कप्तारं हर्षदेवस्य तं भिक्षाचरमन्तिकं।
विविघन्देवसरमं कम्पनापतिना ततः। त्रिद्राव्यमाणः श्वभ्रापातप्रधावन्सोऽपतत् चितौ।
परिमाय हतस्याथ स तस्य विजयी शिरः। विससर्जान्तिकं राज्ञः फलं जयतरोरिव।
मदप्यत्यसुतं कर्म्म भजन्भूभृत्कृतघ्नतां। न तस्य तुष्टस्तुष्टाव न चकार च सत्क्रियां।
स्वजामप्रधानां नु स्वभाख्यः कम्पनापतिः। तव कस्मात्तवोत्सेक इति तं सन्दिदेश च। १९५
सर्व्वप्रकारं निरुक्तः हतघ्नं नृपतिं विदन्। अथ जातविरागः स द्रोहोन्मुख्यं समादधे।
हन्ता स्यादनुपानभ्याभ्रमेदैमुख्येन चेत्। द्रोहेच्छया स निर्याय ययावपाघ्नमामतां।
भेयाश्वविस्मयशोचितहन्यहत्वं नीतिप्रियाः प्रतिपदं समुदाहरन्तु।
मानोद्यतास्तु विहितस्तुतयः हतघ्नस्य वाप्यसुन्दरहितं घटयन्ति सन्तः।
परं पक्षिप्रभ्रमसितमहिदृष्टान्यचनरैः श्रुतिं यातं सन्ध्ये पतननिरतां जीर्णवसतिं।
वयेवाप्नं भूपं चलनविमुखं विघ्यमसहस्र धीरोऽप्युत्थानोपहतमहिमा शक्नं सभे।
रमूराधं परित्यज्य न्याय्यं ये प्रभवे युधि। द्रोग्धारः कथितास्तेभ्यः केऽन्ये पापीयसां धुरि। २००

जन्मन्येकोपकारित्वं पित्रोः सर्व्वत्र च प्रभोः । अधिकाः पितृघातिभ्यः पापिनः स्वप्रभुद्रुहः ।
निहते विजये शान्तप्रभावेष्वपरेष्वपि । नाग्रायि कस्यचित्स्वास्थ्यं तल्लब्धेनान्तरात्मना ।
कश्चित् क्षणं सोऽपसृत्य प्रत्युतोग्रोपतापकृत् । विस्तब्धप्रसरोज्ञातः सर्व्वं क्षेत्रं द्रवोन्मदः ।
आनिनीषुस्ततोमल्लकोष्टं भिक्षाचरं पुनः । विपल्लाष्टन्तस्य पार्श्वे निजं सैन्यं व्यसर्जयत् ।
कम्पनेशस्समायान्तं द्रोग्धाध्यावेदयंस्ततः । राज्ञा न्यषेधि तद्रोपादेवस्य समदिग्ध्नत ।
एनं वर्त्मन्यनुद्धाते ज्यग्र हन्यामहं ततः । पुरोगतं स्मगव्यान्तः स्टगाहमिव वाजिभिः ।
द्वैराज्यकार्य्यसंभ्रमभावेऽपि विधिचोदितः । कर्त्तव्ये तत्र शाठ्यं स नृपतिः समपद्यत ।
सर्व्वराजमुखानेवं लब्ध्वा द्रोग्धाथ डामरान् । तिलकोऽकारयच्छेन्नमार्गैर्भिक्षाचरानुगान् ।
स्थाने स्थाने ततः प्राप तत. कर्णोपकर्णिका । जनानां या ख्यातिहेतुर्भिक्षोराज्ञस्तु भीतिदा ।
नासंस्कृतं वक्ति गिरा भिनत्त्येकेषुणा द्रुम । अश्रान्तोयोजनशतं यात्यायाति च सत्वरम् ।
इत्यादि तादृक् माहात्म्यं भिक्षुस्तत्यानयज्जनः । निखिलाम्पलितश्वेतलम्बकूर्चोऽपि कौतुकं ।
भविष्यन्निव स.साम्राज्यैक एकोऽर्थभारभाक् । वार्तामव्यवहर्त्तापि भिक्षोरुच्चैऽन्वियेष च ।
सरित्स्नानरते द्वान्तो वृद्धाः चीणनियोगिनः । राजवेश्मन्यगणिता नामनाचं नृपात्मजाः ।
स्वभावदुर्जनाः केचिद्योधाद्योषान्वकाङ्क्षिणः । कारयन्तोऽप्युपाख्यायाः शिष्यान् स्त्रिक्षपणं मखैः ।
वृद्धाः सुराको नर्त्तक्यो देवप्रासादपालकाः । वणिजोभुक्तनिक्षेपाः पुस्तकश्रुतितत्पराः ।
प्रायोपवेशकुशला. पारिषद्द्विजातयः । शस्त्रिणः कार्पुकप्रायानगरोपान्तडामराः ।
सुखयन्तः स्वमन्योन्य किमप्युत्पिञ्जवार्तया । एते प्रायेण देशेऽस्मिन् पार्थिवोपप्लवप्रियाः ।
॥ कुलकं ॥ प्रवर्द्धमानया भिक्षाचरागमनवार्तया । वेपमानोऽभवच्छोको रथ्यो चिन्तासु भूपतिः ।
पृथ्वीहरस्तच्छन्ने गिरिकच्छे वसन्नथ । राजानीकं सभञ्जाशो निर्गत्यातुलविक्रमः ।
अनन्तकाकयोर्व्याघ्रावानन्दद्वारनायकौ । चक्रे तिलकसिंहस्य सम्मिश्रकीन् पलायिनः ।
निहते विजये ज्येष्ठे श्रुत्वाशक्यां पराभवं । तमायाढस्य नृपतिः साध्याभूद्विस्मयः पुनः ।
मट्टीकिते शङ्का हृच्चमूर्द्धारोहेण भोगिना । पिपीलककुलश्वापडोपसंक्रान्त्येव वर्षिणं ।
प्रत्यासन्नं स राजाय दुर्निमित्तैरुपद्रवं । विचिन्त्य यातमुचितं कर्त्तव्यं प्रत्यपद्यत ।
तृतीयेऽह्नि प्रदेश शुक्ले तत आस्थापयत्सुतं । देवीमन्यकुटुम्बस्य सकोटं लहरं पटुः ।
तानन्वजतस्तस्य सेतुभङ्गात्परिच्युताः । सोऽष्टद्विजातयो विना जितस्ताःसं प्रपेदिरे ।
स तेन दुर्निमित्तेन द्विजोऽप्यकपुरान्तिकं । अनुगम्याथ तान् दिनैर्दिनैर्भूयोऽविशत्पुरं ।
विना पुत्रेण देव्या च स ततः प्रत्यपद्यत । प्रतापेन च लक्ष्म्या च परित्यक्तइवान्यतां ।
स सेनाव्यापदि शुभः प्रत्यभात्तस्य तद्यात् । अभ्यन्तरसकम्पोऽपि सर्व्वाभ्युदयमगमत् ।
स्वयमुत्थापितानर्थः सोऽपि दर्पेनरेन्द्रवत् । अद्यापि साम्येनोच्या तया साम्राज्यभोगभाक् ।
श्रावणे शाहुरेयोधेराजीय सत्रशालिनां । भिक्षुर्भद्रराज्यानां डामराणामपार्पयत् ।

उपायाः सामभेदाद्या रिपुचक्रे प्रयोजिताः। राज्ञो विफलतां जग्मुर्वैरिराशेः प्रकाशिताः।
क्रान्ततत्तन्महीपालमण्डलस्यापि भूपतेः। फलं दोर्विक्रमस्याग्रमासीन्नगररक्षणं।
श्मश्रुमे द्वारपतिः सार्द्धं तस्थौ नृपात्मजैः। राजानवाटिकोपान्ते राजस्थानीयमन्त्रिणः।
दूरद्वीपान्तरगता इव क्षीबक्रिरे नृपात्। ते प्रवासदनभूरि नचायुध्यत्त कुत्रचित्।
कटका विद्विषां सर्वे पर्यायेण जयाजयौ। लेभिरे विजयादन्यत्रतु पृथ्वीहरः क्वचित्।
मधुमत्तेन तेनाजौ वेतालेनेव वल्गुना। प्रायोवरावरास्तत्र ग्रस्ता नृपचमूभटाः।
उदयस्येच्छटिकुलोद्भूतस्यैकस्य पप्रथे। युवदेवस्यापि शौर्यमेकस्मिंस्तु तदाहवे।
पृथ्वीहरस्यापजह्रे द्वन्द्वयुद्धाभिमानिना। प्रह्वत्य छष्टकूर्चेन कराद्येनासिवल्लरी।
युद्धे पुरोपकण्ठेषु वर्त्तमाने शराहताः। स्त्रीबालाद्या अपि वधं प्रमादात्प्रतिपेदिरे।
एवं जनक्षये घोरे वर्द्धमाने किमप्यभून्। अनुत्साहान्नृपो व्यूहादपि निर्गन्तुमक्षमः।
तस्मिन्निरुद्धसञ्चारे सोमपालस्तदन्तरे। अलुण्ठयद्धाटलिकां लब्धरन्ध्रोददाह च।
भिद्दे गजाहवेव्यग्रे तद्गृहाग्रपरिग्रहे। समयोग्रामगोमायोः पौरुषस्य पुरोऽस्तु कः।
राष्ट्रद्वयोपमर्देन राजा निःसहृत्तेन सः। तेन त्वथाविधेयोऽभूत्स्वमपि द्रष्टुमक्षमः।
सर्वानौचित्यवहलः सर्वव्यसनदुःसहः। सर्वदुःखमयः कालस्तस्यावर्त्तत कोऽपि सः।
तथाप्यस्खलिते तस्मिन् हितव्याजाङ्कितापहः। राजानवाटिकाविप्रैः प्रायश्चक्रे विरागिभिः।
प्रार्थयन्ते स्म ते युद्धे तटस्थास्तव मन्त्रिणः। गृहीत्वा नीविरेतेभ्यो लोहराद्रौ विहृत्यतां।
न चेद्धास्यद्वैतस्मिन् व्यसने स्थायिताङ्गते। कोदथ्यात्र परैर्नीतं मत्यासन्नं शरत्कालं।
न प्रत्यभैत्स्रोत्ताटस्थ्यं यत्कालापेक्षया नृपः। तस्मिंस्तैर्दर्शिते शङ्कां निखिला मन्त्रिणो दधुः।
शक्तिस्तृणं कुञ्जयितुं न यस्य स तदार्थिभिः। विस्रब्धव्यवहारत्वं निन्ये राजा शठद्विजैः।
कर्मस्थानोपजीव्युग्रपारिपद्यादिसङ्कुला। तत्पार्थात् प्रथयौ वृद्धिमन्या सेनेव वैरिणां।
तत्त्वान्वनक्षणे तैस्तैः प्रमादैरुत्थितैरगात्। देशोव्याकुलतां क्रूरं लुण्ठियाधटोत्कटा।
अदृष्टपार्थिवास्थानैः शठैरव्यवहारिभिः। ऊचे तैः सान्त्वयत्राजा दुःस्थितस्तत्तदप्रियं।
स च न्यविशद्राज्ञो सोऽधिकोविश्रवोऽभवत्। गलरोगः पादरोगादिव तीव्रव्यथावहः।
काश्चनोत्कोचदानेन तन्मध्येऽधिकचक्रिकां। कांश्चित् स्त्रीकृत्य स प्रायं कथंचिदित्यवीवरत्।
विजयोवर्षसोमादिसखिवंशोपहठात्पुरं। प्रविशन् भिक्षुमेनानीरथ्यारोहैरहन्यत।
तेनातिरभसात् स्थानं भित्त्वा प्रविशता पुरं। प्रायशः क्षत एवाभूत्तदा राज्यविपर्ययः।
ईषन्मन्दप्रतापेन नवान्येष्वपि भूपतेः। पृथ्वीहरेण सन्धित्वा भेदेच्छोः सम्प्रकाशिता।
तस्मिन् धुर्ये जिगीषूणां सन्धित्सौ भूभुजा समं। द्वयेऽपि सैनिकायान्तं तममन्यन्त विश्वरं।
राज्ञा नागमठोपान्तमानेतुं प्रहितोस्ततः। चौनमात्यान् स्वविषयस्तानागच्छन् हठनायधीत्।
धान्येयः सपको गङ्गो दिलोरामश्च वारिकः। तेषां तिलकसिंहस्य पार्श्वे भृत्यास्त्रयोहताः।

नोविन्दत्ते गौरकस्तु हतोभूतपतिं स्मरन्। दृष्टे लाक्रन्दिनि परैः प्रहतं करुणोज्झितैः।
तद्देशसं श्रुतवतो देश. सर्व्वो विरागवान्। राजधान्यन्तरे राज्ञो दुष्कीर्तिमुखरोऽभवत्।
दृष्टे गृध्रक्षचतुर्द्दश्यां तदिपर्य्यस्तमण्डलं। अतिवाहयितुं कष्टं दिनमासीन्महीपतेः।
अथ सञ्जातवैक्लव्यो नेदमस्तीति चिन्तयन्। किङ्कृत्यमित्यसद्दृशानपि पप्रच्छ भूपतिः।
विषमे वर्त्तमानस्य तस्य कश्चित्स नाभवत्। अन्तर्जहास योनान्तर्वहिर्योन तुतोष वा।
तमतिव्यसनापातं तस्यावेढवनस्ततः। अभजन्त क्रमाङ्भुत्या. प्रतिपक्षसमाश्रयं।
कम्पनेशस्य विम्वाख्यो भ्राता दैमातुरो हि तान्। समाश्रयद्द्वारकार्य्यं तद्वृत्तं प्रत्यपद्य।
गूढं जनकसिंहेन दूतान् प्रेषयतानिशं। भिक्षवे भ्रातृतनया वाग्दत्ता निरवर्त्तत।
असिवाजिनमुखादि हृत्वा भिक्षाचरान्तिकं। अश्ववारव्यभाव्यन्त प्रयान्त. प्रतिवासरं।
किमन्यद्धार्य्यमेवाह्नि येऽवमन् पार्थिवान्तिके। अलक्ष्यन्तायतो भिक्षोस्ते निशायां गतत्रपाः।
यतो याति ततश्चैति लोकोव्यक्रमतन्त्रितः। इति राजनि कुण्ठाशे कोऽप्यजृम्भत विप्लवः।
डामरैः शरदुत्पत्तौ नीतायां सर्व्वतस्ततः। कान्दिशीकोऽभवल्लोकः कृत्स्नो धनजनोज्झितः।
प्रयाते सुस्सलनृपे स्वर्णपूर्णामिमां महीं। भिक्षुः कुर्य्यादिति स्पृहा लोकस्यासीदिनिश्चयः।
क्व दृष्टा त्यागिता भिक्षोः कुतोवा तस्य सम्पदः। परामर्षेणमेति गतानुगतिकोजनः।
चन्द्रग्रस्ते परिहृता चिरमम्बरेण रेखा स्वयं न खनु या शशिनो नवस्य।
तस्यां जनः प्रकुरुते नतिमम्बरार्थी धिग्लुब्धतामपगतस्वदसद्विचारां।
विजये राजवर्ग्याणां भुग्नग्रीवइवाभवत्। भिक्षुपक्षजये लोको व्यक्तमासीदिशृङ्खलः।
द्विजकोलेयकत्यागे राजडामरसङ्घयोः। ततोऽन्योन्यभयभ्रश्यद्वैरयोरुदजृम्भत।
राजाभ्यन्तरभेदेन राजस्थैर्य्येण चारयः। ऐच्छन् पलायितुं भीता अज्ञातान्योन्यनिश्चयाः।
वान्धवानपि दुर्भूप्नविश्वस्तो विदन्नृपः। स्थितो पलायने क्वापि श्रद्दधे न स्वजीवितं।
तं सहायमनं वामःस्वर्णरत्नादिवर्षिभिः। नाभ्यनन्दन् गृहीतार्थानिनिन्दुः शस्त्रिणः परं।
सहोऽयमेष भवितेत्यभीतैर्जल्पतो जनात्। वक्षोरोगी भिषक्त्यक्त इव शृण्वंस्स विव्यथे।
कृपणोपस्थितं किञ्चित्तदादेशेन ढौकयन्। सविलासं सर्व्वगञ्जतमैविष्टानुगाग्रजः।
गैन्दरवाभवत्तस्मिन् क्षणे माहिषिकोऽप्यहो। स्वगृहादपि निर्गन्तुं नाशकच्छङ्कयाकुलः।
यावदेच्छन् सङ्घभेदाय्निर्तुं डामरभ्रजाः। खड्गैव शस्त्रिभिः सर्व्वैनिन्ये भूभृदिस्वतां।
ते दृष्टमन्नादाराणि रुन्धतो नृपमन्दिरे। प्रशामविक्ते सस्थये प्रायं चक्रुः पदे पदे।
ददर्श धमेंस्योर्देवादप्यधिकं नृपः। तेषामभिमतो माभूदवमानाभिलाषिणां।
मर्त्तुं चिषत्निपुस्मोध शस्त्रिकैरिव मामयः। स दृष्ट्वा निखिलैर्देयं दापितोऽथ गतत्रपः।
स्थानपालोऽपि प्रायश्चित्तिरामस्य दापितः। धनं सुवर्णभाण्डादि चूर्णितास्य विश्रुतैः।
सङ्घरूपं नगरं ततः क्षुभ्यत् क्षणे क्षणे। सोऽभूदभिमिलोद्धर्त्तं स संस्थापयितुं क्षमः।

एकदा प्रातरेवान्यैरुद्धद्वारः स शस्त्रिभिः। सर्व्वतः क्षोभमागच्छन्नगरं स व्यलोकयत्।
ततः क्षोभं शमयितुं जनकं नगराधिपं। पुरभ्रमार्थमादिश्य चलितुं क्षणमैच्छत।
कथञ्चिद्दानमानाभ्यां तानावर्ज्यापि शस्त्रिणः। सावरोधः स सन्नद्धो राजधान्या विनिर्ययौ।
अङ्गनात्तुरगारूढो वहिर्यावन्न निर्ययौ। राजधान्यन्तरे लुण्ठिस्तावत्प्रारम्भि तस्करैः।
अददन् केऽपि केऽप्युच्चैरनदन् केऽप्यलुण्ठयन्। तद्भृत्या राज्यमुत्सृज्य तस्मिन् व्रजति शस्त्रिणः।
विश्रङ्खलस्वपाकोपशङ्काभिः शस्त्रिणां नृपः। सहस्रैः पञ्चषैराशीद्व्रजन्ननुगतोऽध्वनि।
वर्षे पञ्चनते कृष्णपञ्चम्यां मार्गे विनिर्गतः। याममात्रावशेषेऽह्नि सभृत्यो द्रोहविक्लवः।
निर्जेहैरङ्घिरथादि त्यज्यमानः पदे पदे। स प्रतापपुरं प्राप क्षपायामल्पसैनिकः।
तिलकस्य पुरोगत्वा प्राप्तस्याश्वासं विश्वसन्। तत्र बन्धोरिवाश्रूणि चिरं दुःखात्क्षणेऽमुचत्।
द्रोहं न कुर्य्यादेवं मे चिन्तयित्वेति सत्वरं। वेश्म ऊस्कपुरेऽन्येद्युस्तस्य च प्राविशत्स्वयं।
तद्गौरवेण स्नानादि कृत्वेच्छन्सैन्यसंग्रहं। प्राविशत् क्रमराज्यं स कर्तुं भूयोजनोत्सुकः।
शहं युयुत्सुकल्याणवाह्यादीनथ डामरान्। आनीय स पुरस्तस्य धैर्य्यभ्रंशमकारयत्।
शहाक्तेन तथा युक्त्या निष्कृष्टः स ततो ययौ। स्वीकुर्व्वन् स्वर्णदानेन दस्यूमार्गविरोधिनः।
प्रयान्तं ततएवौज्झीत्तिलकस्तत्सहोदरः। प्रयाणमेकमानन्दो दाक्षिण्यादन्वगात्तु तं।
अत्यत्यक्तः स दानेन विक्रमेण च तस्करान्। अगान्मार्गेण शमयन्नायुःशेषेण रक्षितः।
चार्णं सिंहनखाद्रुमाद्रिगहनस्थारादरण्यस्य ये तेषां बालगताश्रयादपि भवेत्कालातिवाहः क्रमात्।
ये दन्ताः करिणां रणप्रहरणं तेऽथाप्नुयुर्दीव्यतां क्रीडायां करताडनानि न दृढा शौर्यस्य रूढिः क्वचित्।
जन्तूनां विक्रमत्यागयशःप्रज्ञादयो गुणाः। भवे चित्रस्वभावेऽस्मिन्न भवेयुरभङ्गुराः।
भास्वानप्योष्म्यमृदुतां भिन्नावस्थां दिने दिने। तां तामायाति जन्तूनां कः प्रभावेषु निश्चयः।
अशक्नुवन्नट्टलिकामरिलुप्टां निरीक्षितुं। मन्युनिःशब्दसैन्योऽद्रिमारुरोह स लोहरं।
स्वल्पत्वमपि द्रष्टुं तत्रातित्रपयाक्षमः। शयनीयविमुक्ताङ्गस्तप्यते स्म दिवानिशं।
दत्तदीपादनिर्गच्छन्नन्तर्गेहाद्दिनेष्वपि। दाक्षिण्यादशनं प्रादाद्भृत्यानां भोजनक्षणे।
विलेपनानि नास्प्राक्षीन्नारुरोह तुरङ्गमान्। गीतनृत्यादि नैक्षिष्ट सुखगोष्ठीर्न चादधे।
तामंस्ताटस्थ्यमौखर्य्यैतल्लग्नद्रोहादिदर्शितं। एकैकेन च स्मृत्वा स्मृत्वा देवै न्यवेदयत्।
अन्यगात्स्वां भुवं त्यक्त्वा मामेतेऽन्वगुरित्यपि। निन्ये वृद्धिं परार्थ्यश्रीः स दाक्षिण्याङ्गनार्पणैः।
कश्मीरेषु गते तस्मिंस्तदेवाखिलमन्त्रिणः। पुराणि राजधान्येषु ससैन्याः समगंसत।
मध्यशारोहसामन्ततन्त्रिपौरादिसम्मतः। तेषां जनकसिंहोऽभूद्ग्रणीर्नगराधिपः।
स भिक्षोर्भल्लकोष्टाद्यैराशैः कृतगतागतैः। विश्वासाय सुतभ्रातृसुतो नीत्विप्रदायितः।
प्रावर्त्तत भयभ्रष्टतस्तोयाशाधाष्टते पुरे। अराजकाथ रजनी सर्व्वभूतभयावहा।
निहताः केऽपि मुषिताः केऽपि केऽप्यरिभिः पुरे। दग्धगेहा व्यधीयन्त दुर्व्वारासजर्जिते।

सैन्यैरन्येद्युरुन्नादैर्निरुद्धाखिलदिक्पथः। सिन्दूरारुणपुण्ड्राश्वसादिमण्डलमध्यगः।
विकोशशस्त्रकदलीषण्डदुर्लक्ष्यविग्रहः। मृगेन्द्र इव लोकस्य भयकौतूहलावहः।
वीरपट्टाञ्चलस्निग्धैर्यौवनोद्रेचितैः कचैः। अवद्धैः शोभितः पृष्ठे जयश्रीगन्धहस्तिनैः।
कुण्डलद्योतिना स्निग्धधवलायतदृष्टिना। प्रत्यग्रश्मश्रुणा चारु चन्दनोल्लेखशोभिना।
तासाधरेण वक्त्रेण श्रीसान्निध्याधिकत्विषा। पक्षपाति विपक्षाणामपि सम्पादयन्मनः।
अंसे विकोशस्यान्तःस्थां श्रियमश्वेन वल्गता। केसरच्छटया चापि चामरेणेव वीजयन्।
पदे पदे निवृत्ताघ्यः सामन्तैरुपपादिता। स्वीकुर्वन्नर्हणां भिक्षुः प्राविशन्नगरं ततः।
कुलकं॥ तस्यार्भकस्य धात्रीव पृष्ठस्योमसकोट्टकः। मयया वप्रगल्भाय सर्वकार्योपदेष्टृतां।
अयं पितुः प्रियस्तेऽभूत्त्वमस्याङ्के विवर्द्धितः। राज्यस्यार्थं मूलमिति प्रत्येकं समदर्शयत्।
गृहं जनकसिंहस्य प्राक्कन्यावाप्तयेऽविशत्। राजलक्ष्मीं स सम्प्राप्तुं राजधानीं ततः परं।
दूरनष्टे कुले तेन पुनरुद्रेचिते यथा। बद्धास्थोऽगर्भकेऽपत्ये स्त्रीजनोऽनवहास्यतां।
दृष्टेन तादृशा भिक्षोरिति वृत्तेन शत्रुषु। चित्रस्थेष्वपि साशङ्का नोपहास्या जिगीषवः।
प्रावर्त्तन्त घनाघीशश्रियः सुस्सलभूपतेः। कोपेण नीतधैर्येण विलासा नवभूपतेः।
वाजिवर्म्मासिभूयिष्ठा राजलक्ष्मीं विभेजिरे। राजडामरलुण्ठाकमन्त्रिणो यन्त्रणोज्झिताः।
पुरे स्वर्ग इवास्वादं भोगानामुपलेभिरे। दस्यवो ग्रामभोगार्हाः पिशाचा इव गल्वराः।
आस्थानेन बभौ भूभृद्ग्रामीणैः सर्वतो वसन्। प्रलम्बकम्बलप्रायविलासावरणैः समं।
भिक्षाचरस्यासभ्यप्रादुर्भावतया प्रथां। डामरा अवतारोऽयमित्यन्यां निन्यिरे प्रथां।
राज्यस्यानन्यदृष्टस्य कर्त्तव्येषु मुमोह सः। अदृष्टकर्म्मेव भिषग्भैषज्यस्य पदे पदे।
सैनेर्जनकसिंहेन कृतभ्रातृसुतार्पणं। कम्पनाधिपतिर्दत्तकन्योऽपि तमशिश्रियत्।
जङ्गो राजपुरीयस्य राज्ञः कटकवारिकः। पादाग्राधिकृतोऽद्राचीत् स्वार्थमर्थं न तु प्रभुः।
सर्व्वाधिकारिणं राजलक्ष्मीर्बिम्बमशिश्रियत्। राजशब्दस्यैव पात्रमभूद्भिक्षाचरः परं।
वेश्यायत्तीकृतैश्वर्य्यः प्राकृताचारभागपि। अन्तरङ्गः सदसतां किञ्चिदिम्बस्तदाभवत्।
द्वैमातुरो दर्य्यकस्य भ्राता साहर्य्यशौर्य्यभृः। नृपान्तरङ्गज्येष्ठत्वं ज्येष्ठपालोऽप्यशिश्रियत्।
मन्त्रिणो भूतविश्वाशास्तस्य पैतामहा अपि। लक्ष्मीसरोजिनीभृङ्गा बहवोऽन्ये जजृम्भिरे।
मुग्धे राज्ञि प्रमत्तेषु मन्त्रिधूर्त्तेषु दस्युषु। उत्थानोपहतं राज्यं नवलेऽपि बभूव तत्।
स्त्रीभिर्नर्त्तनवाभिश्च भोज्यैः प्राज्यैश्च रञ्जितः। भिक्षुर्नैच्छिष्ट कर्त्तव्यं सुखानुभवमोहितः।
स सुखानुभवप्राप्तनिद्रान्धो विजयोद्यमे। स्वैः प्रेरितः सभामध्ये स्वप्नुमैच्छन्मदालसः।
दर्पेण सचिवे वाचं कथयत्यनुकम्पिकां। न स चुक्रोध मुग्धस्तु पितरीवान्वरज्यत।
निष्प्रतिष्ठैः सेव्यमानो वेश्याश्छिद्रैरशिश्रवत्। अद्वा चेटोचिताश्चेष्टा विटैः प्रैर्यत सेवितुं।
पानीयरेखाप्रतिमस्थैर्य्यस्याखिलवस्तुषु। तस्याप्रमाणवचसः सेवाम्रणयिनो जडाः।

यदूचुः सचिवास्तत्तानन्ववोचत भूभृतः । वचः सुषिरगर्भस्य तस्य किञ्चित्समुच्चयौ ।
सचिवैः स्वगृहान्नीता दत्तभोज्यः स मुग्धधीः । धनी विपन्नपिटकइव प्रमुषितो विटैः ।
आहारमुष्टिं विम्बस्य गृहे विम्बनितम्बिनी । तस्याश्वस्येव वडवा रागिणोऽप्यगतादरत् ।
वञ्चयित्वा दृशौ पत्युर्दर्शितैः स्मेरया तया । कुचकचकटाक्षैः स लुप्तधैर्योऽप्यधीयत ।
पृथ्वीहरोमल्लकोष्ठश्चान्योन्योद्भूतमत्सरौ । क्षोभं व्यधत्तां संरब्धौ राजधान्याः क्षणे क्षणे ।
स्वयं राज्ञा सुतोद्वाहं गृहान् गत्वापि कारितौ । तावन्योन्यमुपेक्षेतां न मन्युं विक्रमोन्मदौ ।
अथ पृथ्वीहरगृहात् कृतोद्वाहः स्वयं नृपः । जातामर्षेण सुस्पष्टं मल्लकोष्ठेन तत्यजे ।
द्रुह्यन् जनककार्येऽपि सम्बन्धापेक्षयोज्झित । विरागभोजानन्दादीन् निन्ये ब्राह्मणमन्त्रिणः ।
तटस्थोद्रेगधृद्दुर्बुद्धिप्रायभृत्यविधेयधीः । विस्रब्धव्यवहारत्वं निन्दाचञ्चुर्ययौ नृपः ।
डामरस्वामिके लोके प्रभवेत्कोन विक्रमः । ब्राह्मणोधर्षणं यत्र श्वपाकेभ्योऽपि लेभिरे ।
अराजकेऽथवा भूरिराजके मण्डले तदा । समस्तव्यवहाराणां स्फुटं तुच्छोद्गत पद्धतिः ।
दीनाराभिचवे राज्ये निष्प्रवाराः पुरातनाः । तच्छतेन तु नव्यानामशीतेरभवत् क्रयः ।
राजपुर्यध्वना विम्बं ससैन्यमथ पार्थिवः । लोहरं प्राहिणोत्कर्तुं सुस्सलास्कन्दमुन्मदः ।
तुरुष्कसैन्यमानिन्ये सोमपालेन सोऽन्वितः । साहायकाय सञ्चारे विम्बे मित्रतां गते ।
सन्दर्श्य पाशमेतेन बद्धाक्रक्ष्यामि सुस्सलं । इत्यकरकोऽश्वारोहस्तुरुष्कैः समकथ्यत ।
कश्मीरकस्वगम्लेच्छयोधव्यतिकरोऽभवत् । न केषां नाम सम्भाव्यो विश्वोत्पाटनराटवः ।
भिक्षाचरः प्रयाते तु विम्बे विगलिताङ्कुशः । न कासामप्यनम्यानां मूढः स्थानमजायत ।
स निमन्त्र्य निजं नीतो गृहं बिम्बावरुद्धया । भोगसम्भोगदानेन धर्षण्या पर्य्यतोष्यत ।
कार्य्यापेक्षापि तस्यासीन्न मन्त्रिस्त्रीसमागमे । कौलीनभीतेरासन्ननिपातस्य कथैव का ।
आयुनानुगुणं भोज्यं कुम्भकांस्यादिवादनं । तत्र प्राकृतकर्म्मेव न स जिह्राय शीलयन् ।
शनैः शनैस्ततो नष्टावष्टम्भस्य महीपतेः । काले भोज्यमपि प्रायं नाभोद्गलितसम्पदः ।
तादृक् प्रलोभकौर्य्यादिक्रान्तो यः प्रागगर्ह्यत । स सुस्सलोऽहि लोकानामभिनन्द्यत्वमाययौ ।
धनमानादिनाशं या विरक्तास्तस्य चक्रिरे । काङ्क्षन्ति स्म च सोत्कण्ठास्तास्तस्यागमनं प्रजाः ।
प्रत्यक्षदर्शिनोऽद्यापि साध्व्यावयमस्य यत् । ताः प्रजाः कोपिताः केन केन भूयः प्रसादिताः ।
क्षणाद्वैमुख्यमायान्ति साम्मुख्यं यान्ति च क्षणात् । न वेत्तुं कश्चिदीक्षन्ते पशुप्रायाः पृथग्जनाः ।
ते मल्लकोष्ठजनकादयोदूतैर्विसर्जितैः । त्यक्तराज्यं पुनर्भूपं जयोद्यममजिग्रहन् ।
अथोत्तराग्रहारेऽथ लोकेष्टिकस्य लुण्ठिते । तत्रत्या ब्राह्मणाः प्रायं नृपमुद्दिश्य चक्रिरे ।
मैथान्येयाग्रहारेष संश्रितैर्विजयेश्वरे । राजानवाटिकाप्राणे नगरेऽपि न्यविक्षत ।
भोजानन्दादिभिर्मुख्यद्विजैरुत्तेजितास्ततः । गोकुलेऽपि यधुः प्रायं चिद्मालयपार्षदः ।
पुरप्रार्पितैः क्षिनच्छत्रसन्धामरगोभिभिः । विबुधप्रतिमावृन्दैः सर्वतच्छादिताङ्गणः ।

काहलाकांस्यतालादिवाद्यक्षोभितदिङ्मुखः। अदृष्टपूर्व्वो ददृशे पारिपद्यसमागमः।
ते सान्त्वमाना भूभर्तुर्दूतैरुत्सेकवादिनः। न विना लम्बकूर्चं नो गतिरित्यमुदन्वचः। ९०५
ते हेलया लम्बकूर्चाख्यया सुस्सलभूपतिं। तं निर्दिशन्तोऽमन्यन्त क्रीडापुस्तकसन्निभं।
प्रायम्प्रेक्षितुमायाते पौरैः सह दिने दिने। अमन्त्रयत काङ्क्षा न व्यवस्थां पार्षदां गणः।
नृपापातभयात् क्षोभं मुहुर्मुहुरुपागतैः। पारिषद्यैश्च पौरैश्च योद्धुमात्मीयतोद्धृतं।
ततो जनकसिंहस्य नगरं तत्कृतेन तत्। सर्व्वं सुस्सलदेवस्य हस्तमानयनेऽभवत्।
प्रायाद्दारयितुं पूर्व्वमग्रहारद्विजान्नृपः। प्रययौ विजयक्षेत्रं तत्राधीश इतोद्यमः। ९१०
तन्मध्ये निखिलांस्तत्र डामरांस्तिलकोऽब्रवीत्। व्यापादयेति तं तत्र मल्लिकाग्रो न सोऽग्रहीत्।
राज्ञ एव मुखाद्बद्धा लवन्यास्तद्विषध्वसुः। तस्मिन् पृथ्वीहरमुखास्तत्र सुस्थितकात्पुनः।
भागिनेयं प्रयागस्य चत्तारं लवकाभिधं। बन्धुमिच्छन्नृपोऽखिलधं प्रययौ स तु सुस्सलं।
ततः प्रविश्य नगरं स निपत्याखिलं जनं। अकारणविरक्तानां पौराणां प्रददौ सभां।
युक्तमप्युक्तवांस्तत्र हतोक्तिः शठबुद्धिभिः। पौरैः स चक्रे नास्त्येव भेषजं विप्लवस्पृशां। * ९१५
अत्रान्तरे सोमपालविम्बाद्या लहरे स्थिताः। योद्धुं सुस्सलभूपं ते सर्व्वे पर्णोत्समाययुः।
तस्य पद्मरथो नाम राजा कालिञ्जरेश्वरः। मैत्रीं संस्मृत्य कह्लचैरायथौ तत्कुलोद्भवः।
सोऽथ शुक्लत्रयोदश्यां वैशाखे बलिभिः समं। तैर्मानी सुस्सलो राजा सङ्ग्रामं प्रत्यपद्यत।
प्रेक्षकैर्व्वर्ण्यतेऽद्यापि स पर्णोत्सान्तिके रणः। तस्याद्भुतोऽवमानाग्निचालनप्रथमचरणः।
कुतोऽप्येत्य निजस्फारस्तत प्रभृति भूपतिं। तमशून्यं पुनश्चक्रे मृगेन्द्र इव काननं। ९२०
भयस्खलितपाशानां कालपाशैः समागमं। स चकार तुरुष्काणां क्षणात्पुष्कलविक्रमः।
मातुलं सोमपालस्य निन्ये कवलतां मली। रणे तत्कोपवेतालो वितोलासरितस्तटे।
किमन्यदल्पसैन्यस्य बहूनपि स तान् व्यधात्। हतविद्रुतविध्वस्तयथात्मपरिपन्थिनः।
कश्मीरकाणामौचित्यं किं नाभूत् स्वामिनो ददुः। एकस्य ये रणं नष्टाः कुकीर्त्तिमपरस्य च।
तुरुष्कैः सह यातेऽथ सोमपाले गतत्रपाः। विम्बं काश्मीरकास्त्यक्त्वा राजान्तिकमशिश्रियन्। ९२५
श्लाघ्यं पि शिरांस्यद्य नमयन्तोऽद्भुताशयाः। कुलप्रभोः पुरः स्पष्टं न ते धृष्टा ललज्जिरे।
आगच्छन्निस्तत पौरैर्डामरैश्च समं नृपः। प्रतस्थे दिवसैर्द्वित्रैः कश्मीराभिमुखः पुनः।
राजपुत्रः माहदेवि कल्हणो विश्रुतः प्रभोः। डामरान् क्रमराज्यस्थान् संघट्टयाग्रेसरोऽभवत्।
य एव प्रथमं राजा सैन्याद्भिन्नमशिश्रियत्। स एव विम्बो राजानं तमुत्सृज्य समाययौ।
अन्ये जनकसिंहस्य सगता मन्त्रितन्त्रिणः। प्रत्युद्यन्तो व्यलोकयन्त नृपतिं निरपत्रपाः। ९३०
काण्डिलेत्याभिधग्रामजन्मा शस्त्री सुलक्षणः। भाङ्गिले कश्चिदभवच्छून्ये क्रान्तोपवेशनः।
भिक्षुर्विंशतोर्ध्वमार्गे ते सुस्सलान्तिकगामिनः। लोकस्थानान्तरे जेतुं सह पृथ्वीहरो ययौ।
जितवांस्तु प्रयन्ते च्छां निघ्नन्तु सुस्सलोन्मुखं। क्रोधाज्जनकसिंहस्य वार्त्तां तां च विवेद सः।

नगरस्थेन तेनाथ पौराश्वारोहतन्त्रिणः। सङ्घट्याखिलान् मिथः प्रातिपक्ष्यमग्राहयत।
आनंदेनाहृतं राज्यं ततोभिचाचरो नृपः। पृथ्वीहरेणानुयातो नगरं सहसाविशत्। ९३५
सेतौ सदाशिवाग्रस्थे तत्सैन्यैः सह सङ्गरं। तूर्णं जनकसिंहोऽथ सान्त्वमानोऽपि सोऽग्रहीत्।
द्रष्टुं जनकसिंहस्य योधानां वल्गतां मदात्। अविमृश्यपराभूतिं मुहूर्तः समजायत।
अलकेन समं पृथ्वीहरस्तद्भ्रातृसूनुना। अन्येन सेतुना तीर्त्वा तस्य सैन्यमनाशयत्।
तच्चाश्वारोहपौरेषु विद्रुतेषु सबान्धवः। नक्तं जनकसिंहोऽथ पलाय्य लहरं ययौ।
भिक्षुपृथ्वीहरौ प्रातस्तत्पृष्ठग्रहणोद्यतौ। तत्पश्चात्तेऽश्ववाराद्याः पृष्ठा भूयोऽप्यमिश्रियन्। ९४०
चिप्ता चिप्रं स्वकचान्तर्विबुधप्रतिमाभयात्। ते पारिषद्यविप्राद्याः प्रायमुत्सृज्य विद्रुताः।
शून्यानि सुरगुप्तानि रचन्तः केऽपि भिक्षुणा। प्रायाश्रितत्त्वा वय,मित्युक्तवन्तो न बाधिताः।
द्यावालके भैचवेऽथ वल्गत्तुङ्गतुरङ्गमान्। दृष्टवन्तो वयं सैन्यैः सादिनोऽद्यापि साद्भुताः।
भिक्षुराजप्रदीपेन द्योतितः चणभङ्गिना। पिण्डविक्ताधिकारेण ख्यातस्तिलकसिंहजः।
गते जनकसिंहेऽथ प्रतिपचानुसारिणाम्। विधातुं वेश्मभङ्गादि लब्धं भिक्षुमहीभुजा। ९४५
अथान्तरे डम्फपुरे नीतेषु तिलकादिषु। भङ्गं सुल्हणसिम्बाद्यैस्समेतानन्तसैनिके।
अपायातैर्मल्लकोष्ठजनकाद्यैः ससैनिकैः। अपरैरपि सामन्तैर्बलवाञ्छयशालिभिः।
अन्वीयमानो दिवसैर्द्वित्रैराक्रान्तमण्डलः। विशल्लहरमार्गेण विपचापेक्षितोऽपतत्।
नगरापणवीथ्यन्तहयारोहमुखात्पुरः। द्रोहयोधानुपायातांस्तान् वीक्ष्योज्झितशाध्वसः।
चेष्टितो लम्बकूर्चेन वक्त्रेण भ्रूकुटीस्पृता। कोपकम्पिततारेण फुल्लनासापुटस्पृशा। ९५०
कांश्चित्सन्तर्जयन् भिन्दन्नन्यान् मर्मांस्तथापरान्। तीव्रातपश्यामवपुस्ताम्यत्कालद्वोल्वणः।
आशीर्दायकतां पुष्पवर्षिणां पुरवासिनां। पूर्वापकारिणां श्रेणिष्वत्रपान्यस्तलोचनः।
स्कन्धमात्रोपरिन्यस्तं कवचं हेलया दधत्। केशानन्तशिरस्त्रान्तनिःसृतान् धूलिधूसरान्।
पक्ष्ममालाश्च विभ्राणः सकोशासिस्तरङ्गिणा। आकृष्टखड्गमालानामन्तर्वल्गत्तुरङ्गमः।
स सिंहनादैरुद्दामैर्भेरीभाङ्कारनिर्भरैः। बलैर्भरितदिक्कोशः सुस्सलः प्राविशत्पुरं। ९५५
कुलकं॥ पङ्क्तिः सदाद्यदिनैर्मासैर्ज्येष्ठे सितेऽहनि। स सप्तनवताब्दस्य तृतीये पुनरायया।
राजधानीमप्रविष्टो भिक्षुं पूर्वपलायितं। अन्विष्यन् चिक्षिकातीरे मलवन्येऽवलोकयत्।
सन्त्यिपारं रिपौ प्राप्ते स सपृथ्वीहरो गतः। मार्गे लवन्यैर्मिलितैरन्यैः सार्कं न्यवर्त्तत।
तन्निद्राव्य रणे राजा सद्मा प्रकृतिविचितं। सिंहं पृथ्वीहरस्रातिं राजधानीमयाविशत्।
उपभोगैः सपत्नस्य तत्कालनिस्तस्य सा। अङ्किता मानिनस्तस्य वेश्मवेदोद्वेगदाभवत्। ९६०
भिक्षुः सन्त्यज्य काश्मीरान् सह पृथ्वीहरादिभिः। ग्रामं पुष्पाणनाडाख्यं सोमपालाश्रयं ययौ।
प्रस्थितो डामरान् सर्व्वान् राजा स्वीकृत्य तु व्यधात्। खेर्या वट्टाश्रमं सर्वं दर्पमिव कम्पने।
पूर्व्वापकारं स्मरतो दिक्कालानपेक्षिणः। पूर्व्वविद्वेषिणस्तस्य न कृपां प्रति पेदिरे।

भूतग्रामादिसंहारः सम्वर्त्तइव वह्निना। तादृक् त्रिपुरदाहे वा खाण्डवे तत्र वाभवत् ।
पुण्येऽह्नि शुक्लद्वादश्यां नभसः कुकृतं महत्। तद्भिक्षुः कृतवानाज्यलब्धा भाग्येश्च तत्यजे ।
सकुटुम्बेषु दग्धेषु तदानीं गृहमेधिषु । पुरग्रामसहस्रेषु गृहाः शून्यत्वमाययुः ।
मल्लाख्योडामरश्चिन्वन् शवान्नागरोद्भवः । मीतिं प्राप्तस्तदीयार्थैः कापालिकइवाययौ ।
अवरोद्धाथ विजयक्षेत्रं भिक्षाचरस्ततः । लब्ध्वा नागेश्वरं पापं यातनाभिरमीमरत्।
गर्ह्य पैतामहे देशे किं नाधीत्तस्य चेष्टितं । पितृद्रुहः स तु वधः सर्व्वप्रीतिकरोऽभवत् ।
गृहिणी हर्षमित्रस्य पत्यौ त्यक्ता पलायिने । पृथ्वीहरेण सम्प्राप्ता विजयेशाङ्गनान्तरात् ।
निमित्तभूतमेतादृक्प्रजासंहारवैशसं । स्वं निन्दन् सुस्सलो राजा ततो योद्धुं विनिर्य्ययौ ।
संवेगात्पाप्मनः शीघ्रं निरयक्लेशभुक्तये । प्राप्तोजनकराजेन वधोऽवन्तिपुरान्तिके ।
यत्कृते क्रियते कर्म्म लोकान्तरसुखान्तकं । स मूढैः सुलभापायः कायश्चित्रं न गण्यते ।
कम्पनाधिपतिं सिम्बं कृत्वा डामरमण्डलं । चकर्ष विजयक्षेत्रादन्यतोऽपि ततो नृपः ।
शमालां प्रययौ पृथ्वीहरो मडवराज्यतः । विजित्य मल्लकोष्ठेन त्याजितो निजमण्डलं ।
क्षिप्ताः केचिद्वितस्तायां केचिच्चक्रधराङ्गने । अक्रियन्ताग्निसात् कष्टमशस्त्या बहवः शवाः ।
क्रमराज्येऽथ कल्याणवारादीन् रिल्हणोऽजयत् । आनन्दोऽनन्तजस्तत्र ततोद्वाराधिपोऽभवत् ।
शूले प्रमापितं सिंहं नयन् पृथ्वीहरो बली । सार्द्धं जनकसिंहाद्यैरयुध्यत् क्षिप्तिकातटे ।
तीर्थं प्रस्थाप्यमानेषु विपन्नास्थिस्विहास्यहः । भाद्रे मास्येकमवलाक्रन्दिताक्रान्तदिक्पथं ।
हतवीरावलाक्रान्तमुखेर नगरान्तरे । पृथ्वीहराहवे सर्व्वैर्दिवसैरन्वकारि तत् ।
॥ युग्मं ॥ अथ यातो यशोराजश्यालः शूरोदिगन्तरात् । श्रीवको विदधे राज्ञा खेरीकार्य्याधिकारभाक् ।
अप्रियं स लवन्यानां तेऽपि वा तस्य नाचरन् । कालन्तु गूढसौहार्द्दैरन्योन्यस्य न्यशीवहन् ।
पुनराश्वयुजे राजा शमालान्निर्गतस्ततः । परैर्म्मनीमुपग्रामे युधि भङ्गमनीयत ।
नित्याभ्यासेन युद्धानां लब्धोत्कर्षोऽन्यदर्शयन् । सर्व्ववीराग्रणीर्भिक्षुस्तत्पूर्व्वं तत्र विक्रमं ।
तुक्कद्विजादयो मुख्या भिक्षुपृथ्वीहरादिभिः । आसारापातविवशा निहताः सौस्सले बले ।
प्रधानवीरभूयिष्ठे सैन्यद्वन्द्वे न कोऽप्यभूत् । स वीरश्चरतः सङ्ख्ये भिक्षोरक्षिप्रियोन्मुखः ।
पृथ्वीहरस्य भिक्षोश्च संग्रामे भूरिवार्षिके । कादम्बरीपताकाख्ये द्वे अश्वे पीतपाण्डुरे ।
आस्तामत्यद्भुते याभ्यामनेकतुरगक्षये । न विपन्नं प्रहृतिभिर्नाप्यभाव्यथवा श्रमः ।
सैन्यानां सङ्कटे त्राणमश्रान्तिरविकत्थनः । अभूत् क्षेमदेवोवीरो मान्योभिक्षाचरात् क्वचित् ।
योधानां सौस्सले सैन्ये विद्रवेषु न कश्चन । त्राणं बभूव तेनैते बहवो बहुधा हताः ।
गवेषु डामरानीकाः केचिद्भङ्गेषु सैनिकाः । भिक्षाचरगजेन्द्रेण कलभा इव पालिताः ।
नान्यथोत्थानदीनत्वं दृष्टं पृथ्वीहरात्तदा । स्वयं यो भेचत्रे द्वारे जजागार प्रतिक्षपं ।
तत. प्रभृत्यभूद्दीप्ता पुरः पश्चाच्च सर्व्वदा । विश्वेदेवा इव श्राद्धे युद्धे भिक्षुर्भराभटः ।

माघेऽथ मल्लकोष्ठाद्यास्त्राक्रान्ताः पुनराययुः । ते शूराः पुरमार्गेण भिक्षुपृथ्वीहरादयः ।
वितस्तापरिखाक्लिष्टा भूरगम्या द्विषामियं । इति प्रायात्रवमठं त्यक्त्वा राजगृहं नृपः ।
वर्षेऽष्टानवते चैत्रे डामरेषु द्रवत्सु । अभ्येत्य मल्लकोष्ठेन प्रागेवाग्राहि सङ्गरः ।
सोऽश्ववारैः सह रणं चकार नगरान्तरे । नृपावरोधैः सौधाग्रादालोकितमथाकुलैः ।
भिक्षुणा क्षिप्तिकातीरे स्कन्धावारो न्यवध्यत । रामेण वानरी सेना यथा पाथोनिधेस्तटे ।
नृपोद्यानाद्द्रुमान् निन्युरिन्धनाय महानसे । दूर्वाङ्कुरान्मन्दुराभ्यो वाहिभोज्याय डामराः ।
पृथ्वीहरस्तु संगृह्णन् दस्यून् मडवराज्यजान् । चकार विजयक्षेत्रे यावत्कटकसंग्रहं ।
तावत्प्रत्यभिमुखान् मल्लकोष्ठयुद्धाय भूपतिः । आदिश्याद्यावस्कन्दं वैशाखे साहसोन्मुखः ।
अकस्मात् पतिते तस्मिन् हतावष्टम्भविह्वलाः । प्रययुः सेतुमुत्तङ्घ्य जीवग्रस्ताः कथञ्चन ।
नगरं मल्लकोष्ठाजिप्ये प्रज्ञावथाविशत् । पृथ्वीहरानुजः शृङ्गिं निर्जित्य मनुजेश्वरः ।
परं पारं वितस्तायाः सेतुच्छेदादनाप्नुवन् । अर्वाचि तीरे स गृहान्दग्ध्वागात्क्षिप्तिकान्ततः ।
तदन्यैर्नगरं प्राप्तं मत्वा सुस्सलभूपतिः । आययौ विजयक्षेत्रात् सैन्यमुत्थाप्य विक्लवः ।
अहंपूर्विकयारातिसंक्रान्तैश्च निजैर्बलैः । पीडितस्तस्य गम्भीरः सिन्धुसेतुरभज्यत ।
स कृष्णपक्षयां क्षेत्रस्य तस्याभज्यमूचयः । यथाग्निना चक्रधरे तथा तत्राभवा स्मृतः ।
भुजावुद्यम्य शमयन् सैन्यानां सम्भ्रमं नृपः । चस्तैर्भ्रष्टस्तथा पृष्ठे पतितः सरिदन्तरे ।
अनभ्यस्तास्तुतरणैराश्लिष्य मुक्तितोऽमज्जत् । तरसा युद्धविद्वाङ्गः स निस्तीर्णः कथञ्चन ।
अनुत्तीर्णबलं त्यक्त्वा पारे सामन्तसंकुलं । सहसांशेन सैन्यस्य तीर्णेनानुगतो ययौ ।
सम्यक्रानन्तसैन्योऽपि सोऽवष्टम्भमेया ययौ । प्रविश्य नगरं मल्लकोष्ठमुख्यावणेऽग्रहीत् ।
विजयस्याथ जननी सिल्लाख्या स्वामिनोर्ज्झितं । निनाय देवसरसं सैन्यं तद्विजयेश्वरात् ।
साथ पृथ्वीहरेणेत्य हता तत्रोपवेशने । टिक्कश्च दत्तो भूपालसैन्यं विद्रावितश्च तत् ।
परं व्यायामविद्याविद्द्रुते निखिले बले । द्विजः कल्याणराजाख्यः समरेऽभिमुखोऽहतः ।
मन्त्रिडामरसामन्तसङ्कुलात् सौस्सलाद्बलात् । पृथ्वीहरेणागृह्यन्त बद्धा वृन्दानि मन्त्रिणां ।
अन्वगात् स वितस्तान्तर्यावत्तास्त्रिद्रुतान् बलात् । श्रीजानन्ददिशार्दौ च बद्धा शूले व्यपादयत् ।
मन्त्रिणो जनकश्रीवकाद्या राजात्मजास्तथा । तीर्त्वाद्रिं विषमाटायां शरणं प्रययुः खशान् ।
इत्थं पृथ्वीहरो लब्धजयः संगृह्य डामरान् । जिगीषुर्भिक्षुणा साकं नगरोपान्तमाययौ ।
भूयोऽपि सामुपायौघसंहर्ता सर्वतस्ततः । रणः प्रववृते प्रास्वत्पुरे हतुस्य भूपतेः ।
निर्विरोधः पथानेन नृपावसथ इत्युभृत् । सैन्ये मडवराज्यानां स्वयं पृथ्वीहरोऽग्रणीः ।
तत्तत्यागन्तकुलजैर्वीरैः काश्मीरकैर्भटैः । समेतं डामरकुलं दुर्जयं सर्वतोऽभवत् ।
काश्मीरकाः शोभकाद्याः काकवंश्याः सहस्रशः । मख्याता भेघत्रे पवे रक्षाद्यापरे ऽस्फुरन् ।
मदतः खबलादायं तुमुलं गृह्णता मिषात् । पृथ्वीहरेणागृह्यन्त वाद्यभाण्डानि कौतुकात् ।

आहवे साहसं कुर्व्वन् सर्व्वतः सोऽभ्यधान्निजान्। एवमस्खलितस्थैर्य्यमुपपत्तिमसंत्यजन्।
न मे राज्याय येनाऽयं पर्य्याप्तः दुर्य्यशः पुनः। इत्येव प्रसक्तं पूर्व्वेषां व्यवसायं व्यपोहितुं। १०२५
अनाथा इव ते नाथा विघ्ना व्यापादनक्षणे। ज्ञात्वा नष्टं कुलं नाथवन्तो नूनं स्पृहां दधुः।
इति मत्वा सोढकष्टचेष्टे सुदृढनिश्चयः। दूयमानोऽस्मि दायाददुःखदायी दिने दिने।
नास्त्यत्राप्राप्तकालस्य विपत्तिरिति जानतः। कस्य साहसवैमुख्यमुत्पद्येत यशोर्थिनः।
किं कार्य्यगतिकौटिल्यैरत्यैस्तान्यथ वा कथं। न त्वदामः प्रतिज्ञाय स्वयमार्येऽध्वनि स्थितिं।
सोत्कर्षपौरुषाद्भिचौरपङ्क्तिपत डामराः। ततो दायादविच्छेदं नास्याक्षपत जातु चित्। १०३०
प्रायाज्याधिगमाद्राज्ञामन्येषां राजबीजिनः। चिन्तयन्तो व्यवहृतिं व्युत्पद्यन्ते शनैः शनैः।
पितुः पितामहस्याथ न दृष्टं तेन किञ्चन। अतएवाभजन्मोहं राज्यं सम्प्राप्तवान् पुरा।
तत् स भूयोऽपि चेदीचेत् कैव वार्त्ता विपाटने। सापेक्षं वीक्षितुं जाने न दैवेनाप्यशक्यत।
जानन् सवन्यकौटिल्यं प्रमादात् स हितेऽहितं। प्राप्नुयां राज्यमित्याशां सङ्ग्रहान्यत्यवाहयत्।
दस्यूनां सुस्सलो राजा मेने तत्स्वहितं मतं। जिगीषोर्नीतिविक्रान्त्योः प्रयेता लिप्यनन्तरः। १०३५
युद्धे स्वान् स स्मरन्वैरं नापासीत्तेन तेऽभजन्। नास्मिन् विश्वासमेतस्माद्वैतो नास्याभवज्जयः।
इत्थं नानामतैः पक्षैः प्रतिपक्षैरुपेक्षितं। राष्ट्रं निखिलमेवागात् सर्व्वतः शोचनीयतां।
यत्सम्बन्धादिदमपि निबद्धं निग्रहव्यग्रवन्यव्याधप्रस्तानलपरिभवः कोऽपि नन्वन्वभावि।
हाधिगधात्रा विघटनपरः सोऽपि मान्द्यादमीषां सम्यं श्रेयोविधिविधुरितैर्नान्यतोन स्वतोऽपि।
द्वैराज्ये प्रभवत्येवमकाण्डापतितैर्हिमैः। विवर्णं सुस्सलस्याभूदजयश्चैव बलं।
दुर्व्याणलाडभूयोऽपि भिक्षुपृथ्वीहरौ गतौ। अन्यैरन्यैर्भर्त्तुर्नतिदेऽन्तकरैः कृता। १०४०
मिम्मोऽपि कम्पनाधीशो यथाद्विजितडामरः। मर्थां मडवराज्योर्व्वीं वीरः शमितविभ्रवां।
मानत्यापि विपक्षाणां शाम्या शीतलतां गतः। पूर्व्ववैरं स्वपक्षाणां प्रादुश्चक्रे स भूपतिः।
जिघांसुरचिते राजन्दुष्कृणेन पलायितः। मल्लकोष्ठः सोऽपि कोपाद्राज्ञा राष्ट्रात् प्रवासितः।
चन्द्रामात्यजमानन्दं बद्धा दाराधिकारिणं। व्यधत्त धन्यवं प्रज्ञिनामानं राजवीजिनं।
गतोऽथ विजयक्षेत्रं मिम्मेन सहितोऽविशत्। नगरं तस्य विश्वस्तं बद्धा कारागृहेऽक्षिपत्। १०४५
ककुत्भिमहावात्याभेरितो ऽमर्षपावकः। आचचाम क्षमावारि तस्य भयात् दिधक्षतः।
पिंदद्दक्षनपिंदाभ्यामनुजाभ्यां सहावधीत्। शूले ऽधिरोप्य सिंम स रोपाविष्टविलुप्तधीः।
चन्द्रमे क्षीरकं षष्ठं सुक्तिं प्रजे. सहोदरं। बद्धा अनकपिंदस्य राजस्थाने न्ययोजयत्।
कालाय मन्त्रिदत्ताधंरूप वेदे त्रिकाल्पनः। स्वदेशजस्तु सोऽप्यधो सोदरस्य समभ्यगात्।
पद अर्थोऽपि धामदत्तं त्यक्त्वारिचितविपूम्। धनेकोपः कश्चिदासीद्राजधान्यां नृपाश्रितः। १०५०
नेमाय विषमाधिदेशापूषदासि ऽद्युपद्रवे। इत्युत्पादितोऽन्यैर्या न पुनर्व्यः शमं ययौ।
इत्यादिरे चरोऽपि स्तुर्भव स्त्या निर्हिताः। तथापराधे प्राणप्त राज्ञोऽवनेस मण्यते।

साधेऽथ मल्लकोष्टाद्यास्त्राहृताः पुनराययुः । ते शूराः पुरमार्गेण भिक्षुपृथ्वीहरादयः ।
वितस्तापरिखाच्छिन्ना भूरगम्या द्विषामियं । इति मायाश्रमठं त्यक्त्वा राजगृहं नृपः ।
वर्षेऽष्टानवते चैत्रे डामरेषु रुरुत्सुषु । अभ्येत्य मल्लकोष्टेन प्रागेवाग्राहि सङ्गरः ।
सोऽश्ववारैः सह रणं चकार नगरान्तरे । नृपावरोधैः सौधाग्रादालोकितभयाकुलैः ।
भिक्षुणा क्षिप्तिकातीरे स्कन्धावारो न्यवध्यत । रामेण वानरी सेना यथा पाथोनिधेस्तटे ।
नृपोद्यानाद्द्रुमान् निन्युरिन्धनाय महानघे । दूर्व्वाङ्कुरान्मन्दुराभ्यो वाहभोज्याय डामराः ।
पृथ्वीहरस्तु संघटयन् दस्यून् मडवराज्यगान् । चकार विजयक्षेत्रे यावत्कटकसंग्रहं ।
तावत्प्राञ्जिमुखान् मल्लकोष्टयुद्धाय भूपतिः । आदिशद्दावावस्कन्दं वैशाखे साहसोन्मुखः ।
अकस्मात् पतिते तस्मिन् हतावष्टम्भविच्युताः । प्रययुः सेतुमुल्लङ्घ्य जीवग्रस्ताः कथञ्चन ।
नगरं मल्लकोष्टाजिव्यग्रे प्रद्यावयाविशत् । पृथ्वीहरानुजः सुज्जिं निर्जित्य मनुजेश्वरः ।
परं पारं वितस्तायाः सेतुच्छेदादनाप्नुवन् । अर्व्वाचि तीरे स गृहान्दग्ध्वागात्क्षिप्तिकान्ततः ।
तदन्यैर्न्नगरं प्राप्तं मत्वा सुस्सलभूपतिः । आययौ विजयक्षेत्रात् सैन्यमुत्थाप्य विक्लवः ।
अहंपूर्व्विकयारातिसंक्रान्तैश्च निर्ज्जलैः । पीडितस्तस्य गम्भीरः सिन्धुसेतुरभज्यत ।
स कृष्णपक्ष्यां ज्येष्ठस्य तस्याबद्धसमूचयः । यथाग्निना चक्रधरे तथा तत्राम्भसा हतः ।
भुजावुद्यम्य शमयन् सैन्यानां सम्भ्रमं नृपः । त्रस्तैर्भटैस्तथा पृष्ठे पतितः सरिदन्तरे ।
अनभ्यस्ताम्बुतरणैराश्लिष्य मुडितोऽसज्जत् । तरसा युद्धविद्धाङ्गः स निस्तीर्णः कथञ्चन ।
अनुत्तीर्णम्बलं त्यक्त्वा पारे सामन्तसंकुलं । सहसांशेन सैन्यस्य तीर्णेनानुगतो ययौ ।
सन्त्यक्तानन्तसैन्योऽपि सोऽवष्टम्भमयो ययौ । प्रविश्य नगरं मल्लकोष्टमुख्यान्रणेऽग्रहीत् ।
विजयस्याथ जननी मिल्लाख्या स्वामिनोर्ज्जितं । निनाय देवसरसं सैन्यं तद्विजयेश्वरात् ।
साथ पृथ्वीहरेणेत्य हता तत्रोपवेशने । टिक्कश्च दत्तो भूपालसैन्यं विद्रावितश्च तत् ।
परं व्यायामविद्याविद्विद्रुते निखिले बले । द्विजः कल्याणराजाख्यः समरेऽभिमुखो हतः ।
मन्त्रिडामरसामन्तसङ्कुलात् सोऽस्खलाद्दलात् । पृथ्वीहरेणागृह्यन्त बद्धा वृन्दानि मन्त्रिणां ।
अन्वगात् स वितस्तान्तर्यावत्तान्विद्रुतान् बलात् । श्रीजानन्दद्विजार्द्दीय मल्ला शूले व्यपादयत् ।
मन्त्रिणो जनकश्रीवकाद्या राजात्मजास्तथा । तीर्त्वाद्रिं विषमाटायां शरणं प्रययुः स्वमान् ।
इत्थं पृथ्वीहरोऽत्यर्थजयः संहत्य डामरान् । जिगीषुर्भिक्षुणा सार्कं नगरोपान्तमाययौ ।
भूयोऽपि सानुपास्वाघसंहर्त्ता सर्व्वतस्ततः । रणः प्रववृते प्राग्वतुरे रुद्धस्य भूपतेः ।
निर्न्निरोधः पथानेन नृपावसथ इत्यभूत् । सैन्ये मडवराज्यानां स्वयं पृथ्वीहरोऽग्रणीः ।
तत्तत्सामन्तकुलजैर्वीरैः काश्मीरकैर्भटैः । समेतं डामरकुलं दुर्ज्जयं सर्व्वतोऽभवत् ।
काश्मीरकाः शोभकाद्याः काकवंश्याः सहस्रशः । सख्याता सैन्ये पथि रक्षादायापरेऽस्फुरन् ।
नदतः स्वबलादायं तुमुलं शृण्वता मिथात् । पृथ्वीहरेणागृह्यन्त वाद्यभाण्डानि कौतुकात् ।

हित्वा भूर्य्यंथ तूर्य्यादि परिच्छेतुं स कौतुकी। श्वपाकदुन्दभीभाण्डशतानि द्वादशाशकत्।
तथा विनष्टैरन्योऽपि निंशद्भिर्नृपात्मजैः। मित्रैः स्वदेशजैश्चारीन् प्रतिजयाश्च सुस्थलः।
राजन्याविच्छिटकुलोद्भूतावुदयधान्यकौ। चम्पावल्लापुराधोशावुदयमल्लागञ्जलौ।
तेजःसल्हणहंसानां धुर्य्योहरिहडोकथः। घनिकाभिञ्जिकास्थानसव्यराजादयस्तथा।
विडालपुत्रानीलाद्याभावुकान्वयसम्भवाः। रामपालः साहजिको युवा तस्य च नन्दनः।
नानावंश्याः परेऽप्युग्रसंग्रामव्यग्रताजुषः। पुरोपरोधसंनद्धानरुन्धन् सर्व्वतो रिपून्।
तनूजनिर्व्विशेषेण रिल्हणेन महीभुजः। रणाग्रेसरतायाहि विजयाद्येश्च सादिभिः।
स्वयमुद्यमिना राज्ञा वर्म्मणेव निजौ भुजौ। सुश्लिष्टज्ञौ पाल्यमानावभूतां रणकर्मठौ।
ताभ्यां साधारणीं कुर्व्वन्राज्योत्पत्तिं महीपतिः। स महाव्यसने तस्मिन् सम्यगूढधुरोऽभवत्।
तत्पद्माभागिकशरङ्गासिमुसुमुनिमुङ्गटाः। कलशाद्याश्च कुशला विपच्चेोभणेऽभवन्।
भूभर्त्तुष्टक्कविषये लवराजस्य नन्दनः। आसीत् कमलयश्चास्य संग्रामाग्रेसरः प्रभोः।
प्रहारं बलिनस्तस्य चामरध्वजशोभिनः। प्रभिन्नस्येव नागस्य हयारोहा न सेहिरे।
अनुजः सङ्गिकः पृथ्वीपालोभ्रातुः सुतोऽस्य च। पाञ्चालौ फाल्गुनस्येव पार्श्वरक्षिचमाययुः।
एतावद्भिर्भृत्यरत्नैराष्ट्रेऽपि कुपिते ऽजयत्। भूरिस्वर्णार्पणोपात्तैर्वाजिभिश्च महीपतिः।
तत्र तत्राहवे सोऽपि बभ्रामासम्भ्रमोनृपः। उत्सवे गृहमेधीव मण्डपे मण्डपे स्वयं।
तस्य हि व्यसनं त्रासहेतुः माभूदुपक्रमे। प्रहृष्टिप्रास्तमभवद्धैर्य्योदार्य्यस्य धीमतः।
क्षैव्यकृद्भयमापाते मध्यपातेन तादृशं। करचित्रं यथा शीतं मज्जनेन तथा पयः।
वैरिसैन्यतमोध्वस्य यत्र ज्योत्स्नेव निर्य्ययौ। शिताशिता च भूभर्त्तुस्तत्र तत्रास्य वाहिनी।
एकदा छतसङ्केतास्तुल्यमाहवमेत्यके। महासरितमुत्तीर्य्य डामरा नगरेऽपतन्।
असीमनगरस्थानविभक्तकटकोनृपः। परिमेयाश्ववारस्तान् विमतः स्वयमाद्रवत्।
नाभजत् डामरानीकस्तेन विद्राविताेधृतं। हेमन्तमरुताकीर्णपर्णराशिरिवेरितः।
आनन्दः काककुलजोलोष्टशाख्यनलाकथः। अन्ये च डामरानीके ख्याता भूम्नद्भटैर्हताः।
सघाभिधाना नानीता राज्ञः क्रूरस्य दृक्पथं। वह्निजभुशाण्डाला इव राजोपजीविनः।
भयाङ्कोपाद्रिमारूढाश्चापरे भैववासतः। आसन्नमृत्यवोऽभूवन् कटकैर्व्वेष्टितादिशः।
योमार्गो दुर्गमः पत्रिणोऽपि स्नातुन्नत. स तान्। तत्र व्यापारयामास भिदुर्भानी तुरङ्गमान्।
कथञ्चित्पश्रिणा विद्रुपीवस्तथाग्रहीन्मुडः। पार्श्वे पृथ्वीहरो रुढिं दिवाश्चान्ये महाभटाः।
वेगाद्रिभिरवोदृत्तैः भिन्नौ तैर्दिंपतां बले। रुद्धे गोपाचलं त्यक्त्वा तेऽन्यानादरडर्गिरीन्।
अथोदतिष्ठत् सुशीन राजानीकस्य वाहिनी। मल्लकोष्टस्य पत्यश्च चोभितामेपदिक्कटाः।
अरिप्लवपदव्यग्रेसितन् स्वैर्मजितो बलैः। तदाशाव्यखिन्नेरेव हतो राजेत्यसंभयं।
आपातं प्रथमो राजा यावत्तत्राविशोढवान्। तावन् सावरुद्धमप्सिरागगाम रणाङ्गनं।

आषाढवङ्कचाष्टम्यां सहयोराहमेलकः। निजयस्तध्वनिप्रत्तसाधुवादो महानभूत्।
ताभ्यां स शमितो युद्धे सस्नुः ससमीरणः। दावानलोनभस्याभ्यामिव प्रापाम्बुवृष्टिभिः।
सङ्ग्रामवङ्कले काले तादृगन्यो न कोऽप्यभूत्। यादृक् स दिवसोवीर्य्यशौटीर्य्यनिकषोपलः।
अनीकिनी लाहरी सा विलम्बेनाययाविति। तेषामुत्पाटनेच्छूनां नाभवद्धस्तमेलकः।
अन्योन्यस्य परिज्ञाता दिवसे तत्र सङ्कटे। भिक्षोर्भूमिभृता शक्तिर्भूमिभर्त्तुश्च भिक्षुणा।
ततोमडवराजांस्तान् योद्धुं तत्रैव निर्द्दिशन्। चिप्तिकारोधसा युद्धमेत्य पृथ्वीहरोऽग्रहीत्।
दिगन्तरादथायातोयशोराजो महीभुजा। मण्डलेश्वरतां निन्ये रिपून् प्रति जिहीर्षुणा।
खेरीकार्य्ये पुरा तस्य लवन्या दृष्टविक्रमाः। रणेषु मुखमालोक्य शतशः प्रचकम्पिरे।
कुङ्कुमालेपनच्छत्रहयादिप्रतिपत्तिदः। सर्व्वेषामभिनन्द्यतं तं राजा स्वमिवानयत्।
दीर्घोपप्लवयाप्येष दुःखिनः स्वास्थ्यलिप्सया। जनो ववन्ध तत्रास्थां नववैद्यइवातुरः।
ज्यायांसं पञ्चचन्द्राख्यं शेषाणां गर्गजन्मनां। नृपतिर्मल्लकोष्टस्य प्रातिपच्ये न्ययोजयत्।
शिशुरुच्कुङ्काख्यया मात्रा पालितः स शनैः शनैः। आश्रीयमाणोऽनुचरैः पित्र्यैः किञ्चित् प्रथां ययौ।
यशोराजानुयातेन राज्ञा वन्येषु निर्जिताः। केचित्तत्पक्षमभजन् भग्नाः केचिच्च डामराः।
सभिक्षुः प्रययौ पृथ्वीहरः स्वमुपवेशनं। मल्लकोष्टोन्मुखो राजा निर्जगामामरेश्वरं।
अत्रान्तरे मल्लकोष्टो विसृज्य निशि तस्करान्। सदाशिवान्तिके शून्यां राजधानीमदाहयत्।
पृथ्वीहरेण भूयोऽपि योद्धुमागच्छताऽसकृत्। प्लुष्टिसुल्लिमुखा युद्धमकुर्व्वन् चिप्तिकातटे।
वारंवारं लवन्यः स नगरे निर्दहन् गृहान्। प्रायः शून्यत्वमनयद्वितस्तातीरमुत्तमं।
तत्र तत्र रणान् कुर्व्वन् प्राणसन्देहदायिनः। आचक्रामाथ नृपतिर्लहरं वहलं वलैः।
सिन्धुं तरन्तो निःसैतुं द्रुतिभङ्गादयुर्जले। मन्दिरं कन्दराजाद्यास्तदीयाः समवर्त्तिनः।
दरद्देशं ययौ मल्लकोष्टो राज्ञा निराकृतः। सपुत्राथभजच्छुड्डा प्रारोहं लहरान्तरे।
आनिन्यिरे जय्यकेन लवन्येन नृपान्तिकं। विपलाटान्तरात्तेऽथ जनकश्रीवकादयः।
लहराश्वव्यतिक्रान्तनिदाघः शरदागमे। शमालां निर्ययौ राजा यशोराजान्वितस्ततः।
भग्नं पृथ्वीहरत्रासात् सैन्यं रचन् सुनीमुपे। आजौ सज्जात्मजो ज्येष्ठनामा राजसुतो हतः।
युद्धं सुवर्णसानूरग्रामशूरपुरादिषु। कुर्व्वन् शश्वन्नृपः प्राप पर्य्यायेण जयाजयौ।
श्रीकल्याणपुराद्भङ्गं नीते पृथ्वीहरादिभिः। श्रीवकैर्नागवट्टाद्या युधि प्रापुः प्रमापणं।
पौषे सुवर्णसानूरान्निहन्तुं मातुरन्तिकं। टिक्कं स देवसरसं व्यसृजद्दुर्गजन्मभां।
स्नेन राज्ञश्च सैन्येन सहिता सा जिताहिता। अकस्मात्तत्र टिक्केन निपत्य निहता युधि।
स स्त्रीवधं व्यधात् पापी द्वितीयमपि निर्घृणः। विशेषः कोऽन्यथा निर्व्यङ्ग्ये च्छतस्कररचमां।
अबलां स्वामिनीं हन्यमानां त्यक्त्वा पलायिताः। चित्रं पशूपमाः शस्तं स्त्रीचकुर्नोहरा पुनः।
देयसागागतं शय्यां भूयस्वोल्लणं नृपः। ज्ञात्वा मडवराज्यं स प्रययौ विजयेश्वरं।

मल्लराजतनूजानां निजा जिह्वेव दुर्जना । बभूव प्रभविष्णुत्वे व्यापदापातदूतिका ।
प्रायश्चाद्यतने काले सत्यास्तितच्छत्त्रयः । दर्शयन्ति समुत्साय्य सारं दोषत्रयवहं ।
आबाल्यात् संस्तुतः श्रीजयचन्द्रपत्प्रभाषितैः । निर्गौरवैर्यशोराजो राज्ञि तस्मिन् व्यरज्यत ।
स दुर्व्वान्तिर्महासैन्ययुतोऽवन्तिपुरस्थितः । अभजत्ततउत्थाय प्रतिपक्षसमाश्रयं ।
वैरिपक्षगते तस्मिन् बलैः सर्व्वोत्तमैः समं । विक्लवो विजयक्षेत्रात् पलायिष्ट महीपतिः ।
धिग्राज्यं यद्गतः सोऽपि सेहे प्राणविरक्षिषुः । मुष्णद्भिश्चौरचण्डालप्रायैः परिभवं पथि ।
माघे पलाय्य नगरं प्रविष्टस्तत्रथाभिधे । स्वेत्येष्टोगधर्य्यशङ्किष्ट स्वेषामपि तनूरुहां ।
काश्मीरिके जने शेषे निराशे नितरान्ततः । अक्षन्यस्तोत्तमाङ्गोऽभूत् प्रज्ञिपक्षे क्षमापतिः ।
मुद्रिता रुद्रपालादिपूर्व्वराजात्मजप्रथा । प्रज्ञिना विक्रमत्यागनयाद्रोहादिभिर्गुणैः ।
तेनैव वर्द्धितामुत्र देशे विशदकीर्त्तिना । कालदौरात्म्यलुठिता प्रतिष्ठा शस्त्रशास्त्रयोः ।
अमन्त्रयत सङ्गम्य यशोराजस्तु भिक्षुणा । नेच्छन्ति डामरा राज्यं तव विक्रमशङ्किताः ।
उत्पाद्य पुनरुत्पिञ्जं साधिष्ठानबलाश्रयं । राज्यं स्वयं ग्रहीष्यामो यास्यामो वा दिगन्तरं ।
इति तैर्मन्त्रिते क्षुद्रां वार्तां श्रुत्वा दरत्पुरात् । आगत्य मल्लकोष्टोऽपि प्राविशत् स्वोपवेशनं ।
वर्षोऽथ दुस्तरः ख्यातएकान्नशतसञ्ज्ञया । सर्व्वभूतान्तकृल्लोके प्रावर्त्तत सुदारुणः ।
वसन्ते डामराः सर्व्वे प्राग्वन्मार्गैर्निजैर्निजैः । आगत्य भूयो भूपालं नगरस्थमवेष्टयन् ।
धीरः सुस्सलदेवोऽपि पुनरासीद्दिवानिशं । निःसीमसमरस्तोमारम्भसंरम्भभाजनं ।
दाहलुण्ठनसंग्रामकर्म्मशौण्डैः स डामरैः । प्राग्विप्लवेभ्योऽप्यधिको विप्लवः पर्य्यवर्द्धत ।
महासरित्पये निर्निरोधे तत्सुर्विविचरः । नगरन्ते यशोराजभिक्षुपृथ्वीहरादयः ।
ततः कतिपुचिद्युद्धाहेषु यातेषु सङ्गरे । निजेनैव यशोराजः परकीयभ्रमात् हतः ।
कल्यात्मजेन हि समं विजयाख्येन सादिना । सोऽस्त्रजेन तु सङ्ग्रामे पराहत्तीः प्रदर्शयन् ।
विप्रलब्धैः सुवर्णाश्वकरवाणेक्षणानिजैः । शूलायुधिभिरुद्दामैः शूलाघातैरहन्यत ।
भिक्षोराज्यं समर्थोऽयं दातुं हन्तुं ततश्च नः । भीत्या तैर्डामरैरेव स घातितइति श्रुतिः ।
यथैव तेन विश्वस्तः स्वामिद्रोहेण वञ्चितः । तथैव प्राप विश्वस्तः क्षिप्रमेव वधं मृधे ।
पृथ्वीहरस्तत्र तत्र योधयित्वाथ डामरान् । क्षितिक्षारोधसा भूयोऽभ्येत्य संग्राममग्रहीत् ।
तत्राधिष्ठानयोधानां भिक्षुरक्षोपजीविनां । पौरुषं स्वपरोत्कर्षं परिभावि व्यभावयत् ।
वह्निदानमहायोधसंहारादेवपर्व्वे । एकमेकमहस्तत्रानीहस्यासीद्भयावहं ।
अनवस्तरणिशीतांशुनभोन्तं भूरकम्पत । वत्रुर्द्रुमादीन् भञ्जन्तो महोत्पातप्रभञ्जनाः ।
पवनोत्थापितैः पांशुकूटैर्दृष्टैः सुदोहृतैः । व्योम्नि प्रोत्तम्भनस्तम्भभङ्गनिर्घातदारिते ।
ज्येष्ठस्य शुक्लैकादश्यां प्रवृत्तेऽथ महारणे । प्राग्ज्ञोने डामरा वह्निमेकस्मिन् प्रददुर्गृहे ।
पोरप्रियो मारुतोद्भूतः प्रसरन् वेगुसोऽयथा । अष्टादैकपदे कृत्स्नं नगरं निरवग्रहः ।

दृष्टस्तदानीमेतावद्गजव्यूह इवापतत् । साचिकस्वामिनो धूमोद्दहस्तेतौ यदुत्थितः ।
अथेन्द्रदेवो भवनविहारं सहसागमत् । ततोनगरमुज्ज्वालं क्षणात् सर्व्वमदृश्यत ।
न भूमिर्न दिशो न द्यौर्धूमध्वान्ते व्यभाव्यत । उडुक्कामुखचर्म्माभो दृश्यादृश्योऽभवद्रविः ।
धूमान्धकारसंछन्नास्ततः प्रज्वलिताग्निना । अपुनर्दर्शनायेव मुक्ता विष्कृता ग्रहाः ।
वितस्तादृश्यतोज्ज्वालैर्ग्रामाश्लिष्टतटद्वया । रक्ताक्तोभयधारेव क्षतान्तस्यासिवल्लरी ।
ब्रह्माण्डोर्द्ध्वकवाटान्तसंस्पर्शात् पतितोन्नतैः । ज्वालाकलापैः संदृष्टैर्हेमच्छत्रवनायितं ।
उच्चावचैर्यतो ज्वालाशृङ्गैर्हेमाद्रिसन्निभः । वह्निर्धूमच्छलान्मूर्द्ध्नि बभाराम्बुधरावलिं ।
आविर्भवन्तोज्ज्वालाभ्यो ग्रहाद्यकुर्मुहुर्मुहुः । अदग्धायत इत्याशां विनुग्धगृहमेधिनां ।
ज्वलितैस्तापितजला वितस्ता पतितैर्गृहैः । आर्द्राश्मेवदनाक्रान्तां विवेद मग्नितां प्रभो ।
दीप्तपक्षैः खगैः साकं ज्वलितावालपल्लवाः । उद्यानद्रुमषण्डानां व्योमोऽयनमाययुः ।
सुधासिताः सुरगृहा ज्वालासम्वलिता बभुः । चयरुग्ध्यासमाश्लिष्टहिमाद्रिशिखरभ्रमं ।
मज्जनावाघनैः सेतुकर्दमैः शोषशङ्कया । अपास्तैर्नगरस्यान्तर्य्युर्नद्योऽपि शून्यतां ।
किमन्यन्मठदेवौकोगृहाट्टादिविवर्जितं । नगरं क्षणमात्रेण दग्धारण्यमनायत ।
लोष्टावशेषे नगरे धूमश्यामो निरास्पदः । उच्चैरेको बृहद्बुद्धो दृष्टो दग्धद्रुमोपमः ।
सैन्येषु ज्वलितावासत्राणाय चलितेष्वथ । शतमात्रेण योधानां युतो भूभृदजायत ।
पारं गन्तुं वितस्तायाश्छिन्नसेतुं तमक्षमं । लम्बरत्नादिपोऽनन्ता निहन्तुं पर्य्यवारयन् ।
पुरं दग्धं स्वमत्यन्तं प्रजा नष्टाश्च चिन्तयन् । आसन्नं मरणं राजा निर्व्विण्णो बह्वमन्यत ।
प्रस्थातुमथ तं प्रत्यग्भुग्नमाशङ्क्य विद्रुतं । संश्रितोऽन्यैः कमलयः क्व द्रवेत्यब्रवीद्वचः ।
स्मरस्मितविद्योतिचन्दनोल्लिखमाननं । परिवर्त्य निरुद्धाश्वो धीरः स तमभाषत ।
तदन्यं कारवे भूमेः क्वते हंमीरसंगरे । चकार राजाभिज्ञोय सोऽभिमानी पितामहः ।
कुतस्त्योऽप्येष दायादोयक्षातास्माकमस्मि वा । स हर्षदेवोऽपश्यन्नः कार्य्यशेषं पलायितः ।
कोनाम मानिनां पङ्क्तौ प्रविष्टोऽन्ते निजां भुवं । अपिकां स्वाङ्करकान्तां त्यात्तः क्षत्तिमिवोज्झति ।
इत्युक्तोदश्वयन्वल्गामुत्क्षिप्तायमुखं हयं । सम्प्रष्टुमिच्छुः पाणिभ्यां कृपाणमुदनामयत् ।
ततो निगृह्य वल्गायां वाजिनं लवराजजः । ऊचे भ्रंशेषु मत्स्यपे प्रवेशादानभूभुजः ।
प्रहारविक्लवन्तिष्ठन् गृहादेकोऽभ्युपाययो । सङ्कटे तत्र भूभर्त्तुः पृथ्वीपालोऽन्तिकं परं ।
कोनपुत्रं सुसंसाम्य वात्सल्यादेष भूपतिः । स्वशात्तनिष्क्रयां मेने सेवानिष्कृत्युपक्रियां ।
अथ स्थितास्त्रिभिर्व्यूहैर्गृहितास्तेऽकिरन् शरान् । हन्तुं वामेन ते योधाः सर्व्वे वाहनदुर्म्मदाः ।
स प्रेरयंश्च तुरगं देवात्तस्य च तादृशः । सहस्राण्यपि भूगोऽपि व्यधोयन्त विरोधिनां ।
अल्पसैन्योऽदिपत्खड्गलण्ठनप्रतिविम्बितः । नृपः सांदायकायातविश्वरूपरवाश्रभो ।
पत्त्रविह्गानिव श्येनः कुरङ्गानिव केसरी । एकोऽव्यद्रावयद्भूरीनरीन् कुण्डलभूपतिः ।

निपत्य पत्तीन् रुन्धानान् खुराग्राण्यपि वाजिनां । प्राहरंस्ते हयारोहा व्यूह्याहतरंहसः ।
विस्मितज्वलनज्वालाः सर्व्वएव महाभटाः । हन्तव्यास्ते हतायामन्नसस्तोतोरुणाद्दव ।
स द्विषां कदनं कृत्वा दिनस्यान्ते न्यवर्त्तत । वाष्पायमाणस्तोकाग्रं हव्याशेनोर्ज्जितं पुरं ।
तादृशेऽप्यजिते तस्मिन् जयाशागौरवं द्विषः । स चैाज्झीद्भ्रमणोयस्य विनाशाज्जीविताद्दरं ।
आयत्त्वपंस्वलंस्तिष्ठन् स्वस्थस्नत्थ सोऽरिभि. । निर्गच्छन्नित्यमाहृतोऽनेकैरुद्दाप्यमोचितः ।
वह्निनिर्द्दग्धसर्व्वान्नसम्भारे मण्डलेऽखिले । दुःसहं सहसैवाथ घोरं दुर्भिक्षमाययौ ।
दीर्घविग्रहसंक्षीणसञ्चया डामरैर्व्वहिः । तत्तुच्छोत्पत्तयोरुद्धसञ्चाराद्दग्धमन्दिराः ।
अनाश्वुवन्तोविधुरे राज्ञि राजकुलाद्धनं । दुर्भिक्षे तत्र सामन्ताश्वपि क्षिप्रं प्रपेदिरे ।
वह्निनिष्ठूतशेषाणि वेश्मान्यन्नाभिलाषिभिः । बुभुक्षार्त्तैर्जनैर्दत्ता ददाहाग्निर्दिने दिने ।
सरितां सेतवो वारिसंसेकोच्छूनविग्रहैः । दुर्गन्धाः कुणपैरुद्धघ्राणैस्तीर्णास्तदा जनैः ।
निर्मांसनरकङ्कालकपालशकलाकुला । उवाह सर्व्वतः श्वेता क्षितिः कापालिकव्रतं ।
छत्रक्षञ्चारिणोऽकांशुड्स्यानचामोच्चविग्रहाः । व्यभाव्यन्त बुभुक्षार्त्तादग्धस्थाणुनिभा जनाः ।
अथ प्रबन्धयुद्धेन दिनैः क्वापीपुर्णां चनः । पृथ्वीहरोम्तहति श्रुतिर्मिथ्यैव पप्रथे ।
गाढप्रहारविवशे तस्मिन् प्रह्लादिते जनैः । तां वार्त्तां श्रुतवान्राजा ननन्दायुद्ध चोद्धतं ।
धीरेव पुंश्चली व्याजोत्सुक्यसन्दर्शनेन तं । जयश्रीर्भीभयन्त्यासीन्नतु भेजे समुत्सुकं ।
एकान्तवामहृदयो विधिरानुकूल्यं मिथ्या प्रदर्श्य विनिवध्नुनुबन्धि दुःखं ।
अन्धीकरोति भ्रशमभ्रमगं ज्वलन्तं भास्वन्महौषधिभिदे प्रकटय्य वज्रं ।
दीर्घदुःखानुभूत्यन्ते यदीयागमनोत्सवं । तपःफलमिव क्ष्माभृत्काङ्क्षामासीन्मनोरथैः ।
वात्सल्येनान्वितं प्रेम गौरवेण प्रियं वचः । औचित्येन च दाक्षिण्यं सापत्न्यमिव या दधे ।
तस्यापकरणीभूतविभूतिर्म्महिषी प्रिया । तस्मिन् काले महादेवी विपेदे मेघमञ्जरी ।
विनोदशून्यनिर्व्विसलोकयात्रं जगद्विदन् । प्राणैराज्येन वा कृत्यं न स किञ्चिन्निरैक्षत ।
सा भर्त्तुर्व्यसनोद्दन्तैः कृशा काश्मीरसम्मुखी । औत्सुक्याद्वृत्तयात्रासीच्छ्रान्ता फलपुरान्तिके ।
पूर्व्वं तद्दर्शनाशाया दुर्व्वार्त्तायास्ततोऽतिथिः । भवन्नतोऽधिकं राजा दुःखावेगेन पस्पृशे ।
राज्ञीमज्ञातपारुष्यतया दूषितभक्तयः । अनुमस्तुस्वतस्तस्याः परिवारवरस्त्रिय. ।
अप्रत्यक्षे चयेऽप्यस्या भर्त्तुर्द्रिक्तत्वमत्यजन् । तेजोनामाभवत्सूदोवन्द्योभृत्यान्तरेऽधिकं ।
स श्वसन्निहितोऽन्यस्मिन्दद्भ्रायातो निजं शिरः । तच्चितोपान्तरूढेन भक्त्या ग्राव्णाविश्चन्नदीं ।
चाहवाङ्कानसंरम्भैः शोकविस्मृतिकारिणः । राज्ञो द्विषः कार्य्यवशादुपकारित्वमाययुः ।
स राज्यमथ निक्षिप्तुकामो निर्व्विषमानसः । व्युत्क्रान्तशैशवं पुत्त्रमानिन्ये लोहराचलात् ।
मण्डलेश्वरतां प्रत्यंश्नाट्य्य भागिकाभिधे । नीत्वा च गुप्तिमकरोत्तोहरे कोपदेशयोः ।
सदाहमूलं सम्प्राप्तमथायातः प्रियं सुतं । आश्लिष्य विषये राजा बभूवानन्दशोकयोः ।

राजसूनुस्त्रिभिर्वर्षैः प्रत्यायातः स्वमण्डलं। स पश्यन् पितरं स्वान्तरसुस्थितमतप्यत।
खेदनिघ्नानलोष्टावशेषं सोऽविशत् पुरं। अम्बुलम्बोऽम्बुदो दावनिर्दग्धमिव काननं।
राज्येऽभ्यषिञ्चदाषाढस्याथेऽह्नि जनकोऽथ तं। अवादीद्राज्यतन्त्रञ्च हर्षमुक्ताश्रुगद्गदः।
श्रान्ताः पितृपितृव्यास्ते न यां वोढुमशक्नुवन्। धुरमुद्वह तां वीर त्वयि भारोऽयमर्पितः।
साम्राज्यप्रक्रियामात्रपात्रं पुत्रं नृपो व्यधात्। न त्वार्पिपदधीकारं तस्मिन्दैवविमोहितः।
अभिषेकविधावेव राजसूनोः शमं ययुः। पुरोपरोधावग्राहव्याधिचौराद्युपद्रवाः।
सम्पन्नसस्या च तथा देवी संववृते मही। दुर्भिक्षं श्रावणे मासि ययावत् प्रशमं यथा।
अत्रान्तरे सिंहदेवो रणे कुर्वन्नरिक्षयं। कर्णेजपैर्जनयितुर्द्रोग्धायमिति सूचितः।
कोपादविस्रम्भसत्वं सबन्धुं तं व्यसर्जयत्। कथ्यात्मजं राजसूनुस्ततः प्रागेव बुद्धवान्।
कोपस्मितोत्कटस्याये स तस्याप्रतिभोऽभवत्। निनाय रक्षामात्रेण पार्थिवाज्ञाममोघतां।
अभुक्तवान् मनस्तापात् प्रत्ययोत्पत्तये पितुः। साकं तेन सुतोऽन्येद्युर्गन्तुं प्रावर्त्ततान्तिकं।
आवेष्टुं शङ्कितोऽशक्य इति मत्वा स मन्त्रिभिः। मार्गात्प्रवर्त्तयत तं पिता मिथ्या प्रसादयन्।
अन्तस्तु निशिकायेति प्रविश्य तर्कितागमः। बद्धैनं स्थापयिष्यामि कारायामिति सोऽनिशं।
धिग्राज्यं यत्कृते पुत्राः पितरश्चेतरेतरं। शङ्कमाना न कुत्रापि सुखं रात्रिषु शेरते।
पुत्रपत्नीसुहृत्त्या येषां शङ्कानिकेतनं। विस्रम्भभूर्भूपतीनां कस्तेषामिति वेत्ति कः।
साह्लाभिधानप्रख्यातकुग्रामोपान्तवासिनः। खलपालस्य तनयः स्थानकाख्यस्य कस्यचित्।
शैशवे पाशुपाल्येन वर्द्धितोऽडामरोद्भवैः। गृहीतशस्त्रस्तन्नित्यं क्रमाट्टिक्कस्य लब्धवान्।
प्रथमाब्दान् प्रभृत्यात्तदूत्यो भूभर्तुराप्ततां। प्रथयावुत्पलो नाम वैरिविच्छेदमिच्छतः।
स हि भिक्षाचरं टिक्कमथ व्यापादयेत्यमुं। जगादाङ्गीकृतैश्वर्यदानटिक्कोपवेशने।
कृतप्रतिश्रवन्तस्मिन्नर्थे तस्य महर्द्धिभिः। दानैरुपाचरन्क्ष्मापतिनाप्याययोजयत्।
भोगलोभसमुद्रेकस्तादृशो जातदम्पती। स कार्य्यं परिहार्य्यं तां स कार्य्यं निश्चिकाय तत्।
प्रासादोपात्ययमवाप्तस्तदधःकार्य्यतो नृपः। ततश्च प्राहिणोत्तस्मै पितेव प्रसवोचितं।
सा तस्यात्युपचारस्य कारणं परिशङ्किता। पतिं पप्रच्छ निर्बन्धात् सोऽपि तस्यै व्यवर्णयत्।
न कार्य्यः स्वामिनो द्रोहः कृते वास्मिन् स सुस्थलः। त्वामेव शनकैर्हन्याद्द्रोग्धायमिति चिन्तयन्।
वरं स एव विश्वास्य व्यापाद्यस्तत्र चेद्बुधः। भवेत्ते स्वामिपुत्रादिकुटुम्बं स्याद्विभूतिभाक्।
भार्य्ययेति प्रेर्य्यमाणः स निश्चयविपर्य्यये। टिक्कं विहितवृत्तान्तं कृत्वा सद्योद्यमः कृतः।
गतागतानि कुर्वाणे दुधुचावथ पार्थिवः। स पुत्र इव विश्वासं ययौ दैवविमोहितः।
विपर्य्यस्ता मतिः पुत्रे विश्वासो वैरिसंश्रिते। जायते क्षीणभाग्यानां कोनाम न विपर्य्ययः।
वैधेयैः स्वार्थलोभान्धैर्दानार्थसमागमः। सद्योपद्रवः सौद्रनुभैरिव न चिन्त्यते।
तं पीडितं प्रज्ञिना च राज्ञा चावनतं ततः। उत्पलोऽकारयट्टिक्कं नीवीसादापयत्सुतं।

स शापः सन्धार्य्यस्तदपि सहसोभाषितस्त्वेषस्तदुत्पातस्त्वञ्च स्वमपि तद्भ्रंशं प्रकटयन्।
कुलान्तं तत्त्राणाक्षममकृत वैकुण्ठमपि तद्विदन्नप्यन्यत्तं कइव भवितव्यस्य कुरुतां ।
मिथ्यैतदित्यधिक्षिप्य क्षितिपालः प्रदर्शयन्। तमङ्गुल्योत्पलादींस्तानपस्थानेऽब्रवीत्।
द्रोग्धुः सुतोऽभवद्योगादनिच्छन् स्वास्थ्यमेष मे । तं दुष्टमुत्पलाचष्टे स्नेनान्यैर्वाथ चोदितः ।
ते च्छादयन्तः स्वैरास्था धार्ष्ट्येन भयवैकृतं । वक्ति देवोऽयदस्माभिर्बोध्यमित्येवमूचिरे ।
निर्यातेष्वथ तूष्णीकस्तम्भाङ्कइव निश्चलान्। दाम्येनाकारयद्विद्वानन्तिकोमुख्यमस्थिरः ।
उन्मनाश्च किमथासीदिति निःश्वस्य स चिन्तयन्। साश्रुश्च न रतिं लेभे नृत्यगीतादिदर्शने ।
मेने वैदेशिकप्रायानाप्तानपि धृतभ्रम । पुण्यचर्येऽपि पतिषु वैमानिकइवाम्बरात् ।
राजान्तरङ्गः सामन्तः प्रभो शाठ्येन मोहिते । पूत्कारमैच्छन्दातारमन्यं केचिदचेतनाः ।
अयमेव स कालस्य बलात्कवलनग्रहः । विदन्तोऽपि यदायान्ति जन्तवः कृत्यमूढतां ।
सर्व्वान्तरक्षणेष्वस्तचक्षुषोदिवसद्वयं । उत्पलाद्याश्च सामन्ताः कथमप्यत्यवाहयन्।
रहःक्षणप्रार्थिनस्तांस्तृतीयेऽह्नयब्रवीन्नृपः । स्नात्वा प्रत्यूषे लघुथं भोक्तुं यात मुहूर्त्तकं।
देवतार्च्चनपर्य्यन्तमवसायाह्निकं विधिं । आजुहावोत्पलं दूतैर्मध्याह्नेऽथ रहःस्थितः ।
कार्य्यसिद्धिं श्रद्दधानो वैजन्याद्राजसद्मनः । राज्ञोऽभ्यर्णं स सामन्तदासस्तद्वानुगोऽविशत्।
प्रावेशयद्द्वारि रुद्धं व्याघ्रं तदनुजं नृपः । शेषाणामपि सत्यानामादिदेश बहिः स्थितिं ।
विलम्बमानेष्वासेषु केषुचित्सहसैव च । सत्यं तस्योत्मयावांस्तं सोऽत्र द्रोग्धा च इत्यपि।
ताम्बूलदायिकप्रौढवयस्तेनावशेषितः । सान्धिविग्रहिको विद्याम्बिल्लस्यान्तिके परं ।
दूतौ टिक्कस्याघदेवनिष्टवैद्याभिधावुभौ । तत्र प्रसङ्गादासानामज्ञातोत्पलसन्निधौ ।
वाङ्गालः सुखराजाख्योडामरोभिक्षुसद्मनः । प्रयास्यति प्रभोर्द्रष्टुं पादौ तत्कार्य्यसिद्धये ।
इत्युक्तवांस्तेष्वहःसु तं नृपं नातिदूरगं । ससैन्यं डामरं चक्रे स्वस्य त्राणार्थमुत्पलः ।
तयाचैनं तस्थिवांसं कृत्यमस्त्यनुनेति च । उक्त्वा प्रशस्तराजन्तं सार्द्धं प्रावेशयद्द्रुतं ।
प्रविश्यानिर्जनं बाह्यमाकलय्यास्य मण्डपं । अलक्षमाणव्यापारोदारमर्गलितं व्यधात्।
स्नानार्द्रकेशं शीतालुतया प्रावारवेष्टितं । कृत्वा कृत्स्नं वपुः कृष्टमस्तोकं विष्टरोपरि ।
आसीनं वीक्ष्य नृपतिं प्रसङ्गोनेदृशोभवेत्। विज्ञप्तिं कुरु भूभर्त्तुरित्यूचे व्याघ्रमुत्पलः ।
स तया संज्ञया व्याघ्रः पादप्रणतिकैतवात्। राज्ञोऽप्यनेत्य तच्छस्त्रीं विष्टरस्थामपाहरत् ।
विकोशां चाकरोत्पश्यंस्तां तथोद्भ्रान्तलोचनः। प्राह स्म हा धिक्किं द्रोहइति यावदथ नृपः।
प्राहरत्प्रथमं तावत्सव्ये पार्श्वे तथैव सः । तस्य प्रशस्तराजेन मूर्द्धनि प्रहृतं ततः ।
व्याघ्रेणाथ घातं वचसाम्याभिवासहस्तदा । प्रहृतं तत्र स पुनः प्राहरन्न द्विरुत्पलः ।
पूर्व्वमेव प्रहृत्या हि च्छिन्नपार्श्वास्त्रिमालया । मेने कृष्टास्त्रतन्त्रोकं स तं प्रोषितजीवितं ।
गत्वा तनोरिपुं मर्त्तुमिच्छन् व्याघ्रेण राहितः । दृष्टे हताहतिर्द्दिवानानिकानोऽश्वितोऽसुभिः।

ताम्बूलदायिकस्तस्मा कङ्कालाधयकोव्रजन्। दीनो निजेभ्यः कारुण्यादुत्पलेनैव रक्षितः। ११००
अन्तःसमुत्थिते क्षोभे धाम्नमण्डपवर्त्तिभिः। टिक्काद्यैः कृता मुष्टिर्द्रोहदृष्टिप्रदायुधे।
उत्पलो निहतो राजेत्युक्त्वा कटकस्थितैः। बहिःस्थान् हन्यमानान् स्वान् समाश्वासयितुं ततः।
रक्ताक्तं स्वं सन्दर्श्य तोमरैर्भृपुरस्सरः। उचे मया हतो राजा न व्याव्यासयम्पूरिति।
तच्छ्रुत्वा दुःश्रवं राजभृत्याः क्वापि भयाद्ययुः। द्रोहानुगास्तस्तन्नाम्नस्तस्थौ नामा ययुः स्थितिं।
निर्यान्तो मण्डपान्तौत्पलं ब्रिशभुस्नागकाभिधं। दाराप्रविष्टं निष्कृष्टखड्गपाणिकं नृपानुगं। ११०५
भूपालप्राक्पालस्य चैलोक्याख्यस्य सेवकः। निन्दन् द्रोहं टिक्काद्यैर्दास्येरेकोभ्यपादितः।
उत्कृष्टं नष्टसत्त्वानां मध्ये राजानुजीविनां। सखेटकासिं धावन्तं भावुकान्वयभूपणं।
दृष्ट्वा सहजपालाख्यं पार्श्वद्वारेण निर्ययुः। तीक्ष्णः स त्वपतद्भूमौ तत्कृत्यप्रहतिक्षतः।
जाते कुकीर्तिकालुष्यपात्रे राजात्मजव्रजे। वैलक्ष्यक्षालनं सिद्धं तस्य स्वहतजैः परं।
हतदैशिकसम्बाधिदेहो राजात्मजभ्रमात्। विद्वान् द्विजन्मनो नाम्नस्तीक्ष्णपक्षैः पुरोगतः। १११०
अक्षतान् व्रजतो वीक्ष्य तीक्ष्णान् ग्रामान्तरोन्मुखान्। चित्रार्पिता इव क्रोधान्नाधावन् केऽपि मन्त्रिणः।
राजवंश्यामहीपालप्रीतिपात्रप्रथां ययुः। स्थगयन्तोऽङ्गनं स्थूलकाया जनविवर्जितं।
तांस्तान् कापुरुषान् हर्षदेवोदत्तात्मश्लाघ्यं। स्मृत्वा च कीर्त्तयित्वा च हतभारयहाद्य।
जातदुष्कृतसंस्पर्शात् खेदात् कर्त्तुं न शक्नुमः। पापात् पापीयसां येषां नामग्रहणसाहसं।
अङ्गनान्मण्डपारूढिं मन्वानाः पौरुषं महत्। पापिनः केऽपि तन्मुखाः ददृशुः स्वामिनं हतं। १११५
अधरेणास्वसंस्कारलेशवेशप्रकम्पिना। वदन्तं दन्तदष्टेन स्वान्तस्थान्तेऽनुतप्ततां।
वञ्चिता कथमेषोऽहमिति नामेति चिन्तया। निस्पन्दे जीवितान्तेऽपि तथैव ददतं दृशौ।
श्यामायमानं वाष्पेण व्रणवह्नेरुदञ्चता। अन्तः प्रशान्तामर्षाग्निप्रोप्यधूमलतालिषा।
आननस्य स्फुटीभूतचन्दनोल्लिखकुङ्कुमं। सकृया लिखितस्येव घनक्षतजलाचया।
आश्यानास्रजटीभूतकेशं नग्नं भुवि च्युतं। पर्यस्तपाणिचरणं स्कन्धाधालम्बिकन्दरं। ११२०
तं वीक्ष्य नोचितं किञ्चिदाचेरुस्ते नराधमाः। वैजन्यस्य फलं भुङ्क्ष्वेत्यावेगादधिचिक्षिपुः।
बद्धा तुरङ्गेऽयुग्ये वा न तैर्नीतश्चिताग्निसात्। कर्त्तुं न वा पारितः स प्राणत्राणाय धावितैः।
आस्तां विलम्बसाध्यं वा कर्मौतद्ग्राम्यदारुणात्। सज्जाग्निं चाग्निसाद्देहमपि कश्चन नाकरोत्।
राजवाजिनमेकैकं तेऽध्यारुह्य पलायिताः। निर्लुण्ठितस्तु कटको व्रजन् ग्रामेषु डामरैः।
न पुत्रः पितरं पुत्रं पिता वा प्रत्यपालयत्। स्मृतं हतं लुण्ठितं वा प्रचलन् स हिमेऽध्वनि। ११२५
न कोऽपि प्रस्तस्मृत् सोऽभूत् स्मृत्वा मानोन्नतिं पथि। परैराचिष्यमाणो यः शस्त्रं वस्त्रञ्च नात्यजत्।
लवराजयशोराजद्विजौ व्यायामवेदिनौ। कान्दश्च राजा निहता वीरवृत्त्या त्रयः परं।
अदूरादुत्पलाद्यास्तु कटकं वीक्ष्य विद्रुतं। प्रविष्टावाष्टुकां छित्त्वा शिरो निन्युर्महीपतेः।
गतेषु देवघरथं तेषु छिन्नशिरा नृपः। हतचौर इव प्राप ग्राम्याणां प्रेक्षणीयतां।

एवं द्रोहैस्तृतीयाब्दामावास्यायां स फाल्गुने । पञ्चपञ्चाशतं वर्षानायुषोऽतीतवान् हतः ।
विलापव्ययनस्तस्य सिंहदेवस्य सा श्रुतौ । प्रेमाख्येनैव दुर्व्वार्त्ता धात्रीयेन व्यधीयत ।
सम्भाव्यते योऽनुभाव स्वयत्तस्याप्रियश्रुतौ । हतयत्नोऽपि तं प्राप स तदा पितृवत्सलः ।
मोहलुप्तस्मृतिः स्मृत्वा चिरादुद्गतचेतनः । तत्तद्दुःखाहतधृतिर्व्विललाप स्फुटास्फुटं ।
मदर्थं कुर्व्वता राज्यं प्रयत्नादप्रकण्टकं । अधमे किं महाराज त्वयात्मा परिभावितः ।
अहैतैः पश्यतः शत्रूनन्ते वैरविशुद्धये । अपि ते मानिनोऽगच्छंस्तात सम्भावनाभुवं ।
त्वया निषेधिते वैरे पिता भ्राता च ते दिवि । निर्म्मन्युः सम्प्रति त्वन्तु वर्त्तसे मन्युदुःस्थितः ।
अनरण्यक्षपद्रोणजामदग्न्यादिषु स्पृहां । कुल्यचालितवैरेषु मा कार्षीः काञ्चनघर्णं ।
प्रेच्यस्तदाश्रयोमन्युरहं शोधयिता नृप । दूये न तत्र यातं यत्त्वैलोक्यमभियोज्यतां ।
वात्सल्यात्पुलकस्मेरं स्निग्धोक्तिमधुरं मुखं । मद्दर्शने यदासीत्ते तन्मे पुरइवाधुना ।
इति चान्यच्च विलपन् गाम्भीर्य्यात्त्यक्तवैक्लवः । ह्रीशोकभयमूकान् स ददर्शाप्तान् पितुः पुरः ।
अशिक्षयत यन्मन्युर्दाक्षिण्यं निरुरोध तत् । तथाप्येवं स तानूचे किञ्चिदाक्षेपकर्क्कशं ।
कोशैः सद्वंशतां वीक्ष्य कुरुतां सत्क्रियागताः । धिग्भवन्तश्च यस्त्वञ्च तातस्यान्ते विपर्य्ययं ।
यन्मत्पितृव्ये निहते क्षतमुच्छिष्टजीविभिः । मान्यानां भवतां सिद्धिं हा धिक् तदपि नाधुना ।
इत्युपालभमानस्तान् द्वित्रैरन्तिकमागतैः । द्वित्रैरमात्यैः कर्त्तव्ये श्रुतएव हितः कृतः ।
प्रस्थानं वोहरे केचिदूचुः कनयञ्च मण्डलं । त्वराञ्च तत्र राज्यन्ते वदन्तो भैक्षवं भयं ।
गर्गात्मजं पञ्चचन्द्रमालम्ब्य लहरस्थितं । द्वैराज्याचरणायान्ये धीरप्राया बभाषिरे ।
नहि खगृहवह्निर्वाब्धिर्विशेनगरान्तरं । अत्रापि प्रत्यवस्थानं केनाप्यसति सुस्मुते ।
आत्मन्यसम्भावनया तादृशां मन्त्रिणां नृपः । सान्तःखेदं स्वो विधेयं द्रक्ष्यथेत्यब्रवीद्वचः ।
कालापेक्षापरित्यक्तपितृव्यापत्तिदुःस्थितः । स कोशादिव्ययादिचद्रक्षिणस्त्राणदीक्षितान् ।
इत्थेतस्य वमन्यमाणैः पांशून्प्लुताम्बरं । अन्योन्याख्यायिभिर्लोकैः पुरं मुखरतामगात् ।
मत्तवेतालमालेव कालरात्र्याकुलेव च । बभूव सा यामवती सर्व्वभूतभयावहा ।
दीपैर्निर्वातनिष्कम्पैश्चिन्तासन्देश्य मन्त्रिभिः । तिष्ठन् परिहृतो राजा तल्पेरेवमचिन्तयत् ।
निर्द्वारे स तमस्युग्रमारुते शून्यवेश्मनि । तातोऽपि निहतः शून्ये मयि जीवत्यनाथवत् ।
कष्टमेतादृशामस्त्रवैशसक्षालनावधि । कथं गोष्ठीषु शक्ष्यामि द्रष्टुं मानवतां मुखं ।
विरोधिवशवर्त्तिभ्यो देशेभ्यः सैन्यनायकाः । स हिमैरेव दुर्लङ्घ्यैः कथमेष्यन्ति वर्त्मभिः ।
इत्थं विमृषतस्तस्य तत्तत्तीव्राभिषङ्गिनः । ययौ भीतिमतोभीमा कथञ्चित् सा निशीथिनी ।
प्रातस्तत्पिकां पौरसमाश्वासाय निर्गतः । नष्टं कटकमन्वेष्टुं सोऽश्वारूढान् व्यसर्जयत् ।
मार्गानसूचीसञ्चारैस्तुषारैर्व्विवरोज्झितान् । आश्लिष्टवसुधामेघाः कर्त्तुं प्रारेभिरे ततः ।
नामाप्यलब्धा सैन्यस्य मोघसैन्येषु दूरतः । निवृत्तेषु नियुक्तेषु विमृश्यन्नृपतिः क्षणं ।

यद्यद्येनाहृतं तत्तत्परित्यक्तं मयाधुना। इत्तश्चारीन्श्रितवतामभयं सागसामपि। १३८०
इत्याज्ञां भ्रमयामास पटहोद्घोषणैः पुरे। सामीर्घोषास्ततः पौरास्तत्रारभ्यन्त सर्व्वतः।
अनन्तरं नृपाचारवैधर्म्मोद्धारकल्पया। तया सोऽनघया हृत्या फलं सद्योऽनुभावितः।
शतादप्यूनसङ्ख्यैर्यः स्थितवाननुगैः समं। अनुरागहनैर्लोकैस्तत्कालं पर्य्यवार्य्यत।
प्रियोक्त्या वेदनं प्रीतिदायोपायः प्रभोः पुरः। भजंल्लोकस्याग्र्यमन्त्रिपदवीं लक्ष्मकोऽग्रहीत्।
राज्यं श्रय्यां नयत्येवं प्राज्ञे राज्ञि नयक्रमैः। याति मध्यन्दिने भिक्षुर्व्विक्षुः पुरमाययौ। १३८५
तस्य डामरपौराग्र्यवारलुण्ठाकसङ्कुलः। अदृष्टपूर्व्वो ददृशे सैन्यव्यतिकरस्तदा।
हतं श्रुत्वा रिपुं राज्योत्सुकः स नगरं व्रजन्। राजा काकात्मजेनेति तिलकेनाभ्यधीयत।
इतः समस्तविद्वेष्यः स दैवाद्यदि सुस्थितः। कथं प्रकृतयो जह्युर्गुणवन्तं तदात्मजं।
पुरप्रवेशका राजंस्तस्मादेकमहस्त्वरा। रुद्धि पद्मपुरं यामो मार्गं रोद्धुं विरोधिनां।
आगच्छन्तो नष्टसैन्याः सुज्जिमुख्या महाभटाः। निहता यदि वा रुद्धास्तत्र सायुधवाहनाः। १३९०
प्रविष्टोऽसि ततोऽन्यस्तथस्त्वो दिनैर्दिनैर्ध्रुवं। नगरं नगरौकोभिः स्वयमभ्यर्त्थितागमः।
अलमेतैर्ज्वरन्मन्त्रैर्म्मदन्त इति चक्रिरे। स च कोष्ठेश्वराद्यास्य सौरास्तस्यावधीरणां।
राज्यं विदद्भिः सम्प्राप्तांस्तांस्तान् शासनपट्टकान्। द्रुतमर्थयमानैस्य विलम्बं कारितो निजैः।
अतो वऊद्धिमापातविवशाशेषसैनिकः। आसदन्नगरोपान्तं समयेन स तावता।
एतस्मिन्नन्तरे लब्धे निःसैन्यस्य ससैनिकः। गर्गात्मजः पञ्चचन्द्रो नृपतेः पार्श्वमाययौ। १३९५
इतस्वामिपरित्यागमन्युवालनकाङ्क्षिभिः। राजपुत्रैः समं सोऽथ वीरो योद्धुं विनिर्ययौ।
असम्भावनसंग्रामान्वीक्ष्य तान् भिक्षुसैनिकाः। यावत्प्रारेभिरे योद्धुं तावत् किमपि सर्व्वतः।
क्षणेनैव ययुर्भङ्गं तांस्तान् वीक्ष्य हताञ्जिजान्। न संस्तम्भयितुं शेकुः स्वचमूस्य पलायिनीः।
सेनानाथाश्च ये मुख्या भिक्षुपृथ्वीहरादयः। अदृष्टपूर्व्वं सन्त्रासं तेऽपि शक्तिवदाययुः।
विद्रवन्तोऽनुयाताः स्युस्ते चेद्दूरं नृपानुगैः। तन्नूनमवशिष्येत क्षणादेव न किञ्चन। १४००
वैमुख्यं तेषु यातेषु चिरात्साम्मुख्यमाययौ। नवम्भ्रमप्रभावेण नगरे विधुरे विधिः।
अन्यथा कल्पितो लोकैरन्यथा दैवयोगतः। इत्थं राज्ञोर्द्वयोरासीद्विजयावजयक्रमः।
कश्चिन्निपातयति सद्गपदं क्षणेन कश्चित्परं पिपतिषुं नयति प्ररूढिं।
सद्व्यनिर्व्विपर्य्यचित्ततरानुभावश्लाघेऽभ्यसामिव नटं पुरुषं विधाता।
अथ तत्तद्भटस्थानभ्रान्तः सुज्जिर्द्दिनात्यये। दावव्याप्ताद्रिनिष्क्रान्तो निस्सहोऽद्विरिवाययौ।
मेधाचक्रं पुरस्थामस्थितः श्रुत्वा हतं नृपं। सहि धेमस्य राज्यकर्व्वोक्तस्यावरुषत्परं। १४०५
रिल्हणादीन् स्थितान् शूरपुरादौ सैन्यनायकान्। प्रतीक्ष्यमाणस्तैः सार्कं निर्ब्बाधं नगरेऽविशत्।
तमिच्छायां प्रत्यभिज्ञाष्टते तेषामनन्धराम्। स्वावासदृष्टे व्यवतोदीपास्तस्यापयत्ततः।
सैन्यान्ते तु पत्तीनां विद्रुतानां पृथक् पृथक्। निशि क्वापि परिभ्रष्टा न तत्कटकमाययुः।

प्रत्यूषे प्रचलंस्तैस्तैः पृष्ठलग्नैः स डामरैः । न मुहूर्त्तमपि त्यक्तः प्रहरद्भिरितस्ततः ।
वृद्धस्त्रीबालभूयिष्ठान् सहप्रस्थायिनो जनान् । ययौ रक्षन् पुरस्कृत्य पशुपालः पशूनिव । १११०
पञ्चशत्या हयारोहैः सह व्यावृत्य तिष्ठता । कश्चित्क्षणान्तेन रक्षा तेषां कर्त्तुमशक्यत ।
द्राक्षापण्डकुमव्यूहसम्बाधेऽध्वन्यसाध्वसैः । बाध्यमानोऽरिभिर्लोकं सोऽत्याक्षीत्तु पदे पदे ।
हतस्य स्वामिनः स्वामिसूनोश्च व्यसनस्थितेः । आनृण्यकाङ्क्षिणा तेन तत्र स्वात्मैव रक्षितः ।
येषां प्राणपरित्यागे निश्चयं बध्नतामपि । न योग्यकालापेक्षास्ति किन्तैर्हिंस्रपशूपमैः ।
हन्तुं तमष्टमायान्तं रुद्ध्वा पद्मपुरान्तिकं । अवसन् डामराः क्रूराः खण्डूवीविषयौकसः । १११५
खेरीतलालसायामादुत्थाय पृथुसैनिकः । प्रजन्नन्वाययौ तत्र प्रसङ्गे श्रीवकः प्रथां ।
तमनुष्ठानुगं सुज्जिरमार्वति विशङ्किताः । निपत्य ते विदधिरे हतलुण्ठितसैनिकं ।
मेरुश्च मज्जनश्चाश्ववारौ तत्राहवे हतौ । क्षतोवद्धात्मजोमल्लो द्विवसैर्थ्यो व्यपद्यत ।
उदीपविहतश्वभ्रहृत्सलिलसङ्कटं । उदीपपुरवालाख्यस्यानन्तत्र क्षणेऽभवत् ।
युद्ध्वा युद्ध्वा प्रचलतस्तत्र पद्मपुराद्बहिः । रुद्धसैन्यस्य विशिखाः श्रीरक्षस्याविशन् गलं । ११२०
प्रहारविवशो नाम्ना सुज्जिर्शालेति डामरैः । स निर्लुण्ठ्य परित्यक्तः पूर्व्वमैत्र्यनुरोधनः ।
लुण्ठितः श्रीवकोऽनीकशोकभारपद्दानतैः । तैः कैश्चिच्चलितैरासीत् सुज्जेर्मार्गेऽनुपद्रवः ।
प्रस्थिते पथिकेऽकस्मात् यन्निपूत्सादयन् वने । आयुःशेषो मृगेन्द्रस्य विदध्यादध्वशोधनं ।
निःशब्दसैन्यो निर्य्यातः सुज्जिः पद्मपुरान्तरे । उदीपश्वभ्रषविधं सम्प्राप्तोऽग्राहि डामरैः ।
पदातिकोशशस्त्रादि मुष्णतः सोऽनवेक्ष्य तान् । तीर्त्वा श्वभ्रं वाजिगम्यां माश्ववारो भुवं ययौ । ११२५
ततः पुरं प्रयान्तारिभयं दूराद्विरोधिनः । भूभङ्गतर्ज्जनीकम्पहुङ्कारापैरतर्जयत् ।
सम्यसौम्ध्वमात्रं तैस्तत्क्रमादाय च द्रुतं । प्रविश्य नगरं प्राशु नृपतेः पार्श्वमाययौ ।
ज्यायसि भ्रातरीवायं तस्मिन् प्राप्ते जहौ नृपः । दुःखोष्णैरश्रुभिः सार्द्धं वैरिव्यापातसाध्वसं ।
सहस्तमोऽनन्तस्तनुरामन्दस्तत्र चामरे । लोचनोद्धारकग्रामे डामरैः प्रचलन् हतः ।
तत्तु भग्नध्वदण्डादिदुःसहायासकारणात् । स विपत्पतितो नाभूत् कस्यापि करुणावहः । ११३०
भासाभिधः सुज्जिभ्रातोलोकपुष्यात्पलायितः । श्रान्तोऽवन्तिपुरेऽविशदवन्तिस्वामिनोऽङ्गनं ।
कम्पनोट्टाहकः क्षेमानन्दः स च तदन्तरे । अमर्षैरवेष्टितो डामरैर्हालडोड्डवैः ।
इन्दुराजोऽपि सेनानी कुलराजकुलोद्भवः । टिक्कं तदेष्टितोध्यानोड्डारं व्याजादम्रियत् ।
पिद्धदेवादयोऽन्येऽपि बहवः सैन्यनायकाः । अत्यजन् क्रमराज्यं तड्डामरैः कृतवेष्टनाः ।
पाने वमन्तः शावाद्रव तन्नोडविप्लुताः । इत्थं हताः क्षारायांस्तत्र तत्र नृपानुगाः । ११३५
मिष्पादशा छिन्नदृष्टचरणा मग्नविग्रहाः । कुल्यामावहवोऽभूवन् मार्गेषु गलितासवः ।
न व्यलोक्यन मार्गेषु तदा नगरगामिषु । पलायच्छन्नदेहेभ्यो मानुषेभ्यः परः कश्चित् ।
प्रायं विलासवासार्थं तेऽपि चित्तरथादयः । निर्दुर्दरैर्घरैरेव महामात्यैर्भ्रविषते ।

द्वितीयेऽपि दिने रुद्धसञ्चाराः पत्रिणामपि। तुषारवर्षिणो मेघा न मुहूर्त्तं व्यरंसिषुः।
वनपूर्व्वाभिधग्रामस्थितस्य कटकान् निजान्। भिक्षोर्निर्दिष्य धन्योऽथ सिंहदेवमशिश्रियत्।
निशम्य कृतसत्कारं नृपं तदनुयायिनं। सर्व्वेऽपि भैक्षवास्तस्थुः सैनिका नगरोन्मुखाः।
मन्दप्रतापे दायादे संप्राप्तावसरास्ततः। राज्यच्युतस्य राजानमनुमर्त्तुमिव निर्ययुः।
परापातभयच्छिन्नायातास्य विवशैर्ज्जनैः। न तानेतुमशक्यन्त दूरस्थं पिटकाननं।
चक्रिरे स्कन्दभावेनोपान्ते देहांस्थिताम्बिसात्। ते खलरन्ततस्तासामदूरे राजसद्मनः।
राज्ञी चम्पोद्भवा देवलेखा तरललेखया। श्वश्र्वा सहाविमर्दक्तिं रूपोल्लेखावधिर्व्विधेः।
गुणोज्ज्वला जज्वला सा मृता वल्लापुरोद्भवा। गर्गात्मजा राजलक्ष्मीरपि वह्नौ व्यलीयत।
मत्वा हिमर्त्तूपायातं राज्यं तस्य निजप्रभोः। डःमरानप्रभूभर्त्तुर्हिमराजाभिधां व्यधुः।
ददर्श सोत्सवं मुण्डमथ भिक्षुरुपागतं। गाढामर्षाग्निसन्दीप्तैर्दृक्पातैर्निर्दहन्निव।
कोट्टेश्वरज्येष्ठपालाद्यस्तत्सत्क्रियोद्यताः। असहा सन्नतां वैराद्भजता तेन वारिताः।
नगरं हिमवृष्ट्यन्ते स यियासुर्व्युदस्यया। ताटेस्थेनाहिताश्च्युतान् स्मयान् ज्ञात्वाब्रवीद्वचः।
प्रसह्य प्रभुर्या राज्यमिति पृथ्वीहरे सति। हते तु तस्मिन्दायादे विपन्नः स्यात्पतिर्भुवः।
इति चिन्तयतस्तस्तु दैवात् सञ्जातमन्यथा। राज्यस्याशापि विरता हते प्रत्युत यद्रिपौ।
किं राज्येनाथ वा कृत्यं भोगमाक्षेपयोगिना। जिगीषोर्हृवितं कस्य मम त्वान्यच्च सेत्स्यति।
मुण्डं न्यपातयद्भूमौ यः पूर्व्वेषां पुरा मम। सिंहद्वारे मदीयेऽद्य तन्मुण्डं वर्त्तते लुठत्।
दशमासान्मदाद्यानां मुखच्छेदं व्यधत्त यः। तत्तु दुःखं स तु मया दशाब्दाननुभावितः।
एवं निर्व्यूढकर्त्तव्यतया नैष्ठाम्यवन्ध्यतां। उपशान्तमनस्तापः सुस्थितः शेषमायुषः।
इत्याद्युक्त्वा गतश्लिष्टाभ्यर्णन्तं प्रणतं व्यधात्। प्रीत्या सहेमघटिकाश्वेतच्छत्रादिभाजनं।
तद्दिग्श्लेषेण राज्याशापिशाच्योदितया पुनः। गृहीतोऽभ्येत्य शीतार्त्तस्तस्यावन्तर्व्विचिन्तयन्।
अत्यन्तानुचितं चान्यसस्यैः संविधित्सुभिः। रचितं रत्निणान्यस्य हतस्याश्वत्कलेवरं।
विपत्त्याश्रयणेऽप्यस्मिन् स्वामिनोऽन्ते किमीदृशी। दशा शरीरेस्यात्यन्तः कृतघ्नत्वेन चिन्तयन्।
दिङ्घाव्याजतः सच्चकाख्यानगरप्रस्तम्भत्। आयातो वात्तुकां गोभून् युद्धैर्जिलाम्रिसाद्व्यधात्।
स चतुर्नवताद्वर्षादारभ्यासादितच्छलैः। भूतैरधिष्ठितस्तिष्ठन् प्रजासंहारकार्य्यभूत्।
दैवताधिष्ठिताविष्टदेहिवाक्यादिति श्रुतिः। भावितद्वयसंवादजनितप्रत्यया यथा।
तदीयानन्यथात्वेन च्छेत्ता भ्रमयिता च यः। तन्मुण्डस्यास्य स पुमांल्लब्धः सुतो मृतमाया।
भट्टुकापुत्रपाचारहतो चित्रो व्यसर्जयत्। प्राचण्ड्याख्यातये मुण्डमथ राजपुरीं रिपोः।
उत्पलात्मजया तत्र देव्या सौभाग्यलेखया। नेतृन् पितृव्यमुण्डस्य जिघांसन्त्या निजानुगैः।
राजपुर्य्यामाकुलत्वं नीतायामाससाद ततः। तद्भर्त्तुः सोमपालस्य दूरस्थस्यान्तिकस्थिरात्।
आदीनास्य मधुस्थ्यग्रामधर्मादिकर्मसु। तिरयद्वत् सोच्यस्य नैयबुद्धेः खशप्रभोः।

सभ्यैरुच्चावचं तत्र कर्त्तव्यं परिचिन्तितं। स्वोचितं व्यञ्जनौचित्यानौचित्यं निरवग्रहैः।
नागपालस्तु सौभ्रात्रं लब्ध्वा भ्रातुः स्थितोऽन्तिके। सेहे मुण्डावशेषस्य नोपकर्त्तुर्व्विमाननां। ११७०
सुदीर्घदर्शिनोऽप्यन्ते काश्मीरेभ्यः पराभवं। विशङ्क्याप्तुमर्थ्येयदं सत्काय्यं वः शिरः प्रभोः।
क्रियते येन नियतेरन्यथात्वं सनाथतां। विनिहस्य हरेर्द्दंष्ट्राः कुर्व्वन्तो यत्र जम्बुकाः।
तद्वैपालपुरे कालागुरुचन्दनदारुभिः। काष्ठैर्निष्ठां शिरो निन्ये वीतिहोत्रेऽथ शत्रुभिः।
यथा प्राप्तिभ्रंशा धरणिपतिभावस्य विविधा यथा ह्रासोल्लासा अपि समरसीमासु बहुशः।
यथा तत्तद्दीर्घव्यसनविनिपातानुभवनं तथा दृष्टस्तस्य प्रमयसमयोऽप्यद्भुततरः।
कल्यापरस्य तस्यैव लेभिरे वह्निसत्क्रियां। एकत्रेतरगात्राणि मुण्डमन्यत्र मण्डले। ११७५
टिक्कादयोऽथ नगरं यान्तोऽवन्तिपुराध्वना। तत्र हन्तुं व्यलम्बन्त भासादीन् पूर्व्ववेष्टितान्।
युद्धाग्न्युद्दीपनपावप्रहारच्छेदकारिभिः। न ते जेतुमशक्यन्त तैः प्रयत्नैः परैरपि।
स्थितैर्महाश्मप्राकारगुप्ते सुरगृहाङ्गने। तैर्हन्यमानास्ते स्थातुं गन्तुं वा नाभवन् क्षमाः।
एवं प्राप्तविलम्बेषु तेषु लब्धान्तरः सुधीः। स्वीचकार प्रदानेन खण्डवीडामरान्नृपः।
गृहीतनीविना तेषां सन्धिः प्रायोजि सत्वरं। तेन भासादिमोक्षाय पद्मचन्द्रादिभिः समं। ११८०
प्रापावन्तिपुरं यावन्न स तावत्तदभ्यगान्। कथ्यात्मशादीनालोक्य भङ्गं टिक्कादयो ययुः।
देवागारादिनिर्याता भासाद्यास्ते च विद्विषां। भग्नानामनुगान् हत्वा सुक्षेरन्तिकमाययुः।
लब्धप्रतापे नगरं प्रविष्टे कम्पनापतौ। आययाविम्बुराजोऽपि टिक्कं सन्त्यज्य सानुगः।
चक्रे चित्ररथश्रीवभासादीनपि भूपतिः। पादाग्रद्वारखेर्य्यादिकार्य्यं स्थानाधिकारिणः।
यथा पूर्व्वमधीकारान् न जहत् सन्धिरप्यभूत्। प्रतीहारमुखप्रेक्षी का कथेतरमन्त्रिणां। ११८५
प्रतीहारोऽपि निःसीमडामरग्रामसम्मतः। तद्भेदचक्रिकां कुर्व्वन्नगाद्राज्ञः प्रतीक्ष्यतां।
स नासीदस्य गृहे कोऽपि तत्प्रेरणेन यः। नाशिश्रियन्नृपं नोवा बभूवाश्रयणोन्मुखः।
निष्कृते शिलवद्रुमस्फूर्त्तिर्धूर्त्तोमहीपतिः। आहारमथनासाद्य तत्मतं न न्यषेधत।
इत्थं नगरमात्रान्तर्लब्धपादप्रसारिकः। सोऽवर्त्तिष्ट समासन्नफलं कन्दलयन्नयं।
संहृत्याखिलान् भिक्षून् डामरान्विजयेश्वरे। अयातिष्ठदधिष्ठानं जिघृक्षुः शिशिरात्यये। ११९०
अदृष्टपूर्व्वं स्वचमूचक्रैक्यं वीक्ष्य डामराः। भिक्षोर्हस्तगतं राज्यं मत्वाशङ्कितास्तथ ते।
एकैकस्यापधीशौर्य्यमिच्चामिवादि दृष्टवान्। नोत्तिष्ठेत् प्राप्तराज्यः किमास्कन्देषु स्वहान्तरं।
इति संमन्त्र्य ते राज्यं भीमपालाय दित्सवः। दूतान्निगूढं प्राहिण्वन् सोऽपि दूतं व्यसर्जयत्।
आकारचारवैकल्ये पश्यतुस्तस्य तस्य तैः। राज्यभोगास्य मद्भ्रातोभविष्यन्तीत्यचिन्त्यत।
भोगलोभार्जितौचित्यदस्युमहाचिकीर्षितं। देवेऽत्र पापात् पापीये दैवान्न ममपादि तत्। ११९५
हास्योऽप्ययोग्यो योराज्ये मदभ्यासे सपाश्रितः। शक्येत पातुं देवोऽयं किमीपदपि तादृशा।
प्राचीन् पलालपुरुषोऽवति यः कृशानुदग्धाननयटकपेटकभीतिदानैः।

त्रातुं स कानननतरुर्निर्दितो विदध्यात् किन्त्व भग्ननक्षतां वनकुञ्जराणां ।
भिक्षोर्नानिष्टतां दिष्टदृष्ट्याजात्ततोभजन् । तद्दूतोडामरान् गूढं नीविदानोद्यतान्व्यधात् ।
वैशाखेऽथ कृतारम्भस्तदा संभावितत्वरः । निर्गत्य नगरात् सुज्जिर्गम्भीरातीरमाययौ ।
तस्यापि योगः स्लाघ्योऽभूदोद्धुं यत्समवायिनः । एकाकी तावतो वीरानुरीकृत्य स निर्ययौ ।
अन्त.पाते साहसानां नाद्भुतं तद्विधेर्वशात् । जीयते लक्षमेकेण लक्षेणैकोऽथ वा युधि ।
पारं तरीतुं नि.सेतोः सरितोऽपारयन्नसौ । पारे परस्मिन्स्थितानपश्यच्छरवर्षिणः ।
स्थित्वा निशाः स ते चासंस्तस्याः सिन्धोस्तटद्वये । रुद्धाः सन्नाहिनोऽन्योन्यरभसविक्षणदीपिताः ।
अथावन्तिपुरायातैरानीताभिरबन्धयत् । सेतुं सान्धोऽतरत् सुज्जिरारुह्य तरणी स्वयं ।
तरन्तमेव तं दृष्ट्वा योधैः कतिपयैः समं । विपक्षमूर्मलोला द्रुमालीवाभवच्चला ।
द्रष्टुं मुहूर्तमेतावदारूढः स च यत्तटं । बद्धस्य सेतुस्तीर्णाश्च योधाभग्नाश्च विद्विषः ।
न खड्गी न हयारोहो नापि शूली न चापभृत् । व्याहत्य सेचितुं कश्चिदशकद्विद्रुतान्द्बलात् ।
निबद्धबन्धशैथिल्यास्त्रोलपल्ययने हये । कोष्टेश्वरस्यास्वारा व्यलम्बन्तान्तरे क्षणं ।
निर्यत्य तेऽपि पर्याणं सुज्जौ पश्चात्प्रधाविते । वातोद्धुतं रजश्चक्रमिव क्षिप्रं तिरोदधुः ।
हृतलुण्ठितविध्वस्तध्वजिनीका विरोधिन. । ध्यानोड्डारादिषु ग्रामेष्वमिलन् खण्डशो गताः ।
विजयेशागमन्तोर्ला वितस्तासेतुमग्रगः । भासाऽपि दस्यून्विदधे पलायनपरायणान् ।
उषित्वा विजयक्षेत्रे तदान्येद्युरुपागते । कम्पनेशे ययुस्त्यक्त्वा ध्यानोड्डारं विरोधिनः ।
तत्र स्थित्वा दिनै. कैश्चित् स देवसरसोन्मुख' । शिशिरे भेदनिर्यातैरेत्य टिक्काद्य गोत्रिभि. ।
जयराजयशोराजौ तन्मुख्यौ भोजकात्मजौ । प्रविश्य देवसरसं व्यधाद्दिक्कोपवेशनं ।
ययुर्विनष्टसंख्यातास्तस्मिन् पश्चात् प्रधाविते । भिक्षादयः शूरपुरं खोर्व्यां कोष्टेश्वरादयः ।
गर्हा महाभये सोमपालदूतः पलायितः । दास्याः सुतेन प्रहितः कुत्रास्मीति प्रभोर्व्यधात् ।
सहि तादृग्महारम्भोमसाध्योन्नतीच्छुतां । तस्य सिंहीसुताक्रान्तगोमायुवदमन्यत ।
प्रसादात् स्वामिनो राज्यं चिरं नष्टं मितैर्दिनैः । सुज्जिः प्रसाद्य प्रददावेवं स स्वामिसूनवे ।
ग्रमालादीनपि यूढान् दानोपायेन डामरान् । पौरांश्च भिक्षाश्रयिणो राजाभ्येतुं प्रचक्रमे ।
राज्ञः परीक्ष्य सामर्थ्यमथ कुर्मो यथोचितं । इति सर्वाभिसारेण तं संमन्त्र्य रणं दधुः ।
रजोजवनिकालक्ष्यभटोघनटताण्डवः । दामोदरेऽभ्रत् संग्रामः स वीरग्रामघस्मरः ।
कोष्टेश्वरवशं यातं रक्षता पितरं हतं । लब्धा. सहजपालेन स्लाघा. प्रकृतिभिः समं ।
असमत्वाविशेषोऽभद्राज्ञो भिक्षाचरस्य च । भिक्षुस्तद्दन्यथावेदं विवेदात्मपराजयं ।
तत प्रभृति य. प्रातः स न सायमदृश्यत । योऽद्य वा स परेद्युः स सैनिको भिक्षवे ययौ ।
एवं त्यक्त्वा पराम् पौरडामरेषु नृपाश्रितं । प्रयातुं लाभसत्कारानुचिताम् प्राप्नुवत्सु च ।
दाप्यदंपूर्विकोत्कण्ठौ मल्लकोष्ठेश्वर कोष्ट्यौ । प्रयातुं पार्थिवाभ्यर्णं लाभलोभाभिलाषिणः ।

भ्रात्वाय तत्काकरुहाक्रूर्रो तस्य परिच्छदः । देशान्तरोन्मुखोभिक्षुराषाढे मास्यवाचलत् ।
अनुयाद्भिः कदाचिच्चोपादिष्टिहितसान्त्वनैः । तदाद्यैर्डामरैः क्रुध्यन् निरोद्धुमपार्य्यत ।
अकरोत् स्वैरिणीसूनुतया शीलवहिष्कृतः । अतिरूपेषु दारेषु तस्य कोष्टेश्वरः स्पृहां ।
घटां हरेः फणारत्नमहेच्छालां हविर्भुजः । वालास्य तस्य संस्प्रष्टुं कोऽप्रशान्तस्य शक्नुयात् ।
समं सैरुखलिना बद्धसन्धिराश्रयकाङ्क्षिणः । सोमपालः स्वविषये नादात्तस्य प्रतिश्रयं ।
तद्विजेतुः प्राणहरैः प्रयत्नैस्तस्य सर्वतः । तद्देशदुर्गममहीसीमान्तं सुल्हरीं ययौ ।
त्रिगर्त्तेषु दया शीलं चम्पायां मद्रमण्डले । त्यागोदार्य्यांभिसारेषु नैचोणं मर्त्यधर्म्मिणां ।
पीडयेत्यकभीर्भूम्यद्दूरस्थे त्वयि डामरान् । त्वामेवाभ्यर्थ्य राजानं ततः कुर्य्युः क्रमेण ते ।
घ्नान्तप्रजाः सोऽर्थयितुं साम्प्रतं नरवर्म्मणः । मन्त्रिभिर्युक्तमित्युक्तमपि मन्त्रं न चाग्रहीत् ।
वात्सल्यपरिवारोऽप्यकृष्टदत्यय म्टकतः । श्वशुरप्रार्थनां तस्य भृत्याः पार्श्वादवाचलन् ।
प्रावर्त्यताथ नगरे विशद्भिर्व्विभवोज्ज्वलैः । सुलभसुलभे काले वरयात्रेव डामरैः ।
वीच्याश्वच्छत्तुरगं रैकैकपार्थिवाधिकं । सुस्तलक्ष्मापतेर्धैर्य्यं नेष्ठुर्यं तुष्टुवुर्जनाः ।
औदार्य्याकारतारुण्यवेशसौन्दर्य्यमन्दिरं । कोष्टेश्वरोऽधिकं क्षोणीं प्रययौ प्रेक्षणीयतां ।
प्रशान्तश्चिरं देशे ययावुत्सवरम्यतां । निःशङ्कैरिलवन्याघट्टय्यं घोषादिकोऽनिशं ।
चौराद्या लक्ष्मकोऽपि सर्व्वे मण्डवगाज्यतः । आनीताः पार्थिवाभ्यर्णे सैन्यार्णवभयङ्कराः ।
अपि भूपालवासभ्यादभृद्राज्ञोपजीविनां । प्रतीहारस्टहद्वारप्रवेशो वडमानकृत् ।
सन्ध्यनुष्ठितपामतया दुर्भिक्षदुःसहः । व्ययोत्तरङ्गकालोऽभूत् स राज्ञोधनदर्थिनः ।
डामरेभ्यो नृप. पौरानुसंरक्षन् कृतवेतनः । निनायाभ्यन्तरं दृद्धिं वाह्यं चापचयं जनं ।
तिथ्यवैश्यार्घदेवाद्या भ्रातरो जनकद्रुहां । राजद्रोहोचितां राज्ञा विपत्तिमनुभाविताः ।
सोमेश्वरभिं स पितृसमयाहादनन्तरं । अनन्यशासनं राष्ट्रं स्वमेव समपादयत् ।
निरासन्नगरं पौराः सर्व्वसामर्थ्यवर्जिताः । अनन्तैरप्रमाकीर्णं डामरैः पार्थिवोपमैः ।
बद्धमूलो नातिदूरे सर्व्वभारसहो रिपुः । सवाह्याभ्यन्तरानन्तिसामन्तान्वैरिसंश्रिताः ।
मत्तापदेशस्टहस्य नैकस्यापि नृपास्टहे । अधर्म्मवत्सलाः सर्व्वे भृत्या द्रोहैकतत्पराः ।
राज्यारम्भे समभूवेयं या सामिग्यस्य भूपतेः । सा समर्त्त्यान्तरामातं मत्युदन्तविकृभिः ।
प्राक्प्रसङ्गात्तदिदं गुणरामोपवर्णनं । वक्ष्यमाणं सुवक्रमोऽप्यत्र सेमात् प्रदर्श्यते ।
पूर्व्वापरानुसन्धानवन्ध्यैर्दृष्टान्तवन् कथाः । नावुद्धातिगभीराणां शक्या रमयितुं गुणाः ।
प्रत्यक्षस्य गुणाम्भोविविचिन्तोयपाश्रिताम् । अतीर्थस्य भविष्यामो विवेकस्यानृणावयं ।
स्थितस्य तत्प्रस्थाने नान्यत्र हि पटुर्जनः । अमानुष्यानुभावस्य राज्ञः किं पुनरीदृशः ।
हितानां दाराणां मदृशसुखदुःखस्य सुहृदः कोः सोऽस्य प्रियसकृतोऽकस्य नृपते ।
स्थितानां कोऽप्यत्र व्यवहितविवेकः स्वकृष्टैरसामान्यं श्रातुं सुभगमनुभावं स कुशलः ।

आद्यायामेव यात्रायां ज्ञातारातिचयो जनैः। स निःशेषयिताशेषकण्टकानामगण्यत ।
तस्मिन् प्रविष्टे नगरं विद्रुताः केऽपि सागसः। प्रापुर्जनकसिंहाद्याः केऽपि कारागृहस्थितिं। ११८५
कैश्चित्पलायितैः शङ्का ग्राहिताः पृथिवीपतेः। ततः कोष्ठेश्वरमुखाः प्रातिलोम्यं प्रपेदिरे ।
शमालां निर्गतः श्रीमान् कार्त्तिकेऽथ कृती नृपः। तत्र तत्रासुहृद्ग्रामं संग्रामेणेयमबाधत।
यत्र सुस्सलभूपाद्याः प्रापुर्भग्नप्रतापतां। तं हाडिग्राममदहत् सुज्जिरूर्जितविक्रमः ।
महीभुजा पीड्यमानैराहूत कोष्टकादिभिः। अथ भिक्षाचरो राज्यभ्रष्टभूर्भूयोऽप्युपाययौ।
एकेनाह्ना योजनानि प्रोल्लङ्घ्य दश पञ्च च। शिल्लिकाकोष्टनामानं गिरिग्राममवाप सः। ११९०
क्षुत्पिपासाक्लमारातिभीतिमार्गश्रमोद्भवं। क्लेशं नाजीगणन्मौनी धावितः स जिगीषया।
कार्य्यमायाति वैमुख्यं जिगीषोर्व्विधुरे विधौ। प्रस्थितस्य पुरोवाते रयस्येव ध्वजांशुकं।

आरम्भमात्रमपि कस्यचिदेव सिद्ध्यै कश्चित्प्रयत्नपरमोऽप्यफलप्रयासः ।
मन्थाद्रिणाप्तममृतमम्बुदधेर्मुहूर्त्तात्तत्किञ्चिराद्दिदधता न हिमाद्रिणेन ।
भ्रष्टा सरित् स्ववसतेर्जलधिप्रवेशे वेलोर्म्मिवेल्लनवशेन विवर्त्तमाना ।
मिथ्यैव यच्छति धियं पुनरुद्गतेति नोत्थानमस्ति तु विधिव्यपरोपितानां ।

तस्य तावन्महायत्नकठोरस्योदयक्षणे। सिद्धेर्व्विघ्नो विधिना विधुरेण व्यधीयत। ११९५
आयातं तमबुद्ध्वा तु तस्मिन्नेव क्षणेऽश्रयत्। पृथ्वीहरानुजः प्राप्तभङ्गः छत्ताङ्कुलिं नृपं।
कोष्टेश्वरः स चावेत्य सम्प्राप्तं तमतिष्ठतां। हत्याचमौ हतौ सर्पाविव मन्त्रनियन्त्रितौ ।
ताभ्यां स्थानेऽथ सोऽन्यस्मिंस्त्याजितोऽध्वपरिश्रमं। कार्कोटद्रङ्गमार्गेण निर्गतः सुन्दरीं ययौ।
आसीच्च तत्र प्रोच्चण्डदर्पकण्डूलदोर्द्रुमः। उष्मायमाणः कश्मीराक्रान्तिमन्ततचिन्तया ।
उद्दीपसलिलस्येव तस्य रन्ध्रगवेषिणः। पुरं प्रविष्टो राजातिप्रतीकारमचिन्तयत्। १२००
अद्वितीयस्त्वमात्येषु प्रतीहारोऽमदोयतां। सुज्जेरसहमानोऽभूच्छलान्वेषणतत्परः।
आययावथ विश्रम्भावष्टम्भं बलात् प्रभोः। धन्यापजः पूतमूर्त्तिर्जाह्नवीजलमज्जनात्।
तदाद्याः संस्तुता राज्ञश्चिरं सम्भाविताश्च ते। अनाप्नुवन्तोऽधीकारान् पर्य्यतप्यन्त चिन्तया।
कुर्व्वाणे कार्य्यतन्त्रस्मिन् भरं पित्र्येषु मन्त्रिषु। कालप्रतीक्षाक्षमतां मुञ्चन्ति गहनाशयाः।
प्रतीहारस्तु दुर्लङ्घ्यसुज्जिनिर्लोठनोद्यतः। अप्रियानपि तान् प्रीत्या जग्राहोपयोगिनः। १२०५
व्यतीतेष्वथ मासेषु केषुचिद्दैवयोगतः। अकस्मादभवत्क्ष्मभृत् स्फीतसूतामयातुरः।
विस्फोटशोफातीसारवह्निमान्द्याद्युपद्रवैः। सन्दिग्धाभ्युदये तस्मिन् देशः पर्य्याकुलोऽभवत्।
इत्थं स्थितः कुलेऽस्यैकभर्त्तुः स्वामी मतो रिपुः। तत्पक्षा डामरा राष्ट्रं दुष्टमेव व्यचिन्तयन्।
आयत्याश्च तदात्वे च हितकृत्यं विचारयन्। राज्ञ्याः श्रीगुणलेखाया जातमेकं सुतं शिशुं।
पश्चाब्ददेश्यं परमाडिं सुज्जिर्भूमिपतिं तदा। चिकीर्षुर्मन्त्रयामास मातुलेनास्य गर्गिणा। १२१०
इत्थं भूतस्य दुर्भुजः सखनुः सुज्जिरथ ते। पञ्चचन्द्रादिभिः सार्द्धं युक्त्या मन्त्रयतेऽनिशं।

लब्धरन्ध्रः प्रतीहारो धन्याद्याश्च उदीरिताः । इत्यशोचंस्तो भूपं स तथेत्यग्रहीच तत् ।

पूर्व्वप्रजासृजदवाहुनवस्तुतत्त्वव्यावर्णनेन कुतुकं जनयन्ति तज्ज्ञाः ।
बालादवाल्पमतिहार्य्यधियश्च सन्ति प्रायो नृपा निश्चमशून्यमनोनुभावाः ।

शोचस्थाने कृतवसतिभिः स्त्रीव्यवायालये वा निःशङ्कोय स्खलनकुशलैर्मानवं सम्प्रविश्य ।
भीताभूतैरिव विवशतां निर्भरं नर्मचेटैर्भङ्गं भूपात्कथमितरतः स्यादवष्टम्भचेष्टात् ।

निर्वेतु प्रहृष्यन्विटः प्रविशति क्षोणीपतेरन्तिकं प्रत्युत्फुल्लदृगेष किं किमिति तं पृच्छत्यनच्छाशयं ।
ब्रूते किञ्चिदसौ कदाग्रह कथमप्येकं मानिनां मानप्राणगुणेषु यत्सरभसं दम्भोलिपातायते । १९१५

सविभ्रमगतागतः किमपि भाष्यमाणः श्रुतौ प्रभुर्वलितलोचनं जगदवज्ञयालोकयन् ।
निजस्य मुखविक्रियागणयिताडनाद्यैर्विदन्ननुग्रहमिवाहितं नृपतिवल्लभो दुःसहः ।

अपि जातु स दृश्येत निःशङ्कोभ्रमतिर्नृपः । योयन्त्रपुत्तक इव व्यक्तं धूर्त्तैर्न नर्त्यते ।
यतोभृत्यान्तराज्ञानाञ्जातः सर्व्वस्वसंचयः । तत्प्रजादुष्कृतैराज्ञां हा धिङ्नाद्यापि शाम्यति ।
सुज्जिरारोग्यमन्वेष्टुमागच्छन् पूर्व्ववत् प्रभोः । विन्यस्तरक्षिणः पश्यन्नविश्वासमखिद्यत ।
दाक्षिण्यं वामतां यातमाशये प्रतिविम्बितं । दर्पणस्येव राज्ञः स विभाव्याभूत्पराङ्मुखः । १९२०
तस्मिन्राजगृहे खेदान्मन्दीकृतगतागते । नृपतेस्तद्गतां प्रीतिं निःशेषां जज्ञिरेऽखिलाः ।
भृत्यः सुज्जेश्चिरयोऽप्यास्थानदिक्षभूः शठः । प्रातिलोम्यावहैर्भर्त्तुर्मन्त्रैराशीच्छ्रियोऽन्तकृत् ।
नीरोगे राज्ञि दृष्टः स शिष्टदृष्टो नृपास्पदे । वसुवर्षौ विनिर्य्याय प्रार्थनार्थी गृहान् ययौ ।
न तं प्रासादयद्राजा विशालवलवाहनः । आक्रम्यासौ कथं न स्यादित्युपायं विचिन्तयन् ।
त्यज्येत हतकार्य्योऽसौ निराशैरनुजीविभिः । मत्वेति तदधीकारानन्येभ्यस्तूर्णमार्पयत् । १९२५
राजस्थानात्पृथक् धान्यमुदयं कम्पनादपि । अजिग्रहन्नरपतिः खेरीकार्थञ्च रिल्हणं ।
हृताधिकारे प्रव्यक्तवैकृते नृपतौ ततः । अल्पावशेषानुचरः सुज्जिराशीद्विशङ्कितः ।
विमानितः पुराद्गङ्गायात्रामुद्दिश्य मानवान् । सोऽथ सुस्सलभूभर्त्तुरस्थीन्यादाय निर्ययौ ।
औत्सुक्यात् प्रार्थनाकाङ्क्षी राजधान्यन्तिकेन सः । निर्गच्छन्राजपुरुषैर्न राज्ञा वान्वरुध्यत ।
तन्निर्वासनगर्व्वस्य स्थापनायानुयात्रिके । प्रतीहारस्तस्य गुप्तौ कोपादेः स्वात्मजं व्यधात् । १९३०
निग्रहानुग्रहावस्मदायत्ताविति रक्षिणं । पुत्रं प्रादाल्लक्ष्मकोऽय इति ध्यायन् स विव्यथे ।
निवृत्तो लक्ष्मको द्वारात् पर्णोत्सं शनकैर्गतः । अवारोपयद्द्रोहोभागिकं लोहराचलात् ।
प्रतीहारविद्दिष्टाय धात्रीयाय महीभुजः । प्रेमाभिधाय तत्कोट्टाधीकारञ्च समार्पयत् ।
उत्थाय लोहरत्यागाच्छङ्काशङ्कु महीपतेः । स ग्रीष्मविषमं कालं राजा पुर्य्यामलङ्घयत् ।
अमात्यकन्दुकप्रातपातनोत्पातनक्षमः । आयत्तडामरः प्राप प्रथां कामपि लक्ष्मकः । १९३५
द्वारेऽप्याकारयन् सुज्जिप्रतिमल्लविधित्सया । छ्यमाणो राजवंशपौरुषं राजमङ्गलं ।
अनन्यदेशजः सुज्जिः शूरो मत्काशपोषितः । कीर्त्तिमेष हरेद्व्यावितीर्य्याकल्पो हि सः ।

खड्गग्राहिसहायः स क्षुधः पर्य्यटितुं पथि । निःसुखस्योपहासस्य तेन कार्य्यार्पणात् कृतः ।
कर्त्तुं पदव्यां योग्यानामयोग्यात्प्रभवेन्न कः । तेषां गुणैस्तान् संयोक्तुं न शक्यं कारणैरपि ।
पदे श्रीखण्डस्यानुचितमुचिते वर्त्मणि निजे हृषाङ्कः प्रचेप्तुं प्रभवति चिताभस्म रभसात् ।
न तस्येच्छायत्तत्रिजगदुदयापायघटनोऽप्यसौ तद्गन्धेन स्फुटमिदं पटुः सङ्घटयितुं ।
तस्मिन् सुस्सिप्रतिस्पर्द्धामप्रौढां वोढुमक्षमे । दूतानसृजदानेतुं मल्लपालं दिगन्तरात् ।
निर्वैरे मण्डले देव्योऽप्यवापत्कार्य्यगौरवात् । कोट्टेश्वरो नरपतेर्नितरामन्तरङ्गतां ।
प्रीतिदायैस्तोष्यमाणस्तैस्तुष्टेन भूभुजा । विश्वस्तोनगरे तस्थौ सोऽपि लूतामयातुरः ।
एवं दमकदम्बैक्यं राज्ञि कुर्व्वति कार्य्यतः । चालकैः सोमपालाद्यैः सुस्सिर्निन्येऽथ वैकृतं ।
प्रतिज्ञाय लतामात्रसाध्यं कश्मीरनिर्जयं । सोमपालाय तद्राज्यं सोऽङ्गीचक्रेऽवमानितः ।
प्रतिशुश्राव तस्मै च भागिनेयीं स कन्यकां । धीमानत्रान्तरे सामदाने प्रयुयुजे नृपः ।
द्वौ तावत्प्रार्थ्यौ राजकन्ययोः स्वीक्रियान्तदा । रभसाद्यावकुर्व्वाणावदातामन्तरं द्विषां ।
उपायैर्जयसिंहस्य शकुनैश्च निरीक्षितैः । प्रेरितः सोमपालोऽथ सुस्सेर्मन्दादरोऽभवत् ।
स्वयमेत्य प्रतीहारस्तत्र राजपुरीपतिं । सीमान्तभुवमानिन्ये कन्यकोद्वाहसिद्धये ।
जातां कल्यणिकाख्यायां महादेव्यां महीपतेः । उपयेमे नृपसुतां सोमोऽम्बापुत्रिकाभिधां ।
जाते तस्मिन् कृतोद्वाहे नागलेखाभिधां सुधीः । तत्स्वसेयीं प्रतीहारो भूभुजे प्रत्यपादयत् ।
इत्थं राष्ट्रद्वये बद्धसन्धौ निरवकाशतां । प्राप्तः प्रतस्थे हेमन्ते सुस्सिस्त्रिपथगोन्मुखः ।
जालन्धरे स्वट्टितो ज्येष्ठपालो निनाय तं । गाढावमाननिर्विण्णोऽहवं भिक्षुपक्षतां ।
त्वयि भिक्षाचरे चैकसैन्यनायकतां गते । नोपेन्द्रो वा महोन्द्रो वा समर्थौ प्रत्यवस्थितौ ।
राज्यप्रदस्य ते यस्य चक्रे राजा विमाननां । तत्सुधी यस्य विषये प्रतिकुर्मस्तयोर्द्वयोः ।
इति सम्प्रेरितस्तेन देङ्गपालान्तिकस्थितैः । यियासुः सोऽन्तिकं भिक्षोर्भागिकेन न्यषिध्यत ।
अनिक्षिप्तवतोऽस्थीनि स्वामिनो जाह्नवीजले । न युक्तमेतत्ते कृत्यमित्यावेगाद्यासि च ।
स्नात्वा धुनद्यामेष्यामि पार्श्वं व इति निश्चयं । स पीतकोशः कृतास्य ययौ प्रस्तुतसिद्धये ।
प्रतीहारकरन्यस्तसर्व्वभारस्तु भूपतिः । मन्दाक्रान्ततया राज्यमस्वस्थितममन्यत ।
यो यो हि व्यसहीत्तं तं सन्धाय सविधस्थितः । तमन्वहं प्रतीहारः सानुग्रहमिवैक्षत ।
प्रगल्भमाने शास्त्रिवमुदयः कम्पनापतिः । अवधीच्छद्मना दृप्तं प्रकटं कालियात्मजं ।
अविश्वासोल्वणान् सर्व्वलावन्यानय लल्लकः । निर्म्मर्य्यादान् कम्पनेशसौपत् सान्त्वमजिग्रहत् ।
स्नास्यति गङ्गायां यावत् सुस्सिर्व्विसूचतां । यावन् कथं मया नेयः काश्मीरइति चिन्तयेत् ।
तावन्माचान्तरव्याप्त्या राज्ञो विज्ञाय डामरान् । भिन्नान् भिक्षाचरोऽविशद्विपन्नाटां हिमागमे ।
मण्डलस्यान्तरे तस्य विविक्षोरुद्धडामरः । प्रतीहारो हि मन्तुस्य निषेद्धा समपद्यत ।
स टिक्केन पिलद्रोष्ठादेकान्तदेपिना रिपोः । आनीतः सम्मतैर्दत्तापायः सर्व्वैश्च डामरैः ।

प्रतीक्षमाणो राज्याप्तिहेतुं सुज्जिसमागमं। निर्भयष्टिक्कजामातुर्भागिकस्य खशप्रभोः।
बाणशालाभिधे दुर्गे वसन्नल्पोच्छ्रितावपि। दूतैर्व्विभेदमनयत्सर्व्वडामरमण्डलं।
प्रमोदं सुहृदां चार्थं द्विषाञ्च विसृजन् पुरः। व्यावर्त्तताथ गङ्गायाः सुज्जिर्व्विहितमज्जनः।
पूर्व्वविप्रकृते भिक्षावस्मिंश्चाभेदमागते। यथामुष्य महीभर्त्तुस्तथास्माकं भयं भवेत्।
ध्यात्वेति सिंहदेवेन प्रार्थितो व्याजमादधे। सुज्जिस्वीकरणोद्योगे सोमपालोभयाकुलः।
सुज्जिर्जालन्धरं प्राप्तः प्रार्तर्भिक्षाचरान्तिकं। यावद्यास्यति तं साधं तद्दूतस्तावदासदत्।
प्रेरितो ज्येष्ठपालेन निषिद्धो भागिकेन च। विरराम स तत्त्याख्या विपक्षाश्रयणग्रहात्।
क्षणं देशान्तरोपात्तं तव भूपोऽपनेष्यति। स्वञ्च दास्यत्यधीकारं मन्युखप्रहितार्थनः।
इति दूतमुखेनोक्तः सोमपालेन चान्वहं। विपक्षौत्सुक्यमुत्साध्य तद्देशाभिमुखोऽययौ।
उदयः कम्पनाधीशो वैशाखे तीर्णसङ्कटः। खशान्वितेन संग्रामं प्रत्यपद्यत भिक्षुणा।
प्राक्तस्युष्यन्पश्तने जाते पृथुवले ततः। तस्मिन् कोट्टान्तरं भिक्षुः प्राविशत् प्राप्तवेष्टनः।
राजाथ विजयक्षेत्रं निर्य्यातः प्रत्यपूरयत। कम्पनेशस्य कटकं तास्तांश्चप्रैषयच्चमूः।
यन्त्रोपलशराशारविविधायुधवर्षिणि। दुर्गस्थितैर्नृपचमूः प्रतियोध्यमशवर्षिभिः।
पतत्स्वशास्त्र भिक्षोश्च नामवल्लास्तु पत्तिषु। ग्रहीतुं दुर्गमाप्राजसेना दीर्घापि नाशकत्।
दिनैरभ्यधिके मासमात्रे याते ऽग्रहीत्ततः। विहार्य्यमूलं दुर्गस्य धान्यखातास्तुसम्भृतं।
दुर्गभाजोऽवलासख्यारात्युपायपरे धियं। जाततदैरिवाधेच्छां धनलुब्धामदर्शयत्।
विससर्ज प्रतीहारमथ तदर्थसिद्धये। राज्ञां डामरसामन्तमन्त्रिराजात्मजैः समं।
कोष्टेश्वरविल्लकाद्याः स्कन्दस्य विमोक्षणं। करिष्यामो वयं भिक्षोरिति क्षुब्धा तमन्वयुः।
पश्यन् सङ्कटसैन्यायादधः कोट्टं मिनोत्पति। जिनं मेने प्रतीहारो वीक्ष्यानन्ताः स्ववाहिनीः।
पूर्व्वस्थितैः प्रतीहारानुगैर्द्यान्यत्र वासरे। अयोधि सर्व्वसैन्येन बलात्कोट्टं जिघृक्षुभिः।
ते तावन्तोऽप्यसङ्ख्या तथा तैः प्रतिचक्रिरे। नास्तीदं विक्रमेणेति यथाग्टह्निनिश्चयं।
वीरदेहद्रुमापेभ्यो न्यपतन्नभिर्हताः। निर्यद्रक्ताघसरघाः शीर्षभ्रमरगोलकाः।
कोष्टेश्वरस्य मूढत्वं निर्व्यूढं तत्र किञ्चन। स्वस्य भिक्षोर्लवन्यानामन्येषाञ्च विनाशकृत्।
नास्त्यत्र मार्गो वीर दर्शयतावत्प्रसिद्धये। स प्रायुद्धोद्धतैर्भिक्षोर्यत्प्राणक्षयकार्यभूत्।
दुष्प्रापं क्षमामो स सङ्कटे धैर्यमादधे। कोष्टेश्वरोऽपि चाभियशदप्याडामराः परे।
यदेतद्दर्शने भूरि सैन्यमप्राद्विमापतत्। पर्य्यन्तेदिति वदन् समभाप्यन्यथा च सत्।
विश्रम्भभूम्नाभुष्यारिर्थंच कोष्टेश्वरोऽप्यधी। अन्येषु तच केवालेष्वय ते नियतं दधुः।
भूपतिपदद्रुषः कार्य्यश्चेम स्वोपवेशने। अङ्गीकृताधिकारस्य धीमांष्टिक्कस्य लम्भकः।
पप्राधीशं महापामख्यांदिव्यागमंसंयथात्। स्वीकृत्य भिक्षुभुक्तवहुकचसकारयत्।
आनन्दाख्यः समापीमत्पाख्यः कृतगतागतः। नीत्वा टिक्कं प्रतीहाराभ्यर्णं भूयोऽप्यरोपयत्।

प्रतीहारस्य टिक्केन सहैक्यं वीक्ष्य डामरैः। निःसंशयं हतोऽज्ञायि भिक्षुः कोष्टेश्वरादिभिः।
भैरवास्तद्विमोचाय प्राहिण्वंस्ते खशान्तिकं। दूतानुरीकृतस्वर्णदाना भूरिधनैः समं।
खशस्तु दद्यादुत्कोचं गृहीत्वास्माभिरुज्झितः। जानाति रक्षितान् प्राणान् भिक्षुं कोष्टेश्वरादिभिः।
समन्युः प्राप्तराज्योऽथ देङ्गपालोऽथ दूरगः। हन्यान्मां जयसिंहस्तद्वध्यः परः प्रयत्नतः। १०१०
मत्वेति तेन प्रत्युक्ता भिक्षुमोचं स्थिरं ग्रहात्। विपाद्यातः फलहकं निर्गच्छेत्युचिरेऽपि ते।
स त्वमेध्योपलिप्ताङ्गः श्वभ्रावस्करवर्त्मना। यातइत्ययशोलोके ध्यायन्मानी न निर्ययौ।
कोष्टेश्वरोऽव्यक्तकृत्यस्सैन्यक्षोभेच्छया क्षिपन्। एवं कालविदा प्राज्ञेन प्रतीहारेण मन्त्रितः।
भीतो खशाद्वैदत्तायामाप्रत्यूषादरक्ष्यत। व्यवसायः प्रतीहारमुख्यैर्भिक्षुप्रमापणे।
गच्छद्भिरागच्छद्भिश्च राजा दूतैः प्रतिक्षणं। अन्विष्यन्विजयक्षेत्रे वार्त्तां पर्य्याकुलोऽभवत्। १०१५
तावद्भिराहवैस्तैस्तैः साहसाद्भुतं वत्सरान्। कृतयत्नस्य साध्योऽभूद्यो हन्तुमहीभुजः।
डिम्बा राजा तु गाण्डीवास्तस्य भिक्षोः प्रमापणं। साध्यमेते हि मन्यन्ते हन्त किं केन सङ्गतं।
विहस्य नीयते वित्तं खशैरेत्य चशादसौ। भग्ना नूनं प्रयास्यन्ति मुषितास्याखिलाः परैः।
पृथग्भूतः कोष्टकोऽयं विश्लिष्टकस्त्वेव वान्धवः। एते भिक्षाचरोच्छिष्टपुष्टा आभ्यन्तरा अपि।
को नूनमोऽत्र सम्प्राप्तो योराज्ञः साधयेद्धितं। सामग्री नूनमायाता सेयमस्यैव सिद्धये। १०२०
इत्यूचुः शिबिरे यावज्जनास्तावद्वेक्ष्यत। कटकैर्मन्त्रिणां दुर्गं विक्रोशायुधवाहिभिः।
एकाकी चिरसंक्लिष्टोहन्तव्यस्तत्कृतेऽखिलैः। हा धिक् परिकरो बद्धो निर्लज्जैः सर्व्वशस्त्रिभिः।
तदेवैत्यूचुरासीच्च कपच्छलोर्मिनिश्चलः। स्फुरद्योधाद्विशफरोनिःशब्दः सैन्यसागरः।
व्योम्नो भ्रंशेत वा सैन्यं सहयेद्वा स्वगभुजे। दुष्टाभ्रवृष्टिरिव वा निखिलांस्ताडयेन् ममं।
माद्यद्यैर्योधैः पर्य्यन्ते स्वीकुर्व्वन् भिक्षुरायुधं। सम्भ्रान्तचकितश्चासीदित्यन्तश्चिन्तयन् जनः। १०२५
एतावन्मन्त्रिणां सिद्धमथ प्रत्यूहसम्भवः। तच्छान्तिः कार्य्यसिद्धिश्च प्रतापैर्नृपतेरभूत्।
सैन्ये भिक्षाचरायातं पश्यत्यूर्द्धार्पितेक्षणे। कोट्टान्निष्कृष्टशस्त्रीकः पुमानेको विनिर्ययौ।
रुदतीभिः परीतस्य नारीभिस्तस्य चिक्षिपुः। पृष्ठे केऽपि वपुर्लोलकौसुम्भाधरवाससः।
बद्धः पलायमानोऽत्र सोऽयं भिक्षुरिति ब्रुवन्। तन्मुखात् स जनोऽश्रौषीद्धिक्कं तमथ निर्गतम्।
सह भिक्षोः कृतद्रोहस्तुमुले सम्मुनोथधं। तस्माद्राजानुगेभ्योवा स्वल्पासङ्ख्य विनिर्ययौ। १०३०
अद्रोहोऽस्मीति लोकस्य प्रत्ययाय चकर्ष च। कृपाणीमुदरं हन्तुं रक्ष्यमाणो निजानुगैः।
सानुगस्त्यक्तमार्गा स विलङ्घ्य नृपवाहिनीं। अद्रिप्रस्तरणोपान्ते नातिदूरेऽभ्युपाविशत्।
उच्छ्रसंस्थिरसम्प्राप्तैरम्भोभिर्दुर्गनिर्गतः। मायां प्रयोक्तुं प्रारेभे प्रेरितः सैन्यडामरैः।
सञ्जातं लम्बमानार्कमहस्तद्व्यतीक्षणं। भिक्षुः क्षपायामास्कन्दमपनेष्यन्ति डामराः।
इति तदाचिकाक्षीत्स्वाचीरिभिर्मन्त्रिणां समं। खशैस्त्वर्गाद्भिर्द्विपदोन्यरथ्यन्तानरहचरः। १०३५
ततः किलकिलारावमुखरैः करतालिकाः। योधैर्ददद्भिश्चक्षिता व्यग्रङ्घन्ताकुलाशयाः।

मुक्तास्वामिद्रुह: कच्छ्रगता राज्यं प्रसाधितुं । द्विषतो मन्त्रिभि स्वार्थादन्तार्यान् को नु साधित: ।
राजकार्य्ये च भागे च लम्बमानेऽथ लक्ष्मक । किमेतदिति तं नोविं खशश्यालमभाषत ।
सोऽभ्यधात्कुम्भदास्यापि रोद्धुं शक्यं चिकीर्षित । खशाना प्रत्यवस्थाता कथं तत्रास्य सन्निधि. ।
स इन्तुं वैपरीत्यन्तं खशानां त्वं प्रजेत्यथ । उक्ता व्यसृजदानन्दं जहसे चान्यमन्त्रिभि. ।
सुदूरदर्शिना राज्ञा विषलाटावपातत: । देङ्गपालगृहादस्मादारम्भ: समभाव्यत ।
अत' प्रधानकोट्टेशश्याल. स समगृह्यत । प्रागेवार्थैरेतदर्थं यच्छता दीर्घनागुरां ।
मंत्रोभावतरे चत्ता ततो निसम्भ्रमोऽभवत् । शिक्षितं पक्षिणमिव त्यक्तं प्राप्यं विवेद तं ।
स तानूचे न हास्यं मे नष्टे कार्य्येऽत्र साहसं । सर्व्वनाशे हतेऽमुष्मिन् खशश्यालेऽपि किं भवेत् ।
अकुण्ठया भाग्यशक्त्या राज्ञ श्याल. खशस्य स. । सर्व्वान्नियच्छ दुर्गाध्यान तीक्ष्णादीनाजुहाव तान् ।
दस्यूनामसव. कण्ठ सन्देहं मन्त्रिणां धिय । स्वस्तीर्णां प्रीतय कान्तां तीक्ष्णाख्यारुरुक्षुर्गिरिं ।
स चर्म्मकौपीनपटीबद्धस्तत्स्वामिधाङ्कितै. । दस्युभि स्वामिवत्तस्य स्थापनं सर्व्वतोयुधि ।
स ताम्बूलधर: सक्तिस्तुकेशश्मश्रुयोजने । याभूदनुसमूर्धूणां भिक्षुराजोपजीविनां ।
निश्चितान्ते ततस्तस्मिन् स तेषामन्ववर्त्तत । कोट्टेश्वरादिशिविरं द्वः शरणमीप्सुयां ।
एवैकशो लक्ष्मकेण युक्तास्ते. प्रेरितैर्भटै. । टिक्क स्वं वीक्ष्य वनितं निचकर्त्ताङ्गुलिं भयात् ।
स्वैरस्मिन्नवसरे सपलायनशङ्किभि । रक्ष्यमाणस्तैर्व्वहस्सु मनस्तापादभुक्तवान् ।
वीरस्तास्यन्वितस्तेन तीक्ष्णनामा हशोत्सुक: । तस्थौ भिक्षाचरस्वान्तमचवत्या विनोदयन् ।
हर्म्यप्राङ्गनमायाते तीक्ष्णलोके युयुत्सया । उत्तिष्ठता तेन दाय स्तोकशय. समाप्य त ।

तस्मिन् प्रचलिते मार्गे प्रविश्योपावशैर्भटाः। ते च भिक्षाचरादीनां सर्वे गोचरमाययुः।
भिक्षोरेकं क्षणाल्लब्धधैर्यं पार्श्वधृतायुधं। अधावत्तूर्णमादाय शूलमेकोऽट्टहट्टः।
तस्य प्रहरतः शूलं भिक्षुराश्रितवक्षसः। चिन्तापहस्तेनावेगात् केशान् अग्राह धावितः।
प्रजहार कृपाण्या च निर्यत्प्राणे पतिष्यति। तस्मिन् प्रहरतां भूयस्तौ कुमारियरक्तिकौ।
निर्विभागैर्हतेे तस्मिन्विनिधायुधवाहिभिः। विरोधियोधैस्सन्नद्धैस्तयो युयुधिरेऽथ ते।
अजायन्त विविक्ताश्च शस्त्रसम्पातसिताहिताः। कोटगाजगणापास्तसरघाघाइव द्रुमाः।
अशक्नुवन्तस्तान् हन्तुं खड्गशूलादिभिर्द्विषः। अपसृत्य शरासारैस्ततो दूरादवाकिरन्।
भिक्षाचरमृगेन्द्रस्य भञ्जतः शरपञ्जरान्। ततो हर्म्यात् खर्गमुक्ताः पुष्टाः पाषाणवृष्टयः।
धावतस्तस्य घोराश्मवृष्टिकुट्टितवर्म्मणः। निममज्ज यकृत्पिण्डं भञ्जन् पार्श्वे शिलीमुखः।
क्रान्त्वा त्रीणि पदान्याशु स पपात दिशन् क्षितेः। तत्क्षिरप्ररूढन्नु कम्पं विद्विषतां हरन्।
कुमारियोऽपि बाणेन विद्धवंक्षणवर्त्मना। व्रणितोऽप्यपतन्नर्त्तुः पादोपान्तोपजीवितः।
रक्तिकस्तु शरेणैव विद्धो मर्म्मणि विह्वलः। सजीवितोऽपि निर्जीवइव भूमावुपाविशत्।
महाकुलीनैस्सुहितैर्हतैर्भिक्षुरशोभत। वज्राद्भग्नशिखरी पुष्पितैरिव पादपैः।
द्वयतोराजचक्रस्य मध्ये हर्षनृपात्मजः। नावमानस्य मानस्य लब्धाक्षिप्तः परं पदं।
विधाता नित्यविधुरस्तेजोधैर्याभिमानितः। अकुण्ठेन ध्रुवं चक्रे गृहीतात्मपराजयः।
कोऽवरः कोमहर्द्धीनां सोऽग्रे पूर्व्वमहीभृतां। उदात्तेनात्तकृत्येन ते तस्याग्रे न किञ्चन।
आहोपुरुषिकागर्व्वैरागोहद्भिर्द्विपद्भटैः। तदवस्थमादात्तोऽपि शस्त्रायुद्धं कुमारियः।
स्फुरन् योद्धव्यमित्येव स प्रहारानवाम्नयात्। विज्ञाततत्त्वैररिभिर्वितस्य वक्रशोहतः।
विपन्नेऽस्मिन्नलं मूढाः प्रहारैरिति निन्दिताः। खगैः प्रजह्रुर्वङ्कशोहते भिक्षौ द्विपद्भटाः।
अविधेयायुधस्तोत्रमणवेदनयादसैः। कैश्चिन्निर्जितप्रायो रक्तिकः शस्त्रिभिर्हतः।
वयस्त्रिंशानि वर्षाण्येव मासांश्च भुक्तवान्। स षष्ठाब्दाश्वितज्येष्ठदशम्यां नृपतिर्हतः।
निदानं निशि दीर्घे सर्व्वनाशेऽपि कारणं। येषां बभूव तेऽप्येवं तुष्टुवुः सत्त्वविस्मिताः।
नैवस्पन्दं भुजो कम्पं शिरास्थलञ्च नामुचत्। सजीवमिव तन्मुण्डं कियतीरपि नाडिकाः।
एकं घोषस्वविशक्षिवभानुं मृभो पुनः परं। तद्दिहमस्तुरस्यैं धारासु च विरान्त्वडं।
मन्त्रिणा विजयसेनस्थिनस्यापि महीपतेः। तेषां त्रयाणां मुण्डानि ततोऽन्येयुरुपाहरन्।
श्रीसुधारसदन्त्यस्वयशाह्लादिप्रकाशने। दृष्टचित्रस्वभावोऽस्थिरस्थेयार्थं पार्थिवत्तया।
तत्र तत्राद्भुतं भावं दर्शयन् भुवनाद्भुतं। परिच्छेद्यानुभावत्वं न केषामपि गच्छति।
नाद्य्यन्निहतोऽसाध्य पितुर्मे योऽप्यभूदिति। न जहर्ष विनष्टोऽयं राजकण्टकइत्यपि।
नाक्रुध्यत् स पितुर्मुण्डमेष भगितवानिति। वीक्ष्य भिक्षोः शिरोव्याजभावादायस्तचिन्तयत्।
आकारस्तस्य सम्यग्यं सत्त्वं स देयमैठतं। वैवर्ण्यं स्फटिकस्येव नार्कान्तिकोपततत्तां।

उत्कर्षात् प्रभृति व्यक्तममुं यावन्महीभुजं । हा धिक् च मृत्युना दृष्टं नेह देहविसर्जनं ।
प्रसादविन्ना येऽप्यासन् पूर्व्वमस्मात्सुराभुजः। तदस्मादेव वीक्ष्यन्ते तेऽद्य मुण्डावशेषितां ।
इति चितीशोऽसामान्यसौजन्यान्तर्विचारयन् । आदिदेश रिपोः शीघ्रं तादृशस्यान्तसत्क्रियां ।
निद्राच्छेदे च निशि च ध्यायंस्तत्खेदयात्यये । भवस्वभाववैचित्र्यं मुहुर्मुहुरचिन्तयत् । १७९०
अपि वर्षसहस्रेण देशे दायाददुस्थितिः । नूनं न भविता भूय इति लोकोऽप्यमन्यत ।
दग्ध्वा वनं तनुघनं प्रतनोति शस्यं इष्टिं सृजत्युपचितेष्वदिनं प्रदर्श्य ।
वैचित्र्यसंस्पृशि विधेर्नियमेन तेन क्व प्रत्ययः क्वचन चञ्चलनिश्चयस्य ।
कृत्यं निर्व्वर्त्य विश्रान्त्यै धीरस्यावशतो मनः । विधिर्व्विधत्ते दीर्घान्यकार्य्यभारसमर्पणं ।
आरोढुं प्रथमस्य दीर्घमदनप्रत्युक्तमक्षांघ्रिणा नो मन्ये श्रम एव पादकटकीयावद्वितीयोऽखिलः ।
वाहस्यासनरक्षिणः कलयतोभारावतारान् सुखात्यारोहेण परेण तावदसहाधिष्ठीयते पृष्ठभूः ।
एवमेव चपामात्रं राज्ये निःप्रभुतां गते । शोकमूकोनृपस्याग्रं प्राविशल्लेखहारकः । १७९५
पृष्टः सभ्यैः स सम्भ्रान्तैर्व्यक्षितैस्ताक्षि भूपतेः । यातोभिचाचरः शान्तिमरातिर्दत्तदुस्थितिः ।
भ्रातरौ लोहरगिरौ बद्धौ द्वैमातुरौ पुरा । न्यस्तौ सुस्सलभूपेन यौ तौ मल्हणलोठनौ ।
ज्येष्ठे मृते कोट्टभृत्यैः कनिष्ठं लोठनं हठात् । तमिहाद्य त्रियामायामभिषिक्तमभाषत ।
सुतभ्रातृसुतैर्ह्रीरैराज्यार्हैस्सह पञ्चभिः । निर्यातं बन्धनादूचे कोशेषु स तमीश्वरं ।
दूयेत मुक्षिदाक्रन्देत् प्रसारितभुजः पतेत् । स्वयादिस्वैरानि:स्पन्दइत्थं गच्छेदथ ध्रुवं । १८००
दीर्घदौस्थ्यप्रमचिप्रस्टदूष्टतमना नृपः । अधो तत्कालनिपतद्दुर्व्वार्त्तावज्रचूर्णितः ।
इति सम्भाव्य दिक्पालैरपि प्राकृतमोचितः । नाकाराचारचेष्टाभि. प्रागवस्थां जहौ नृपः ।
नह्यनन्याभिभूतेन सर्व्वतोऽप्रतिवर्त्तिना । तादृशा वैशसे नान्य. दृष्टपूर्व्वो हि भूपतिः ।
पितास्य यद्वत्ताक्लिष्टं राज्यं भूय प्रसाधितं । अनेनापि तथाराति विहितं पैतृकं पदं ।
हारितौ दुर्गकोशौ तौ नष्टनामापि दारक । दायादशेषौ यश्चैको निर्धनो वीतबान्धवः । १८०५
धनमासान्तरङ्गैरिर्वर्षान् व्यसनमादधे । उपशान्तमिये देशे तन्नैकस्मिन् हते हिते ।
मित्रदुर्गार्थसम्पन्नाः प्रोद्भूताः परिपन्थिनः । भिन्नप्रकृतिकं कोशशून्यमेतच्च मण्डलं ।
तादृङ्निकषनिस्तीर्णमाहात्म्यस्य महीपतेः । धैर्य्येण स्पर्धितुं जाने राघवोऽपि सलाघवः ।
प्राक्प्रोषितं हि साधाज्यदाने निर्व्वासने च तं । तुल्यानुभावमक्षार्पीत्पितरं गणयन् गुणान् ।
आहूतस्याभिषेकाय विसृष्टस्य वनाय वा । न मया लक्षितस्तस्य स्वल्पोऽप्याकारविभ्रमः । १८१०
कान्तेषु काननान्तेषु सकाम्यं सानुजस्य सं । भूयः श्रियं प्रतिश्रुत्य स्थातुं सावधि सोऽभ्यधात् ।
एकच्छत्त्रमुभूतोऽस्मिन् महति सुखदुःखयोः । देहकक्ष्याभेदादमयोरन्तरं महत् ।
सिप्तं निहपादानां दर्शितुं दर्शयितुं जने । नानोपक्रमणाम् मन्त्रङ्गोऽस्याच्छिन्नदिधिः ।
सत्यद्भुतानि दृश्यानि यस्यमाणानि भूपते. । कोऽमुष्य वत्क मन्येत सामर्थ्यं मति सम्पदां ।

धैर्य्याब्धिना कार्य्यशेषं ज्ञातुं राज्ञा सविस्तरं। पृष्टोऽथ कोट्टवृत्तान्तमाचख्यौ लेखहारकः। १८५५
उत्सृज्य भागिके कोट्टं प्रयाते मण्डलेश्वर.। लुठोधोगेऽभवद्भूमौ प्रेमा संपन्नमत्तधीः।
मण्डनाभ्यवहारस्त्रीभोगैकाग्रो मदोग्रया। स वृत्त्या भृत्यमुख्याधाव्यां भव्यं व्यवाहरत्।
कुल्यानुकम्पिना दृप्युत्पाटनार्थं स वारितः। दैवेन नादादद्धानां काश्चिद्राचयमाक्रियां।
मायाभ्युदयनो नाम कायस्थः स्थूलवाञ्छितः। माजिकश्च प्रतीहारो वद्धमूलस्य मन्त्रिणः।
पुत्रोभीमाकरस्येन्द्राकरश्चान्तरे समं। दुष्टचरस्तत्र तत्र वधं प्रेम्णोऽव्यचिन्तयत्। १०
अलब्धोहन्तुमप्राप्तावसरैस्तैः कदाचन। कोट्टादट्टालिकां कार्य्यवशादवरुरोह सः।
कश्मीरेभ्यो नृपेणाल्पावशेषप्राणवृत्तिना। प्रैषि शासनमेतादृगिति प्रत्ययसिद्धये।
कोट्टोकसामशेषाणां गूढलेखान्विधाय ते। निबद्धसम्विदः पूर्व्वमभिषेचस्य भार्य्यया।
दृष्ट्वा दुर्गान्निर्निविडं कृत्वा च निशि लोठनं। सिंहं राजस्वामिविष्णुप्रासादायेऽभ्यषेचयत्।
शरदाख्या वधूरेका कापि सुस्सलभूपतेः। तत्र स्थिताभवत् क्षुद्रा तेषामनुमतप्रदा। १५
तदर्पितैरयोयन्त्रभञ्जनैरर्गलानि तैः। कोशान्निरार्य्य पर्य्याप्तं कोशरत्नादि जह्रिरे।
स भृत्यैः सप्तभिस्तद्वत् साहसं सुमहत् कृतं। दानेन त्याजितायामा चण्डालैः प्रतिकूलता।
भेरीढक्कादिनिर्घोषैर्निर्निद्रा. कोट्टवासिनः। कृता राजोचिताकल्पमपश्यन्नय लोठनं।
अदृष्टपूर्व्वतादृग्चोदात्तवेशः स विस्मयं। निन्ये जनान्नृपामात्ययोगदीपैः प्रकाशितः।
प्रेम्नः पार्श्वस्थितस्ताभ्यामानयद्वारकोऽन्तिकं। ससैन्यौ स्वभुवश्चम्पायाशिकाख्यौ च ठक्कुरौ। १८७०
तदाख्यया हिताः स्कन्दभक्तस्तेषामशेषतः। रात्रिशेषस्य चन्द्रांशुस्पर्शपाण्डुरशौर्य्या।
प्रातः प्रेमाथ दुर्व्वार्त्ताश्रवणेनाप्यदारुणः। सन्ताप्यमानेश्वाप्याशुकैरोद्धुमुपाययौ।
तं प्रतोलीतलप्राप्तं निर्यातैर्वैरिसैनिकैः। पराङ्मुखीकृतं वीक्ष्य चलितोऽभ्यन्तिकं प्रभोः।
श्रुत्वेति भूभृत्त्वरया लग्नं लोहरमन्त्रिणं। विससर्जोदयद्वारपतिमानन्दवर्द्धनं।
भूमिशौ तौ हि कोट्टस्य विवेदानन्यदेशजौ। सोऽन्योन्यतादिरन्ध्राणां लवणाद्धृतपाप्मौ। १८७५
प्रविश्य पुरं दृष्ट्वा प्रीतिदायार्थिभिः शिरः। भ्राम्यमाणं भटैर्भिर्वीराचियैतानदाहयत्।
राजादेशादसंरुद्धैस्तोभूयिष्ठैरसौ जनैः। नप्ता पैतामहे देशे दह्यमानोऽन्वशोच्यत।
काले योषोदयोद्रिक्तभासो स्वविषये नृपः। सिद्धिमश्रद्दधानोऽपि मह्यिणोति स्म रिल्हणं।
सशौर्य्यस्वामिभक्त्यर्थैः स्पृहादिगुणोज्ज्वलः। तेन धृमोघशरम्भः समभावि जिगीषुणा।
भवितव्यतया दत्तश्यामोहः प्रेरितोऽयवा। शठामात्यैरभूद्भूभृत्स व्यक्तायुक्तमन्त्रितः। १८८०
हीनोऽयं दुर्गामात्यैर्व्यसिद्धैकव्यस्य वैरिणः। अनुमेने कृतारम्भान् भृत्यान् घोषाल्वयेवरे।
उदयः कम्पनाधीशो राज्ञोऽग्रे पर्य्यशिष्यत। सर्व्वामात्यप्रतीहारनभ्यगच्छत्पुनः परं।
राजात्मजहयारोहडामरामात्यमिश्रया। दैर्घ्यं तत्सेनयावापि सर्व्वभामभ्युदयया
सम्वेष्टयसहस्थिकानिविष्टकटकोदियः। संयतोऽहं प्रवहते सर्व्वोपायविरोधिनः।

उल्लादयः फुल्लपुरे कोट्टोपान्ताश्रये स्थिताः। भयभेदाहवव्यग्रान् प्रकम्पमनयन्रिपून्। १८६५
सुस्सलक्ष्मापतिर्व्यद्धोलोठने तत्सुतामदात्। यस्मै प्राक्पद्मलेखाख्यां वक्रमण्डलधराभुजे।
साहायकाय प्राप्तस्य तस्य सैन्यैर्दिपच्चमूः। शूराभिधस्य युद्धेषु प्रत्यग्राहि प्रतिक्षणं।
तेषूपरुद्धराष्ट्रेषु भयदोलायमानधीः। अङ्गीचक्रे नरपतेर्नतिं दण्डञ्च लोठनः।
एतावत्सिद्धमफलारब्धीनामत्र दुस्सहे। काले व्यावृत्तिरस्माकमुचितास्मिन्नलाघवः।
शारदारम्भसुभगे क्रमात् काले बलोर्जिताः। अथारब्धिं विधास्यामः सर्व्वारम्भेण शोभनां। १८७०
प्रत्यन्वहं लक्ष्मकेण प्रहितं नादधे नृपः। अन्ये च मन्त्रिणोमन्त्रं शाठ्यादभ्यर्णवर्त्तिनः।
सर्व्वाधिकार्य्युदयनः प्रतिश्रुत्य धनं बहु। साहायकार्थमानिन्ये सोमपालमपि प्रभोः।
अपांक्तेयः स सम्बन्धबद्धोऽपि धनलुब्धधीः। द्रुह्यते स्म महाव्यापन्निमग्नाय महीभुजे।
वक्त्यर्थदो लोठनश्चेत् किं मे सम्बन्ध्यपेक्षया। अन्यथा भवतामस्मीत्यन्यान् वक्ष्यामि कैतवात्।
दम्भमित्यभिसन्धाय सोमपालोऽभ्युपाययौ। समर्थने हेतुरासीत् सुस्सलोर्व्वीजे कियानपि। १८७५
स हि भिक्षाचरोन्मुख्यान्निवार्य्यानायितो यदा। सोमपालमुखेनोर्व्वीभुजा राजन्विसर्जितः।
दूतः प्रार्थयमानस्य तानर्थान् प्राक् प्रतिश्रुतान्। क्षणिकस्योत्तमर्णेभ्यः प्रदातुमनुबध्नतः।
तदा भिक्षाचरं जानन् हतकल्पमनेन नः। व्यसनप्रशमे कोऽर्थ इत्यवज्ञां प्रकाशयन्।
मदेन न ददौ किञ्चित्सोऽथ भिक्षाचरं हतं। श्रुत्वा निरुपयोगं स्वं राज्ञोज्ञात्वा सशोकतां।
यावदेकाहमभजल्लोहरव्यसने भयं। तावन्निशम्य सम्प्राप्तोत्सेको भूयोऽपि मन्युभाक्। १८८०
लोठनं बद्धसन्धिं वः करिष्यामीति भूभुजः। उक्त्वा दूतं लोठनेन दापयिष्यामि काञ्चनं।
युष्मभ्यं कथयित्वेति सोमपालश्चिकीर्षितुं। बलितामवलस्य सर्व्वेषां स्वार्थसिद्धये।
समं सोमेन तत्सैन्यमन्यप्रस्थितिलक्षितैः। मित्रैरनुगतो भृत्यैर्घोरमूलकमासदत्।
कुलकं ॥ यदा नौचित्यदुष्पांशुवर्षदूषितकीर्त्तिना। भोगलुब्धतया तेन हता विततसत्कता।
तुषारशर्कराशुक्लजलपानाददुर्जरं। त्यक्तुं भोज्यं मृदु स्निग्धं काश्मीरं न शशाक सः। १८८५
सत्तुपं शुष्कशक्तादि वह्निर्भोक्तुमपारयन्। यैस्तैरुपायैः कश्मीरान् प्रविविक्षुरतोऽभवत्।
काश्मीरकाः कार्य्यशेषमदृष्ट्वा शीघ्रशेविताः। आकर्ण्य च तदायातमाकुलत्वमशिश्रियन्।
भुञ्जामहे भृष्टमांसानि पिबद्भिः पुष्पगन्धि च। प्रतीहारायतो वारि मार्द्वीकं लघु शीतलं।
आनेष्यामो यवात् सुस्निमाहृत्य शस्त्रु संयुगे। इत्थं विकत्थनैस्तैस्तैरात्तोपुरुषिकाः हताः।
काश्मीरकैर्मिलितैर्युक्तं शशी भेस्वरफेरपि। अभिषेणयितुं शक्तुम तेऽप्युद्यमिनोऽपि तं। १८९०
आरब्धाय च मुख्याय भूभुजा च करार्पणं। विदध्यां जयसिंहाय वरमित्यभिमानिना।
पक्षर्धमध्यमानेन लोठनेन निरस्तः। सोमपालः प्रियं किञ्चिद्राजपक्षे न्यदर्शयत्।
मयि नागरसैन्यानां पथ्याणां वैरविप्लवे। युष्मोर्जिताय त्वं रत्नमन्विष्यसि किमाश्रितः।
इति निर्भर्त्सितस्तेन युक्ति स्वार्थक्रियोचितः। सर्व्वानुसदृश सम्रुद्धो राजसैन्यपदेऽभवत्।

शरदापाढसंजातशीतज्वरमहाभयः। यहूयिनीमथोत्थाप्य विद्द्रो निशि लक्ष्मकः। १८७५
विसृष्टदूताः कटकं नष्टं वक्तुं प्रभोर्द्रुतं। केचिदन्वसरन् सुञ्जिं सैनिकास्ते जिघांसवः।
पारैणैकेन भूपालसैन्यमन्येन वैरिणा। वर्त्मनः श्वभ्रदुर्गस्य तुल्यमेव प्रतस्थिरे।
शारम्बरपथं वैरिवर्ग्यं त्यक्त्वा यियासवः। स्वार्व्यी कालेननाय्येन सङ्कटेन तदन्तिके।
तस्मिन्नहन्यस्खलिते वनिकावासनामनि। ग्रामे सैन्यान्यवेत्स्यन्त लोकैरुच्चावचैस्तमं।
अनुप्रस्थायिनोऽभ्यर्णग्रामकेष्वपि दुद्रुवुः। भुक्त्वा पीत्वाथ ते निन्युर्निशार्द्धमकुतोभयाः। १८८०
अथायातं विद्विपङ्क्तिः स्वस्य श्रावयितुं द्रुतं। चोभमृत् सुञ्जिरभ्येत्य तूर्य्यघोषमकारयत्।
चण्डाशिषएवाशु पलायाञ्चक्रिरे ततः। तैस्तैः श्वभ्रपथैः सेना निरवष्टम्भनायकाः।
चित्राम्बराणि मुष्णद्भिः प्राक्शेऽत्यज्यन्त मन्त्रिणः। भूप्रकल्पैर्गण्डशैलानानाधातुद्रवैरिव।
लुण्ठमानश्च मूलातुं नादधे कश्चिदायुधं। तदान्वयेन वा तेन स्वात्मनान्यस्तु रचितः।
उत्सुत्य लघयन्तोऽद्रीन् केऽपि शोणाधरांशुकाः। रक्तस्फिजो गता प्रापुर्मर्कटादिव पाटवं। १८८५
केऽप्यम्बरपरित्यागविकसद्गौरविग्रहाः। हरितालशिलाखण्डादिव वातेरिता ययुः।
स्थूलवेणुवनाकीर्णे शैलैरक्षतविग्रहाः। केऽपि श्वासोद्धुपुत्काराः करिपोता इवाव्रजन्।
किं नामोदीरणैर्मन्त्री स नासीत्तत्र कश्चन। तिरश्चेव विपर्य्यस्तधैर्य्यैर्य्यैर्न्न पलायितं।
भृत्यस्कन्धाधिरूढोऽथ गच्छन् मूढः प्रधावितुं। प्रतीहारादिपद्योधैर्दूरात् केचिद्विलोक्य
निरंशुकः स्रस्तधौताशुकचलत्केयूरकुण्डलः। प्रतिज्ञायानुसस्रे तैः सर्व्वप्राणप्रधावितैः। १८९०
अश्माहतेन भृत्येन त्यक्तः स्कन्धाद्दयस्त्वतः। स निष्पन्दरवस्थितैस्तैरग्राहि महाजवैः।
नववन्धनशोकार्त्तशारिकाक्षामविग्रहः। स गजालिरिव व्यञ्जदिपः सङ्कुचितेक्षणः।
वद्धस्य मे मानधनप्रहर्त्तुर्व्वैशमान्तरं। इतोऽधिकं भुवं सुञ्जिर्व्विदध्यादिति चिन्तयन्।
स्कन्धेऽधिरोप्य निश्चेष्टीकृतप्रावारभूषणः। तद्भिः सोपहासन्तैः सुञ्जेरग्रं व्यनीयत।
प्रच्छाद्य सत्ववान् वक्त्रं सोऽंशुकेनैष नोऽर्चितः। इहद्राजदन्त्युक्त्वा तस्मै स्वान्यंशुकान्यदात्। १८९५
प्रावारिताम्बरं कृत्वा हयारूढश्च तं पुनः। धैर्य्येणायोजयत् स्निग्धैर्व्वचोभिः परिसान्त्वयन्।
निर्लुण्ठितनुरङ्गासिकोशैः परिहृतः स्वकैः। ततो गृहीत्वा तं श्रीमान् सोमपालान्तिकं ययौ।
हन्ताव्योमाङ्गनाक्रीडत्तडित्तरलविभ्रमाः। भाग्यमेघानुयायिन्यः स्थायिन्यः कस्य सम्पदः।
आराधनधिया स्वैरं यस्यापेऽभोजि भृत्यवत्। गात्राणि कुङ्कुमालेपैरापर्य्यन्त च स्वयं।
सोमपालादिभिः भक्तैः स मासैरेव पञ्चषैः। तेषामग्रे तथाभूतस्थितैर्लोकैर्व्यभाव्यत। १९००
सोऽपि पश्नितश्वेतापान्तश्यामाननः परैः। वनैकाकादिव मद्दोऽभ्रक्षोकमूकोवनान्तरे।
अर्प्पितं सुञ्जिना सोमपालः स्वीकृत्य लक्ष्मकं। जानन् गृहीतान् कस्सोराश्निजराष्ट्रं न्यवर्त्तत।
सोठनस्थानिकादेत्य स शूरैर्मासिकादिभिः। प्रतिश्रुत्य प्रभूतार्थैः प्रतीहारमयाच्यत।
कस्सोरादिप्रतीहारमिषापचानुयायिभिः। तदा न कैरमन्यन्त सम्प्राप्याडामरापुञ्जैः।

हर्षेनापि प्रतीहारायत्तं राष्ट्रं जिघृक्षुणा। भूरि चादित्सुना वित्तं राज्ञोऽकारि न तेन तत्।
भग्नमानेष्वमात्येषु प्राप्तेषु नगरं नृपः। हारिते च प्रतीहारे न धैर्यात् पर्यहीयत।
यैस्सैन्यचारैर्द्वैराज्यं पुरा भिक्षाचरोऽकरोत्। यैश्चाप्युत्कुपिते राष्ट्रे हृद्यावर्त्तिष्ट सुस्सन.।
भूभृता संगृहीतानां शीतज्वररुजा तत.। तेषां दशसहस्राणि योधानां निधनं ययुः।
विरराम तदा देशे न मुहूर्त्तमपि क्वचित्। बान्धवाक्रन्दतुमुलं प्रेतवाद्यमहर्न्निशं।
घोरघर्मघृणिश्रान्ताशेषध्वंसहृतस्थितिः। सोऽनुत्साहहतः कालो नष्टराज्यइवाभवत्।
नानादिगन्तरायातैः प्राप्तैः काश्मीरकैरपि। लोहरेऽथ प्रहृष्टर्द्धि राजद्वारमजायत।
काकतालीयसम्प्राप्तलोलोत्तरनृपश्रियः। अकुण्ठा लोठनस्यासीत् स्फूर्त्तिर्व्वित्तपतेरिव।
तस्याकारपरिक्लेशवैशसाभिलष्टत्तयः। भोगेष्वनाद्याश्राद्धव्यसनत्यगुचादयोऽभवन्।
नास्थानवर्षी स्थाने वा वहुमुष्टिर्व्विभूतिमान्। सवय पाकनिष्कसंख्य स्हारोव्यभाव्यत।

छायानिरङ्कुशगतिः स्वयमातपस्तु छायान्वितः शतशएव निजप्रसङ्गे।
दुःखं सुखेन पृथगेवमनन्तदुःखपीडानुवेधविधुरार्त्तसुखस्य वृत्तिः।

तादृगभ्युदयावाप्तेर्म्मासे न्यूनेऽधिके गते। एकसूनोः सुतो द्विल्हो लोठनस्य व्यपद्यत।
तमेकपुत्रा शोचन्ती शोकशङ्कुहताशया। ततः प्रपेदे प्रलयं मल्ला लोठनवल्लभा।
पत्न्यामभिन्नभावायां गुणज्येष्ठे तथात्मजे। विपन्ने स तया लक्ष्म्या न कृतं किञ्चिदैक्षत।
निश्चिहलस्य भूपालस्तम्भस्य विजृम्भितं। मोहनी वा श्रियः प्रकार्य्यदृश्यासीन् पुनः सुखं।
अकारयन्निर्धनोऽपि तथा हृद्यस्य कालवित्। सद्वै. पट्त्रिंशता मोचं सन्नकस्य चमापति.।
घृष्टवह्निपरिचितपुष्पवृष्टौ जनैः पथि। तस्मिन् प्राप्ते न कोऽप्यासीद्राज्ञा प्रत्यावृत्तां श्रियं।
स लक्ष्मीमहिमच्छिदविस्मृताभिभवश्रय.। प्रभवन् पुनरेवासीन्निप्रहानुग्रहचमः।
धनप्रक्षोभनिर्नष्टसर्व्वावष्टम्भपाटवः। सुज्जिः प्राचितसव्याजं भेजे लोठनभूपतेः।
दत्तवान् भागिकसुतामश्विाममपाहरत्। स तस्याः प्रियापायदुःस्थितिव्यथया समं।
अभ्यर्थ्य पार्थिवं पञ्चरयशानीतवान् कृती। तस्य सोमलदेव्याख्यामुद्वाहाय तदात्मजां।
एवंप्रधानसम्बद्धेभ्यंहृमूलं विधाय तं। सोऽप्याहतस्य माचियपहस्तानुष्णमाययो।
अचिमायप पश्चीरसैन्यं डामरादिभिः। वज्रधः प्रार्थ्यमानेन प्रेरितो नवभूभुजा।
रत्यं भृशं हर्तव्यद भस मोमान्तभूमिपे.। अथ च्छलयितुं प्रभुं नीतिं प्रायुङ्क्त सोऽञ्जलिः।
नचोदयद्वारपतिर्मह्यारब्धे गभीरधीः। अनुत्सव. सुव्ययं मारेतरविद्रामगात्।
कस्ताः स हि निर्नष्टसर्व्वस्वोऽप्यर्थितो हितः। दानमानादिभिः स्वामिकृत्ये नित्योदितोऽभवत्।
क्षमस्याशिषे स्थाने सोद्दराद्दूरगो स्थितः। अचिरोऽक्षिप्रसमक्षानिमं निन्ये दिपद्दसं।
सटापनाभिप्रायेऽगिरन् स्थिया तथैव या दधुः। भवं सोठनभूपालात् मार्जिकेदारकादयः।
दक्षयोद्यानिक.सभ्यान् पुज्यो। न्वस्याप्येवानुपः। वेत्ति कश्चिरपेक्षणो तदा प्रतिपत्तिति मे।

मञ्जातं मदनाख्यायां राज्ञ्यां सुस्सलभूपतेः । कुम्भीमल्लार्जुनं भूपं लोहरेऽस्मिन् हिताय वः ।
तत्प्रेमाणमिवाकस्मादभिमन्यन्त लोठनं । मन्दिरेऽप्याय तान् धीरो जयसिंहो महीपतिः । १९३५
व्याजेन राज्ञा संदिष्टं तत्कोट्टं स्वोचिकीर्षुणा । प्रतिश्रुतमनिश्चलैस्तस्मिंस्तैश्च तथैव तत् ।
मल्लार्जुनं लोठनोऽथ ज्ञात्वा प्रारब्धचाक्रिकं । तदाप्तान् भाण्डसूनूंस्तांश्चाक्रिकानप्यबन्धयत् ।
अवरुद्धतनूजेन ग्रद्धां सोस्सलिना भजन् । परं विग्रहराजेन प्रतिहार्य्यमजिग्रहत् ।
राजा व्याजात् पिदध्येण बहुसन्धिरुपार्थवित् । तत्वरे ज्वारितं राज्यं तैस्तैः स्वीकर्त्तुमुद्यमैः ।
विसृज्य शूरं निष्कम्पराज्यः सुज्जेः परिश्रमात् । साधान् कांश्चिदसङ्गोभोद्दत्यावर्त्तिष्ट लोठ १९४०
सुज्जिः पद्मरथापत्यं प्राक्कन्यामानिनाय यां । अनूढाया विवाहाय तस्या मातरमागतां ।
आकर्षत जन्नादीनां प्रसङ्गेऽस्मिन् सगौरवां । सामान्योदर्पितपुरं कृतप्रत्युद्गतो ययौ ।
माजिकाधैरथ प्राप्तरन्ध्रैर्निर्गत्य बन्धनात् । मल्लार्जुनः कोट्टराज्ये संहतैरभ्यषिच्यत ।
ठक्कुरैः प्राग्वदानीतैः प्रतोलीरक्षमागतान् । भृत्यांस्ते सिंहभूभर्त्तुः प्रविविक्षूनवारयत् ।
षष्ठे ऽब्दे लोठनः शुक्लत्रयोदश्यां स फाल्गुणे । ययायुज्यत राज्येन तयैवाग्रु व्ययुज्यत । १९४५
अनूढां कन्यकां मूढः सम्पदश्चाव्ययीकृतां । प्राप्तां परस्य भोग्यत्वं भाग्यहीनः शुशोच सः ।
अट्टिलाट्टालिकादिभ्योऽर्दिभ्यो नष्टशक्तिना । तेन सुज्जिवचात् कोशशेषः कश्चिदवाप्यत ।
पूर्व्वाहृतान् सिंहभूभृद्भृत्यान्व्यकृत्य माजिकः । निनायाप्रतिमल्लत्वं मल्लार्जुनमहीभुजं ।
तेनातिव्ययता नव्यवयसा भूभुजा कृतं । मौक्तिकैः पूगविच्छेदे ताम्बूलार्पणमेकदा ।
वर्षतोविपर्यालुक्याद्धाटकं कुट्टनादिषु । त्यागित्वं तस्य तत्त्वज्ञैः सदोषमुदघोष्यत । १९५०
प्रजोपतापोपचितः कोशः सुस्सलभूपतेः । तेनातिव्ययता स्वैरमनुरूपव्ययः कृतः ।
गणकाचारणद्रोग्धृविटचेटादिपेटकं । साधून् विधूय सोऽपुष्णाद्दुष्पोष्यः कुमतिर्यतः ।
सपत्नसादहितसाद्यदि वा वह्निसाद्भवेत् । द्रविणं चौणिपालानां जनतोपद्रवार्जितं ।
प्रजापीडनजं वित्तं जयापीडमहीभुजः । दास्याः पुत्रैरुत्पलाद्यैर्व्विभुक्तं नतुरन्तकैः ।
लोकसंक्षोभनोद्भूतशोकः शङ्करवर्म्मणः । प्रभाकरादिभिः स्वैरं जायाजारैरभुज्यत । १९५५
अनन्तवशगा पत्नीरङ्गनाद्दजिनार्जितं । दधुः सुगन्धादित्याय धनं सम्भोगभागिने ।
राज्ञोऽयमस्करस्यार्थान् व्यधीचक्रेऽतिसञ्चितान् । अङ्गनानङ्गवैवश्याद्दानिङ्गनजनङ्गमा ।
पूर्व्वराजार्जितं पार्थ्वगुप्तिः प्राप्तधनं स्वतः । दाता जायोपपत्येन तुङ्गादीनामजायत ।
सङ्ग्रामराजश्रीनेत्रासुधाजमधुपैर्धनी । सुपितोऽप्यहसहार्धैर्निविडोपार्जनस्पृहः ।
अमत्यैर्व्याघपितप्रजस्य जगदूर्जिता । अन्तेऽनन्तमहीभर्त्तुर्व्विभूतिर्भस्मसादभूत् । १९६०
पुत्रेणापात्रसाध्याख्या आरंसात्तरसा कृतः । कुकल्लः कोपलोद्भूतः कोषः कलशभूपतेः ।
सह गेहैः समं स्त्रीभिः सत्पुत्रैरभूद्भुवं । अश्रान्तार्जनतर्षस्य हर्षदेवस्य वह्निमात् ।
चन्द्रापीडोच्चतावन्तिवर्म्मोद्यधर्म्मनिष्ठुरैः । निष्ठा न्याय्यस्य कोशस्य नवाप्यानुदिता क्वचित् ।

चौरचाक्रिकसीमान्तभूभृद्देश्याविटादयः । लुण्ठिम्प्रारेभिरे पुष्टां नवे मल्लार्जुनोदये ।
वञ्चयित्वाथ गीन् भृत्यानन्विघटितेप्सितः । अथ चित्ररथं तूर्णमास्कन्दाय व्यसर्जयत्
द्वारपादाग्रयोस्तस्याधीकारेण प्रवर्द्धितः । सोऽनन्तसामन्तयुतः पदं फुल्लपुरे व्यधात् । १९६५
चक्षेहिरे न विततां अपि दुर्गममाश्रयात् । मल्लार्जुनचमूर्जेतुं जेतुं तदनुजीविनः ।
भेदाय कोट्टमारूढसङ्कृत्यो राजसम्मतः । मल्लार्जुनानुगैरात्तौ हतः सम्वर्द्धनाभिधः ।
युद्धासाध्येऽपि तिष्ठन्तः कोट्टे भयविधेयतां । कोष्ठेश्वरेऽन्वगायाते तत्रामित्राः प्रपेदिरे ।
प्रतिश्रुततरो बद्धसन्धिः स व्यसृजत्ततः । सभाजनाय जननीं तेषां मल्लार्जुनोऽन्तिकं ।
सा वैधव्यं विविक्तेन वेषेनैश्वर्य्यशोभिना । कोष्ठेश्वरादीन् सोत्कण्ठांश्चक्रे चपलचेतसः । १९७०
तस्यां गृहीतविश्रम्भं व्यावृत्तायां तदन्तिकात् । दारोशाय ददावूरीकृतं मल्लार्जुनः करं ।
आरूढो राजजननीचतुरागेण कोष्ठकः । दिदृक्षाकपटात् कोट्टमारुरोह मितानुगः ।
अर्द्धरूढेन सहितस्तेन चित्ररथस्ततः । सम्भूतप्राभृतोभूमिभर्त्तुः सविधमाययौ ।
राजा तु सम्मन्त्र्य ततः प्रायुङ्क्त द्विशालिना । उदयद्वारपतिना नीतिं जेतुमरीन् पुनः ।
वीतास्कन्दोत्थोठनेऽपि गते पद्मरथान्तिकं । लेभेऽभिनवभूपालः किञ्चित्पादप्रसारिकां । १९७५
तदूढवान् सोमलाख्यां तां पद्मरथकन्यकां । उपयेमे धृतायामो नागपालात्मजामपि ।
तस्मादहंक्रियामूढालेभिरे गूढकैतवाः । भूभुजः सोमपालाद्याभृत्यभावेन वेतनं ।
कविगायनजल्पाकयोधचारणचेष्टितैः । वदन्तो मुमुपुर्धूर्तास्तेऽपि तं राजवीजिनः ।
स्ववाक्यानिष्परीपाकप्रज्ञो दृष्टो रटन् बहु । जज्ञे वाक्प्रौढिमात्रेण वालिशोऽकुशलाशयः ।
केतोरिवाभद्रहेतोः प्रदीप्तं वदनं विना । अमिष्टुगाकृतेर्दृष्टं तस्यान्यत्र न सौष्ठवं । १९८०
अत्रान्तरे नृपः सुज्जिं मच्छ्रयाद्वीर्यविक्रमं । माभून्मल्लार्जुनेनापि श्रितोऽसाविति चिन्तयन् ।
निर्व्वासने प्रवेशे च प्रभुः सुज्जेर्न्ततोऽधिकं । तात्कालिकीं प्रतीहारशक्तिं काञ्चिददर्शयत् ।
स कम्पनाद्यधीकारम्भ्रंशं राज्ञविमार्जितां । वितरन् मुञ्चेथ राजस्थानकार्य्यस्रंशं विना ।
निर्गापाथ गृहायातसोमपालानुरोधतः । प्रसीदन् वामहस्तेन निजजूटस्रजं मदात् ।
आकृष्य प्रददौ तस्य तत्प्राप्तिपरितोषिणः । आप्याय मान्द्यया दृष्ट्या यत्नपक्षोदधौ व्यधात् । १९८५
भवे हिताय सौहार्द विधुर्योदयधन्ययोः । अभजद्विम्हगः सुज्जे. प्रवेशे प्रतिलोमतां ।
प्रत्युद्गमेन सम्मान्य सुज्जिं प्राविशयन्नृप. । देशाधिगम्याद्धन्यादीन् मागधांस्तु सद्विरा ।
कृतागाः कालवान्ध्वः क्षणे सोत्कण्ठेर्शिधांमति । कोष्टेश्वरः पलायिष्ट ग्रामोदस्मान्तदन्तिकात् ।
आस्कन्दमागते राशि गृहीतमगुशेश्वरे । भयभेदोपहतः सोऽथ देशान्तरं ययौ ।
शोटनस्तु निजधाद कांश्चिदाक्रम्य ठक्कुरान् । शयनीनाभिधे स्थाने वसन् मल्लार्जुनं यमात् । १९९०
तत्र दृष्टमपश्यत्सोपास्य तन्नु पौरुषं । परिभ्रष्टोऽपि यद्रूपदं तनजयन् मदा ।
जहार तुरगान्नुष्ठिं स्वराज्ञालिकापणे । मार्गद्वारादिभङ्गस्व मदा सर्वंच सोऽकरोत् ।

राजराजाभिधानेन डामरेणार्थितस्ततः। कश्मीरराज्यसम्प्राप्त्यै क्रमराज्यमगाहत।
तदवेत्य समीपस्थे हते चित्ररथेन सः। तस्मिंस्तवन्ये प्रययौ बप्पनीलभुवं पुनः।
तस्मिन्नास्कन्दमक्रुद्ध्यदट्टालिकामपि। अवरोद्धुमशक्तोऽभूत् कोट्टे मल्लार्ज्जुनोऽवसत्। १९९५
भ्रातृव्येण पितृव्यस्य दापयित्वा धनं बहु। ततः कोष्टेश्वरो यात्रासज्ञः सन्धिं न्यबन्धयत्।
सोदरे विहितस्थैर्य्ये गृहीत्वा लोठनं ततः। कश्मीरोर्व्वीं पपाताशौ विजिघृक्षुः क्षमाभुजा।
गिरीनुल्लङ्घ्य कार्कोटद्रङ्गे विहितवान् पदं। निपत्य मार्गेऽनुद्धाते यावदन्यैश्च डामरैः।
नावाप योगं निर्गत्य क्षिप्रकारी क्षमापतिः। सर्व्वोद्योगेन तं तावदुत्थानोपहतं व्यधात्।
अत्रान्तरे प्रतीहारः सापास्तमपपीडया। न सम्पत्स्वल्पपुण्यानामनपायित्वमायुषः। २०००

उत्सारणाप्रियतया परिरुद्धसर्व्वद्वारे गृहे निरनुरोधतया वसन्तः।
सम्पल्लघूकृतधियोऽप्रतिघप्रवृत्तेर्धिग्जानते न रभसाच्छ्रियतेर्निपातं।

कुर्व्वाणोत्सारणं तस्य गूढजा सततं नृणां। नाज्ञासीत् सुखसुप्तस्य पृष्ठे पतितमन्तकं।
ज्वरितः स हि निष्टूतज्वरः स्वपिति विज्वरः। विदित्वेति न विज्ञातः स्वपन्नेव मृतस्तदा।
सलोठने कोष्टकेऽथ प्रयाते नृपतिः पुनः। न स मल्लार्जुनो नापि कोष्टको न स लोठनः।
छद्मनोद्यनं पार्श्वस्थितं मल्लार्ज्जुनोऽवधीत्। तस्मै चुक्रोध मध्यस्थे स्थापितस्तेन कोष्टकः। २००५
अनुनिन्ये न तं खिन्नं स सम्भृतबलस्ततः। अभिषेणयितुं क्रोधादधावत् सह लोठनं।
कोष्टकोमल्लकोष्टाद्यैर्मितैर्युक्तोऽपि सादिभिः। तीर्त्वा परोष्णीं तत्सेनां निम्नमायाप्रमाथिनीं।
हतेषु तेषु संग्रामे खशसैन्यत्रकादिषु। बधं प्राप्तः सिंहभूभृत् दैवात्स नृपोहतः।
आरूढः कोष्टमूर्द्धानं मानमूर्धः परिच्युतः। भग्नप्रतापो भूयोऽपि समधत्त स कोष्टकं।
विसृज्य लोठनं तिष्ठन् निर्भरमगमत्पुनः। अनिर्व्वाहितदैन्येन तेन द्वैधं सडामरः। २०१०
चक्राधिकारिणः शुल्कं गूढताकारि राजवत्। तेन स्वमाया भाण्डेषु द्रङ्गे सिन्धुरमुद्रणा।
जतुसंहतयोः काचकनकीदलयोरिव। क्षणे क्षणे सन्धिभङ्गस्तयोः समुदपद्यत।
निर्व्यूढिशून्यैश्चाप्योस्तैर्विरागं लोहरेश्वरः। निन्ये लवन्य सोऽप्येनं सद्भावन्यैरनङ्कुशैः।
डामरेण ततो दत्त्वास्कन्दं तत्कटकान्तरं। परार्द्धायुधधुर्य्याश्वहरणात् सुस्थिरं कृतं।
दत्त्वाभयं तैरायत्यां विषमैर्हठपौरुषैः। एवं तं कोष्टकोमूढः सुखोच्छेदं व्यधाद्द्रियां। २०१५
तन्धादानसम्बन्धात् श्वशुरं मुख्यमन्त्रिणं। अत्रान्तरे नृपोहन्तुं साजिकं स व्यचिन्तयत्।
आसीत्कठोरतारुण्यतरङ्गितमनोभवः। सुष्कर्म स हि तन्मातुरौपपत्येन सम्मतः।
आहारावसरे तीक्ष्णाः छन्नसज्ञाः क्षमाभुजा। दत्तप्रहरणाः सौधे भुञ्जानन्तं व्ययाजयन्।
धुन्वन्नसिपटं बद्धवीरपट्टोरटन् बहु। निर्लुण्ठयन् स तत्सैन्यां तामारभटीं व्यधात्।
अत्रागिथत न द्रोहमध्याद्विद्राकरोऽप्यहो। राज्ञा विषमितस्तेन रसदानेन स स्वयं। २०२०
दैवेनोत्सारिता रातिस्ततः सिंहमहीपतिः। स ददे कोष्टकं सन्धिं साहिणोद्विजयाय च।

मार्गस्य याममात्रेण गन्धस्यान्तिकमाप सः । यावत्तुरङ्गहरणात्कोष्टकेनाकुलीकृतः ।
अन्तर्भेदाकुलस्तावत् प्रत्ययस्यातुमक्षमः । गृहीतकोशः सन्त्यज्य कोट्टं मल्लार्जुनो ययौ ।
राज्यभ्रष्टः स निर्लुण्ठ्यमानो मार्गेषु तस्करैः । अवनाहोन्मुखो रक्षन् कोशशेषं कथञ्चन ।
अष्टमष्टादशशरद्देश्यस्याष्टमवत्सरे । राज्यात्तेन द्वितीयस्यां वैशाखस्यासितेऽहनि । १०२९

दाता शिखास्वतलचेरमृतं विलक्ष्यकार्पण्यकृतमिति लूनशिराः कृतश्च ।
दूरेण यत्र उदकार्युपकर्त्तुरस्तु तत्रापरः कइव सन्निहितद्विजिह्वः ।
मुक्ता इमा इति जलं नलिनेषु लीनं ज्ञात्वलभेतद्विति जाड्यमिनेषु लग्नं ।
यज्ज्ञायते किमपि हन्त विमोहनी सा शक्तिः श्रियः स्फुरति कापि तदाश्रयायाः ।
अन्यद्भुतमहरणाविपिनेषु केऽपि घ्राणेन केचन तृशाय रसज्ञयान्ये ।
ते केऽपि सन्ति तु नरेन्द्रगृहेषु हिंस्रावाचैव ये विरचयन्ति मिथोपघातं ।
ज्योतीरसाश्मनदवाश्रितमीश्वरस्य निर्दग्धुमिन्धनमिवाग्रगतं न शक्ताः ।
पश्चाद्भवेद्यदि न तत्प्रहतावकाशा कुर्युः खलारविकरादव भस्मशेषं ।

कापिलं दर्पटं कोट्टं नीतवान् मण्डलेशितां । उदये कोट्टभृत्यानां सङ्ग्रहं कम्पनाधिपः । १०३०
कुर्वन् शय्यां पुनर्नेतुं मण्डलं तद्व्यलम्बत । दिनानि कतिचित्तत्र यावत् प्रकृतिदुर्जनैः ।
विटैरस्थयाविषमैः प्रसादावसरो नृप. । तावत्कलुषतां तस्मिन्नुपजापैरनीयत ।
राजा भवन् परः कोऽस्तु सुविचारदृढक्रियः । एषोऽपि शिशुवद्भूमृद्यत्र धूर्तैः प्रतार्यते ।
शैशवे वालिशप्रायैः संस्तुतिर्जाड्यमर्पितं । प्रौढावपि नश्यत्याद्राज्ञः कार्ष्ण्यं मणेरिव ।
भृत्यान्तरपरिज्ञानमात्रेण जगतीभुजां । निरागसो वज्रपातः काष्ठं राष्ट्रस्य जायते । १०३५
कृत्ये व्यवमिति माध्ये द्वाम्यः स्वात्मकादिवत् । सुज्जिः प्रायोजि राजार्थैर्निर्जेतुमिति सोहरं ।
निर्व्यूढाद्भुतकार्येऽथ तस्मिन् मल्लास्ततुत्थया । असोघया प्रजज्ञस्ते पापाः पैशुन्यविद्यया ।
गाम्भीर्यालक्ष्यविकृतेः प्रौत्यानापैर्महीपतेः । प्रत्यायातः कलुषतां नाज्ञासीत् कम्पनापतिः ।
प्रकृत्या सस्य निर्द्रोहतया शङ्कास्य तादृशं । प्रियं कृतवतश्च स्यादविश्वासोऽथवा कथं ।
प्रीतिराभीश्च नृपतेः स्वकृत्यैश्चितैरपि । अप्रियप्रमदालापैर्विरक्तस्येव कामिनः । १०४०
शिला राष्ट्रदयं प्रादां हारितं नृपतेरिति । वक्रमानेन दर्पाच्च स्वच्छन्दं स व्यवाहरत् ।
पौरामगारहरणाद्युपकारैर्निरङ्कुशाः । तदन्यत्रागाधमानाविरागमनयज्जनं ।
सिंहासनःशरणात् कोटेश्वरोऽस्य व्यस्मीनृप । न पिलव्योऽपि भूपालकोपाविष्कृतविक्रिये ।
कोऽयं प्रकोपतापेन सक्षिप्सन् सुज्जिना समं । सम्मन्त्रशपिवरथोनाभूदपि मत. प्रभो. ।
धन्योदयो नृपः सुज्जिदाक्षिण्यमक्षभोश्वदः । अपुण्याद्रविशैगूढं राज्यपुर्यां कृतस्थितिः । १०४५
तौ यावान्नगतौ सौलज्यमष्टपरिच्छदौ । मल्लार्जुनस्य साधाज्यभ्रंशेऽपि विपुलश्रियः ।
सुज्जिदेवान् पुरा दूतैराहूतोऽलम्बकोऽथ यः । आगच्छत् सप्रपाच. स प्राप राजपुरीं तदा ।

सुञ्जिचित्ररथाभ्यान्तं सद्दचेष्टेन भूभुजा । अविज्ञष्टप्रवेशाद्यं दूतैर्भङ्गाऽर्जुनोऽभजत् ।
तन्निमित्तं स केनापि मामन्तेन महाध्वनि । सञ्जातकलहे प्रस्तवतो लक्ष्म्या व्ययुज्यत ।
तथाभूतमपि स्वर्णं भूय्युरीकृत्य नाग्रकत् । यत्तन्मङ्गार्ज्जुनो नेतुं कार्य्यैस्तदपूज्यत ।
सोऽस्वतन्त्रेण राज्ञा च सौजन्याद्रिल्हणेन च । दूतैः प्रच्छन्नमाहूतोरभसादाययौ ततः ।
स न्यग्रहन्न चेत् हन्युर्मामनुवेति चिन्तयन् । अमित्रविषमे मार्गे पुरं साहसिकोऽविशत् ।
स कान्यकुब्जगौडादिमण्डलेषु महीभुजां । स्पर्द्धया लब्धसत्कारो भूपतेर्यन्त्रियन्त्रितां ।
अनवाप्य निजदेशे सत्क्रियां दुःखितोऽभवत् । राजधान्यन्तिकैः पौरैः प्रहृतासु व्यलोकयत् ।
भूपालो गणयित्वाऽथ मन्त्रिणो दत्तदर्शनः । भेजे स्वहस्तताम्बूलदानप्रक्रिययैव तं ।
निष्किञ्चनोऽपि सन् ख्यातिमात्रेणानुगतो जनैः । यातायातं नृपसद्मे कुर्व्वन् प्रचूनकम्पयत् ।
व्याहारव्यवहारादि व्यालोक्यालौकिकाकृतेः । पुरुषान्तरवित् सुञ्जिस्तस्य स्थिरमवेपत ।
दध्यौ सोऽथ ध्रुवं राष्ट्रे खर्व्वसर्व्वंकषक्रियं । नैवमेवाद्भुतं भूतमेतादृक् शान्तिमेष्यति ।
तांस्तान् देशान्तरे वीरानुत्सिक्तान् दृष्टवान् स च । तं पर्य्यालोच्य विश्रान्तिमोत्सेक्तानाममन्यत ।
भवितव्यतया दर्प्पेणाथ नीतः स्वतन्त्रतां । परिवादावहं सुञ्जिस्तेनायत्तह्यवाहरत् ।
स्वानुगैर्लुण्ठितं रुक्ममाचचाणं रुषा द्विजं । प्राशैर्मण्डवराज्यस्थः स शृगालमिवावधीत् ।
वाच्ये कुकर्म्मणा तेन विश्राव्य जनमागतं । तं प्रत्युग्रक्रियं लोको विरागं नगरेऽप्यगात् ।
अथान्तरे सन्धुमेकं व्यधुः कमलियादयः । अगण्यप्रायमुत्सिकादुत्तमप्रक्रियास्पदं ।
मयि सत्यपरोऽपि स्यात्किमनुग्राहकः स्मयात् । अकारिचारणप्रायस्तादृक्कोऽपीति सुञ्जिना ।
सञ्जातयौनसम्बन्धबन्ध कमलियादिभिः । अयास्याविगतोऽप्ययं सामर्थ्याद्रिल्हणोऽप्यभूत् ।
अल्पेन हेतुनोद्भूतं द्वैतं तेषाञ्च तस्य च । खलपैशुनमैकैस्तत् मापाशु शतशाखतां ।
प्रकृत्योत्सिक्तमुत्सेकावहैः समुददीपिपत् । दुर्म्मन्त्रैर्व्विपदैश्वर्य्ये माद्दवेविस्तमुल्हणः ।
स्पासमानां महासभिः पमते समशोर्घिकां । कृतघ्नोऽयमिति स्वैरं मन्युं राज्यपि सोऽग्रहीत् ।
विश्वत्तु भूपतिस्तस्माद्रिल्हणं वाद्यम्हत्यवत् । मन्त्रस्वैरकथास्वेषु निश्रम्भेषु व्यवर्त्तयत् ।
स तु धूर्त्तलदुर्लंघ्यनाद्द्यस्वामिवेश्यतः । स्वेषां धैर्य्यं परेषान्तु सन्त्रासं माययातनोत् ।
समपम्प्रक्रियाकाङ्क्षसंस्तवः पचयोर्द्वयोः । तस्य तु प्रययौ सञ्जपालो दानेन मित्रतां ।
हम्यद्वयोः प्रविशतोरन्योन्यस्पर्द्धया तयोः । चणे चणे राजधानी ययौ सम्भ्रमलोलतां ।
सुञ्जिः स भूपानाचेष्टुं प्रतिपक्षान् युयुत्सया । महीमानोत्सवास्थाने संक्षोभमुदपादयत् ।
स्फाटिकान्दस्ताहस्ते द्वाःस्थाने वेदितो हि सः । तं निर्भेद्य शिलाक्षेपं क्रोधरूक्षाचरोऽकरोत् ।
लिखितैरिव तान् सर्व्वैः सोढुं रचणमीश्वितुं । मिथ्यातथ्यमिवोदीर्य्य संपदद्भिः समर्थतां ।
उपावेशयदभ्यर्णे भूपतिः परिसान्त्व्य तं । सत्यमिष्मास्ति नः किञ्चिदित्यन्तस्तु व्यचिन्तयत् ।
एके मडवराज्यस्थैरथ प्रायोद्विजातिभिः । न सुञ्जिः कम्पनेशत्वमिच्छामहति वादिभिः ।

अन्विष्य विद्विषः शङ्कां मन्त्रवित् निशि रिल्हणः । मल्लकोष्ठमानिन्ये पञ्चचन्द्रं तदप्रियं ।
सशङ्के सज्जपालाच्च तस्माच्च वज्रसेनिकात् । सुज्जिरन्यानगणयन्न युद्धास्य च तद्रिपुः ।
आक्रन्दभीत्या निर्गत्य हयारोहैः समं गृहात् । व्यूढानीको निरुद्धाश्चो शशागाराय सोऽध्वनि । १०८०
भूपतिः प्रातिलोम्येन वर्त्तमानस्तदाभवत् । कोष्ठेश्वरोऽपि मल्लकोष्ठसुज्जिना यद्धोद्धदः ।
स्थितमप्रातिलोम्येन सोऽवधीन्मनुजेश्वरं । इति द्वेष्योऽपि नितरां द्वेष्यतां नृपतेरगात् ।
तथा स्थिते निशीथिन्यामाचख्युस्तस्य विद्विषः । दुर्भुवाहेतुतां राज्ञा स्वगुप्त्यै तेन या कृता ।
अतथ्ये तथ्यवद्वस्तु तथ्यञ्चातथ्यवन्नृपः । यः पश्येन्मूढवत् सोऽर्थैस्त्यक्तोऽनर्थैः कदर्थ्यते ।
रत्नज्योतिर्ज्वलनधिया त्यज्यते दृष्टिपातः श्यावाचारणामितरविषयः स्वस्य सम्भाविते च ।
वस्त्वेकैकं यदिह न मृषा तन्मृषा यन्मृषा तत्तथ्येनेत्थं किमवनजनैर्दृश्यते तत्वशून्यैः । १०८५
राजा यत्प्रधनादन्यदजानन् दौस्थ्यभेषजं । न्ययुंक्त तस्य तीक्ष्णत्वे सज्जपालं महौजसः ।
स कापुरुषवद्वीरः प्रहर्त्तुं छद्मना क्षमः । काङ्क्षिणा विश्य तं हन्तुं तत्र तत्रैक्षत क्षणं ।
मायाप्रयोगानन्योन्यमुद्दिश्य स्पृशतोर्द्वयोः । क्षणे क्षणेऽभजद्राष्ट्रं त्रासोल्लासविलोलतां ।
प्रत्याशङ्क्योदयं रात्रौ सुज्जौ जाग्रति पूर्ववत् । अव्यग्रयामिकग्रामं राजधामाप्यजायत ।
राज्ञा निर्व्वासने रिल्हणस्य सुज्जेरभीप्सिते । पार्थिवोऽप्यनुमन्ताभूद्नीशः प्रत्यवस्थितौ । १०९०
अनिर्धियासुरामच्य तत्खेदात् क्षुभिताः प्रजाः । सन्दर्श्य द्वारपतिना राज्ञो युक्त्या समर्थितः ।
संमन्त्र्य नृपतिं मैत्रीप्रार्थिना सुज्जिना समं । पीत्वा कोशं सज्जपालः प्राप्तो राज्ञोऽव्यजिज्ञपत् ।
प्रेरणादुल्हणादीनां स्वात्मिकाचैव वर्त्तते । राजन् सुज्जेरभिप्रायस्पर्द्धिनोऽन्यानिच्छतः ।
निर्द्रोहस्योपकर्त्तुश्च सुते स्याद्यदि मे नृपः । निर्व्वास्य रिल्हणं चित्ररथं बद्ध्वा महाधनं ।
लोहरारक्षिनिर्निष्टानश्वान् कोशञ्च भूपतेः । नयेयं संभृतोहन्यां दुर्वृत्तमपि कोष्टकं । १०९५
कार्य्योपरोधान्निर्व्बन्धः सम्बन्धेष्वत्र नास्ति मे । दाक्षिण्यं स्वामिनः कृत्ये यस्य प्राणास्तृणोपमाः ।
मय्यस्य प्रतिराजादिनिर्जयस्वीकृतोद्यमे । युवा विश्रान्तचित्तोऽयं नृपश्रीभोगभाग्भवेत् ।
साहायकाय दारेशमुल्हणं रिल्हणाश्रये । कार्य्यजाते च मामीशमाकारयितुमिच्छति ।
मृते च मामुल्हणश्च त्वं चाहं चाविभेदिनः । मिलिता यत्र तत्रास्ति गण्यः कोऽनु नृपास्पदे ।
दूरस्थानवदायादमेकमानीय कञ्चन । निदध्योऽस्य पदे राज्ञो नानुतिष्ठेदिदं यदि । ११००
गुणान् प्रसरणचासादध्यायेव गिरा सृजन् । दिशांशुभङ्ग्या राजाथ विनिश्वस्याब्रवीद्वचः ।
यथाह स तथैवैतस्माद्रोहो नाममर्थता । नौदासीन्यमथैतस्मिन् सम्भाव्यमभिमानिनि ।
निष्प्रतिद्वन्द्वभावोऽस्य दुरुच्छेदो भवेदिति । इयमप्यन्यतस्तावदस्वल्पायधियः कथा ।
किन्तु दूये य आक्षेपप्रायमप्याक्तयुर्व्यर्थेनापि वा । निर्द्रोहस्य वधो ध्यातो योऽस्यासौ कार्य्यएव तत् ।
स्थैर्य्योऽयमल्पसत्त्वानामयेऽस्माभिर्हि मन्त्रितः । नूनन्तेनोपलभ्येत तानावर्जयता धनैः । ११०५
पुण्यैरपरिहार्य्यैः स्वैर्दोषैः मादृशाममी । जानतामपि जायन्ते निर्गुणाभोगभागिनः ।

वाञ्छिमान् गृह्णतां प्रायश्चित्तमेतन्महीभुजां । तन्मौर्ख्यस्य फलं मूढैरेतैर्यदनुभूयते ।
दुर्गमोऽभूमिभृन्मार्गो विटैर्दृष्टपथैरिव । क स नीतिज्ञविज्ञेयः क च ते खलबुद्धयः ।
तन्वाना श्वैतवमुख्यं रसनालौल्यशालिनः । परपिण्डापहर्त्तारः खलाः कौलेयका अपि ।
इत्थं खलोपतापेन प्रयुक्तं तद्भयात् पुनः । असंहार्य्यं कुकर्म्मेदं पश्चात्तापाय नाभवत् । १११०
इत्युदीर्य्य नृपः सुज्जेः सञ्जोव्यापादसिद्धये । तमसागारयच्छय्यागारं चाग्रहीत् स्वयं ।
विश्रम्भस्नुतेः शङ्का जिघांसुः सुज्जिरित्यपि । तथ्यं भृत्यवचोजानंस्तस्थौ दौःस्थ्येन पार्थिं
गत्वा स्वयं गृहान् थौनसम्बन्धं कुरुतां युवां । इत्युक्त्वा रिल्हणेनाथ स सुज्जिं समयोजयत् ।
विश्वास्यापि तया हन्तुं तं प्रसङ्गमनाप्नुवन् । उद्वताम्यद्दिवारात्रं तल्पापर्य्यङ्कशं लुठन् ।
सज्जपाले गृहादन्धुनाथदुःखिन्यनागते । आशङ्क्य साहसासिद्धिमधिकं पर्य्यतप्यत । १११५
निपत्य वीरशयने सुसुलब्धापसत्क्रियौ । भ्रातरौ यस्य कल्याणराजाद्याव्यस्मरन् युधि ।
सेनानीः कुलराजः स ख्यातो व्यायामविद्यया । प्राणैरानृण्यमिच्छंस्तमपृच्छच्छोककारणं ।
स संस्थापयितुं हन्तुं वाप्यशक्यं न्यवेदयत् । तस्याप्रतिमसाधेयं कम्पनाधीश्वराद्वयं ।
कियदेतन्निजप्राणमात्रं लभ्यं महीभुजा । इत्याभाष्य स जग्राह साहसाध्यवसायतां ।
दिनद्वयमनायाते गृहेभ्यः कम्पनापतिः । न प्रातिभाव्यमभजत्तस्य मृत्योः श्रियोऽथवा । ११२०
विश्रम्भभृत्यः शृङ्गारनामा चाप्यब्रवीत् प्रभोः । तं दृष्टवांस्तृतीयेऽह्नि शयनेऽवगणं स्थितं ।
धीभ्योऽपि योगिनो भर्त्तुर्नित्यं सततसेवकः । कर्त्तुं साहससाचिव्यं विदा तेन न पार्य्यते ।

करे पिनाकोमकराङ्कशत्रोः शोभाविशेषाय सदानुषक्तः ।
पुराहवे कार्मुककर्म्म तस्य तत्कालमासीन्न तु मन्दरेण ।

ताम्बूलहारकव्याजात्ततो राजा व्यसर्जयत् । कुलराजन्तमव्याजधैर्य्यासंलक्ष्यविक्रियं ।
ध्रुवं मृत्युः पुनर्नाहमागन्ता तत्ततोऽस्य कः । आरब्धेति स निन्ये न ताम्बूलं स्वर्णभाजने । ११२५
व्यसनप्रशमं राज्ञः स्वदेहत्यागतोऽन्वगाः । एवं कर्त्तुं यतन्तेऽन्ये निर्व्यूढाः स्तुविताः पुनः ।
सगणोऽवगणो वास्तु निहतो नियतं मया । जागर्त्तितः परं देवइत्युदीर्य्य विनिर्य्ययौ ।
गतस्य साहसासिद्धौ शक्यं शङ्कां पलायनं । इति चिन्तयतस्तस्य मन आसीदिशृङ्खलं ।
व्रजन् स्वामिहितं छत्वा पुनः पश्चान्निनाय स । शस्त्रिणौ द्वौ सिपाच्छलैया बन्धस्थाने परामृषन् ।
स्वयं गृहीत्वा ताम्बूलं राज्ञा प्रहित इत्यय । दास्येनावेशितः सुज्जेः पार्श्वं रुद्धानुगोऽविशत् । ११३०
ददर्शाथावचैस्तास्व सितैः परिजनैर्युतं । शयनाथसिवात्यन्यैर्दर्पैररहितान्तिकं ।
गृहीतवन्दितस्वामिताम्बूलशंसितं स तं । दृष्ट्वा छयादि नृपतेः सत्थाय व्यसृजत् क्षणात् ।
जनप्रवेशाशङ्की स त्वरमाणस्तमब्रवीत् । छनागाः कोऽपि कैवर्त्तः शस्त्रभृत्समाश्रितः ।
तस्याक्षेपपरान् भृत्यान् स्वान्निवार्य्याधुना तव । सम्मान्या वयमित्यर्थेऽन्वचयन् प्रकृतिसत्त्वं ।
धिक्कामिव तां वाचं सदर्पादवधीरयन् । तस्य रूपाचरं नाहं कुर्य्यामित्यब्रवीद्वचः । ११३५

सरोषादिव निर्गच्छन् मान्योऽसाविति वादिभिः । तं सान्त्वयित्वा तद्भृत्यैरुद्धा व्यावर्त्तितः पुनः ।
तेनावादि ततः कर्त्तुं विज्ञप्तिं वस्तुनोऽमुतः । सञ्जयोरादिशद्द्वारप्रवेशं स्थेयथोऽम्मम ।
अवशेनेव तेनाथ वीक्ष्य तौ सम्प्रवेशितौ । सहायलाभाद्बुभुजु प्रजिहीर्षुरवर्त्तत ।
यातान्ध कुर्य्या प्रातर्व्वो विधेयमिति तान् वदन् । दत्तपृष्ठो विनिद्रासुतल्पे सुज्जिर्जहौ वपुः ।
गत्वाथ किञ्चिद्व्यावृत्तो निष्कृष्टच्छुरिको जवात् । प्राहरत्कुलराजोऽस्य वामे पार्श्वे कृतत्वरः । २१४०
तस्य धिक्कुर्व्वतोद्रोहमधावन् छुरिकां प्रति । यावत्पाणिः प्रहरणं तावत् सर्व्वेऽपि ते व्यधुः ।
विमर्षः पश्यतां यावदाशङ्के तत्र नोदयौ । स तावदेव सुचिरापेतश्यामद्रवाभवत् ।
भयत्यक्ताभिमानेषु विद्रुतेष्वनुजीविषु । चकर्ष शस्त्रं तत्रैकः पिङ्गदेवः परं तदा ।
प्रहरंस्तैस्त्रिभिस्तुल्यप्रतिप्रहृतिभिः चतः । भ्राम्यन् सुताहकस्मात् स मण्डपान्निरवास्यत ।
स्थितान्दत्तार्गले धाम्नि रुद्धद्वारतमोरयः । जिघांसवः सुज्जिभृत्यास्ततस्तान् पर्य्यवारयन् । २१४५
तमोरिप्रतिकुर्व्वाणाभज्यमानेऽरिभिर्व्यधुः । ते द्वारे द्रुतमव्यान्तौ मोत्सार्य्य शवमुद्धृतं ।
खड्गमुद्गलपरशुच्छुरिकाद्याभिवर्षिणः । तान् स सम्भ्रमयन् मार्गैरनेकैस्तैर्विविचरः ।
नैराश्यहेतोर्व्विशतां तेषां सङ्कटवर्त्तिभिः । शस्त्राच्छित्वा शिरः सुज्जेरङ्गनेऽक्षिप्यताथ तैः ।
अश्रुनिःसरणाभीक्ष्णमुक्तेक्षणपुटस्रुतिः । उत्तरोष्ठकचक्रन्नसन्नघ्राणपुटद्वयं ।
अत्रुटेर्व्विभ्रम्यमाणस्य लोकस्य प्रतिबिम्बकैः । सम्भाव्यमानसंस्पन्दलोकप्रव्यक्ततारकं । २१५०
स्फुटस्थाक्रमच्छेदाङ्गलभांशस्य सन्धिषु । हरिद्रार्द्रैरिवाश्यानमेदोग्रन्थिभिरुल्बणं ।
धूलिध्वस्तकचश्मश्रु तदेतदिति निश्चयं । परं भालतलस्थेन दद्रत्कुङ्कुमबिन्दुना ।
तद्वीक्ष्य तिर्य्यक् पतनव्यक्तसन्ध्यन्तरद्विजं । उच्चलत्तुमुलाक्रन्दा भृत्याः क्वापि विदुद्रुवुः ।
कुलकं ॥ तीक्ष्णान् प्रयुज्य क्ष्मापस्तु तिष्ठन् व्याकुलधीस्तदा । बहिर्वीक्ष्य जनक्षोभं साहसं निश्चिकाय तं ।
सुज्जौ हते चते वापि कार्य्यमेतदिति श्रुतं । सन्नह्य धैन्यसादिचस्य तन्मन्दिरवेष्टनं । २१५५
मिथ्यैव सुज्जिनिस्तीर्ण इति श्रुतवता जनात् । स्वयमग्राहि भूपेन ततः समरसम्भ्रमः ।
निस्संशयं हतं ज्ञात्वा सुज्जिं राजोपजीविनः । तत्र स्थितं शिरस्यं सर्व्वदेय्यमवन्धयन् ।
हिंसात्मजन्मनः सुज्जिभ्रातृश्यालस्य कौशलं । कल्लशस्याद्य निर्वर्ण्ये वाणीयं पुण्यभागिनी ।
आचियमाणेर्भिव्याधैरन्ते वीरोचितं कृतं । तेन लसंशयस्थेन सदाचारान्न विच्युतं ।
राजाकर्ण्यैव तां वार्त्तां श्रुत्वा सद्मपलायितः । हतस्य स्वामिनोऽभ्यर्णं जिहासुर्जीवितं ययौ । २१६०
द्वारं पदप्रहृतिभिर्भञ्जन्तं राजसैनिकाः । अपसार्य्य कथञ्चित्तं तीक्ष्णाः छञ्छादरचिषुः ।
प्रविष्टेऽस्मिन्न निर्य्यूढपीडिते मण्डपान्तरं । सद्यः प्राणनृपाभ्यर्णं कुलराजादयोऽययुः ।
हठप्रविष्टौ हतवान् स तत्रैकं महाभटं । शरैरेव हतौ दूरात् कथञ्चित् परिपन्थिभिः ।
आयातं क्षुभिते देशे सज्जपालं महीपतिः । रिल्हणं चोल्हणं हन्तुं प्राहिणोद्दिहितत्वरः ।
यातौ मार्गात् पलाय्यायं परिमत्र्येति रिल्हणः । चितिकातटपर्य्यन्तमटित्वा यावदाययौ । २१६५

पूर्व्वायातः मज्जपालो गृहद्वारादिनिर्यतः । उल्लङ्घ्य पयोदन्धन् सुवहन् प्रहरत्रयो ।
तावदेकस्य खड्गेन निकृत्ते दोष्णि दक्षिणे । लब्धाक्षेपे च्छिन्नासिस्तायुधन्विरजायत ।
अगच्छमायतां प्राप्ते वंशे यत्कोत्थवादसौ । दिगन्तरेषु स्वस्मिंश्च देशे प्राप प्रथां पुनः ।
फलकाले समासन्ने शौर्य्यप्रतिभुवामजत् । स तेन दोष्णा वैकल्यं धिगिच्छां विधुरां विधेः ।
स प्राग्वदुदयावाप्तौ भवेदविक्लवो यदि । फलेन तस्य जानीयादिच्छां लोकोऽयमद्भुतां ।
पीतामृतस्य क्षतविग्रहत्वं न प्रागभविष्यद्यदि नाम राहोः ।
अज्ञास्यदिच्छान्तदमुष्य लोकः सामर्थ्यभाजः सुचिरप्ररूढां ।
दृष्टः शोनाभिधो द्वङ्गः पित्रव्यः सहदेविना । सस्पृहं निहतः साधु सम्यग्ज्ञातप्रवर्त्तिना ।
तन्यार्थो विश्रुतो वेश्म नम्मलाख्योऽथ गोहनः । मान्योऽनुगो भटो द्वौ च यामिकश्च जनङ्गमः ।
बालं तनयमालोक्य निपषश्याङ्कनस्थितेः । तस्य निर्गच्छतो गेहे रिल्हणोऽग्निमदापयत् ।
आनीयमानो धूमान्धो बद्धा मुख्यैः सर्मैनिकैः । श्मद्वारे हतः कैश्चित् प्राकृतैर्नगविक्रवः ।
तस्य प्रधानप्रकृतिचयैर्हेतामहीपतिः । मुण्डमथ्यवलोक्यासीदशान्तक्रोधविक्रियः ।
व्यापाद्यमानः साकोपं भूपतिप्रेरितैर्भटैः । उच्चावचाः सुज्जिस्थ्याः कृत्यं मत्वोचितं व्यधुः ।
अनुजो लवकः सुज्जेर्ध्वङ्का नीतः स विक्रियां । नृपं वोल्लादयैः कैश्चिद्राजधान्यङ्गने हतः ।
भ्राता पितृव्यजस्तस्य सङ्गटाख्यो नृपाङ्गने । खुटन्नटद्दव प्राणानौचित्येनामुचत् क्षणी ।
प्रविष्टः शरणं वापवंश्यैः पापैः प्रमापितः । उन्मत्तो मुष्णुनिम्नस्य भ्राता कैश्चित् स्वमन्दिरे ।
सुज्जिश्यानस्तु श्टङ्गारहत्या भङ्गुरया हतः । महाकुलीनोविचरन्नौचित्येन च चिन्त्रियः ।
सङ्किकाख्यः प्रतीहारो व्रणितः शनकैर्हतः । अन्येऽपि मंत्रिणः सुज्जेस्तत्र तत्र प्रमिम्यिरे ।
जात्या वाजिजवप्राप्तप्राणः कोट्टेश्वरान्तिकं । आमाद्य वीरपालाद्या द्विवामृत्युभयं जहुः ।
व्रजन् शरदि यो दुष्टोत्थानरुद्धतुरङ्गमः । प्रपेदे मङ्गटभ्राता बन्धनं सुभटामठे ।
सूनुश्च सल्लठः सुज्जेः श्वेतिकश्चाग्रजात्मजः । उल्लङ्घ्य तनूजश्च कारागारं प्रपेदिरे ।
इत्थं राजन्यमात्ये च प्राप्ते पिशुनवश्यतां । नवमे ऽब्दे शुचेः शुक्लपञ्चम्यां विश्वतोऽभवत् ।
कार्य्ये क्वापि विपर्य्यस्तमत्तं संस्मृत्य मन्त्रिणं । तमद्यापि नृपस्तादृक् भृत्योपेतोऽनुतप्यते ।
वेतालोत्थापनाच्छ्मशाननादिव सर्पणात् । व्यालाक्षेपाच्च विषमं सत्यं राजोपसेवनं ।
अनात्मायत्तनिस्तीर्णगुणानां चक्रवर्त्तिनां । प्रकटानामिवाग्न्यो विश्वस्तः कोऽनुभज्यते ।
अयुक्तं नृपतिः सुज्जिवधं मेने प्रजाः पुनः । युक्तं ज्ञात्वा तमुद्रिक्तशक्तितां विविदुः प्रजाः ।
भेजे राजा मज्जपालं कम्पनाधिपतिं ददत् । कुलराजे च नगराधीकारित्वं समार्पयत् ।
त्यक्ता मल्लार्जुनो धन्योदयौ नगरमागतौ । प्राप्य तत्पुनर्जभाते प्रियो विश्वग्गाभुजः ।
इतराश्रयनिच्छेदा वीतपारिस्त्रवस्थितिः । श्रीः सर्व्वाकारमकरोत् स्थिरं चित्ररथे पदं ।
अहुतैश्वर्य्यधुर्योऽपि राष्ट्रं दण्डेन पीडयन् । श्रमं नेतुमशक्योऽभूत्स भूपस्याप्यनङ्कुशः ।

गन्धर्वानाभिधे ग्रामे टिक्कं हत्वा व्यसर्जयत्। परं विग्रोकं कोट्टेशस्तच्छिरः पार्थिवान्तिकं। ११९५
निसर्गद्वेषिणा प्राप्तप्रतापे नितरां नृपे। तदानीं तप्यमानेन दूतेनाध्यायितोऽभवत्।
कोष्टेश्वरेण रभसादल्पैः परिजनैर्युत.। निशि लोठनदेवः स हाडिग्रामं ततोऽविशत्।
महाकथितकन्थोऽन्यै. संरब्धे, राज्ञि सर्व्वत:। बहुसन्धिर्लवन्यस्तं विससर्ज यथागतं।
उच्चलादिवशादात्तं राज्यं सरभसं भजन्। निर्व्यूढिशून्यदार्ढ्योऽगान्मूढो लोकस्य हास्यतां।
तीक्ष्णप्रयुक्तिभि. सैन्यभेदैरन्यैश्च कोष्टकं। उपायैर्नृपतिस्तैस्तैस्ततो हन्तुं व्यचिन्तयत्। १२००
प्रतिद्वन्द्वीव तीक्ष्णानां पाटिताश्च क्षमाभुजां। न संप्रसादयन् क्रुद्धः प्रतियोद्धुं स्वचिन्तयत्।
स्वैः स्वै. प्रदेशैरादिश्य प्रवेष्टुं पृतनापतीन्। स्वयमुच्चावचै. सैन्यैरवचस्कन्द तां पुनः।
स भूपं रभसायातं ज्ञात्वाल्पपृतनं बली। प्राप्तस्खलयितुं तस्थौ प्रतापे. परिहारितः।
लग्ने रणे चित्ररथः पृथुसैन्योऽपि दैवतः। तस्य सैन्यैकदेशेन निन्ये जयविपर्य्ययं।
अङ्गनामङ्गलोद्गारकल्पेन किल तेन सः। ततः प्रभृत्यभूद्भूयदवष्टम्भोदिने दिने। १२०५
रिल्हणादीन् योधयित्वा व्यूढव्यस्ताखिलानुगः। लवन्योन्यपतत् सायं कम्पनाधिपतेर्ब्बली।
जनैः शतादपि भटैर्युतोविगतसैनिकः। सह तत्सैन्यरोषे स गजक्षोभमिवाचलः।
किं वाच्यः स नरव्याघ्र. प्रवृद्धिं याति सङ्गरे। निजवर्मतनुत्रादि यस्य मानि न वर्म्मणि।
मन्दीकृतारिसंरम्भमवष्टम्भेन तादृशा। तन्त्रिशकाद्य. प्रापुर्लवन्याः सैन्यशालिनः।
तैः स्वजातीयदाक्षिण्यात्तटस्थैरपि सङ्कटे। तस्यैषदुपयोगोऽभूत् स्ववीर्य्योपात्तविद्विषः। १२१०
काले सन्नहनं रात्रिं जाग्रत. सामतोबलः। समये ग्रहणात्यागतत्तद्युक्तिविकल्पनं।
स्वभूत्या परित्यागो जिगीषोरीदृशैर्गुणै.। चलेयुररयोऽप्यस्य का धैर्य्याक्रमणे स्तुतिः।
अविश्वसन् भिन्नभृत्यस्तादृक् संरम्भपीडित.। पलायनोन्मुखः शैलात् कोष्टकोऽथ व्यगाहत।
मार्गेष्वकालप्रालेयपातरुद्धेषु वाजिनां। गन्तुं तस्याश्रमं जग्मुः पृष्ठलग्नाविरोधिनः।
अवसानोपनतोऽथ परिमेयपरिच्छदः। स ययौ जाह्नवीं स्नातुं राज्ञा राष्ट्रादपाकृतः। १२१५
सोमपालोऽथ भूपालनाम्ना पुत्रेण खेदित.। दीर्घद्वैराज्यदुःखार्त्त. शरणं नृपतिं ययौ।
पुत्रो दत्तवतो नीविं नागपालस्य तस्य च। अभयं प्रतिशुश्राव भूभृदाश्रितवत्सलः।
हृद्राज्यस्य जिष्णोऽयं दौःस्थ्यहेतुरभूदिति। स तदापदि नासार्पीद्व्याजौदार्य्यधुर्य्यधी.।
साहायकाय स्वं सैन्यं दत्तवांस्तं महीपतिः। भूय प्रतिष्ठामनयद्दर्पप्रशमनाद्द्विषां।
स्नात्वा धुनद्यां व्यावृत्त. कोष्टकोऽध्वान्तरे पुनः। मल्लार्जुनं ग्रहीताभूत् देवज्योत्यापनोद्यतः। १२२०
अर्कोपरागे प्राप्तः स कुरुक्षेत्रमवाप तं। लवन्यं कार्य्यतस्त्यक्तपूर्व्ववैरो नृपात्मजः।
आहूतो लोठनः पूर्व्वमायातस्तेन डामरे। निशम्य तं सङ्कटितं खिन्नः प्रायाद्यथागतं।
विजयेशायतः पोतकेशोऽपि नृपतिद्विषः। प्रविविक्षुरुपैक्षिष्ट सोमपालो दुराशयः।
आराधनाय भूभर्त्तुस्तत्पुत्रः कोष्टकं पुनः। प्राप्तं स्वविषये स्तैस्तैश्छद्मैरिरसुण्ठयत्।

अत्रान्तरे चित्ररथं मंदङ्खायामदुर्ग्रहं । अनिच्छन्तोऽवन्तिपुरे प्रायं चक्रुर्द्विजातय ॥ २२२५
उपेक्ष्यमाणास्ते दर्पात्तेनागणितभूभुजा । ज्वलिते ज्वलने देहान् बहवो जुहुवु शुचा ॥
चरके धर्मधेनूनामुत्तमेऽपि तदाश्रिते । वह्निं गोपालकोऽप्येक कारुण्यप्रवणोऽविशत् ॥
भट्टखोङ्कटवंशस्य पृथ्वीराजस्य नन्दन । युवा विजयराजाख्य मातुलोगाढदुर्गत ॥
देशान्तरं जिगमिषुर्व्विषमं वीक्ष्य तत्र तत् । व्याजहारानुजन्मार्त्ते कारुण्यामृतकणान् किरन् ॥
उपेक्ष्यमाणा दाक्षिण्यस्तिमितेन महीभुजा । विप्रा सचिवपापेन विवशा प्राय नाश्रिता ॥ २२३०
छन्दानुवृत्त्यामात्यानां यत्र क्ष्माभृदुपेक्षते । कस्तत्रान्यस्तु दीनानामापच्छमयिता विशां ॥
यदा न्यायोऽयमन्योन्यस्पर्द्धया यदुपप्लुतं । शमिता दण्डयेच्छाम्यं शमितारं परोऽपरा ॥
विग्रहन्तं नयेच्छाम्यं दार्व्वधारं विघट्टने । कदाचित्तोदमग्नानमग्ना लोहं कदाचन ॥
दोषैकेन न द्वेष्यो राजा सर्व्वगुणोज्ज्वल । यथाचित्ररथस्यान्यद्विधेयं नावभाति मे ॥
धर्म्मं सर्व्वोपकार्य्येकहृद्रूपणमुच्यते । जघानाजगरं सोऽपि जन्तूनामन्तकं जिन ॥ २२३५
दुर्वृत्तदमनेऽस्माभि कृते तेजस्विनोजनात् । भूयोऽप्यधिकृतो विभ्यन्न कश्चित् पीडयेत् प्रजा ॥
कायस्यास्य परित्यागादनन्ता जन्तवो यदि । सुखिन स्युरसौ भ्रातर्व्वणिज्या व्ययसो न किं ॥
सर्वस्वांसं स तथेत्यग्र कङ्कोषपीयिनं । विधायानुससारैत्य हन्तुं चित्ररथं तदा ॥
कालेऽस्मिन् धर्मदौर्बल्यकलुषेऽपि कलौ किल । प्रभावोभूमिदेवानां द्योतते ऽप्रायभङ्गुर ॥
ब्राह्मणैरपरिक्षीणपूर्णपुण्यो न कश्चन । धैर्यमारभते भ्रष्टदुष्टोत्पाटनपाटवे ॥ २२४०
द्विजानुद्वेजयन् मुक्तिं द्विजादेवाप्तदद्रध । विप्रेणैव हतश्चित्ररथोविप्रावमानकृत् ॥
द्विजोत्थापितया क्रान्तचित्तोऽभी कृत्यया ध्रुवं । दध्यौ तस्य वधे प्राणान्विना कारणमुत्सृजन् ॥
प्रायानुमादकपत विप्रा देहान् यदैव ते । तद्रूपस्तत्त्वसहर्षे तदैवासीत् हतानुग ॥
अनामादयतश्चित्ररथं पृथुबलान्वितं । गणरात्रमभूद्धन्तुर्दिवारात्रं प्रजागर ॥
स व्यापर्यन्तसामन्तसीमन्तितपथो व्रजन् । अभूद्दृश्यो दृशस्य जनसम्बाधमध्यग ॥ २२४५
तेन सायम्विनेयस्यनिष्ठुरेणैकदा जवात् । सोऽनुपस्ने व्यतिक्रान्तनि श्रेणिर्नृपवेश्मनि ॥
विलुण्ठितस्य स्तम्भाग्रे क्षुपाख्यामूर्द्ध्नयास्य स । सामन्तमध्यगस्यैव प्राहरत्तीव्रमाहस ॥
मुमूर्षोरिव तत्रास्य वेङ्कत्वगलितस्रते । उद्भ्रान्तचक्षुषोवक्षैस्थवनं समपद्यत ॥
प्रमापितोऽयं राजेति ज्ञात्वा मत्सरहिष्कृता । विनस्तास्ते तथाभूतमत्यजन्ननुजीविन ॥
तं वीतजीवितं ज्ञात्वा न तीक्ष्ण प्राहरत् पुन । प्राप्तं द्वितीयनिःश्रेण्या भ्रातरं निषिषेध च ॥ २२५०
न पलायिष्ट निर्व्विघ्नसर्व्वमार्गोऽपि घातित । राज्ञा चित्ररथ सर्वदित्युधे प्रोषकार स. ॥
प्रनष्टं भ्रष्टभामादिराज्यभोगपुरस्सरे. । सर्व्वे कापुरुषैस्ताघादय चित्ररथानुगे ॥
व्यायासैठरथस्य भ्राता भीत्या पलायित । शरण नर्त्तकीभेकां ययौ वक्षार्पितस्तन ॥
तादृक् प्रवेशितश्चित्ररथोऽभ्यर्थ्य महीभुजा । मा भैषी प्राहरत्कस्त्वामित्युक्त्वाश्वसित स्वरं ॥

नृपाज्ञया को निहन्ता दारेशस्येति वादिभिः। तीक्ष्णोऽस्मिटीभटैः सोऽहमित्युक्त्वा स्वं न्यदर्शयत्।
धीरो योधान् स्वधैर्यात्तु लङ्घनश्लाघ्यविक्रमः। त्रिंशद्दिमान् स हत्वाथ प्रहृत्य चरणे हतः।
परित्राणाय साधूनां विनाशाय च दुष्कृतां। धर्म्मसंस्थापनार्थाय सम्भवामि युगे युगे।
हन्त्वा लिखिततत्कृत्यकारणा पत्रिका करात्। तस्यान्तसमयाशंसा श्लोकेनानेन पावनी।
अरच्युन्मादद्दीनलयुतश्चित्ररथस्ततः। हृद्व्रणोऽपि ललाटसन्धिवेधादजायत।
स मासान् पञ्चषान् याप्य निराप्यायकृशाकृतिः। विवेष्टमानोऽवर्त्तिष्ट शयनीयतलेऽन्वहं।
मल्लार्जुनं पुरस्कृत्य कोष्टकोविघ्नोन्मुखः। तन्मध्य तरुसंबाधं गिरिदुर्गमगाहत।
मा मामभ्रमयं भ्राम्यन् स्वयूथ्यघनोद्यमात्। अविस्मृतापदं लोकं पुनर्दैराज्यशङ्किनं।
अकाण्डाम्बुदजाड्येन पीडिताङ्गदवाभजत्। परचक्रोदयेनाशु लोकः शिथिलशक्तितां।
तरुदुर्गं तदक्षस्कोपवाप्यथ सर्व्वतः। व्याप्तोपान्तवनग्रामैः सचिवैः स न्यरोधयत्।
सञ्जपाले यवनकैः स्कन्धावारं निवघ्नति। अनुचक्रुर्द्विषोऽस्पन्दान्निवातस्तिमितांस्तरून्।
धन्यकोऽम्भिलकाकोष्टपर्य्यस्तकटकोऽभवत्। गन्धद्वेषी गजरिपुः सिन्धुरस्येव वैरिणः।
आवासितबलो राज्ञा गोवासे रिल्हणोऽकरोत्। अटवीं पर्य्यटन् यूकानिवार्कोत्कण्ठितानरीन्।
तीव्रशकैर्नृपस्यैवमारम्भैः स्तम्भितोऽभजत्। कोष्टेश्वरस्त्रिचतुरान् मासान् सञ्चारशून्यतां।
क्लिष्टोदेशान्तरे राष्ट्रानन्तरैर्निष्कृतोनृपैः। भिन्नस्ववर्गोभूभर्त्तृभृत्यव्यर्थीकृतोद्यमः।
वाणिग्यत्वादकुशलोशातुं वृत्तिं महीभुजां। सविस्मृतागः सन्धातुमैच्छच्छिन्नपदोनृपं।
उज्जिहीर्षोः प्रभोर्मन्युं वाच्यं तदश्मनादिदन्। भक्त्येकाग्रः सञ्जपालस्तस्यैकां तामपूरयत्।
तयार्त्तोऽपि रिपुं राज्ञः सन्धित्सुर्न्यग्रहीन्न सः। पृथ्वीहरप्रभृतानां निर्द्रोहत्वं न कौतुकं।
तेन प्रहिण्वता राजवैरिणं स्वकराङ्गुलिं। च्छिन्दतापि महीभर्त्तुर्मन्युश्छेत्तुं न पारितः।
कण्ठबद्धशिरःशाटः शीर्षेणोपानहं वहन्। भुक्तवेलोऽपि भूपालं कर्त्तुं नाशकदक्रुधं।
अस्वोच्छतदिवभूम्भाञ्छनः स हि राजवत्। तत्तत्प्रत्युक्तभूपाज्ञः सर्व्वं गर्व्वान् व्यवाहरत्।
शुश्राव बद्धं तन्मध्ये यातं मल्लार्ज्जुनं नृपः। अनुबध्नाति भव्यानामुदयेऽभ्युदयान्तरं।
नियमानः स हि स्कन्धमधिरोप्यानुजीविभिः। अजाह्निकतया मार्गोल्लङ्घनाय स निःसहः।
ततस्ततोभयस्थानाधिस्तीर्णो लोहराश्रितं। शावर्णिकाभिधं ग्रामं प्राप्तो विन्यस्तरक्षिणा।
निरुद्धोजग्गिकाख्येन ठक्कुरेण महीपतिः। प्रियंकरं तच्च मत्वं शुश्रावान्तिकमागतं।
स्कुशावोऽरिणा दुर्गान्निर्गतः स कथञ्चन। सद्भूतेन पुनः शक्तिः कस्य भावार्थलङ्घने।
गङ्गाम्बुमार्गलुठिता शठरात्कथञ्चिदेकस्य संहतवतो निहता महर्षेः।
यस्तापरेण हृतसागरगर्त्तपूर्त्तिः शक्तो न कोऽपि भवितव्यविलङ्घनाय।
जग्गिकः सद्वंशाप्तिपर्य्यन्तोपान्तरक्षिणि। राशादयदारपतिः प्रायोसि प्राप्यबुद्धिना।
तं विना धैर्यगाम्भीर्य्यसौर्य्यधुर्य्यं महाधियं। सहटेन प्रवरणा राज्ञामात्यमिमन्त्रितां।

स व्यतिक्रम्य सावाधान् मार्गान् भयवेतनैः। तमोरिस्थितमट्टाचोक्तं क्षमापतिर्विदिषं।
निष्ठाशून्येन धैर्येण शौर्य्यसम्भावनावहः। स्तुवन् स तं मैद्धिः प्राप्तं तत्तदुक्त्वाब्रवीत् पुनः। ११८५
सर्व्वतो ज्यायसीं भर्तृभक्तिं यो बहु मन्यते। भवान् धुर्यो मतिमतामाहवोलोडनान्तरैः।
कृता रक्षामणिसमं सहायं त्वादृशं विना। हानिर्मे दुर्नरेन्द्रस्य बाल्ये राज्ये बहुच्छलैः।
दुष्प्रेक्ष्याणां भवत्येव नियमाद्राजभास्वतां। भाग्यान्तहेमन्तदिने जनैर्नवविलङ्घ्यता।
शोभते रुधिराताम्रमण्डलाग्रो यथोदये। तथा योऽस्तमये भास्वानिव वन्द्यः स भूपतिः।
धन्योऽवतारो यस्यासीत् क्षुभ्यत्पौराङ्गनाजनः। उदयेऽस्तमयेऽप्युग्रे रागव्यापस्तरोगणः। ११९०
पदे प्रयोगं सम्बार्थं किञ्चित् कृत्वा कुलीनवत्। अहं कविरिव प्रौढ. प्राप्तो निर्व्यूढिमूढतां।
सत्यंकारोऽधुना भूत्वा विधत्तां स्वान्तसुस्थितिं। साध्वलानभिवक्तेन वरेणैकेन सोभवान्।
इत्युक्त्वा प्रत्ययोत्पत्त्यै संस्प्रष्टुं स्फाटिकं ततः। क्ष्मपीठं पुरतोद्वारपतेर्लिङ्गमुपानयत्।
अच्छलाहवसंमर्दप्रासशूलेपुवर्षिणः। योधान् योद्धुं वरं सायं मानवान्नूनमिच्छति।
इति सम्भाव्य संस्पृष्टशिवलिङ्गः स वाञ्छितं। वर तस्याररी चक्रे स च भूयो जगाद तं। ११९५
आकृष्टदृष्टिरहतः स्वाभुजोऽन्तिकमवतः। यथेदृगेव प्राप्नोषि तथा त्वामर्थयेऽधुना।
कार्पण्यापहतं तस्य वच. श्रुत्वा त्रपाजडाः। सर्व्वेऽप्युर्व्वीमुखास्तस्थुर्हिम्यार्द्राः पल्लवा इव।
अन्येद्युरणस्ततो भिषोः स्मर्य्यमाणः सचेतसां। विकाशहेतुतां प्राप स्वस्थस्य मनसः पुनः।
मनुष्यवाह्यमारूढः पत्तं जिन्ये स निस्त्रपः। तेन स्वपालितांस्तोकानपि पश्यन्नविक्रियं।
अहीनाचारनिद्रादिवैवश्यः पद्मवत्पथि। कथ्यमाणः स केनापि न विकल्पेन पस्पृशे। १२००
पश्यन्नानीयमानन्तं गोप्तृभिस्तादृशं जनाः। दयार्द्रहृदयत्वासीन्नाभ्यनन्दच्च भूभुजं।
उवाच चानुकम्प्योऽस्मिञ्जन्मन्येष्टस्य भूपतेः। नैतावद्भाति नैर्घृण्यमनुजे पितृवर्जिते।
आसेचनकमेतस्य मेचकाब्जदृशो वपुः। क्लेशगर्त्तमनिस्त्रिंशचेताः कः कर्त्तुमर्हति।
पूर्व्वापरानुसन्धानवन्ध्यस्तं दृष्टवांस्तदा। विस्मृतागा नृपं तत्तदित्युपालभनाध्वनि।
गणना कार्य वा बालवालिशादौ विधीयते। न चित्तहृत्सैरैकार्य्यं महतामपि सर्व्वदा। १२०५
श्रोतॄणां द्यूतपाञ्चालीकेशकृष्यादि शृण्वतां। पाण्डवेभ्योऽधिकः क्रोधो धार्त्तराष्ट्रेषु जायते।
कुरूणां चतजापाने भग्नोरोर्मूर्द्धताडने। श्रुते पाण्डवविद्वेषस्तेषामेव च दृश्यते।
परावरज्ञः कार्य्याणां न कश्चिन्मध्यमं विना। ततस्तेऽनुभवाभेदस्तत्र तत्र कथं भवेत्।
स पौरान्निादयन्द्ष्टे च्छिन्नाङ्गुल्यङ्कमुद्वहन्। युग्याधिरूढो मृत्पात्रं सायं नगरमासदत्।
न्यधत्ताश्वयुजा शुक्लपक्षदश्यां महीपतिः। एकादशेऽब्दे तं रक्षितुं नवमठान्तरे। १२१०
त्यक्ताहारस्य च निशाः पञ्चयातस्य तास्ततः। पार्श्वं जनास्म कारुण्यावरणस्पर्शनार्थिनः।
अवादोदर्पितं तस्मै प्रतिशुश्रुवुपे भयं। द्रोहावेकान्ततो वध्यौ सचिवरयकोष्टकौ।
राजा निर्जगुपः स्वोर्व्वी, कोष्टकस्याथ बन्धनं। निधिक्षुः पञ्चपानास्याविद्धणादोन चूचुदत्।

सर्व्वेषु गलितौजस्सु स्वयं राज्युद्यमस्पृशि । अथ तं रिल्हणो दोर्भ्यां झम्पं याहद्वाग्रहीत् ।
हृतशस्त्रः स वलिनस्तस्य दोष्पञ्जरान्तरे । तस्थावचेष्टो निद्रान्धो भूतेनेवालसीकृतः ।
भ्रातृव्योऽपि खराजाख्यः कुलराजस्य कोपनः । भूभृत्तया कृपाणास्य निर्व्विभेद कृकाटिकां
परस्वधेन मूर्द्धानं पृथ्वीपालस्य ताडयन् । राजवीजी स च क्रोधान्ध्यपिध्यत महीभुजा ।
कृकाटिकास्थिसञ्जातमर्म्मवेधोपचेष्टितः । विवेष्टमानोऽवर्त्तिष्ट च्छिन्नो स रुधिरोक्षितः ।
महावलैः कमलियप्रमुखैस्तस्य सोदरः । चतुष्कः पातितोऽपृथ्व्यां गण्डशैल इव द्विपैः ।
विलोक्य वैकल्यहतौ बद्धौ तौ स्वामिनौ तथा । कृष्टासिधेनुस्तस्थौ द्विजन्मा मल्लकाभिधः ।
उच्चावचेषु प्रहरन् स भूपालोपजीविषु । अतर्क्यमाणस्तुमुलं राज्ञावालव्यतापतन् ।
नृपान्तिकादापततस्तांस्तान् घ्नन् महाभटान् । अधावत् सासिधेनुस्तं कुलराजो महौजसं ।
प्रतिप्रहृतिषु च्छिप्रापतत्पाणिमपारयन् । निहन्तुं संहरोधेव भित्तौ व्यायामवित् स तं ।
अपयातुमवस्थातुं प्रहर्त्तुं वाप्यशक्नुवन् । तस्थौ च वज्रसन्धानः संस्तम्भेनमविचलं ।
चरणास्फालनोत्फालदोःशब्दमुखरोऽन्तिकं । धाविते पद्मराजेऽथ मल्लकोऽचिपदीक्षणं ।
प्राहरत् कुलराजोऽस्य लब्धरन्ध्रोऽथ वक्षसि । प्रहृत्य गच्छतः पाणेः स तस्याङ्गुष्ठमच्छिनत् ।
तौ विज्जराजो दर्पोष्णनिविडे प्रहरत्युभौ । तस्मिन् प्रतिप्रहरति च्छिप्रं प्राहरतां ततः ।
स चीनप्यभियोक्तृंस्तांस्त्यक्त्वा दृक्पथमागतं । चतुष्किकाद्वारगतं राजानं समुपाद्रवत् ।
लक्ष्यीभूते नृपे शीघ्रमनुधावन् ससम्भ्रमं । चकार कुलराजस्तं स्फिगस्थिक्षतिनिर्जवं ।
ततः सर्व्वेर्हतो योधैः क्रोशक्रीवान् स सत्वरं । हत्वाभजद्दीरशय्यां रक्तस्यन्दोत्तरच्छदां ।
जीवद्व्यापद्गतस्वामिनो चितः श्लाघ्यविक्रमः । सएवास्पृहणीयान्तचणो वीरैरगण्यत ।
वहिःकोष्टकभृत्येषु विद्रुतेषु दरिद्रतां । परं जनकचन्द्राख्यो धैर्य्येणोवाह डामरः ।
निरायुधो राजभृत्याङ्गुल्येकस्मात् परस्वधं । स व्ययुद्धायदूतलं नयन् भूरीन् यमान्तिके ।
यियासोस्तस्य चण्डांशुमण्डलं परशुः करे । सुषुम्नासंविभागार्थी शशिखण्ड इवाविशत् ।
नाद्राक्ष नाश्रौक्ष वापि वद्धे भर्त्तरि यत्तदा । कोष्टकस्य वधूरन्वतिष्ठन् मानवती सती ।
जीवन् भूयोऽपि लभ्येत लया स पतिरित्यसौ । बन्धूनामवधीर्यार्त्तिं प्राविशद्धुताशनं ।
सप्तर्षियोपिदाक्षेपतर्षकिल्विषदूषितः । तस्याः सतीलोकगायाः पादाभ्यां पावितोऽनलः ।
वसन्तस्य सुताधन्योदयभ्रातुः पुपोष सा । शुचिवंशाभिमानेन न डामरवधूव्रतं ।
भुवन्यलमनाः सुर्य्यैर्वध्येऽपि धनेच्छया । ग्रामकादिकुटुम्ब्यादीन्नितम्बाभोगभागिनः ।
मतिव्यामोहनिर्व्यूढवैक्लव्यस्याभिमानिनः । तयानुगाभ्यास कृतं कोष्टकस्योच्चकैः शिरः ।
दृढमणोऽपि क्रिमिभाक्तत. कैरपि क्लिन्नवे. । निष्प्राणो गणरावेण कारायां कोष्टकोऽभवत् ।
अथ चित्ररथः शोपद्यः कल्पितं नृपं । श्रुत्वा मल्लार्जुनेनाभूद्भयादत्यन्तदुःस्थितः ।
दवी तद्वेश्मभार्य्यस्य प्रियाद्यपमनो सती । परलोकातिथि. पूर्व्वं विभ्रमतिभूरभूत् ।

देहे याप्यहताप्याये गेहे गतपरिग्रहे । पत्यौ वैमत्यकलुषे नैषदध्येष पिप्रिये ।
तीर्थस्थितस्य न स्यान्मे सागसोऽप्यप्रियं नृपात् । इति सञ्चिन्त्य स प्रायान्निषात्मभर्तुं सुरेश्वरीं ११५५
अथ नानार्थभूयिष्ठा धनाधीशाधिकश्रियः । स्थानात्ततस्ततस्तस्य पार्थिवोऽपाहरच्छ्रियं ।
कनकांशुकसन्नाहवाजिरत्नायुधादिभिः । स्वा स्वा प्रकाशिता लक्ष्मीः स्पर्द्धयेवाधिकाधिका ।
लोहरद्रोहघर्म्माशशोषितो राजपादपः । तल्लक्ष्मीशैलतटिनीषेकेनाप्यायितोऽभवत् ।
विशत्रे चिरनष्टेऽपि श्रीकल्याणपुरं न यः । वनवासोचितवासः सालूगेऽन्युमिवात्यजत् ।
श्वेतच्छत्राद्यदृष्टेव चिन्तापाण्डुरवर्त्तत । वन्दीकृता नरेन्द्रश्रीर्निर्निद्रा यस्य मन्दिरे । ११६०
राज्ञा प्रयुक्तं विज्ञाय विजयः स भवोद्भवः । तीव्रमानन्दनामानमवधीत्तेन चावधि ।
इत्थं स पप्रथे तादृक्प्रजापालनशालिनः । सर्व्वोत्साहमयेऽनेहा जयसिंहमहीभुजः ।
तीर्थस्थिते चित्ररथे पादाग्रग्रहणैषिणौ । शृङ्गारजनकावास्तां तद्भृत्यौ व्यक्तचाक्रिकौ ।
प्रचुरोत्कोचदानेन स्वीकृत्य नृपतिं ययौ । शृङ्गारोऽभ्रजनकः स्वामिश्रीभोगभागितां ।
चिरप्रचलितं द्वारमुदस्थे निदधे पुनः । मेघकालः सरित्पूरं प्रतीरइव पार्थिवः । ११६५
अन्तस्थभोग्यदुष्कर्म्मदत्तमर्मव्यथश्चिरं । कथाशेषोऽभवच्चित्ररथो मासैस्त्र्याष्टभिः ।

हास्यावहोऽप्यविकृतो विकृतोऽनपास्तोदुर्गन्धिरप्यतिजडोऽपि गृहीतवाक्यः ।
पूर्व्वानुभावजयिनो भवति प्रभावाद्यस्य स्तुमस्तमतिसंस्तवमप्रतर्क्यं ।

निन्द्यैराद्यूतनाद्यैर्यश्चेष्टितैः प्रागभीष्टतां । वाल्ये दुर्ललितस्यागाद्भर्त्तुश्चित्रचेतसः ।
विघ्नज्यमानः सम्प्राप्तमायाज्येन दिवानिशं । क्रमात्स्वीकृत्य ताम्बूलं तेन चित्ररथान्तिकं ।
दूतैः कृत्यान्तराज्ञत्वं प्राप्तवानाप्ततां गतः । तदन्ते घट्टयन्नाज्ञस्तद्भृत्यान् कोशदर्शकान् । ११७०
तदा सर्व्वान्नताशेषमन्त्रिशून्ये नृपास्पदे । सज्जकस्यात्मजः प्राप शृङ्गारो मुख्यमन्त्रितां ।
तस्य वैधेयताभ्यस्तकुदृष्टेरपि दुष्कृतां । नातः पात्रार्पणात्तुच्छत्यागिनापि सम्पदः ।
योऽपि त्क्षिप्रभोग्येन धन्यंमन्योऽपि सोऽभवत् । धान्यदानवदान्यत्वं गुरूणामाजगाम यत् ।
पीठं कृतवतो रूप्यं संयोज्य रजतैर्निजैः । विद्यमानं सुरेश्वर्यां सायुज्यं तस्य युज्यते ।
उर्व्वीशैरपि नार्वाग्भिर्य्योऽनुगन्तुमशक्यत । आषाढ्यामाढ्यसम्भारोनिविडद्रविणव्ययः । ११७५
नन्दिक्षेत्रे स तत्राद्यैः प्रणीतश्चम्पकादिभिः । तेन कालानुसारेण पोषितः पञ्चपाः समाः ।
नर्माङ्गतायां निःसारो ज्ञातीयः सोऽधिकारभाक् । अचिन्त्यकृत्यकार्य्यासीत् स्वामिस्नेहप्रभावतः ।
केलीसम्बैर्य्युतैर्व्रतिकरजैः कण्ठभूषादशायां यस्याशापि त्रुटनमसकृत् क्ष्माधरेस्यासकृष्टौ ।
सोऽप्यादिष्टस्त्रिपुररिपुणा प्राप भङ्गं न भोगी प्रत्याधायी कचन न परो भर्त्तुराज्ञाप्रभावात् ।
तस्य रिल्हणधन्यौ च समाश्रित्येतरेतरं । कार्य्यं जनकशृङ्गारावुत्कोचेनापजह्रतुः ।
कदाचिज्जनकं बद्धा सार्द्धं भूषणमौक्तिकैः । सपुत्त्रदारं शृङ्गारं वाष्पविन्दूनमोचयत् । ११८०
स तस्य जातु निर्भिद्य मानहीनमकारयत् । रूचरचार्प्पितोत्कोचधनाभ्यर्थितमैथुनः ।

अङ्गुष्ठनखनिर्घर्षेनर्त्तितानामिकोऽभिकः। वदन् वामोत्तराष्टाग्रोदञ्चनं कुरुते क्षणः।
भ्रूभङ्गादेशितवलीभिश्चान्ततललाटभूः। पुनरेकस्तयोर्लब्धकार्यालोकमहासयत्।
अव्यक्ताक्षरवाग्गोच्यमीलिताक्षो रटन् बहु। हसन् सकरतालञ्च सम्पद्यन्योऽभ्यभाषत।
सोल्लेखप्रतिभान्तीतलरां संहास्यवस्तुनि। कथाशरीरं पर्य्याप्तं न दृष्टा किमचेतसां। ११७७
सर्व्वस्मिन्वस्तुतो वाचि काले विगतयोग्यते। जाने क्षणभूर्णां तुल्ये शृङ्गारोऽस्त्यगच्छतां।
यः सर्व्वंकषनिष्कम्पशेमुषीकः क्षमापतिः। धुर्य्यतां धर्मचर्य्याभिर्गतः सुकृतशालिनां।
लब्धवोधिरिवारेर्य्यश्चक्रे व्यापद्युपक्रियां। दावप्रदस्य दग्धाङ्गोऽश्लाघलमिव चन्दनः।
गुरुसूरिद्विजानाथप्रभृत्युचितयापि यः। प्रतिपत्त्या संविभेजे संविभाग्यकुटुम्बकं।
प्रासादान्विजयेशादिदेवप्रातस्य शुद्धधीः। सुधादानेन निन्ये च धन्य कैलासतुल्यतां। ११८०
मठदेवगृहारामक्षुद्रकुल्यादियोजने। जीर्णोद्धृतिव्यसनिनस्तस्य चिन्ता निरन्तरा।
सहृद्दर्शितविद्वेषकार्य्यसब्रह्मचारिणा। सक्रौर्य्यधामपर्य्याप्तमीदृगण्युच्यते जडैः।
विश्वाध्यायनसप्तसिन्धुभरणब्रह्मादिसम्प्रीणनप्रायं कृत्यमुदात्तमेकसमयोपात्तेन दुष्कर्मणा।
स्वःसिन्धोर्लघुतां गतं सुरगजश्रेणीचिताख्यर्शनात् जाता येन जनाः श्मशानमिव सा योग्या किलास्यां स्थिता।
तदन्तरं शिवरथो द्विजः प्रचुरचाक्रिक। कायस्थपाशः पाशेन गलबद्धा व्यपद्यत।
इत्थं पृथ्वीपतिः कृत्वा तत्तत्कण्टकपाटवं। अपेतविघ्नं सौजन्यनिघ्नो व्यधित मण्डलं। ११८६
विपक्षावरणापायप्रायेण पृथिवीभुजः। तेजः क्षणमायान्ति जीमूतमुक्तारविकारवत्।
परिणाममनोज्ञत्वं राजरत्नं त्रयं नृपः। माधुर्य्याधिक्यमुत्पाको द्राक्षाद्रुमद्रवाययौ।
प्रावर्त्तयत सातत्याल्कृत्स्नन् विततदक्षिणान्। विवाहतीर्थयात्रादीन् महितांश्च महोत्सवान्।
संविभेजे स्वसभारैः स क्रियाधर्मधारिणः। तेजोभिः कुलशैलानामोषधीरिव चन्द्रमा।
प्रतिमातं सुतोदाहप्रतिष्ठादी पुरोकसां। नैपथ्यिकसामग्रीदानमव्यग्रचेतसा। ११९०
दाक्षिणाकराः कोशदृष्ट्यै ये धराभुजा। नवोचक्रे पुरं सर्व्वं स्वाधीनान् स विधाय तान्।
मन्त्रतोराजकार्येषु तत्वविद्भिर्द्विराचनैः। विस्मितैर्वीक्ष्यते तस्य निष्ठा काष्ठा मुनेरिव।
प्राहादारभ्य सायाह्नपर्यन्तं प्राप्य दृश्यते। न तत्कृत्यं गता यत्र नाध्यचलं विचक्षणाः।
अविचारान्धतमसे विद्या व्यद्योततान्तरा। जयापीडादिभूपश्रीसौदामन्या विलोलया।
तेन श्रियमुं विश्राण्य स्थास्नु रत्नप्रभामिव। गुणवैचित्र्यचित्रस्य प्रकाशो नश्वरः कृतः। ११९५
सूरयो येन संग्रामे विषमे च सम्पदः। ग्रामाणामाग्रहाः कर्म साम्यया स्वामिनः कृताः।
विदुषां विततोल्लेखबोधास्तद्विद्विषां गृहा। व्याप्ताः सप्तर्षिभिर्देयमुत्कर्षमिव मूर्द्धसु।
प्रतिभाप्रभवे सङ्गी यशो च पथि मान्यतां। सार्थवाहत्वमाजन्मनिर्द्दोषा विदुषां स्थिता।
आभीचयार्थराजस्य प्रयामस्यापतितश्रियः। कामं लिङ्गाभिवेकाश्च सङ्गीतप्रभवोऽध्वनिः।
निद्राणस्य तथा वेणुवीणादिपरिहारिणः। दयितं तस्य निर्द्दैवविदग्धाल्पविकल्पनं। १२००

कोल श्रीललितादित्यावन्तिवर्म्मादिभूभुजां। सिद्धं न यत्प्रतिष्ठादि निष्ठां तदधुना गतं।
मठदेवगृहेष्वेव स्वकालप्रभवेषु यत्। सर्व्वेष्वेव कृता तेन निर्व्यपाया व्यवस्थितिः।
रत्नादेव्याद्दृढाध्दृढमत्र्दवल्लभताभुवः। सर्व्वप्रतिष्ठाप्रष्ठत्वविहारः प्रथमं गतः।
रिल्हणोऽथ गुणग्राममवाप्नवो धर्म्मपद्धतौ। बभूव पूर्व्वपथिकः समस्तामात्यसन्ततेः।
तपोधनांल्लब्धवर्णान्यम्मिष्टद्धांश्च शुद्धधीः। विश्रम्भभवनस्थोऽपि यक्त त्यक्तुं न यः क्वचित्।
कृष्णाजिनाभयमखदानमुख्यैः सुकर्म्मभिः। धर्म्मकन्याविवाहैश्च यस्याशून्यत्रमायुषः।
सर्व्वेषामाहिताग्नीनां निष्प्रत्यूहा महात्मना। सर्व्वयागोपकरणैर्येन विश्राणिते. क्रियाः।
भोगान् बुभुजिरे भव्यान् सत्रे स्वनितविस्मये। यस्य वर्णाश्चतुःषष्टिः कुटुम्बस्पृष्टचेतसः।
अग्रहारगुणोदग्रैर्व्वितंतैर्मठसेतुभिः। पुरे परिष्कृते येन द्वयोः प्रवरसेनयोः।
आद्ये प्रवरभूभर्त्तुः पत्तने प्रत्तविस्मयः। प्राप्तः प्रतिष्ठाप्रष्ठत्वं यत्कृतो रिल्हणेश्वरः।
लोकान्तरगतां कान्तां कृतिनोद्दिश्य सुस्सलां। भिक्षोरेकप्रपाख्याने विहारस्तेन कारितः।
मार्ज्जार्य्यास्तिर्य्यगुचितखेदविस्मृत्यपोहितः। मृतामनुमृतायास्तन्नाम्ना यः ख्यातिमागतः।
तद्भर्त्तुरीर्ष्याकालुष्ये तस्यादूराग्रगा पुरः। प्रदेशे मानुषीवासीत प्रिया क्रोडाविडालिका।
तीर्थप्रस्थानदिवसादारभ्यास्याविरावित्री। उत्सृजन्त्याहृतं भोज्यं सा शुचा जीवितं जहौ।
आरोहति परां काष्ठां प्रतिष्ठाविविधाधुना। दिद्दा नृपतिपत्नीषु मन्त्रिपत्नीषु तु सुस्सला।
श्रीचङ्कुणविहारं या यातं नामावशेषतां। अश्मप्रासादवेश्मादिकर्म्मणा निर्म्ममेऽधुना।
अरघट्टमवन्यान्सुव्याचशालादिकर्म्मभिः। तस्याः सम्पूर्णतां पुण्यप्रकारा निखिलागताः।
पूर्व्वराजकुलाखण्डस्थण्डिलव्यापिनाखिलं। तद्विहारेण नगरं नीतं नेत्राभिरामतां।
प्रापि प्रतिष्ठयेत्राशु यद्भ्रचपितया तथा। विपत्तिः श्रीसुरेश्वर्य्यां प्राज्यसायुज्यदूतिका।
मठाग्रहाराधन्येन वल्लभाभिधया कृताः। नाभीष्टं लेभिरे नाम ख्यातिः पुण्यैर्विना कुतः।
अथद्वारमठांल्लङ्कुद्रयः कम्पनापतिः। कृत्वापि स्वाभिधामेव तत्सम्बद्धां सदाग्रहणोत्।
उदयद्वारपतिना सह मल्लपुरोगणैः। कृते प्रष्ठे मठे शोभां लेभे पद्मसरस्तटः।
शृङ्गारतम्त्रपतिना श्रीद्वारेऽप्यग्र्यजन्मना। प्रत्यष्ठापि मठोद्यानदीर्घिका येन चात्मना।
स्थानकोष्टमठग्रामपुरीसेलादिकर्म्मणा। सोऽलङ्कारालङ्कारोऽष्टहट्टश्चाधिपोधरां।
बुधः सदोपधीशान्तिहेतोर्भातः कलावतः। यः कविर्दानवलक्ष्य ख्यातस्त्यागेन योऽजयत्।
नृसिंहसेवी निर्द्दिंसहिरण्यकशिपुच्छिदः। वराहसमये दत्तगोाय योऽपूर्व्ववैष्णवः।
भट्टारकमठाभ्यर्णे पूर्णवार्धाविव प्रहिः। मठः शृङ्गारभट्टस्य ख्यात्यानौचित्ययोज्झितः।
सान्धिविग्रहिकोदार्श्वाभिधारोर्व्वीभुजोऽकरोत्। अष्टमूर्त्तेर्भट्टनामा प्रतिष्ठां पुण्यकर्म्मठः।

पुष्पाकरप्रणयभूः सुभगा विभूतिरेकस्य हन्त करवीरतरोर्द्रुमेषु।
पुष्पाणि यस्य सफलीकुरुते स्वयं तत्प्रादुर्भवत् किमपि चिह्नमनङ्गशत्रोः।

कश्मीरान् पृष्ठतः कृत्वा दैराज्यं तत्र कुर्वति। उत्सृज्य सज्जपालादीन् सर्व्वकार्य्यभरक्षमान्। ११६०
देवाकप्रतिपत्त्यान्याभिधमेध्यनिरुद्धधीः। सर्व्वाधिकाराद्यारोपान् मन्यमानोऽभिमानितां।
पर्य्युकाजयतः सुज्जेरप्रौढमनुजं निजं। प्रहिण्वानोऽनुमन्त्रितं मन्त्रज्ञोऽप्यभवन्नृपः।
अपूर्व्वमण्डलारब्धा वाटोपाट्टामशालिनः। क्व सर्व्वङ्कपनिष्कम्पप्रतिभाः कार्य्यवेदिनः।
क्व बालबालिशप्रायोनष्टव्यवस्थितिश्चिनः। धिक् परीपाकविषमं स्वाच्छन्द्यं मेदिनीभुजां।
कार्य्येपि च विपक्षैस्तैरिच्छन्त्युद्रिक्तनाच्छिदां। सैन्यद्धादुर्गकोपादेर्न शंसन्त्यन्तरज्ञतां। ११६५
प्रक्रियामात्रतो मन्त्रं गृह्णन्ति चित्यनन्तराः। क्षतमाहायकैरेव चित्राचित्रमुखादिपः।
युक्त्यारब्धविधौ तत्र वैरिसाहायकग्रहे। क्व वैधेयान् वक्रप्रायान् कार्य्यसन्दर्भवेदिनः।
दरद्राजद्रुमोऽन्योन्यं भेदकूलचयाच्युतः। क्रष्टुं नाशक्यतापौढैः स्रोतोभिरिव शाखगः।
पर्य्युकात्सङ्कटे कार्य्ये तन्त्रमुत्कोचमिच्छतः। स दुग्धघातुमादातुमथासीदसमक्रमः।
पर्य्युकेण समं विष्णुसिंहः सन्धिं निबद्धवान्। ययागतं गते सुज्जौ कश्मीरेन्द्रोऽग्रहीद्रुपं। ११७०
सर्व्वाधिकारप्रवहाचिरसञ्चारभूरुहः। प्रसङ्गे तत्र शृङ्गारोऽस्तत्यु सौहित्यकार्य्यभूत्।
आलक्ष्मकान्तात्सर्व्वाधिकारोऽस्मादद्वितीयया। वृत्त्या ततस्तु शतधा निर्झराभद्रवाभवन्।
अन्येऽप्यमात्याः साम्यत्याङ्कुर्माहात्म्यभागिनः। प्रमयं समये तस्मिन्दैवात्किमपि लेभिरे।
प्रशंसा सा नृशंसस्य विद्भोन धराभुजः। मृतामात्यार्भकापत्यं निधत्ते यः पितुः पदे।
प्रवर्त्तिता त्वमात्यानां भृत्यै पद्धतिरद्भुता। निर्म्मलत्याः प्रभोर्लक्ष्मीं जड्डः स्वग्रहिणीमिव। ११७५
भूभर्त्तुः प्राश्रतोष्ठत्य मृतस्य स्वामिनः श्रियं। सन्तानस्य विभूत्यर्थं कृत्वा कार्य्यं हितेऽहरन्।
गञ्जाधिपे विश्वनाम्नि विपन्ने रचितापरं। एकेन सहजास्येन सहायानां महार्घता।
नाध्यारुरोहाधिकारं पार्थिवेनार्थितोऽपि यः। स्वामिसूनोर्दिष्टनाशो दृष्ट्वे माहायकं व्यधात्।
निशायामप्रतिवलं दृष्ट्वापि प्रभविष्णुभिः। धिक् परस्परया स्मयाः सवर्द्धनोऽधिकाधिकं।
आसीदाचलनोपयोगिकलशो स्पृष्टुं नगमङ्गनक्षान्ताद्विनहार्थ्यवाससुररिपोस्तस्यात्मजः सत्वरः।
प्रभुस्तस्मिन्दिवे स्वमूर्द्धनि जडेऽप्येकमयुक्तादृतो स्युः सर्व्वेऽप्यस्या नतानुगतया गाढाररा: स्वामिनः। ११८०
सुज्जिर्निर्वासनप्राप्तप्ररोहोदुर्णयद्रुमः। साञ्जिजाद्य क्षताप्यायः क्रमेणासीत् फलोन्मुखः।
द्विजाः मनाः समन्यु स विष्णुसिंहस्ततोऽभवन्। अकुण्ठराजायुत्कण्ठं घूतैरकृत लोठनं।
दूरादाखण्डितोत्थानः शूरमाश्रित्य भूपतिं। जीवत्कपिवरिश्चादिकर्म्मणा स सबान्धवः।
दरदां मन्त्रिणां जातजानैर्वैरभियोगभाक्। चक्रेऽनुद्धारवक्राथोमरैः सह चक्रिकां।
साप्यद्रिदुर्गस्थाम्बस्य सघनसम्स्थितो मुच्यन्। धुरी जनकभद्रास्य पार्श्वे निश्वार्थ्यपद्यत। ११८५
कर्णाटकादावभवन् ग्रामे स्थाने विश्रावयतां। सस्थितं कस्यचिद्रोहे बुद्धिः कस्यापि साधुता।
तं तया विप्लुतारम्भमपि मान्यात्दसम्भ्रमं। प्रविविक्षुमुपेक्षिष्ट कोषीधानुशमो नृपः।
पोषिते मेषितश्रीकैर्हस्त्यश्वे विष्णुसैपिभिः। अथोदयद्वारपतिः सैपि विश्वम्भराभुजा।

तत्पुत्रो राजदेवोऽथ काष्ठवाटं भयाद्गतः । आनिन्ये वामपार्श्वैर्द्वारैर्गस्य विरोधिभिः ।
तं मल्हणाख्यदुर्गान्तःप्रविष्टं दुष्टचेष्टितः । अवेष्टयद्दलैः पद्मो मण्डलैरिव पन्नगं ।
उपायनीकृतापूर्व्वपादुकाश्लोककौतुकात् । प्रमत्तं कोऽपि चाण्डालो दारैश्चमवधीद्रणे ।
अभिषिक्तस्ततोभट्टैः समेरोभट्टनिःस्वनं । प्रणतानन्तसामन्तः सेवकानन्वजिग्रहत् ।
असामान्यो स्वर्व्विन्द्रान् स वास्तव्यकुटुम्बिनाम् । निन्ये चैाणीपरिवृढो रूढभारोढिमादिशन् ।
मल्लेर्ब्बलाख्यचन्द्रस्य बलिनो वहरेशितुः । हरतः श्रीनगर्य्यर्द्धं स्वास्यं न प्राभवत्तु सः ।
पुण्यं राशीभवन्मूर्त्तमिवाथ स्वाभिधाङ्कितं । बलाख्यचन्द्रः साञ्ज्राजा नगरान्तर्मठं व्यधात् ।
कोऽयं खशो मृदु कश्चिदस्माभिरभिषिच्यते । श्रमन्तश्त्रिदं भट्टा राज्ञावगणितास्चिरात् ।
न भट्टोऽहं न भट्टोऽहं न भट्टोऽहमिदं वचः । अश्रूयतापि भट्टेभ्यो निर्दिष्टे भट्टलुण्ठने ।
तदेव विमलाचार्य्यः शाके खेपुनवाङ्किते । षडद्रिनन्दमासस्य मलभ्रममवारयत् ।
निर्म्ममे निर्म्ममो राजपुरीं राजीवकं तथा । राजदेवः स राजेन्द्रराजन्माजितमङ्गलः ।
अहानि सप्तविंशानि त्रयोविंशांश्च वत्सरान् । मासत्रयीञ्च राजा स क्ष्मां रक्षित्वा त्वयं ययौ ।
सङ्ग्रामदेवस्तत्पुत्रो गोत्रात्त्रामतां भजन् । चाबमासत्रयद्राजसिंहः शात्रवदन्तिनां ।
विश्रम्भात् सूर्य्यमनुजं चक्रे प्रतिनिधिं स्वयं । कुचक्रिकः स भोगेभ्यो लुभ्यन् द्रोहमचिन्तयत् ।
श्रुतद्रोहो महीभर्त्ता भीतः स वहरेशितुः । चन्द्रस्य मण्डलं सूर्य्यः प्राविशदुदयेच्छया ।
दारुणेऽरुणकाले स सूर्य्यं चन्द्रान्वितं तदा । स्वर्भानुरिव भूभानुश्चिरं समममीमिलत् ।
श्रमालाधिपतिस्तुङ्गः सूर्य्यं पार्श्वं नयन्मदात् । कृतयात्रेण राज्ञाऽथ नीचभावमनीयत ।
मार्गैर्निरिन्दुरविभिर्व्योरवद्रजनौ भ्रमन् । विटत्यक्तस्ततः सूर्य्यो बद्धा राज्ञा व्यपाद्यत ।
खलक्ष्मीं रचितुं साधांत्तन्निराम्तचणे प्रभौ । अकारयन्नद्भिमयं स्तेनाः कल्हणनन्दनाः ।
गोत्रजेषु बलिष्ठेषु नष्टाशः सोऽथ भूपतिः । शिष्टमिष्टश्च शरणमगाद्राजपुरीपतिं ।
तस्मिन् दण्डधरे दूरं याते डामरफेरवः । अन्त्राण्यपि विशामाश्रुर्निःशेषं रक्तपायिनः ।
राज्ञा सुमनसा त्यक्तं दिनेश स्वर्गदूषितं । भोज्यं डामरखोश्चानां तद्राज्यान्नमभूच्चिरं ।
स्वमण्डले विशीर्णेऽथ परमण्डलमाविशन् । न कैरनुमतो राजा प्रत्यासन्नजनोदयः ।
प्रत्यवृत्तो राजपुर्य्याः स रिपून् समरे जयन् । श्राष्लाग्लाण्डल्हगीन् रचन् राज्यं पुण्यश्च लब्धवान् ।
एकविंशतिशाधं स श्रीविशालं विशाम्पतिः । गोद्विजानां निवासाय चकार विजयेश्वरे ।
काल्हणप्रणिधीनां स दिवा लुण्ठनकाङ्क्षिणां । चौराणामिव दीपोऽभूद्द्वेषणीयो महीपतिः ।
शाखाशान्तदिगन्तः स सदुग्गर्दुरायधे । कविकल्पद्रुमो राजा विच्छिन्नः कल्हणात्मजैः ।
नायकीरव्य सं भूपं कविः पण्डितयःशकः । श्लोकिहारलतां विद्वत्कण्ठभूषात्वमानयत् ।
षोडशाब्दान् माहानि स भुक्त्वा क्ष्मां व्यपद्यत । जगद्गद्रोऽथ पञ्चभ्यां भाद्रेऽष्टविंशवत्सरे ।
राजदेवोऽथ तत्पुत्रो हत्वा स्वपितृघातकान् । पृथ्वीराजे प्रजाभारं सर्व्वमेव समार्पयत् ।

खेर्य्यादक्षिणे पारे मल्लरे स महीपतिः। स्वनामाङ्कं व्यधात् कोट्टं यशोराशिमिवापरं।
प्रमादाङ्कमानीतः प्रमाणाविजयोद्यमे। तेनोत्पलपुरे विष्णोः प्रासादोनूतनीकृतः।
पुष्पं चन्दनवृक्षस्य फलं चम्पकभूरुहः। अपत्यं तस्य राज्ञश्च हन्त नाकारि वेधसा।
भिषायकपुरस्थस्य कस्यचिद्ब्राह्मणस्य सः। पुत्रं लक्ष्मणनामानं पुत्त्रीयामास भूपतिः
अत्यन्तमपितापुत्त्रप्रीतिं प्रीतिः प्रयोयमी। वस्त्रितोचितमालेख्यं तयोरनुत्तरयत्तरां।
श्रीसमुद्राभिधा देवी विमुद्रितसमुद्रजा। वितस्तायां स्वनामाङ्कं नगरान्तर्मठं व्यधात्।
त्रयोदशदिनं मासं वत्सरांश्चैकविंशतिं। क्ष्मां भुक्त्वोकोनपञ्चांशे वर्षे स धामगात् स्वयं।
कथञ्चित्सस्नदेवोऽथ पाप्यमानाङ्कविक्लवः। नानाकृण्टकिनीं वल्लीमिव क्षौणीं बभार सः।
चत्रोक्षतोऽपि नामुष्यत्स्वधर्मं द्विजभूपतिः। न माणिक्यश्रियं धत्ते रञ्जितोऽश्मापि जातुचित्।
वितस्तायास्तटे श्वश्रुमठोपान्ते मठं नवं। निष्पङ्का निजनामाङ्कं महिला महिषी व्यधात्।
कज्जलेन तुरुष्केण वहिरेत्याथ मण्डले। मलिनेन प्रजादृष्टिरुत्पाद्यास्रवता हृता।
त्रयोदशाब्दान् मासांस्त्रीन् द्वादशाहश्च भूपतिः। भुक्त्वा द्वाषष्टवर्षेऽथ पौषान्ते स व्यपद्यत।
कज्जलोपद्रवात्त्रासादेरीमात्रनायकः। सिंहदेवोऽथ संग्रामचन्द्रेणाभि भूपतिः।
नगरान्तर्मठं कृत्वा लहरेन्द्रे मृते सति। सिंहदेवोनृसिंहोऽथ क्ष्मां ररक्ष त्रयाकुलां।
सिंहदेवोनृसिंहस्य सिंहेन गुरुणान्वितः। प्रतिष्ठां सिंहलप्रेऽथ ध्यानोड्डारेऽकरोत् कृती।
कर्त्ता कार्य्येषु लप्रस्य गुरुः सिंहस्य कोविदः। पतितेयं भवे तस्य मते सिंहपरम्परा।
स निष्कलचविक्रीतचौरेण विजयेश्वरं। एकादृश्य स्नपयन् व्रतशुद्धिं ययौ नृपः।
राज्ञा श्रीशङ्करस्वामी गुरुर्मन्त्रोपदेशकृत्। योऽष्टादशमठैश्वर्य्यं दक्षिणाभिरपूज्यत।
परलोकजयोपायं वाग्देवीप्रामृतं नृपः। आत्मोपज्ञमिमं श्लोकं शय्योत्थायं सदापठत्।
पावकनिर्मलदृष्टिं विबुधगणैरर्च्यमानपादमहं। शशिशकलार्द्धयुतं गौरीशं शङ्करं वन्दे।
दुहितुर्दुश्चरित्रेण योऽभूद्दुःखः पितुः पतन्। इत्यासक्त्यार्धितो राजा नर्मैकाः तं न्यवारयत।
स दुर्जनपरिष्वङ्गादास्तिकप्रश्रयोज्झितः। धात्रीपुत्त्रं सरादर्शे स्वात्मानं प्रत्यबिम्बयत्।
दर्य्याख्यो भगिनीस्वामी कामस्थलापदृष्टितः। तं विरक्तप्रजं मुक्तविनयं च्छद्मनावधीत्।
चतुर्दशाब्दान् पञ्चमासांस्त्र्यहन्यूनान् महीपतिः। भुक्त्वा शुक्ले दिवमगात्स वर्षे सप्तसप्तते।
तद्भ्राता सुहदेवोऽथ कामस्थलोपदृष्टितः। जडोऽपि मरुज्जामिव कश्मीरक्ष्मां वशे व्यधात्।
दिगन्तरादुपागत्य बहवो वृत्तिलिप्सया। तमाश्रयन् महीपालं पुष्पद्रुममिवालयः।
पार्थोऽन्यइव पार्थोऽभूत्पञ्चगह्वरसीमनि। योगभेरपुरं चक्रे तत्पुत्रोविभ्रुवादनः।
तद्वंश्यः कुरुमाधोऽभूद्वदाह्नदयपर्व्वते। व्याकिरगच्छहरता भेजे यशः शुभ्रत्विषं निशा।
काश्मीरः पर्व्वतश्चन राजा प्रेयो हरांशजः। इत्येतत्प्रत्ययायैव यन्नाणोरचुषां वयं।
काश्मीरेषु हि साम्राज्यं कुरुमाहस्य सन्ततिः। संशोदिनमुखीमुख्याः स्यातकीर्त्तिं करिष्यति

तादृशोऽजनिष्टास्याद्यस्य चापनताश्रिता । मुहुर्मुहुरहो मौर्वी श्रुत्यन्तगमनं तराम् ।
सहस्रेरः स्वतीर्थ्याभ्यो भोभानुसुतोऽजनि । यस्य वैरिवधूबाष्पैः प्रतापाग्निरदीप्यत ।
वने विहरतस्तस्य शङ्करस्य कदाचन । मृगया प्रथमं दृष्टिं पद्यानिद्रा व्यलोभयत् ।
राज्यमासन्ततेर्भावि कश्मीरेषु तवेति सः । स्वप्ने वाक्सुधया तत्र महादेव्याभ्यषिच्यत ।
पञ्चाश्यर्कमिते शाके नवाष्टाङ्कितवत्सरे । ततः सपरिवारः स कश्मीरानविशच्छनैः ।
सकुटुम्बं तमायान्तं वृत्तिदानेन भूपतिः । अनुजग्राह सोत्कर्षं चूतद्रुमदवाग्निम् ।
उच्चलाख्यः कर्मसेनचक्रवर्त्तिचमूपतिः । कश्मीरान् स तदैवागात् सिंहो मृगगुहामिव ।
षष्टिग्रामसहस्रेषु स्वाम्यं दातुमिवात्र सः । तावत्सङ्ख्यसहस्राणि स्वसैन्ये सादिनोऽग्रहीत् ।
उच्चं धनप्रयोगेण निर्विवर्त्तयिषुर्नृपः । सर्वेषामेव वर्णानां दुर्वर्णं दण्डमक्षिपत् ।
प्राणाहुत्या प्रभोः कोपे तत्प्रतिग्रहसाहसः । प्रायस्था ब्राह्मणाः प्रायश्चित्तीयाश्चक्रुरक्रमम् ।
तदेव कालमान्याख्यैर्भा द्विर्घट्टितवैरिभिः । सबन्धुर्गोभञ्जो व्याजादकतन्वो न्यहन्यत ।
मान्योऽसामान्यधीः कालमान्यवंशदवानलः । अत्राशिश्यत तत्पुत्रो दैवादेकः स रिञ्चणः ।
व्यालटक्कमुखैर्मन्त्रसूत्रसंयोजितैरथ । बद्धा संहतिकन्थां स तान् जघान् जेतुमिष्टवान् ।
निष्पात्यमानकोशं मां भृत्यले वृणुतेति सः । तान् प्रत्यश्रावयद्दूतमुखेन स्वाततायिनः ।
नृसिंहः स नदीतीरे सिकतास्थगितायुधः । तान् प्रत्यैच्छत रत्नस्य ननु कोशस्य पीतये ।
व्यालाद्यैरागतास्तत्र कालमान्या निरायुधाः । सिकतान्तर्निविष्टस्य परश्वधैस्तृणीकृताः ।
प्रचाल्य वैरिरक्तेन पितृद्रोहरजोमलम् । शेषानेकारिभीभ्योऽगात् कश्मीरान् बन्धुभिः सह ।
पूर्णस्य रामचन्द्रस्य दुहिता धराधीश्वरमा । नीलाशाभे रिञ्चराहोरुदयं सोऽद्य सोढवान् ।
हेतिभिस्तापयत्याशा उच्चले कृष्णवर्त्मनि । काश्मीरिकैर्जनैः सर्वैः शलभत्वमलभ्यत ।
रुद्धयोरुच्चलरिञ्चाभ्यां प्राच्युदीच्योर्वेङ्कजनः । वसतेः पश्चिमामाशां प्राग्यमाशामथागमत् ।
अधोच्चलाम्बुपूराङ्गीगिरौ रिञ्चनमारुतात् । छायायुषां फलाढ्यानां पुन्नागानामभूत्तदा ।
पश्चिमावनिव स्थानच्युतं चित्रोत्सवद्रया । वलश्रीरेश्चनो लोकं काश्मीरिकमपाहरत् ।
धनाम्बु प्राप्य भोट्टेभ्यः काश्मीरजनविक्रयात् । गर्जन्नाशाः पथाम्बव्यास्तदा रिञ्चनवारिदः ।
नामिताशेषदेवोऽथ स्फीतभीतभयाकुलः । उच्चः कश्मीरतस्तारबलमार्गेण निर्ययौ ।
जनाः काश्मीरिकादुर्गबिलेभ्यो मूषिका इव । उच्चलेऽन्तर्गते बन्दीकृतशेषा विनिर्ययुः ।
नालप्स्य पितरं पुत्रः पिता तस्य न कश्चन । भ्रातृंश्च भ्रातरो उच्चलराजघोषप्लवात्यये ।
मितलोकाखिलदेशा निर्भाज्या दर्भनिर्भरा । सर्गारम्भ इव प्रायस्तदा काश्मीरभूरभूत् ।
समर्थोऽप्यपहीन उच्चो रिञ्चनः प्राभवत् पुनः । विश्वमन्धयति ध्वान्तं सुखभाजोऽभिसारिकाः ।
उच्चलराजविनिर्भुक्तं राजानं तुङ्गिगस्पृशा । अरुरुत्सत श्टङ्गेण रिञ्चनास्ताचलस्ततः ।
दृष्ट्वा गगणगिर्ध्वंसे भास्वन्तं रिञ्चनं स्थितम् । प्रशक्नुत न कैराज्ञः सत्यामस्तोऽस्तसंस्तरः ।

रिञ्चनश्येनराजस्य जिहीर्षोर्नगरामिषं । कुलचन्द्रो रामचन्द्रो विघ्नं चक्रे पदे पदे ।
भोट्टांल्लहरकोट्टान्तःपट्टविक्रयकौतुकात् । प्रत्यहं वञ्चनोद्योगी रिञ्चनोऽथ विवेशवान् ।
तथैव लहरस्यान्तर्भुट्टलोके प्रवेशिते । अपिबद्रामचन्द्रासृं मधु शस्त्राणि रिञ्चन ।
रामचन्द्रकुलोद्यानकलहवर्षी स रिञ्चनः । वत्सस्थले महाबाहुः कोटादेवीमरोपयत् ।
श्रीरिञ्चनभयाद्राजा नगरं त्यक्तवांस्ततः । विप्रशापाग्निदग्धानां कुतः स्यादुदयाङ्कुरः ।
प्रमण्डलगुहां राजजन्तुर्भीतोऽविशत्ततः । पापस्य तादृशी मृत्यु सम्मुखस्य रणे कथं ।
वैरिधाराधरश्चित्रं रणे राजास्त्रवर्षणैः । दण्डदानां द्विजातीनां चक्रे नेत्रेष्ववग्रहं ।
पञ्चाहीनांश्चतुर्मासान् वर्षाण्येकोनविंशतिं । स राजराजश्चोरत्वाथाजात् चौणीमभचयत् ।
श्रीरिञ्चनसुरत्राणेभुजवातायने महीं । व्यश्रिश्रमदथ श्रान्ता दौःस्थ्यात् दुःस्थितिविश्वरैः ।
पूर्वदृष्टमिवाशेषं तिमिरापगमे पुमान् । कश्मीरमण्डलं पूर्वराजशैथ्यं तदैचत ।
दीपैरिव प्रतिस्थानं चैत्यैरन्यैः स्थिरं स्थितं । अकम्पन्त प्रभातस्य ते राज्ञोबलवायुना ।
मन्त्रशुद्ध्या कृते भेदे वाणस्येव प्रवेशिनि । अभक्षयन्यकन्याया श्चित्रं विश्वयता तदा ।
वने कण्टकिनीवाग्नवलोयत्राकुलोऽभवत् । तत्रैव व्योम्नि पत्रीव देशे समचरन्नृपः ।
तस्य दाक्षिण्यदक्षस्य प्रजानां हितहेतुना । पुत्रे मन्त्रिणि मित्रे वा दुष्टे नाभवत् क्षमा ।
छेदं यच्छन्नतुच्छानां वैरिणामुच्छलच्छ्रियां । आच्छोदनमगच्छत्स च्छत्रमाली कदाचन ।
टुक्कभ्राता तिमिर्नाम मार्गे सन्तापखेदितः । गोपान्याः कुर्चिदत् ग्रामे चीरं निष्पीतवान् हठात् ।
राज्ञा विज्ञापितेनाथ सद्यो गोपालयोधिता । अनुयुक्तस्तिमिर्भीत्या व्यधात् सर्वस्य निह्नवं ।
असत्ये भाविता गोपी यदा धैर्यान्न चास्खलत् । पानाशयन्तिमेरेव स पयोचो व्यदारयत् ।
तस्य पानाशयाद्दीर्णाच्चिर्धाम्न्या क्षीरधारया । राज्ञः कीर्त्तिर्मुखश्रीश्च गोप्या प्रापप्रसन्नतां ।
वानशाले निवसतोरसूतवतोः कयोश्चन । अश्वे किशोरकौ तुल्यौ कस्मिन्नपि वनान्तरे ।
सिंहसंदर्पिताश्वाया तयोरन्यतरा वने । अश्वसादृश्यवाल्सल्यादपुपुषीऽपि यत् परं ।
मदीयोऽयं मदीयोऽयमित्यप्रज्ञातनिश्चयौ । वडवाधिपती क्षोभाद्राजान्तिकमगच्छतां ।
स विवादं तयोः श्रुत्वा स्वान्तिकं स्थीयमानुषैः । वडवे च किशोरश्च राजाभ्यानाययत्ततः ।
तस्मिन् किशोरके बाल्याद्दूरं धावति लीलया । माता धात्री च नितरामश्विन्याश्वाप्यहेषयत् ।
सभ्येष्वनेलमूकेषु वादिनोः क्षोभसज्ञयोः । अश्वे नावानयन्मध्येविनस्तं सकिशोरके ।
माध्यायं पातितं नद्यां नावो राज्ञा महाधिया । हठादन्वपतन्माता परा परमहेषयत् ।
सन्दिग्धव्यवहाराणामेवं निश्चयकर्त्तरि । तस्मिन् राज्ञि जनोऽमंस्त कृतं युगमिवागतं ।
श्रीदेवस्वामिनं शैवीं दीक्षां याचन्नराधिपः । नाग्रपाद्धि स भौट्टत्वात्तेनापात्रत्वशङ्कया ।
अनुजस्तनुजो बन्धुर्मन्त्री सहचरः सखा । व्यालराजो नृपस्याभूत्सत्येकमतनिष्ठया ।
ततो व्यासः कृतं राज्ञा न स व्यासकृतं पुनः । मनो हि कार्यिकं हन्ति तत्कृतं न वपु पुनः ।

कलानिधौ रसमये व्याले भूलोकभास्वतः । मूर्च्छिता रुचिरच्छैत्योदच्छेदं जगतां तमः ।
श्रीमानुद्यानदेवोऽथ रत्नभहरणोद्यतः । समादिशत टुक्कादीन् गान्धारस्थोभयादिति ।
जीवतामेव गन्तव्यं जाने तन्नगरान्तरं । यत्सेव्यते विशेषज्ञः स्वामी संमानलिप्सया ।
भुङ्क्ते व्यालः श्रियं प्राणपणैर्युष्माभिरर्जितां । करौ साधयतो यत्नाद्रसना भोगभागिनी ।
ईश्वरो भूतिलिप्ताङ्गोव्यालं हठोचिकीर्षति । अनास्थां तु सुवर्णेषु युष्मासु विदधाति सः ।
चीरमाचैकपायिलं निमित्तीकृत्य भूपतिः । युष्मच्छौर्याभिशङ्कित्वात्तिमिं तिमिमिवावधीत् ।
एवं सन्देशनिभिन्नाः टुक्काद्याः शुङ्कलङ्किताः । विश्रमस्थे कदाचित्ते प्रजङ्करथ भूभुजं ।
ततखड्गधारासम्पातैर्व्यालस्तेषां हृदन्तरात् । स्वैश्वर्य्यतापमनुदद्राजा मूर्च्छेत्तु केवलं ।
तेऽथ लब्धजयंमन्यास्तदधापोढमन्यवः । नगरान्तर्य्ययू राज्यग्रहणार्थमहङ्कृताः ।
क्षणं मृतइव स्थित्वा भूयो घातभयान्नृपः । दूरं गतान् रिपून् दृष्ट्वा राज्ये राजोदतिष्ठत ।
आरुहन् राजधानीं ते यावत्तावन्नराधिपं । अपेतमूर्च्छमायान्तमद्राक्षुः चुरवुड्डयः ।
त्वया किं न त्वया किं न हतो राजेत्यनीतयः । परस्परविवादान्ते तत्कालं चुरुभुर्जडाः ।
अन्योन्यमन्यवोऽन्योन्यलोठनाद्राजसद्मनः । कर्त्तव्यं मरणं राज्ञा व्यधुः स्वस्य स्वयं जडाः ।
शेषान् राजाथ दुःशीलान् शूलारोपेण केवलं । उवैस्तामनयन्मानी सर्व्वथाधोगतिं पुनः ।
सगर्भावैरिकोट्टस्त्रीरोपवान् स व्यदीदरत् । असिभिर्भूपतिर्गर्भशालिशिम्बीर्नखैरिव ।
तद्द्रोहरोषजा पीडा राज्ञस्तत्कुलमारणात् । चित्ते शान्तिमगात् खड्गघातोत्था नतु मूर्द्धनि ।
दुःस्वप्नमिव तद्दृष्ट्वा डुक्कादिर्चरितं क्षणात् । प्रबुद्धेव पुनः प्रापदभयेन सुखं मही ।
अष्टादशमध्यगे राजा शहमेरे प्रसन्नधीः । सकोटामात्रकं हृष्टो स्वपुत्रे हैदरं ददौ ।
वर्द्धितः कोटया देव्या मातेव महीरुहः । सच्छायत्वं स्फुरत्पत्रः शहमेरो न्यषेवत ।
परिखाच्छत्रतोऽकीर्त्या स्वपराजयजातया । परितोवलितं राजा स्वनामाङ्कं पुरं व्यधात् ।
पौपदुर्दिनमार्त्तण्डसन्निभो धरणीपतिः । मासांश्च कतिचिद्भूयः प्रकाशमकरोद्भुवः ।
हेमन्ते शैत्यपारुष्यदोषेण धरणीपतेः । मरुत्कोपेन नैविद्धं शिरःपीडाप्यहोत्तरां ।
सदोनैकोत्तमाङ्गानां पीडाहरगुणश्रियः । भूपतेरुत्तमाङ्गस्य पीडा कष्टमवर्द्धत ।
एकादश्यां ततः पौषे नवनन्दाङ्कवत्सरे । निरस्ता मृत्युवैद्येन भूपतेर्मृत्युवेदना ।
एकादशदिनेष्वेवा माघे चीन् वत्सरानपि । संभ्रां संरक्ष्य स स्वर्गं ययौ रिञ्चनभूपतिः ।
पुत्रं हैदरमामामं वाल्यादनभिषिक्तवान् । अतया विधशक्तिलाद्राज्यं स्वेनाप्यसंवहन् ।
सवन्धैः सुतनाथत्वाद्रिसमे प्रतिपादपि । अव्याहतमनेशाशो मतिमान् शहमेरकः ।
समं श्रीकोटया देव्या मूर्त्तयेव जयश्रिया । तदोदयनदेवन्तं काश्मीरक्ष्मामलम्भयत् ।
राज्यलक्ष्मीमहादोला गुणयष्ट्या गरीयसी । रिञ्चनोर्ध्वःपदं गत्वा राजाधःपदमाश्रयत् ।
राजा मन्दिरपुंसा तौ व्यंसरासेमरौ सदा । कामराज्यादिदेशानां स्वाम्यदानादरञ्जयत् ।

धीरिवासीत्तदा कोटा देवी सर्व्वाधिकारिणी। राजा देहइवात्यर्थं तदादिष्टं समाचरत्।
तेजसापिहितान्यासन् यानि रिञ्चनभास्वतः। लवन्यज्योतिषां राजप्रदोषेऽभूत्तदोदयः।
यस्याक्रम्यत सौम्यस्य स्वद्विषा कोटया स्वहं। विषयाक्रमणं तस्य लवन्यैः किन्नु शोच्यते।
लवन्यदेशचण्डालस्पर्शस्पर्शविवर्जकः। स श्रोत्रियद्वानैषीत् कालं स्नानतपोजपैः।
आस्तिकत्वं कियत्तस्य वर्ण्यते वर्णधारिणः। क्रिमिमर्दभयाद्वस्त्रां योऽवशाद्दाजिनो गले।
तावद्द्विगुणतामेव कोशालङ्करणं दधत्। कण्ठभूषां समौलिं स चक्रिणेऽदित काञ्चनीं।
अथ मुग्धपुरस्वामिदत्तानीकिन्यहङ्कृतः। कश्मीराजचलोऽविर्चद्वलात् ङलचद्वापरः।
स्वपचैराचिपत्याशावलेनाक्रम्य मेदिनीं। नाचले गोत्रभित्त्वं स कर्त्तुमैष्ट महोद्यमः।
प्राप्ते भीमानकं तस्मिन् ससैन्ये दैन्यमाश्रितः। भौट्टदेशमगात्तूर्णमुर्व्वीपरिवृढो भयात्।
निवर्त्तय चमूमन्यां किं मिथ्यादेशपीडया। अराजकास्त्वया पाप्माः काश्मीराः कुत्तनायवत्।
इति श्रीकोटयामात्यैः प्रेरितैर्लेखधारिभिः। आभारसैन्यमचलः सत्यमुग्धदिमोहितः।
प्रतिमुक्तनिजाभारः सारहीनोऽचलः स तैः। मार्गाल्लवच्छलात् कश्चित् कालं मार्गे विलम्बितः।
तावच्छ्रीकोटया देव्या तदा पालयितुं प्रजाः। भौट्टः स्वे रिञ्चनो नाम राजभावे न्ययुज्यत।
प्रभीतभर्तृकोत्पन्नस्ततापत्येव सा तदा। अदूयत निजैः सर्वैस्थिरस्याचलशेमुषी।
तुषारलिङ्गपूजाभिः कृतार्थीकृत्य वासरान्। भौट्टदेशान्निजं देशमगच्छच्छीतभीर्नृपः।
उदयाद्रिभुवा पूर्णः प्रशीताय स कोटया। स्वे रिञ्चनतमोनाम्नी शिरसाधारि सादरं।
यं कोट्टादूतजट्टाख्यं मित्रणाख्यस्य मन्त्रिणः। वर्द्धनायात्मजं राजा स तं सत्युमिवादित।
शहमेरः स वीरोऽथ परिपालितरिञ्चनिः। अचलुप्य, क्षमाभर्त्तुः पुत्रप्रेमभरादभूत्।
देव्यास्तु समदृष्टित्वात्पुत्रयोरुभयोरपि। राज्ञो देव्योऽपि शह्मेरो नाभयेन स पस्पृशे।
अचलोपप्लवातङ्के भयाल्लोकैः समाश्रितः। शह्मेरस्य स राजानं न तृणायाप्यजीगणत्।
शह्मेरो हैदरख्येनं दर्शयित्वा मुहुर्मुहुः। अभाययत्तरां राजपत्नीं तं दिवानिशं।
स्वंसलटस्यानुद्वेगरहितो जलवर्ज्जितः। अलेश्वराम्बुपूरः स प्रजाश्चिचमतारयत्।
शिरःशाटकहिंदाख्यौ समभूयिषतामुभौ। चन्द्रार्काविव तस्यायां शूरौ पौत्रौ गुणोर्जितौ।
द्वारैश्वर्य्यात् स्फुरद्दर्पो राजाज्ञालङ्घनोद्यतः। शह्मेरः स विपद्द्वारमभूद्भूपतिसेविनां।
सोऽलेश्वरसुतां दत्वा लुस्तस्य तदधीशितुः। श्रीमद्रपुरं जित्वा राज्ञ सङ्ग्रामवर्द्धयन्।
बद्रतैलाकशूरोऽस्य भाक्तिवैश्वर्य्यभाजनं। ज्यंसरस्य सुतां हस्ते कृत्य कृत्यविदोऽभवन्।
सङ्क्रूपजयी सच्छीलनिधिरच्युततापदं। प्रमालां स गृर्षिद्वाऽथ दैत्यश्रियमिवादुनोत्।
मकरालयगाम्भीर्य्यः करालम्बो जयश्रियः। कराले स करालौजाः करमालमयञ्जनान्।
अभिसरन् शेरयशादक्षमानमितस्ततः। राज्ञः कल्पदेवस्य विजयेशपुरं ततः।
स्थित्यै प्रकृत्य पक्षस्य स्वस्य चक्रधरार्चनं। शह्मेरोऽचलकार्य्येऽपि जनस्य समदर्शयत्।

मट्टात् कम्पनेशस्तां कुलायादिव पक्षिणीं । जीवग्राहं गृहीत्वाथ कारापञ्जरमानयत् ।
मन्त्री कुमारभट्टाख्यस्तस्याः सचिवपुङ्गवः । तन्मोक्षसिद्धयेऽकार्षीत्तदामात्यैश्छलात् कलिं ।
राज्ञ्याः पुम्भावमात्रेण भिन्नमाकारसन्निभं । कमण्डलुकरं कञ्चित्सोऽधाद्विद्यार्थिनं शिशुं ।
गत्वा स कम्पनाधीशं धीप्रशमाविमण्डितः । सौष्ठवौदार्यसम्पत्तिशालिनीं वाचमभ्यधात् ।
स्वशिरोमलिनीकृत्य जीवतां योपिदाज्ञया । पुरुषत्वं त्वया स्वामिन् कृतार्थीक्रियतेऽद्य नः ।
गत्वा त्वदाज्ञया कारान्तस्तस्यास्तर्जनमान्त्वनैः । धनञ्जयस्त्वदीयोऽयं स्वामिसात्कर्त्तुमिच्छति ।
स्त्रीत्वादशक्ता दातुं सा समचैपीद्धनं यतः । व्यसृजत् कम्पनेशस्तां कारामेवं विमोहितः ।
काराधानिर्गमिष्यन्तीं देवीं कोटामिवेक्षितुं । तत्कालमेव सन्ध्यागाज्जगद्वञ्चनकोविदा ।
सन्ध्यावन्दनयोग्याम्बुवाहिना वटुना सह । अशौ कारामविक्षच राज्ञ्याश्च निहगु शुचः ।
राज्ञीवेशभृतं तत्र स्थापयित्वा वटुं स तं । तद्वेशधारिणीं कोटामन्वाधाय विनिर्ययौ ।
रचितारोऽपि नाज्ञासीस्तद्यावत्तावदेव सा । कम्पनाधिपतिं चक्रे स्वचक्रेभयशक्तकरिं ।
सा ब्राह्मणकुमारेण मोचिता भट्टमित्रणात् । एकदन्तहतारेः किं नान्येनेभमुखाद्भवेत् ।
तयानपोदितोऽप्यौज्झि शङ्केरो नैव शङ्कया । कृतवैराः समर्थेन प्राज्ञा नैव क्षुदामते ।
न प्राक्षीदन्न चाकुप्यत्तस्मिन् सा बलशालिनि । घृणा प्रमादसहिता विनाशप्रथमाङ्कुरः ।
जयापीडपुरं यान्त्यां तस्यां कार्य्यानुरोधतः । शाहमेरोवश्ची जातु नगरं स्वीचकार सः ।
तस्मिंश्चन्यलोकेन गृहीताज्ञे बलीयसि । राज्ञी समट्टणोत्कोट्टद्वारं सहजयाशया ।
निरुद्धे बलिना क्षाटगुहाभ्रे मतिशालिना । नृसिंहेनाभजत् कोटा शृगालीव मुहुर्भयं ।
सिंहासने मया साकं श्रिया साकं ममोरसि । क्षमया सह चित्ते मे राज्ञी निविशतां स्वयं ।
तामेवमादिशन् देशैर्मुग्धां संमोह्य यत्नतः । हस्ते चकार कोट्टस्थां कोटादेवीश्च बुद्धिमान् ।
एकस्मिन् शयने रात्रिमतिवाह्य तया समं । स प्रातरुत्थितो जातु तोत्ट्णैर्देवीमरोधयत् ।
वर्षे पञ्चदशे शककदशम्यां नभसस्ततः । तारेव नभसोराज्याद्राज्ञी भ्रंशमलम्भ सा ।
तत्पुत्रावपि तौ द्वौ स करणीयविचक्षणः । बबन्ध बन्धुसम्बन्धिकम्पटचोभटायणौ ।
स्वं रूपं चिदचिद्भिरेभिरभितो व्यञ्जन् स्वयं निर्मितैर्यन्त्यात्मीयति देशकालकलनाकल्लोलिनं तन्महः ।
आत्मा वास्तु शिवोऽस्तु वास्तय हरि. सोऽप्यात्मभूरस्तु वा बुद्धोऽनास्तु जिनोऽस्तु वा भगवते तस्मै नम' कर्मणे ।
श्रियं लवन्दलोकेषु कीर्त्तिं दिक्षु मही भुजे । लक्ष्मी वक्षसि कोटाश्च काराधां स ततो व्यधात् ।
नीत्वावस्थान्तरं दौस्थ्यशमात्कश्मीरमण्डलं । श्रीशंवदेन रत्याख्यामन्यां स्वस्य व्यधान्नृप ।
महाबले भुजे तस्य काष्ठाद्दीपनशालिनः । मौर्व्वीकिण. प्रतापाग्नेरधूमायत्तु सन्ततं ।
प्राहरन्मन्त्रिणां राजा संशयं नतु तस्य ते । भिनत्त्यन्यान् मणीन् वज्रो नान्यस्त्वाणि तं पुन ।
स राजा राजतो राजस्थानीशान् काष्ठवाटगान् । भयात्ततोऽपि विद्राव्य श्लाघनीययशा बभौ ।
चिरं धुरं परिन्यस्य पुत्रयोः स्वादनूनयोः । नयोच्छ्रितयशा राज्यं सुखं भुङ्क्ते स्म भूपति ।

स पञ्च वासरान् भुक्त्वा चीनब्दान्मेदिनीपतिः । अष्टादशेऽब्दे राकायामाषाढ्यां स व्यपद्यत ।
अथ प्रथमधामन्तैः सम्मताज्ञः स जंसरः । सतीसरःचितेरग्रामधामश्रीरटङ्कयत् ।
राज्यतोरणसम्बाहस्तम्भाभ्यां धरणीपतेः । अनुजीवलबुद्धिभ्यामगमच्छङ्कनीयतां ।
नैव दानं न चादानं निग्रहं नाप्यनुग्रहं । विहारं न नचाहारं राज्ञो न्यूनं स हि व्यधात् ।
प्राग्वदित्यासम्पत्तिमकुर्व्वति महीभुजि । युवराजो मनाक् चक्रे निकटस्थैर्व्विरक्तधीः ।
तदैमनस्यवृत्तान्तश्रवणच्छिद्रलाभतः । युवराजं ततोराजस्थानीयाः प्राक्ररञ्जया ।
आगते विग्रहे व्यक्तिं राजस्थानीयसंश्रयात् । सोऽगादवन्तिनगरं तन्मूलस्थानमुद्धतः ।
अथोत्पलपुरं राजा भटैः सह रणोद्भटैः । अभिश्रियदिदं भ्रातुर्व्वाचि कस्य विदृष्टवान् ।
दुर्ज्जनप्ररणात्स्वेभ्रातस्त्रेहं नाभ्यजीगणः । लोकापवादज्वरतः कथं कम्पो न जायते ।
अन्योन्यपालनायाज्ञा राज्ञस्त्रिदिवगामिनः । पालनीयामनुध्याय प्रत्यानय दयां मयि ।
इति सन्दिश्य दूतञ्च व्यसृजत् स नरेश्वरः । कम्पनाधिपतिं हन्तुं व्यसृजच्च निजात्मजं ।
मृगयां युवराजोऽगादिति दूतं निरोधयन् । भ्रातृपुत्त्रं निहन्तुञ्च श्रुतद्रोहोऽगमच्च सः ।
दूतः किमिति नायातः कालो हि सुचिरं गतः । इति चिन्ताकुलोलक्षभट्टो राजान्तिकं ययौ ।
ऊचे च जाने स द्रोहं सचयित्वा तवानुज । त्वत्पुत्त्रमारणायागाद्यद्दूतस्य चिरागमः ।
स्नाति भुङ्क्ते स्वपत्येव युवराजइति च्छलात् । त्वदुद्योगनिषेधाय नूनं रुद्धो वचोहरः ।
तदवन्तिपुरं तस्मिन् श्रीदेवसरसङ्गते । सर्वानिःस्वामिकं हन्माजयोऽस्माकं तनोभुवः ।
अथावन्तिपुरं गत्वा सत्वातिशयशालिना । राज्ञा रुद्धं तथाकारि तद्भटैरुद्भटैः समं ।
अलेश्वराय भृत्यानां बधं नूनं निवेदितुं । वितस्ता शवरुद्धौघा प्रतीपमगमद्यथा ।
भ्रातृपुत्त्रं पराभूय तावदलेश्वरे द्रुतं । व्यावृत्ते रणखेदान्तः प्रपलायत जंसरः ।
अनयोर्नैव कर्त्तव्यः कलिर्भ्रातृदयोर्मिति । राज्ञा समं विदाश्चक्रे धीमानलेश्वरस्ततः ।
प्रतिमुच्य निजान् योधानवन्तिपुरमुत्सृजन् । अथ चौरोपयेणासावलेशोऽगमदोचिकां ।
नगरी रचितान्यस्य मध्यराजे स्वमन्त्रिणि । क्रमराज्यं त्रिराजश्छ्रोअंशरत्यागमत्तदा ।
दानमानौ प्रतिश्रुत्य मध्यराजं विभिन्दता । युवराजेन नगरी खोठता मन्त्रयुक्तिभिः ।
नाम राजतया दुःखं भुक्त्वा कश्मीरमण्डले । मासद्वयोनौ द्वौ वर्षाववसानमगान्नृप ।
गानम्लावदेनोऽय तं कालं कनकाचमं । दारैश्वर्य्यं ददौ भ्रातुः सर्वोत्रिप्रनिष्ठ तये ।
स्वस्तिवोत्तरणोपायसेतुं सुय्यपुरे व्यधात् । विपत्सुत्तरणोपायं न पुनर्जंसरोऽस्मरत् ।
पथिकानां निवासाय तेन पर्य्यन्तसीममि । फल्गुत्रिभागमहितः स्वनाम्ना रचितः सरः ।
एवं विभ्रमनीतिभ्यां देशं शोधयतो निशं । श्रीशिवस्वामिको राजो दारैश्वर्य्यमशंसवान् ।
राजपुत्रः स वाकपुष्टाटवीं चोत्तारघादटम् । योगिनीचक्रनद्राघोम् कदाचिद्गिरिगह्वरे ।
उदयश्रीस्तथा चन्द्रडामरश्चाप्य सप्तभो । अपश्यतां न किं तेषां महतामनुयामतः ।

अचलज्ञाडंनादण्डघण्टानाक्षण्टाङ्कतं । मनांसि न पुनस्तेषां वीराणां साहसस्पृशां ।
सान्तर्धासिपुरेवैताः स्रष्टुं द्रष्टुश्च काङ्क्षिताः । इति तेऽश्वादवारोहन् सवीरा नतु तद्भयात् ।
शनैः शनैस्ततो यान्तो मौनपूर्व्वं महाशयाः । योगिनीनिकटं प्रापुर्व्विकटस्फटोजसः ।
योगिनीनायको दूरात् परिज्ञाय नृपात्मजं । सासिपं शीधुचषकं प्राहिणोत्सन्वितं ततः ।
चन्द्रस्तदमृतं तृप्तिभाजा राज्ञावशेषितं । उदयश्रीर्मुखापेची न सन्तृप्तिमशेषयत् ।
भवितव्यबलादश्वपालं सपदि विस्मरन् । उदयश्रीरशेषन्तत्पीत्वा तृप्तिं परामगात् ।
आश्चर्य्यतृप्तनेत्रेषु तेषु तृप्तेषु योगिनी । निमित्तज्ञावदद्राजपुत्रं बद्धाञ्जलिं ततः ।
अखण्डं भावि ते राज्यं चन्द्रस्त्वद्विभवांशभाक् । आजीवमुदयश्रीश्च मण्डितोऽखण्डया श्रिया ।
अश्वपालस्त्वसावस्मदनुग्रहविवर्ज्जितः । अचिरेणैव कालेन नूनं प्राणैर्व्वियुज्यते ।
भविष्यत् सूचयित्वैवं योगिनीभिः समन्विता । सान्तर्दधे पुरः प्राणाः पश्चात्तुरगपालिनः ।
अविचारतमोमग्नान् जन्तूनुद्धर्तुमीश्वराः । सम्भवन्ति प्रजापुण्यैः प्रकाशोत्कर्षहेतवः ।
श्वशुराङ्कर्त्तृभागं यद्वीरा पुंश्चली वधूः । हरन्त्यासीत् स तं राजा दुराचारं न्यवारयत् ।
जयापीडपुरे कृत्वा राजधानीं महामतिः । श्रीरिञ्चनपुरे चक्रे बौद्धो बुद्धगिराभिधं ।
एकोनत्रिंशे वर्षेऽथ दुष्कृतोद्भवमद्भुतं । दुर्भिक्षं क्षोभयामास लोकं शोकाकुलं महत् ।
मासानष्टौ द्वादशाब्दांश्चैकादश दिनानि च । क्ष्मां भुक्त्वा त्रिंशवर्षेऽथ चैत्रे राजा व्यपद्यत ।
मन्दराजकथाख्यानाल्लडिमा वाचि संस्थितः । तीव्रप्रतापशाहावदीनाख्यानाद्विनश्यत ।
राज्ञि शाहावदीनेऽथ स्मरणं चिरतिरत्यजत् । ललितादित्यसम्पत्तिविपत्तिसुखदुःखयोः ।
श्रीशार्कं चोरिवान्यर्त्तुं राज्ञोऽतीत्य वङ्कमही । ध्रुवमापञ्जयापीडमेतं न तु स किल्बिषी ।
पूर्व्वे परे च भूपाला नायकेनेव भूषिताः । क्ष्मानायकेन तेनाशामुक्तागुणसमच्छ्रिया ।
तदीयो जयलक्ष्मीभिः प्रविष्टाभिः पदे पदे । न प्रतापानलोऽशाम्यत् सरिद्भिरिव सागरः ।
*जयं विना गच्छतः कश्मीरं इथा मतं । इट्टस्य तस्याभिसम्भूदाज्ञा तस्यासिवल्लभा ।*
नं स्वगाधो न वा शीधुपानलीला न चन्द्रिका । यात्रैव केवलं तस्य भूमिभर्त्तुर्मनोऽहरत् ।
न तापो न हिमन्तस्य न सन्ध्या न निशा तथा । न क्षुन्न वा पिपासा च राज्ञो यात्रामविघ्नयत् ।
न सरिद्दुस्तरतरा दुरारोहो न पर्व्वतः । दुर्लङ्घ्यो न मरुर्वाभूद्यात्रायां मानिनः प्रभोः ।
अजितां पूर्व्वभूपालैः पारसीककुलाकुलां । उत्तराशां विजेतुं स प्रस्थानं प्रथमं व्यधात् ।
जगतां विजयी कामो मधुशीधुवधूरिव । चन्द्रडोलकमूरान् स सहायानेऽष्टपोऽप्रभुः ।
सैन्यचेतांसि सत्त्वेन तमसा स्वविरोधिनः । अपूरयत् स रजसा दिगन्तानुद्धतान्तकः ।
प्रविष्टे तस्य गोविन्दखानपालनमार्गिणि । उदभाण्डपुरे पूर्व्वं वाणैस्तदनु सैनिकैः ।
सैन्यट्टङ्गं नृपानीके प्राप्ते तस्य विरोधिभिः । भयातुरैरवारोहः स्वङ्गात्तुङ्गाद्व्यधीयत ।
सद्रत्नं प्राभृतं दातुमसमर्थोऽथ सिन्धुपः । उपधीकृतवान् कन्यारत्नमादाय भूपतेः ।

राज्ञस्तु गौरवं वाहा गान्धाराणां भुवोढया। चिरन्तु लाघवं तेषां भये भारानुषङ्गतः। १७५
भङ्गस्तुङ्गस्य श्टङ्गस्य खड्गानां नैव भूभुजा। शिङ्गानामपि देशेऽस्मिन्विहितः शौर्य्यशालिना।
आकर्ण्य राजसिंहस्य सिंहनादमयीं चमूं। मदन्तत्याज चस्खाल बिभाय गजिनी पुरी।
आचिक्षचविर्यैरष्टनगरेऽरोदि शाम्यतोः। तरुणाग्निप्रतापाग्न्योर्धूमेनेव भयातुरैः।
यशसा सह सम्पर्चिं तस्मिल्लुण्ठयति प्रभौ। प्रापत्पुरुषवीराख्यदेशाख्या रूढिशब्दतां।
दत्तवाप्यनिवापाश्रीनगरायहरस्त्रियः। जीवतः स्वस्य पत्युश्च पिण्डास्तेननिभाद्ददुः। १८०
अश्वपालेषु गच्छत्सु घोषधातुतटच्छलात्। उदक्पतितिरस्कारप्रशस्तिं स व्यधात् प्रभुः।
ततो व्यावृत्त्य गच्छन्स दक्षिणाशां स्ववाजिनां। मार्गखेदोचितं तापं शतद्रूवारिणाहनत्।
ढिल्लीमुल्लुण्ठ्य तत्कालमुदक्पतिमुपागतं। मार्गरोधेन नृपतिर्निंतान्तमुदवेजयत्।
तुरङ्गवस्त्रदानेन स तान् सामान्यभूपतिः। स्वदेशं प्राहिणोत्कीर्त्तिराशीन्मूर्त्तान्वहन्निव।
सुशर्म्मपुरराजेन तस्मात् स्वागर्म्मशङ्किना। दुर्गाहङ्कारमुत्सृज्य देव्येव शरणीकृता। १८५
स्वयं नत्या नठन्नत्या भोट्टानामस्य भूपतेः। अर्व्वतां पर्व्वतारोहदोहदो विनिवारितः।
दुस्तरत्वात्तटस्थस्य देवताभिस्तनूकृतः। सिन्ध्वोघो नृपतेरेवं पूर्व्वेभ्यः श्रुतमद्भुतं।
एवं नित्यजयोद्योगात् स्वदेशः परदेशवत्। परदेशस्तु तस्यासीत् स्वदेशइव भूपतेः।
प्रतापेनेति सम्पाद्य दिङ्मुखे तिलकश्रियं। व्यधात् प्रविश्य कश्मीरान् स पौरानयनोत्सवं।
तस्य वर्णयतां शौर्य्यं प्रसङ्गादतिमानुषं। अस्माकं चाटुकारित्वं ज्ञास्यते भाविभिर्जनैः। १९०
यात्रायातः कदाचित् स दूरदेशे महीपतिः। अप्सरःसदृशीं काञ्चिच्छुतवान् हरिणेक्षणां।
निजानुगान् वञ्चयित्वा राजा युक्त्या कयाचन। अथैकाकी स तं देशमविशद्भोगलालसः।
नर्म्मणा मोहयित्वा तां द्वितीयइव मन्मथः। मनोरथानसिञ्चत स तदोष्ठामृतपानतः।
अपश्यन्तस्तमाशङ्क्य हतं केनापि वैरिणा। अथ कोपभ्रमावेशमुद्भटास्तद्भटाययुः।
अन्विष्यद्भिस्तदश्वेन निबद्धेनाङ्गनाबहिः। समभाव्यत तैराज्ञो वैरिभिर्निर्भयः स्रतः। १९५
शौर्य्यस्वाम्यनुगाभ्यान्तु विधातुं युद्धमुद्भटैः। तद्भटैः सदनं रुद्धमबद्धकवचान्तरैः।
अचमङ्किय तत्सिंहनादपूर्णान्ततः पुरा। चित्तैः भीत्या मुखैर्भीत्या नीत्या मुर्द्धभिरानतं।
एवं स स्वजयस्तम्भयूपान् गुणमुखान् वहन्। हतवैरिपशूंश्चक्रे सुप्रतापानलार्चिषः।
स्वदेशे मन्त्रिणोस्तस्य कोटभट्टोदयश्रियोः। समरेषु भरस्वाशीचन्द्रडामरलोलयोः।
देवशर्म्मान्वयोदन्वच्चन्द्रोरागार्पितं मुहुः। वैरागादिभवं त्यक्त्वा कोटशर्म्मा वनं ययौ। २००
तस्य दर्शयितुं राज्ञः स्वबलाधिकतां ध्रुवं। कदाचित्तन्नजा देवी व्यापद्गाढमपीडयत्।
पुरीकेरविणोहरः शूरः पादपविद्विषां। षड्विंशेऽब्दे जलापूरः क्रूरोऽप्यसवत प्रजाः।
नगरमुडनादप्सु सुषम्नोनिर्भरच्छलात्। तस्थाद्द्वीपस्य महतः पर्व्वतान्तटतामगुः।
न स दृष्टो न सा सीमा न स सेतुर्न तद्गृहं। तटस्थमपि यन्नैव जलपूरो व्यनाशयत्।

नाद्रिदुर्गाण्यपश्यत्स जातुचिद्वैरिभीतितः। अम्बुपूरभयात्तेषु राजा समचरत्तरां। ४०५
पीते तत्तेजसेवाम्बुपूरे शान्ते मितैर्द्दिनैः। भूयस्तद्विस्त्रम्भशङ्की सोऽचिकीर्षद्गिरौ पुरीं।
नाम्ना लक्ष्म्या महिष्या च प्रसिद्धां नगरीं व्यधात्। स्वौदार्य्यानुगुणं राजा निर्म्माणमविलोकयन्।
शारिकां शैलराजस्य मूले पुण्यजनाश्रितां। यामद्राक्षीत्तरां लोकः सुमेरोरलकामिव।
वितस्तासिन्धुसम्भेदे स्वनाम्ना स पुरीं व्यधात्। प्रतिबिम्बच्छलात्तोये त्रपया खिन्निमज्जति।
सौधोत्सेधमयीं राशीभूतां कीर्त्तिमिवाचलां। श्रीलोलश्रीः पुरीं लोलडामरः स्वाभिधां व्यधात्। ४१०
आजन्मलोलता मन्त्राः स्वरसाम्याय वर्द्धिता। निहन्ति च्छायया तस्याद्युमणिस्पर्शजं सुखं।
या लक्ष्म्या भागिनेयीत्वाद्दालपालि निजान्तिके। लासाख्या सा समाक्रामन्नृपतेश्चित्तदर्पणे।
यथानुरोधतन्तुस्तं चिरं लक्ष्म्या निबद्धवान्। स च्छिन्नो रागवेगेन लासासौन्दर्य्यजन्मना।
बलिजिन्मूर्त्तिना तेन वसन्त्या वक्षसि श्रिया। प्रतिवेश्मकितां नीता लासा सौभाग्यभागिनी।
छाया तद्रचितोदयापि दिवसश्रीभोगमातन्वतः सूर्य्यात्सम्मुखतां जहाति वहति श्रेयोहरीं कान्ततां।
स्त्रीणामस्ति चतुर्गुणा मतिरिति स्थानेन हन्त श्रुतिर्यद्वा दुर्व्विधिपङ्कमाकलयितुं शक्तो न कश्चिद्ध्रुवं। ४१५
प्राकृतस्यावताराख्या भक्तस्यापि सुता सती। लक्ष्मीर्लासानुरक्तेऽधादथ रोषं महीपतौ।
रोषात्सिन्धुपतेर्द्देशसम्बन्धिलाद्गतां नृपः। प्रत्यानयत्तपोद्रेकान्न पुनः स्नेहगौरवात्।
अपनीय तापखेदं मरुकरिणो पद्मिनीतोयैः। तत्पद्मशैवलाम्भोनिर्म्माथे कर्म्मठोभवति।
लक्ष्म्या मातृस्वसुः सर्व्वमातृकृत्यकृतोऽभवत्। राजप्रियाय राकेव लासा पक्षक्षयोद्यता।
सत्कर्म्मपाकसमयोऽस्य न चेद्दिकाशशोभां न किं परिहरेत् कुमुदाकरस्य।
विश्वप्रबोधहरणप्रवणक्षणेन कुत्सो निशा च सहसैव निशाकरेण। ४२०
चिन्तासूचकनिश्वासस्थानेोहाभं कदाचन। श्रेरोचन्द्रागिनी वेति लासाख्या भोगिनी नृपं।
न चेद्दिकाशयेद्भास्वान् पद्मिनीं स्वरुचा स्फुटं। तस्याञ्छेदाय शैवालबन्धादृव यतेत कः।
पतन्तीं प्रेमभारार्द्रां मयि दृष्टिं तवासहा। मां निहन्तुमुपायेन कुरुते महिषी तव।
अभिचारे दुराचारमुपचारप्रियङ्करं। सा चाराचो मयि द्वेषादुदयश्रियमैरयत्।
देव द्वेषपरे तस्मिन्नभिचारविनिर्म्मितिः। असम्भाव्येति तां राजा प्रत्युवाच विचक्षणः। ४२५
निर्व्वन्धेनोपजल्पन्तीं तदेव वचनं ततः। तां प्रत्याययितुं देवीमुदयश्रियमब्रवीत्।
व्ययित्वातिशयेनाद्य कोशोरिक्तत्वमागतः। प्रार्थयन्ते जना राज्ञः सर्व्वं कल्पतरूनिव।
द्रविणोत्पत्तये तस्मादुपायः प्रतिभात्ययं। प्रतिमा श्रीजयेश्वर्य्यायास्ति रीतिमयी पृथुः।
तां खण्डयित्वा विहितैष्टङ्कैर्म्मनामचिह्नितैः। व्ययनिर्व्वहणं कीर्त्तिस्थिरत्वञ्चोपजायते।
साध्वेतत् किन्तु तन्मूर्त्तिर्द्देवी किं प्रभविष्यति। दृढदुद्धेन मुद्रास्तु घुद्रस्तं सचिवोऽभ्यधात्। ४३०
भद्रोपकरणं सज्जीकृत्यान्येद्युरुपागतं। राज्ञीं प्रत्यय्य भूपालो रहो मन्त्रिणमब्रवीत्।
याः पूर्व्वैर्निरमीयन्त यशःसुकृतलब्धये। अङ्गीकृत्तासि ता देवप्रतिमा भङ्कुमञ्जसा।

अमरप्रतिमा विधाय केचित्परिपूज्याथ परे प्रसिद्धिमाप्ताः।
परिपाल्य यथोचितं तथान्ये विदलय्याहमहो महद्गुरुत्वं।
निर्म्माणाज्जलधेः कृतेश्च सरितां कौमारशोकावधि प्रख्यातः सगरोभगीरथनृपोगङ्गावतारोच सः।
दुष्मन्तः स च विश्वविश्वविजयाज्जिष्णोर्भयान्यावहन् रामोहन्त दशाननेन विहितात्सीतापहारात्पुनः।
राजा शाहावदीनाख्यः सुरमूर्त्तीरलोठयत्। सा दुर्व्वार्त्ता यमत्युग्राचकम्पन्नाविनो जनान्। ४३५
उदयश्रीर्नतशिरा राज्ञीत्युक्तवति स्वयं। महीरन्ध्रमिवैच्छिद्द्रागधोगतिवाञ्छया।
भास्करोद्युपरीरम्भरसासादितकौतुकः। स्वपुत्त्रशनिमुख्यानां ग्रहाणां हानिमिच्छति।
रागी तद्दोषवादिन्या तया देव्या प्रबोधितः। व्यवासयत् स्वदेशात् स राजपुत्त्रान् परानिव।
कार्य्यैव्यतिमनुष्येषु साहायकविधायिभिः। योगिनीपुरनाथस्य तैर्व्यक्तो विक्रमः कृतः।
औदार्य्याद्दत्तवृत्तीन् स हिन्दुकानेव बोधितः। म्लेच्छान् शेकन्धरमुखान् राजद्रोहकृतोऽवधीत्। ४४०
पिशुनैर्जनिताशङ्कः शूरोमदनलाविकः। राजा विस्रब्धसञ्जोऽपि सेनयास्य निवारितः।
राजा जातत्वरां यात्रां व्यसनेनाभ्यवेणयत्। नौसेतुकौतुकं सिन्धोः परिखायाद्ववाहरत्।
शूरः खन्ननगर्य्यां स पर्य्यटन् मृगयारसात्। सिंहमभ्यद्रवद्राजा सिंहसंहतसाहसः।
गच्छंश्छिद्रोधिकं राजा वाजिना वेगराजिना। अन्वगादतिभक्तेन मदनेनैव केवलं।
एकाकिनं चिरं बद्धयुद्धमुद्धतकेशरः। तमधःकृतवान् राजसिंहं सिंहोऽतिसाहसं। ४४५
उत्प्लुत्य वाजिमस्तुर्य शूरोमदनलाविकः। निपातितनृपं सिंहं कृपाण्या सहसावधीत्।
प्राणरक्षोपकारेण प्रसन्नः पिशुनाज्जनात्। युक्त्या मारणमेतस्य शङ्कमानो नरेश्वरः।
स विवाहच्छलाद्दत्त्वा द्रविणं करुणामयः। मदनं व्यसृजत् डिल्लीपतेर्निकटमञ्जसा।
उत्पन्नचम्पकं दीप्त्या कुर्व्वतीं व्योम जातुचित्। स्वप्ने शकरस्तहाख्योद्दृष्टवान् काञ्चनीं पुरीं।
वेश्म वेश्म विशंस्तत्र शून्यं पश्यन्वयं ततः। राजधान्यां स्त्रियं काञ्चिदपश्यत्कान्तिदन्तुरां। ४५०
अपृच्छच्च त्वमेकैव वन्तेर्यात महापुरे। व्योम्नीव शशिलेखा किं चित्रं तिष्ठसि निर्भया।
कस्येयं नगरी कस्माच्छून्या सर्व्वत्र वर्त्तते। अत्रेदं पतितं कस्य वर्त्तते च कलेवरं।
सा तं जगाद गन्धर्व्वराजस्यार्धा महापुरी। सुन्दरी पतिहीनेव विधुहीनेव शर्व्वरी।
स चामात्यैः समं सर्व्वैः पातुं कश्मीरमेदिनीं। अवतीर्णः परित्याज्य निजमत्र कलेवरं।
शाहावदीनइति यः प्रथितोऽस्ति जगत्त्रये। तत्कलेवररक्षार्थमत्र तिष्ठामि केवला। ४५५
स च निष्पादिताशेषकार्य्यो मासत्रयान्तरे। स्वामिमां नगरीमेव ध्रुवं रचितुमेष्यति।
प्रबुद्धोऽभ्यधिकाशर्य्यशोकचिन्तारसान्तरे। मज्जन्मरणपद्राशे स्वप्नवृत्तिमखण्डितां।
असत्ये किं भयं स्वप्ने सत्ये नैश्वर्य्यमेव मे। इत्यन्तर्विम्रृशन् राजा न तथा पस्पृशे शुचा।
मदन्तिकमुपागम्यमिति भूमिपतिस्ततः। दूरस्थितानां पुत्त्राणां सन्देशान्विसृष्टवान्।
ततोमुमूर्षुर्भूपालो हिन्दुकानां निजे पदे। अमात्यमयो धीमानभ्यषिञ्चत् स्वयं ततः। ४६०

ज्येष्ठशुक्लचतुर्द्दश्यां तानाङ्केऽब्दे महीपतिः। आलिङ्ग्य नाकवनितास्तनौन्नत्यमपीफलत्।
कुम्भदीननरेन्द्रोऽथ मीलावाप्तां महीभुजां। चित्ते सुखं मुखे हर्षं स्तुतिं वाचि न्यधात्ततः।
नातितीव्रो न वा मन्दः सर्व्वस्यैव महीपतिः। चित्तमादित लोकस्य वैपुवोभानुमानिव।
लोहरप्रत्यवेचार्थं याप्यशात् पूर्व्वभूपतिः। लोहराधिपतेर्भीत्या ते पलाय्य गतास्ततः।
शाम्यन्त्योषधयः सर्व्वाः शशिन्यस्तं गते सति। दृष्टो हि सूर्य्यकान्तानां रवौ याति द्युतिक्षयः।
लोहरं प्रतिसन्धातुं कुम्भदीनमहीपतिः। शौर्य्यशालिनमादिचत्पुरोडामरलोलकं।
अवेष्टयत्ततो गत्वा लोहराद्रिं स सर्व्वतः। प्राणा हि स्वामिभक्तानां तृणायन्ते महात्मनां।
असामर्थ्यान्निजं दुर्गं दुर्गेन्द्रोऽर्पयितुं ततः। ब्राह्मणान् व्यसृजद्दूतान् डामराधिपतिं प्रति।
द्विजलिङ्गान् स तान् मत्वा चारान्द्रष्टुमुपागतान्। न्यग्रहीदिग्रहादुपात् द्विजानव्यग्रमानसः।
द्विजदैवतमप्येतं श्रुत्वा तदपकारिणं। लोहरेन्द्रो न कोटायां जीवाशास्य विसृष्टवान्।
पश्यन्तोमरणं स्वस्य युद्धे वाथ पलायने। क्षत्रियाणां निजं धर्म्मंमग्रहीपुस्ततो रणं।
शरासारशिलावर्षैर्दुर्दर्शान्दुर्घनादिव। लोहराद्रेरवारोहन्नारोहंस्तु यशांसि ते।
विप्रकीर्णः स पाषाणैर्लडामरनायकः। अन्तर्हितः समं कीर्त्त्या भावि को नाम लङ्घति।
अनुकीर्णशिलाराशिच्छन्नोडामरलोलकः। यवनप्रेतसंस्कारान्न विपद्यप्यहीयत।
शाहावदीनभूपालो निर्व्वास्यापि सुतान्निजान्। आकारयत् स्वयं लेखैर्निजवर्णपरिष्कृतैः।
गुणैश्च वयसा तेषां ज्येष्ठामाटेन्द्रमण्डलं। हस्सनो राजपुत्रः स प्राप तावदनङ्कुशं।
स नेत्रशुक्तिमुक्ताभिर्मुक्ताभिर्बाष्पवीचिभिः। श्रुत्वा तत्र पितुर्म्मृत्युं निवापाञ्जलिमार्प्पयत्।
व्यावृत्य गमनेच्छायाः स्वच्छाशयममुं ततः। न्यवारयत् पितृव्यस्य लेखः कश्मीरभूपतेः।
शक्रादिशैलस्थलोभेन भृत्यानश्वानुपेक्ष्य सः। समस्कुरुत शाहावदीनभूमिपतिर्दिवं।
स्वःस्त्रीभोगरसेनेव गमनाय त्वरावतः। तस्याशाभिर्भवत्कार्य्यमशेषं निरपद्यत।
हारचालक्षणमाशा विचक्षणशिरोमणेः। तन्मन्त्रनालितां मौलिमूले मालां विदध्महे।
प्रवासागमनाभ्यां त्वं स्वपितुः पालिताज्ञया। श्रीरामइव भूलोकं यशोभिः स्वमपूपुरः।
भूतो भावी च सम्मानो यद्यपि स्वगुणैस्तव। यौवराज्यमहाहारं लघुकुर्य्यास्तथापि मे।
स्वधैर्य्यं सम्प्रयोगोनानाबन्धुसमागमः। तत्र रक्षाधिकारस्य दौर्मनस्यं विलुम्पते।
यशसेव प्रमीतानां परदेशनिवासिनां। महतां नहि जातः स्वादिभवेन सुखोद्गमः।
स्वरूपप्रतिबिम्बेन भवता स्वर्गवासिनः। तदुत्कण्ठाभरोऽस्माकं दर्शनेन निवार्य्यतां।
पुनः शाहावदीनस्य सोऽयमित्यन्यमण्डले। अङ्गुलीमुखनिर्द्देशः माभूत्तन्मास्तु ते।
राज्ञां मदनुकम्प्यानां मुखप्रेक्षी भवन् भवान्। कश्मीरैश्वर्य्यमतुलं मानैर्पौरस्पर्कं स्वयं।
विभज्य भवति क्षोणीभारं मेरुगिराविव। सुखं सम्पत्तिमतुलाम मत्तद्युतिराश्रयां।
येन मानेन मामग्रहीत् स वसुधाधिपः। त्वं सश्वरस्व तेनैव मयि पालयति प्रजाः।

उदयश्रीमुखामात्यमतानुष्ठानशालिनीं। स्वप्रार्थनानिषेधेन सत्त्वोमेव वृथा क्षपाः।
अज्ञानन् लोककर्णेलं राजेन्द्रकरिणामथ। पन्थानं लेखवाची स काश्मीराणामगाहत।
पर्ज्जन्यैः सम्मुखायातैर्झाकाररवधारिभिः। न्यवार्य्यतेव कश्मीरप्रवेशाद्राजनन्दनः।
स विघ्नन्नथ कश्मीरसरणीमुदजिज्वलत्। अमलोमधयद्राज्ञः श्रुतिन्तु खलचोदना।
नक्राः समुद्रमिव केचिदुदेतुकामा वातालतान्तमिव केचन दर्पदृप्त्या।
दुर्म्मन्त्रिणोभुवनकाननचक्रवालहव्याशनानरपतिं प्रविलोलयन्ति।
अथ प्रविष्टे कश्मीरान् हस्सने राजनन्दने। कुम्भदीनमहीपालः पिशुनैरित्यकथ्यत।
सर्व्वासामेव बुद्धीनामुपरीश्वरबुद्धयः। तथापि सचिवैर्व्वाच्यो हिताहितविनिर्णयः।
पुरन्दरादिलोकेशतेजोंऽशाश्रयशालिनां। स्वतंत्र्येभ्यो महीन्द्राणामन्तरायो विलोक्यते।
सर्व्वनाशितया ख्याताद्भावरूपाद्द्विजिह्मगात्। कृष्णसर्पादिवाश्लिष्टात्कष्टं दूरो न कस्यचित्।
विभवैस्तर्प्यमाणोऽयं न च स्वीभविता तव। स्नेहेन सिच्यमानोऽग्निः शीतलत्वं किमृच्छति।
न चिन्त्यं स्वयमेकाकी राज्ञो मे किं करिष्यति। हरेः पुरः सयूथोऽपि कतमो वारणेश्वरः।
मद्बुद्धा विक्रमस्तस्य हन्यतामिति नोच्यते। बुद्धिमानुदयश्रीस्तं स्वामिभक्त्या हि रक्षति।
आद्ये दर्पोदयः पश्चे दोषोद्रेकः परे यतः। नानुग्राह्यो न चोत्सृज्यस्तत्र राजेन्द्र हस्सनः।
नैर्व्वैप्रायताद्वृत्तिं तेजस्वी स चमिष्यते। यस्मिन्दहति नाम्भोधिं स च्युणोवाडवस्य कः।
अतस्तस्य निरोधेन निरुत्पिञ्जसुखाः प्रजाः। कुण्ठयन्तुतरां पूर्व्वं नृपालोत्कण्ठितां चिरं।
प्रविष्टैरिति दुर्व्वाप्यार्निगताङ्घ्रिरिव ह्रदः। वैरस्यमभरद्राजा खलवाक्यैः स हस्सने।
पश्यन् स्फुटमननुभवंस्तस्याप्युत्सेकविक्रियां। भ्रातुः पुत्त्र इति स्नेहाच्च तं राजा न्यरोधयत्।
उदयश्रीरथालक्ष्य विरक्तं हस्सने नृपं। लोलडामरभार्य्यां तद्वार्त्तां समदिशत्ततः।
स्वामिरागमिवारूढो नाकं डामरलोलकः। अहारयद्यशो न स्वं कुस्वामिमुखवीक्षणैः।
ऋक्षाद्दुर्भनयोराशो विभवाशास्तु दूरतः। वर्द्धितस्तु त्वया प्राणसंशयो हस्सनस्य तु।
तस्मात्त्वया निजार्थानां ग्रहणार्थं महीपतिः। प्रार्थनीयो यथाभ्येति लङ्घृहानेव लुब्धधीः।
तत्रागतं महीपालं हनिष्यामो वयं बलात्। बध्नीमो वा ततो राजपुत्त्रोऽवृद्धिमुपैष्यति।
अथ दैवाद्गते तस्मिन् मन्त्रे भेदं महीपतेः। उदयश्रीस्ततो भीतः पलाययत हस्सनं।
आत्मनो प्रसमस्ते वा चोदयन्नपरान् जनान्। रसेन्द्र इव लोकेऽस्मिन् श्लाघनीयत्वमश्नुते।
सर्व्वस्वतीद्ग्रणीद्रोहेऽपि तथा सचितमुचनं। समाशीलः समापालो नातत्त्वाणादुदयश्रियं।
गुणैः संहृत्य रश्मीनपि मडूचिनां मीलयन् बहिः। विसवत्कालमनयत्पङ्कवासु जलेषु च।
तावद्दशति पत्तोये दूरान् सप्तो हिमांशुना। किंस्विन्नैव तद्राशिष्टमथिवावा सवेदिति।
उदयश्रीर्गन्तुकामो राजपुत्त्रान्तिकं ततः। उदयश्रीः श्रुतद्रोहो राज्ञा कारां निवेशितः।
परीषितमिवायुर्मेगुरोस्तस्य च मेमुखी। सुरैरिवार्थितो राजा क्रोधाद्धापादयत् स मं।

मग्नन् पद्मं गजो भञ्जन् मत्स्यन्दनपादपं। निघ्नन् पुरुषरत्नस्य राजा लिन्द्यो जगत्त्रये। १२०
वच: पुरुषपुष्पाणां भुवनोद्यानवर्त्तिनां। सौरभातिशयं श्लाघ्यं विचिनोति मनोहरं।
विनष्टहस्तपादोऽन्धो ययातिचक्रिनाश्रय:। उदयश्रीचये राजपुत्त्रोऽभूद्धन्नलया।
प्रसादप्रीणित: प्राय: खशराजैर्दुरात्मभि:। राजपुत्रोहस्सुन: स हन्तुं प्रत्यवित: प्रभो:।
उत्पिञ्जे गलिते शत्रुवर्गेऽप्याशाच्युते सति। मति: सतेजालोकानामालोकश्रियमाययौ।
वितस्तायां स्वनामाङ्का पुरी तेनाथ निर्म्मिता। उच्छ्रितै: कनकच्छत्रैर्यामुद्धसति या श्रिया। १२५
प्रत्यब्दं जनमालक्ष्य दुर्भिक्षचयितायुषं। मासि भाद्रपदेऽकार्षीत् स सत्रं भूरिदक्षिणं।
साधुसूक्तिसुधास्नानात्कर्णाभ्यर्णतले कवे:। ध्रुवं धवलिमापेदे वार्द्धके चास्य भूपते:।
भूषणं निजवंशस्य पूषणं धरणेरसौ। शत्रुश्रीदूषणं पुत्त्ररत्नं न च स लब्धवान्।
योगिनो ब्रह्मनाथस्य कश्मीरादागतस्य स:। प्रसादेन महीपाल: सन्ततिं प्राप्तवांश्चिरात्।
अन्वयाभरणं देवी पितुरानन्दकारणं। तमोहरणमर्य्यम्णंकरणं सुषुवे सुतं। १३०
शृङ्गारमङ्गलावासमवलोक्य वपु: शिशो:। शृङ्गार इति नामास्य व्यधाल्लोकवासव:।
हर्षाद्दिशति चापि बन्धमुक्तिं तदुत्सवे। अन्वभावि तदा चित्रं बन्धो नौ सेतुभि: परं।
अथ द्वितीयपुत्त्रं सा देवी देवतसंज्ञितं। असूत कान्तिसन्तानतर्ज्जमानसुधाकरं।
चन्द्रस्येव कलङ्कोऽभूदयं दोषो महीभुज:। कुलागतां मही यस्य सवास्त्यामपाहरत्।
भाद्रे कृष्णद्वितीयायां पञ्चषष्टे स वत्सरे। अस्तं जगाम राजेन्द्र: कुसमदीनमहीपति:। १३५
राज्ञी शोकातुरा राजपुत्त्रौ बालाविति प्रजा:। अभूवंश्चकिता: सर्व्वा विनाथवदथाधिकं।
देव्या वाष्पजले शोकवर्धजाते पृथौ सति। परस्परममात्यानां मात्स्ये न्यायेऽभवद्रुचि:।
अलं शोकनिवेशेन धैर्य्यमत्रोचितं यत:। हन्यते मलिनात्मान: श्यामशूरामराजकां।
इति प्रबोध्य सुभटां देवीमुद्दकसाहकौ। ज्येष्ठं शोकन्धरं पुत्त्रं महाराज्येऽभ्यषिञ्चतां।
राज्ञीमतेनोद्दकोऽथ साहपुत्त्रं महत्पदं। स्वजामातरमप्येष प्रजानिमद्दहच्छ्वशात्। १४०
स्वध्यानक्ति तिमिर्महान् स्वकुलजानन्धानजानन् वधं स्वामस्वामपि मक्षिका वत मधुग्राहाद्गिरियद्दधा।
लक्ष्मीलोभभरेण मोहितधिय: कस्यानलस्यात्स्थितिं जानन्तोऽतिजडा न किं कुचरितं कुर्व्वन्ति हा हन्त हा।
श्रीशोभाया महादेव्या: श्लाघ्या लक्ष्मीरभूत्तरां। यां हेमलिङ्गैर्या पुण्यलिङ्गैर्य्या स्वैरमण्डयत्।
एतद्बन्धुशमेषोऽपि मां हनिष्यति निश्चितं। इत्युद्दकोराजपुत्त्रं विषेणाथ व्यपादयत्।
निजयैव कृपाण्याहं स्वं छिन्द्यां कण्ठमेतया। यद्यहं त्वां निरुन्ध्यामत्र हन्यां वेत्थय संविदा।
विश्वास्य साहकं वीरमुद्दकोऽथ व्यपादयत्। आसन्नविनिपातानां द्रोहाद्भूता हि दुर्धियां। १४५
यथा भ्रातुस्तथा स्वस्य वधं सम्भावयन्नृप:। प्रौढीभूतस्तनोद्दद्धिं स्वं पदं किञ्चिदानयत्।
भौद्वान् जित्वा गतो द्रूशोऽसहमानोऽन्यवैभवं। श्रीशोभाभ्रातरं सुज्यराजमुद्दोऽप्यधीत्ततः।
आदिशन् सेवकं स्वं स दारोत्पिञ्जनि सत्वकं। राज्ञोऽपि प्रणयं त्यक्त्वा दोलरानगमन्मदात्।

तच्छ्रुत्वा लद्दराजाद्या भूपतेरनुयायिनः। योद्धुं बद्धोद्यमाः पद्मपुरधन्वनि धन्वनः।
प्रत्यासन्नविनाशानां प्रायो मतिमतामपि। पिशाचादिभ्रमो नूनं स्वच्छायास्वपि जायते।
उद्दसैन्यैर्यतो योद्धुं बद्धोद्यममुपागतैः। पारेवितस्तं मद्दिषोप्यन्यभ्रान्त्या पलाय्यत।
आवितस्तापुरं रात्रौ तमनुद्रुत्य भूपतिः। व्यवर्त्तताथ तं बद्ध्वा नगरोत्पिञ्जशङ्कया।
तं बध्यमपि कारायां कारुण्यात्तु नृपोऽक्षिपत्। उद्दकस्तु स विश्वस्तद्रोहपापमलीमसः।
शङ्कमानो बधं भूपात् करुणाकोमलादपि। निजयैव कृपाण्याथ स्वगलच्छेदमाचरत्।
पत्रिराजइव व्यालान् शृगालानिव केशरी। पालान् धरणिपालः स कालान्तिकमथानयत्।
राज्यं शौर्यं वपुस्तेजो निर्नियन्त्रणता तथा। तदा तथाभवद्राज्ञः पश्चात्तपसः फलं।
हन्त राज्ञां ततं दर्पतिमिरं खण्डयन्नृपः। यात्रामस्त्रत्रयच्चित्रं गोत्रभिद्ब्रयदा ततः।
विश्वं रञ्जयता तस्य प्रतापेन प्रथीयसा। राजस्त्रीनखलक्ष्मश्रीः पाण्डिमानमवापिता।
तदैव दीनाभरणामपालकतया युतां। म्लेच्छराजो व्यधात् डिल्लीं विधवामिव लुण्ठयन्।
ततः प्रत्याव्रजन् म्लेच्छराजः कश्मीरभूपतेः। शङ्कमानो गजेन्द्रौ द्वावुपायनमचीकरत्।
हस्तिद्वयगलद्दानराजिव्याजात् स्वयं व्यधात्। देशसीमाविभागं स कश्मीराधिपतेः किल।
हस्तिद्वये समारूढे हिमाद्रिशिखरश्रियि। विन्ध्यवृद्धिभ्रमाद्विन्ध्यनियन्ता कोपमागमत्।
नागौ कोपमगातान्तौ वितस्तातरणक्षणे। प्रतिबिम्बं निजं दृष्ट्वा प्रतिहस्तिभ्रमं गतौ।
राजस्त्रीस्तनधान्दर्य्यचौर्य्यकारिकटोत्कटौ। तौ गजौ भूमिपालेन वारीकारां प्रवेशितौ।
वदान्येन नरेन्द्रेण सुवर्णपरिपूरिताः। नैवार्थिनः परं देशो निजोऽपि प्रत्यधीयत।
यथाकामार्पणप्रीतयाचकस्तुतिलज्जया। विनमन् संकुचन् हस्तस्तस्य दानक्षणेऽभवत्।
दानं वर्णयितुं तस्य शक्यते नैव केनचित्। पाणिरूपमधः पद्मं यत्रोपरि जलं सदा।
सदा दानाम्बुधिकाद्यत्र शारोहधवः करे। खड्गत्सरुविमर्दानां मन्ये तत्र निमित्ततां।
प्रजापापविपाकेन ततो यवनदर्शने। बालस्येव हृदि क्षोणिपतेर्रुचिरवर्द्धत।
अनेके यवना दानमसिद्धुन्तमथाश्रयन्। विहायापरभूपालान् पुष्पाणीवालयो द्विपं।
दीतेन्दुरिव पद्मानां तेषां बालोऽपि विद्यया। यवनानामभूज्ज्येष्ठो मेरदेशं महम्मदः।
अनमद्रृत्यवच्छ्रिचां शिष्यवन्नियममग्रहीत्। दासवत्स पुरो नीत्वा राजा तत्र न्यविक्षत।
मरुद्भिरिव वृक्षाणां शालीनां शलभैरिव। कश्मीरदेशाचाराणां ध्वंसोऽथ यवनैः कृतः।
स्वामिनो दानमामाभ्यां वेशधा गुणवृत्तया। कश्मीरानविशन् म्लेच्छाः सधनं शलभाइव
उदभाण्डपुराधीशं शत्रो जातु जयन्नृपः। श्रीमेरान्मत्सुतां प्राप मूर्त्तामिव जयश्रियं।
स्वामरक्षाहिकुले नूनं सा कापि देवता। योजयिष्यति तत्पुत्रः कश्मीरान् म्लेच्छनाशितान्।
श्रीजैनोल्लाभदीनाख्यो मूर्त्तो धर्मः कलावपि। राजापि योगिराजोऽयं राजचूडामणेः प्रियः।
येनापि रससिद्धेन दत्तणीकर्मोगृपं। रससिद्धिं वदन्मूर्त्तमहादेवाभिधोऽभ्यधात्।

यदा राज्ञि महीभारोद्वहनादनुरोधवान्। अदान्मेरुर्महादेवरूपेण द्रविणं बहु।
रससिद्धिप्रमादेऽथ महादेवस्य हीनतां। अगमत्तु कश्मीरनिवासविषये मनाक्।
रससिद्धिभ्रमार्थं स कृत्वा दृम्भमौषधैः। हेमैव मूषिकामध्ये चिरमासीत् किरन् किल।
प्रज्ञानज्ञापितो राज्ञा तच्छद्म स्वयमेकदा। अकीर्त्तिश्रवणाद्भीतोमहादेवोऽजहाद्दसून्।
लद्दराजोऽगदद्धारश्चङ्करो भट्टसूहकः। मन्त्रिणश्चान्तरङ्गाश्च सर्व्वदैवाभवन् प्रभोः।
मेरखानः शाहिखानखानौ मज्जदइत्यपि। यैः सज्ञा अभ्यभूषन्त गङ्गौघैश्चिष्टपादव।
प्रत्यचाइव धर्म्मार्थकामाः काममनोरमाः। मेरदेव्यास्त्रयः पुत्राराज्ञास्तस्योदपद्यत।
कृत्रिमलाञ्छिरस्तानां शोभादेव्यात्मजन्मनां। पुत्रं पितृजनामानं न निरामत् पुरान्नृपः।
अलकासदृशीं राजा मानसप्रतिबिम्बितां। पुरीं पुण्यजनाकीर्णां प्रद्युम्नाद्रितटे व्यधात्।
अयत्नप्राप्तवित्तानां यवनानां महीपतेः। वराटके च कोटौ च दृष्टिरासीत्समा तदा।
कश्मीरमण्डले म्लेच्छदुराचारेऽतिदूषिते। महिमा ब्राह्मणैर्मन्त्रैर्देवैश्च स्वः समुज्झितः।
प्रभावतेजो यैर्देवैः सततं प्रकटीकृतं। खद्योतैरिव तैरेव देशदोषाद्धिनिह्नुतं।
प्रत्याहृते ततस्तेजोविशेषे त्रिदशैरभूत्। प्रतिमानां शिलाभावोमन्त्राणां वर्णमात्रता।
पुण्यचयेण कर्त्तॄणां कलिदोषेण चोज्झिताः। गीर्व्वाणैः प्रतिमाः सर्व्वा निर्मोका भुजगैरिव।
रक्ते रागं शुचौ शौक्ल्यं मलिने मलिनां स्थितिं। संक्रान्ते सति गाहन्ते स्फटिकानीव भूभुजः।
स्वयं ब्राह्मक्रियाद्वेषी म्लेच्छैश्च प्रतिबोधितः। सूहभट्टः प्रभुं जातु देवभङ्गार्थमैरयत्।
विहाय राजकार्य्याणि प्रजाभाग्यविपर्य्ययात्। देवानां प्रतिमाभङ्गे राजारज्यदहर्निशं।
पापिनां पापमूलोऽभङ्गूमतामनयद्द्रुमः। हर्षदेवतुरुष्कोऽभूद्यस्य प्रागङ्कुरायितः।
पचायितोऽलवन्यानामुत्पिञ्जो दारुणोऽभवत्। उलचोम्लेच्छराजोऽभूद्यस्य पुष्पायितः सदा।
देवानां मूर्त्तिभङ्गेच्छा यस्यासीत्तस्य भूभुजः। म्लेच्छप्रेरणया नित्यं विज्ञः स फलायितः।
मार्त्तण्डविषयेशानचक्रभृत्त्रिपुरेश्वराः। भग्ना येनास्य कोविघ्नः शेषभङ्गेन कथ्यते।
सुरेश्वरीवराहादिप्रतिमाभङ्गकर्म्मणि। अकम्पत भियेवोर्व्वी नास्य सर्व्वङ्कषा तु धीः।
न पुरं पत्तनं नापि न ग्रामो न च तद्वनं। यच सूहतुरुष्केण सुरागारमशेष्यत।
कथाशेषीकृते सर्व्वगीर्व्वाणप्रतिमागणे। व्याधिमुक्तइवानन्दं सूहभट्टोऽभजत्ततः।
अपथ्याशीव बालः स सामन्तमहितस्ततः। जनानां जातिविध्वंसे सूहभट्टः कृतोद्यमः।
जातिध्वंसे मरिष्यामो द्विजेष्विति वदत्स्वथ। जातिरक्षानिमित्तं स तान्दुर्द्दण्डमजिग्रहत्।
प्रसादप्राप्तिलोभेन भूपतेरुपजीविषु। ब्राह्मणत्वाधिकां जातिं त्यजत्स्वप्यविलम्बितं।
श्रीसिंहभट्टकल्यूटौ वणिजौ श्लाघ्यतां गतौ। श्रीनिर्मलाचार्य्यवर्य्यस्त्रिजगत्श्लाघ्यतामृतः।
त्यक्ता जातिरयं यत्तावन्यदर्शनसेविनौ। शुल्कं तुरुष्कदण्डश्च विन्यशारयतां यत।
निर्म्मलाचार्य्यवर्य्यः स सर्व्वस्वं तृणवत् चणात्। त्यजन् राजप्रसादेन न जातिं स्वामदूषयत्।

स्वामी भृत्यापराधेन दण्डनीयइति स्थितेः। सूहभट्टापराधेन कालोभूपेऽकरोत् क्रुधं।
ज्यायांसमभिषिच्याथ पुत्रं शेकन्धरोनृपः। नन्दाष्टाब्दे ततोज्यैष्ठकृष्णाष्टम्यां व्यपद्यत। ११०
आसिंशाहः स वसुधासुधांशुर्जगतस्तमः। प्रदोषारब्धमच्छैत्सीत् भास्वानोऽस्ते पितुस्ततः।
अदर्पकचितं बालं प्रौढा लक्ष्मीभुजङ्गभुजः। कुलजालिङ्गदङ्गैस्तं राजानं नतिशालिभिः।
पूर्व्वैर्व्वैरशतद्वालमपि तं भूभुजोऽनमन्। अहिदष्टोऽहि दामापि क्रमितुं न प्रगल्भते।
निजबुद्धिबलाद्दैवहितत्वेनोपधंहितात्। सूहभट्टेन मुख्यत्वं सचिवानामवाप्यत।
विश्वासन्यस्तशस्त्रं स लहमार्गपतिं बलात्। बद्धवान् सह तत्पुत्रैर्व्वर्जयित्वा महम्मदं। ११५
महम्मदो मार्गपतेर्व्वन्धं श्रुत्वैव शौर्य्यवान्। भाङ्गिवाचलमार्गेण मार्गाभिज्ञः पलायितः।
निरुध्यमानं निःशङ्कमगदङ्कारशङ्करं। अप्रयुक्तातितीक्ष्णापि शस्त्रिधीश्च व्यडम्बयत्।
अपश्यद्दर्पतः कश्चित् सिंहो विशतु वागुरां। चित्रन्तु तद्विशेत्पादं दूरदृश्यापि यः खगः।
एकाहेनैव तच्छ्रुत्वा महम्मदः प्रार्त्तिचिन्तया। कन्ययेव दरिद्रः स नक्तंदिवमदूयत।
दुर्द्दण्डदेशे गोविन्दनाम्नोमित्रस्य वेश्मनि। विश्वस्तः प्राविशत्तावद्विश्रमार्थं महम्मदः। १२०
वह्नेर्धूमविवर्द्धितः शमयति ज्वालाभरं वारिदोहृद्ध्वोद्भवो वनानि नयति क्षिप्रं कृशानुः क्षयं।
दाहं जन्मभुवोदिशेदिपतरुर्व्वैरस्य दोषावहं द्रुह्यन्त्युपकारिणेऽपि नितरां लोभाभिभूताजनाः।
प्राप्ते महम्मदे मार्गपतौ विश्वासतो गृहान्। स गोविन्दखशश्चित्ते चणमेवमचिन्तयत्।
मन्त्रिणा सूहभट्टेन राज्योपद्रवराक्षिपा। वैराज्यकारी दुर्व्वुद्धिरित्ययंारि महम्मदः।
राज्यद्रोहादतः पापी निःसामर्थ्योभयादयं। मम देशं प्रविष्टोऽद्य रक्षणीयो न युज्यते।
तावच्छ्रीसूहभट्टेन विसृष्टाः श्रेष्ठबुद्धयः। अन्वेषका गृहं प्राप्ता गोविन्दस्य खशेशितुः। १२५
मैत्रीमुत्सृज्य निर्व्यूढामाश्रितस्य च रक्षणं। महम्मदं निजं मित्रमर्पयामास दुर्मतिः।
सुप्तं हरिमिव व्याधो यदा बद्धाक्षिपत् खशः। पञ्जरक्तं तदा तेऽय कश्मीरानानयद्द्रुतं।

मन्त्रार्दितस्य फणिनः शतगाश्चपेटैर्व्वाधाःशटाविघटनान्निरसोर्हरेश्च।
यद्भस्य कातरतया बलिनोऽवमानैर्निन्दाविना कृमिव नाम परं लभन्ते।

मान्यं छतावमानन्तं मद्भमानः पलायनं। वक्ररूपे महादुर्गे सूहकारमवोविशत्।
विद्युद्द्योतभरैर्निशि प्रवसतः पान्थास्त्रवो वारिदः पश्चात्येव नवासिनो मृगगणान् व्याहृत्य विश्रंवितैः।
गत्या यमगतैर्दिनैमतमयोरामीनशादोन्विधिर्भ्रंशाभासविलोकनैर्दुरितिनो विश्वास्य पर्य्यस्यति। १३०
आहनाघ्रास्ततोदाम्ना मुखेन प्रतिबोधितः। महम्मदो निजधार्चैर्व्वन्धस्थानादहश्यत।
स हि खेदावुत्र स्नानं करोमीति खण्डकान्। भ्रामयित्वा प्रविश्याय स्नानकोष्टं ततोऽचलत्।
धावेद्येवेदितं मन्त्रिभिर्यामसुपेत्य सः। हंसः क्रोशान्तरमिव नि छतोऽय महम्मदः।
रोषादिव च्युतं हन्तुं निष्पतन्निर्भराभयां। भृगोरिव ततोदुर्गाद्दाऽजम्पामकम्पितः।
स्कन्दुरग्रमुं रोद्धुं पाषाणारपिलोम च। निश्वरास्तु मदङ्घ्रिर्व्वानिगडध्वनिडमरं। १३५

धात्रेयामह्मदस्याथ भङ्क्त्वा निगडान् दृढान्। सूहभट्टममन्यन्त भग्नं साकं स्वबन्धुभिः।
महम्मदवदेवास्मिन् शङ्कमानः पलायनं। दृद्धं निपीतकोशोऽपि मार्गे समवधीत् द्विजः।
हते मार्गपतौ दृद्धे सूहभट्टेन दुर्धिया। अमन्दनिन्दमक्रन्दन् पितरोवाखिलाजनाः।
दृग्भिः संलचयन्नाशा विश्वेपं निशि निश्चय। पचीव नीडभ्रष्टः स सूहोलोकभयाद्ययात्।
अहस्तस्य विहस्तस्य रात्रिरासीन्निशादिनं। विपर्य्येति ध्रुवं सर्व्वं विधौ विधुरतां गते।
कारागारं समुल्लङ्घ्य चलितं तं स्मरन्मुहुः। महम्मदर्त्तिमं सूहधीवरः शुचमासदत्।
मन्त्रिणा सूहभट्टेन पालितैर्लालितैर्जनैः। ख्यातोदर्शनमात्रेण स्वर्थ्यातः श्रीशिकन्धरः।
श्रीशिकन्धरशाहिर्थ्यं शोभादेव्याः स्वमात्मजं। उत्पित्सूनामभावार्थं स्वदेशान्निरवासयत्।
उदीचीपतिना राजपुत्त्रत्वादभिनन्दितं। काश्मीरानाययौ जेतुं तमादायाथ मह्मदः।
तुरुष्ककटकैः सार्द्धं श्रुत्वा पिरुजमागतं। व्यसृजत्तन्निरोधाय सूहः श्रीलद्दगौरकौ।
मन्त्रैः श्रीलद्दराजस्य विक्रमैर्गौरकस्य च। सा तुरुष्कचमूः शान्ता व्याधिर्दानजपैरिव।
वीतभीतिस्ततो मन्त्री कम्पनाधिपतिं व्यधात्। लद्दराजं गौरभट्टं क्रमराज्येश्वरं च सः।
सन्ध्यात्वणदवोदये सूहे रञ्जितभूभृति। नाभूतामुदितौ राजयुवराजौ रवीन्दुवत्।
श्येनो हन्ति पतत्त्रिणो मृगपतिर्व्विख्यातयिष्णुर्म्मृगान्भिद्यन्ते मणयोऽपि वज्रमणिना खाता खनित्रैर्मही।
पुष्पाणीव च भास्वता ग्रहगणाः सूर्य्येण निर्धूनिताः प्रायेणात्र विलोक्यते परिभवत्रासः सजातीयतः।
द्विजातिपीडने नेन प्रेरितोऽपि मुहुर्मुहुः। श्रीशिकन्धरभूपालः करुणाकोमलाशयः।
यवनाब्धिमहावेलां यामकार्षीत् कथञ्चन। उल्लङ्घिता द्विजातीनां तेन दण्डस्थितिस्ततः।
दर्शनान्तरविद्वेषी प्रदोषस्तमसां निधिः। यागयात्रादि नागानां दुर्वृत्तः स न्यवारयत्।
शङ्कमानः कृतातङ्कसङ्कोचानां द्विजन्मनां। विदेशगमनाज्जातिरत्नासचाममत्सरः।
मोत्त्राचरं विना मार्गो दातव्यो नैव कस्यचित्। इत्यादिशद्देशान् स मार्गरचाधिकारिणः।
ततोमीनानिव व्याधो दत्तबन्धे सरिज्जले। द्विजातीनतिदुर्जातो देशेऽस्मिन्न्यग्रहीत्तरां।
तद्ध्यानलसन्तापं पापस्य बहवो द्विजाः। अग्निज्वालाप्रवेशेन सद्यएव न्यवारयन्।
केचिद्विषेण पाशेन परे तोयेन चापरे। भृगुणा वह्निना चान्ये विप्रा भीत्या विपेदिरे।
राजद्रोहिसहस्रेण रचितुं राजवल्लभः। नेतुकमप्यकन्त्रिप्रमेतस्मिन् देपदूषिते।
दुर्व्वहत्वेन निन्दस्य राज्यभारादहं खलः। अश्लाघत द्विजाक्रन्दश्रवणानन्दलाभतः।
त्रपाङ्कुर्म्येव विप्राणां पङ्क्तिर्ज्जात्यभिमानिनी। रुद्धद्वारात्ततो देशादपमार्गैरपासरत।
त्यक्तापि पितरं पुत्त्रस्तं पिता चागमद्द्विजः। सहान्तके कृताचैरे विदेशं परलोकवत्।
स्मारूत्पाचामसमयं व्याभेहिवेदनामयः। जीवसरकता तेषां विदेशोऽगाद्द्विजन्मनां।
घाटीफणीन्द्रभीतीमतापस्वल्पाशनातुरैः। मार्गेऽनेकैर्द्विजैर्मृत्युलाभात्सुखमलभ्यत।
क्व च स्नानं क्व च ध्यानं तपः क्व च जपः क्व च। भिक्षार्थमटतां ग्रामानगात् कालो द्विजन्मनां।

अनर्थितर्पणं वित्तं चित्तमध्यानतर्पणं। अतीर्थस्पर्शनं देहं पर्य्यन्ते शोच्यतां व्रजेत्।
दिग्गजेष्विव युष्मासु भूभारं न्यस्तवानहं। पुरुषोत्तमसेवायै यते शेष इवापरः। ६९५
साहिखानार्णवः प्रेममन्दरान्दोलितस्ततः। वाणीं सुधाकरकलामीश्वराय नवामदात्।
अस्तु सन्देहसन्दोहाद्दूरे तीर्थकदर्थना। द्वारं यत्र सुकृतश्रेः प्रजापालनमस्तु वः।
चिरस्य पालितां पित्र्यां हित्वा निःशरणां महीं। नैर्घृण्येनैव स्वरस्त्वमशक्यैवाक्षुपे ऽखिलैः।
देवस्य यदि तीर्थार्थमुत्कण्ठा वर्त्ततेतरां। आराधकानामस्माकं किमन्यत्कार्य्यमुच्यतां।
व्यक्तमित्युक्तवत्येव युवराजे नरेश्वरः। ईषत्स्मितरुचा चारु पुनर्व्वाचमवोचत। ७००
प्रजानुपालनात्पुण्यं केवलात् कियदर्ज्यते। रसायनानामग्र्यं यदनेकरसचर्व्वणं।
देहात् पृथक् निवसतोमह्युजस्येव ते तव। दृष्ट्वा पराक्रमं शङ्का मदशक्तौ कथं भवेत्।
एतावदपि वाक्यं मे यदि नैवानुतिष्ठसि। त्वयि मद्धन्धिनाः शेषास्तदाशाः सन्तु दूरतः।
निर्व्वन्धेनेति जल्पन्स तीर्थार्थं धरणीपतिः। युवराजं हठाद्राज्यभारमग्राहयच्चिरात्।
श्रीजैनोल्लाहभदीनाख्यः सुरत्राणोऽभवद्भवान्। चिरं राज्यं क्रियादेवं राजास्याशिषमभ्यधात्। ७०५
तीर्थदर्शनलोभेन स्वदेशान्निरगान्नृपः। न पुनर्युवराजस्य चित्तात्प्रेमार्गलाञ्चिता त्।
कोषसाराणि रत्नानि वाजिरत्नानि चार्पयन्। भ्रातरं वसतीर्द्दिवाः सोऽन्वगात् प्रेमगौरवात्।
मार्गे क्लेशं प्रयत्नेन सिद्धिं तीर्थफलाल्पतां। उक्त्वा मार्गे स्वसा राज्ञस्तीर्थश्रद्धामखण्डयत्।
स्वजामातुस्तिरस्कारं मन्यमानेन मानिना। मद्रेन्द्रेणाथ भूपालो द्वारात्तीर्थान्निवर्त्तितः।
प्राप्तायां शरदि श्रेष्ठदशायामिव भूपतिं। मद्रराजस्समादाय कश्मीरान् प्रत्यगात्ततः। ७१०
भ्रातुरागमनातुष्ट्या मद्राशारयहाद्रुपा। नवराजः प्रमादे च कानुष्ये च निमग्नवान्।
चुद्रेष्वथ समुद्रेषु युवराजो महामतिः। भ्रातुः स्नेहाद्रुषं त्यक्त्वा राज्यत्यागं स्वयं व्यधात्।
तथ्यस्तं दिवसावसानसमये स्वर्य्यस्य तेजो निजं प्रत्यूषे प्रतिपादयन्नतिशयश्लाघ्यस्वनेशाभवत्।
वह्निर्यन्त्रकुलैस्ततोऽपि दिवसे श्रद्धानुवन्धाकुलैस्तेजोऽपि वह्निमुखा नवेन हविषा यज्ञेषु सन्तर्प्यते।
ठक्कुरैरन्वितो राजा पवनः कुसुमैरिव। कश्मीरेभ्यो गतः सर्व्वदेशाधीशैर्नतस्ततः।
सुखं तावदगाद्दिष्ट्या वीतनक्रां नदीमिव। ठक्कुरैरुज्झिता मद्रचमूः कश्मीरमेदिनीं। ७१५
अथ विस्तीर्णमाक्रान्तमालिशाहेन भूभुजा। पित्र्यं सिंहासनं तेन नतु सज्जनमानसं।
प्रयच्छेत कथं जडद्युतिरहो दूरोल्लसल्लाञ्छनो गच्छेद्दीप्तकरोन चेद्दिनकरो लोकान्तरं स्वेच्छया।
वीरेणात्यवहेलया विरचितोऽपचो जडः कातरः सम्भाव्य स्वपराक्रमेण विजयं विश्वं तृणं मन्यते।
शाखाभङ्गेन सच्छायमुद्यानं श्वगादिव। मण्डलं चोभयामासुस्तुरुष्काराजसेवकाः।
कातराख्याम भूपालादनिष्पन्ननिमन्त्रणाः। यवनोमेरकंसारोव्यधान्मण्डलविप्लवं।
अकार्षीन्मलिनो म्लक्षः पंकुचन्तीरिवाब्जिनीः। पौरनारीरनार्य्यः स हारसम्भोगदूषिताः। ७२०
मत्ताकरैर्मर्दनान्धैः पद्मसङ्कुलतां भयात्। अधोभि मण्डलं स्वच्छैः सैरोमरुगजैरिव।

मन्त्रिमन्त्रैरवार्य्याणां द्विषद्योऽयनिर्वर्त्तनां। रचयामेव कश्मीरायादा दृतवग्रङ्गताः।
अराजकं वरं राज्यं न स्वामी तादृशः पुनः। अभूषणं वरं कर्णौ न पुनर्लोहकुण्डलं।
सद्म तुङ्गं वरोवाजी स्वच्छं वासो मणिर्महान्। स्वीकृतं यवनैस्तत्तद्यच्छोभावहं प्रभोः।
अकार्षीत् पञ्चषान् मासान् राज्यं स जडनायकः। प्रजापापविपाकेन न पुनः स्वेन कर्मणा। ७०५
मालिन्यं सुमनः प्रयाः प्रथयते दैन्यं निधत्ते द्रुमः सूर्य्यालोकतिरस्कृतं च कुरुते संहारमाग्नानयन्।
उन्निद्रः कमुपद्रवं न तरसा कुर्व्वीत धूमोद्गमोनिद्योतिततरां शिखी यदि महाज्वालाकलापाकुलः।
श्रीयिकन्धरदत्तस्य राज्यस्य क्षणमात्मनः। निवारयितुकामेन स्वलक्ष्मीफलकाङ्क्षिणा।
महेन्द्रदेवपूर्णेन खुःखुरस्वामिना ततः। नवराजोऽर्थितो दूतैर्निजदेशागमं प्रति।

नक्रो न चेज्जलनिधेर्बहिरभ्युपेयात् काकध्वजेन्न वरपादपमुन्नतं चेत्।

आखुर्न चेद्गहनगर्त्तगुहांविमुञ्चेत् हन्तव्यतां कथमवाप्नुयुरेव तत्ते।

अश्वो युवराजस्य मद्विषो दीयतेऽमुना। जसथं प्रति भूपालः क्रोधादित्यभ्यषेणयत्। ७१०
स्वेच्छच्छादितमाहात्म्यैर्हृदिशैः सचिवैर्निजैः। अनिपिद्धोद्यममतिर्दूतैर्हमयेर्नतैः।
युद्धोपोद्दलितश्रद्धस्तथा दैराज्यभीतिभिः। नवराजोदयं लेखमुखेन प्रापयिष्णुभिः।
प्रमादलोभाद्यवनैरतिमात्रकृतस्तुतिः। नवराजजयोद्रेकश्रवणभ्रष्टसाहसैः।
स्वसैन्यैर्दैन्यचकितैर्निन्द्यमानोऽयमो नृपः। मलेकं जसथं जेतुं प्रस्थानमकरोत्ततः।
अभ्यमित्रीणतां तस्य कश्मीरेन्द्रस्य गच्छतः। आसीन्निजस्य सांमुख्यं न मित्राणां महीभुजां। ७१५
यत्र यत्रागमत् स्वेच्छकटकः स मदोत्कटः। तत्र तत्र रजोव्याजात्तमोमूर्त्तमदृश्यत।
पालनीयेषु देशेषु राजपुर्य्यादिषूद्धताः। परदेशेष्विवाकार्षीत् स लुण्ठनपराभवं।
आशिऽय मद्वरयालनामस्थानं महीपतौ। सन्देशमित्यमन्दौजाः प्राहिणोन्मद्रभूपतिः।
पत्तिलोकः सम्पत्तिर्वाजिनोवेगराजिनः। भटारणोद्भटाः सन्ति कटके तव यद्यपि।
तथापि च्छलवत्स्वेषु प्रसिद्धेषु महीतले। यूयं खुःखुरयुद्धेषु नैव नाम प्रगल्भथ। ७२०
वयमेव तु जानीमः खुःखुराणां रणच्छलं। अहिरेव भुजङ्गस्य पदं जानाति नेतरः।
अतोयावदयं प्राप्तास्तेता विधिसिद्धये। भवद्भिस्तावदत्रैव स्थातव्यं पर्वतोपरि।
मद्रेशस्य स सन्देशोमन्दैर्यवनपुङ्गवैः। स्वयशोलक्षये ज्ञातो मदसंमूढदृष्टिभिः।
रात्रि मृदेऽवष्टढेऽथ मानादिव महीधरात्। ध्वजैर्व्वायुचलैर्यातं खुःखुरैर्बलाङ्गिया।
धावदश्वदलोद्दामनीयमि महीतले। दर्पभीरसमभेदे मज्जति स्म फणीश्वरः। ७२५
अश्वचुर्णोऽस्वंभिन्ने भूतले भिक्षाङ्किते। धीराः प्राणान् प्रतापाशा तत्राशुकवुराहवे।
आमिमाहस्ततो राजा सिन्धो प्रवहवं यथा। अभाग्यदुर्गमध्देशादभज्यत रणार्णवे।
विध्वान्धहरणान्धकारनिकरप्रस्य सूर्य्योदयं हेमन्ते हिममारुतैर्हतधनैः पुष्पाकराभ्यागमं।
दुष्टप्रापतितर्जितप्राणगतोनिर्दोषवेशं प्रभुं लोकोऽसमयप्रत्यमनिश निकरां कारुण्यमयुञ्जते।

श्रीजैनोल्लाभदीनोऽथ कश्मीरानपकल्मषः। अनुकूलैर्विधातेव प्राविशद्विजयोर्जितः।
सतां स्तुत्या दिशां भेर्य्या मुखानि ध्वनयन्नयं। पौराणां प्राक् मनः पश्चाद्राजधानीं नृपोऽविशत्।
धीनैर्मल्यं जनस्याहो जातं राज्ञोऽभिषेकतः। प्रतापेवैरिणां शान्तस्तीर्थस्नानाद्धि विभ्रति।
तन्नीतिः पूर्व्वराजेषु कुण्ठोत्कण्ठाः प्रजाव्यधात्। गुणातिशयिनी या च शर्करेक्षुरसेष्विव।
पूर्व्वराजव्यवस्थाः स विनष्टानवयन्नभृत्। शिशिरोपहता वल्लीर्वसन्तइव भूपतिः।
परस्पराधिकं शत्रून् जयद्भिर्दुर्ज्जयानपि। शस्त्रैर्मन्त्रा जितास्तस्य मन्त्रैः शस्त्राणि च प्रभोः।
कान्त्याङ्गं वदनं वाचा श्रियोरः क्षमया मनः। श्रितं पश्यन्त्यगाद्दूरं कीर्त्तिरीर्ष्यावशादिव।
राज्ञः कलिद्यामध्ये धर्म्यां साधान्यपद्धतिः। अन्तर्देशेव शुशुभे शुभा कृतयुगस्य सा।
भोगे सखा नये मन्त्री विवेक्ता शास्त्रनिर्णये। श्रीमहम्मदखानोऽभूत् कश्मीरेन्द्रस्य सोदरः।
किमन्यद्राज्यमेवासीत् छत्रचामरवर्ज्जितं। श्रीमहम्मदखानस्य कश्मीरेन्द्रप्रभावतः।
वसन्तइव कामस्य भूपतेरभवत् सदा। खुःखुराधिपतिस्तस्य भृत्येष्वभ्यधिकप्रियः।
दुर्व्यवस्थां निवार्य्याहं देशेऽस्मिन् म्लेच्छनाशिते। इति राज्यपरिप्राप्तिफलं यावदचिन्तयत्
तावद्द्रोहोचितं कर्म्म द्रोग्धारो राजवल्लभैः। अपृष्ट्वैव महीपालं नीता वीतभयैः स्फुटं।
यशो दिशि श्रियं साधौ सुखं लोकेषु रोपयन्। व्यधात् प्रक्रमभङ्गं तं यश्चक्रुनुदमूलयत्
एकान्ता तिग्मता भानोर्यद्दिशा शशिनः पुनः। सद्योजेतुमिवापुष्यत् तत्संसर्गमयीं श्रियं।
अपध्यानव सद्भिस्ते तद्गुणान् वर्णयामि किं। शृगालानां गुहामध्ये कथं हस्तिपतिर्वसेत्।
तस्माच्चेत्तेन्द्रवचित्ते मुकुरे सूर्य्यविम्बवत्। न्यस्यामि तद्गुणाख्यानमत्र चित्रे त्रिलोकवत्।
शीतोष्णयोरिवोष्णादौ विषुवेऽहर्निशोरिव। तस्य मानोऽभवत्तुल्यः स्वे परे वापि दर्शने।
राजा वणिगिवात्यर्थं तुलायाः पुण्ययोरिव। साम्यभङ्गं दर्शनयोर्नाचमिष्ट कथञ्चन।
शान्ते सिद्धाश्रमे सिंहैर्मृगाइव न पीडिताः। तुरुष्कैः पुष्कलभयैर्ब्राह्मणाः पूर्व्ववत्तदा।
दोषाकरेण स्वद्वेन येषां सङ्कोचिता स्थितिः। व्यकाशयत्ततोभास्वान् गुणिनस्तान्महीपतिः।
रन्ध्रैरधोगतिं प्राप्ता कुल्येवोद्धृत्य भूभृता। विद्या प्रवाहिता तेन गुणिना गुणरागिणा।
दोषच्छेदकरोराजा क्षमाङ्क्षिपगिवानलं। कश्मीरेषु सदाचारमपोषयदुपक्रमैः।
अहङ्कारागदङ्कारो राजा प्रकृतिहृद्रुजे। दर्शनानां सधाद्वनामिवात्वणमशीशमत्।
कलिधर्मेण बलिना मात्स्यन्यायप्रवर्त्तिनं। अष्टलोके सतेजोऽसाधारणस्यास्य सत्वरं।
स सुखभद्रध्वंसभंदुष्टायाः शुद्धये भुवः। प्रतापाग्निं ध्रुवं दीप्तमहाकाममजिज्वलत्।
राज्ञः संचिन्वतामन्त्रप्रपञ्चं पञ्चधा स्थितिं। जिगीषयेव तस्यारिवर्गः पञ्चत्वमाश्रयत्।
अनित्यशास्त्रविद्वेषिनन्मोघस्तुतिसंस्तवः। नित्यान्तःस्थारिध्वंसहर्त्तुस्तस्य प्रत्युत गर्हणा।
शक्तोऽपि काश्यपीशक्रः शक्यानेवाभ्यषेणयत्। शोषि याचां करोत्यर्कः सतारे सतु सोडुपे।
नाजिगीषत् स तेजस्वी शत्रून् विजिगीषया। हरिर्न्मांसारिलोभेन हिनस्ति न हि हस्तिनः।

शैलेषु तद्विषोभानुप्रतापाधिदवस्रभे । प्रायश्चित्तोचितं पश्च तपस्त्वभुवमाश्रयन् ।
प्रावर्त्तिष्ट महीहोऽपि नोत्पथेन स जातुचित् । राकेन्दुर्न निशारम्भं विना जालण्डेति यत् ।
गर्व्वं मद्दङ्गावास्तथा हीना नैव च च गमन् । इति नीतिविदा राज्ञा तेभ्योवलिरगृह्यत ।
वैरिकीर्त्तिर्न्नुहोतु खं विक्रमस्य वियोगत । वनाग्निवद्गुणे राज्ञ प्रतापे सहि तत्श्रिया ।
ढिल्लीशपीडित जातु जस्यं शरणागतं । द्रोणीगुहासु सोऽरचत् तमोऽद्रिरिव भास्करात् ।
तस्मिन् शासितरि चोणी विनेतरि दुरात्मनां । जयापीडपुरस्यस्य भूमिदेवस्य कस्यचित् ।
शस्यग्रामाभिलापादा विधातुर्वा नियोगत । तदा चिलाप्यगाङ्गेनुर्मूर्त्तिवाशा सुधाभुजां ।
गतामडवराख्यं स तीर्थस्नानाय जातुचित् । स्वां परिज्ञातसङ्केतां गां परिज्ञातवान् द्विज ।
सनिश्चयो गृहं यान्तीं सायन्तमनुगम्य गां । विवादमकरोद्देवस्वामिना सह तत्र स' ।
तौ लोभनिश्चयग्रस्तावशान्तकलहावुभौ । महीपालसभास्थाने विवादं कर्त्तुमुद्यतौ ।
तयोरशक्तयोर्ज्ञातुमुपपत्तिं परस्परं । श‍ृङ्गाटानि परीचार्थं गोरग्रे व्यकिरन्नृप' ।
सा वाल्ये यमनाभ्यासाच्चौश्रमाघाय सस्पृहा । गौरभुंक्त फलानीव ननु तत्सन्ततिस्थिर ।
सभाया राजनैपुण्यं स्तुवत्यक्षतनिश्चयात । दण्डोवाजिग्रहद्दण्ड भाण्डं राजा द्विजन्मना ।
तस्य हाचिण्यदचस्य प्रजानां हितहेतुना । पुत्रे मन्त्रिणि मित्रे वा दुष्टे वालच्यत चमा ।
अपराधं विना जाया चौरो निघ्नन् प्रियोऽपि सन् । मेरेगायोऽपि यवनो वधं भूपेन लम्भित ।
अनुपचे निकारं स चिपन् चितिपुरन्दर' । अकरोदादर नित्यं योगिनां नययोगिता ।
पराक्रमस्य नीतिश्च तस्य तेपाश्च भूभुजां । करुणा च विवेकस्य यस्मिन् राजनि राजति ।
कामो वियोगिवर्गस्य करोत्यपचितिं सदा । निर्व्विकार स्मरोयोगिवर्गस्यापचितिं व्यधात् ।
सौम्या भीमगुणा यस्मिन्नवमन्नवमङ्कभं । क्वाप्यच सागराद्दृष्टा विवाम्रतजलानला ।
चिर स्थैर्यरुपात्ता यिप्रत्यर्थिभ्यो धनग्रह । तेन धर्मप्रहत्तेन सद्वृत्तेन निवारित' ।
केनापि हेतुना पूर्व्वं लोलराजद्विजन्मना । भूप्रस्थदशकात्मीया विक्रीतालेख्यपूर्व्वकं ।
मातानां मोनराजादिपुत्राणा तमुदीर्य्य स । विक्रयाब्दे प्रशमभयं लोलराजोऽगमत्तत ।
मोनराजाद्यमामर्थ्यात प्रस्थपादैरभुज्यत । अविक्रीतमपि प्रस्थत्तवकाम्बलिभिमत ।
एवं गते दशप्रस्थी भोगे तैर्मन्त्रिभिश्चिरं । नयभोगाय कपट कृतं विक्रयपत्रके ।
विक्रीतं प्रस्थदशकमिति वर्णानलेखयम् । तेऽस्मिन् राज्ञि विचारज्ञे मोनराजस्य नन्दन ।
यस'सृतां भुवं राजसभायामहमाचिपं । प्रत्यर्थिभिरयानीतं लेख राजाऽज्ञया नृप ।
पुक्तिज्ञ मलिनस्यान्तर्वाचयित्व चिपत्तत ।
मद्येषु मयर्णेषु पुराणेषु स्थिरेष्वथ । भूप्रस्थमेकं विक्रीतमिति सभ्यानवाचयत् ।
राजाकीर्त्तिमरं भूमि कूटछद्मगमद्भुत । प्रजा' सुखं स्वराभीतिं मापुश्च मम'तत ।
इन्दोराज्ञभयं कदापि कुरुते कान्तावत्ता पूरयन् मिथुनमथिमुते अध्रिप्रपतमचोभतरोर्म्मोरिद' ।

वेधाः सत्पुरुषस्य सर्व्वजगतामाह्लादनायोद्यमं कुर्व्वन्नानयदर्शनेन कुरुते भीतिप्रकर्षं चरं।
अवाधिष्टतरां कष्टो विषस्फोटः कदाचन। प्रकोष्ठं भूमिपालस्य प्रजानां हृदयञ्च सा।
माघमासीव पुष्पाणां म्लेच्छग्रालेयबाधया। न लाभो विषवैद्यानां देशेऽस्मिन्नभवत्तदा।
यच्चा गारुडशास्त्रज्ञः शिवभट्टो नृपानुगैः। अत्रान्वियद्भिराप्तोऽथ कूपोऽम्बन्यै भैरावित्र।
चिकित्सायां विदग्धः स म्लेच्छभीत्या व्यलम्बत। स्फुलिङ्ग दग्धः पुरुषः स्पृशत्यपि मणिं चिरात्
स्वयं दत्ताभयोराज्ञा प्राप्तस्तमुदमूलयत्। शिवभट्टो विषस्फोटं करोव विषपादपं।
तस्य कीर्त्तिः सुखं राज्ञः प्रजानां हर्षसन्तति.। प्रारोहंस्त्रीणि विस्फोटे तत्रैकस्मिन् विपाटिते।
तुष्टेन भूभुजा दत्तां यथेष्टमपि सम्पदं। नैच्छिष्ट शिवभट्टः स यनात्मेव वराङ्गना।
.......... त्रयदण्डं निवार्थ्य सः। द्विजानां जातिरक्षार्थं रैप्यमापमकल्पयत्।
स्थापितोग्रामसीमायां ग्रामेभ्यः प्रापितोधनं। अरण्येऽरण्यनाथश्च पान्यस्तेन महीभुजा।
ह्रामाः श्मशानदेवीनां स्तहभट्टं प्रतीव तं। प्रतिस्थानं विमानानि प्रेतानामच्युतस्तदा।
म्लेच्छैरुपद्रुतां चौणीमचीणकरुणोनृपः। उदहार्षीत् क्रमादेवं दानवैरिव केशवः।
उच्छृङ्खान् स नयन् भङ्गं निम्नानापूरयन्नृपः। स्वकीर्त्तिवीजवापार्थमनुह्वातां महीं व्यधात्।
भूपतेः परदारेषु निष्कर्त्तिकमयं व्रतं। अभज्यत परं तस्य परस्त्रोपरिरम्भणे।
श्मन्दशदर्शनाय सर्व्वज्ञेन महीभुजा। सौगतस्तिलकाचार्य्योमहत्तमपदे कृतः।
सशिवभट्टस्तिलकः ससिंहगणनापतिः। सोपानान्यभवन्तस्य पदारोहे द्विजन्मनां।
मेदिन्याखण्डलस्यासीत् पिकस्येव रसश्रिया। अखण्डं रसपाण्डित्यं ब्रह्मकुण्डलमेवया।
कर्पूरभट्टोथः श्रीमान प्राणिरचो महीभुजः। गुणिनां शरणं चक्रे स्वगुणैः सुरभिं सभं
पूर्व्वाब्दग्रहमञ्चारादुत्तराब्दग्रहस्थितिं। रूप्यभट्टोविदन्नासीद्दिनैव गणितश्रमं।
श्रीरामानन्दपादानां वाम्पव्याख्या चणं चणं। वी .. तेदारदाचौणी... .....
गान्धारसिन्धुमद्राद्रिभूभुजस्तस्य भूभुजः। .................. ..... ।
युद्धे जितं ततोबद्धं सु.सुरेन्द्रेण भूपतिः। मालदेवं मद्रराजमाज्ञया निरमोचयत्।
राजा राजपुरीराजा........... ।चणाद्दुभङ्गमावेश रणस्तहमत्तोठयत्।
उदभाण्डपुराधीशं सिन्धुराजोपदर्पितं। सकन्दुकमिवोत्थाप्य मुहुर्मुहुरपातयत्।
भोट्टभूमौ महीन्द्रेण गोग्गदेशे कदाचन। वाणगौरखरास्तेण गुणैर्लोकाश्च रञ्जिताः।
सम्प्रिजिते भयादेशे कूरादेशो महीपतिः। सुवर्णबुद्धप्रतिमां यवनेभ्योररच सः।
कपाक ..द्धर्यस्तस्य निकषोभोट्टतेजसां। अप्रकाशो मतापोऽय स नूतनगरीं व्यधात्।
केवलं ह्रदयं शून्यं भोट्टानां नाभवत्तदा। भूमिपालभयावेशात् कोपोऽपि चिरसञ्चितः।
प्रकृतीनां ददद्राजाश्रेयोप्यार्थोयथोचितं। प्रत्यवेचामकार्षीत्स प्राचीनामिव कर्षकः।
नामदिष्टेव तच्चापं तुलां शार्ङ्गपिनाकयोः। दूरकार्य्यार्थनाधिन्या धनुमत्ताभुवा पुनः।

शायाहारा द्विजायत्र सायाहाराश्रयोषितः। साय्यैनपुरीराज्ञा करालैर्निरमीयत ।
अवन्तिपुरभूमौ च कान्तो दन्तेनभूभुजा। कुल्यावतारिता तुङ्गाशालिसम्पत्तिशालिनी ।
गिरिमार्गेण सर्वगङ्गायामानसं प्रापितेजने। किमुतं मानसे नेदममुना किमुमानसं ।
व्यडम्बदत् स्वमूर्त्तिश्च्या मानसमनिविम्बितां। विधाय तत्तटे तेन नगरी सफलायिता ।
श्रीमान् सुय्यपुरात् पारेवितस्तं धरणोन्नृप । संयोज्यं प्रसरत्तापव्यापदं स न्यवारयत्।
आप्रद्युम्नगिरिप्रान्तादमरेशपुरावधि। मठाग्रहारहट्टाढ्यां स जैननगरीं व्यधात्।
स्वर्गं जेतुमिवोदस्तादुन्नतैरश्मवेश्मभिः। सङ्क्रान्ता जैनगङ्गायां फणिलोकस्य यागमत्।
जैनगङ्गा रणस्वामिप्रसादं प्रापिता कृती। व्यस्मिस्मरत् स्मेरयशा हरिपादकुतूहलं।
पारेसुय्यपुरं स्नानगिरिसंज्ञां पुरीं व्यधात्। कैलासाचलतुल्यैश प्रासादैरभिभूषिता ।
सिद्धचैत्रे सुरेश्वर्य्यां प्रसिद्धौविचक्षणाः। राजधानीं निषिद्धारिर्व्यधात् सिद्धिपुरीमसौ।
प्रासादशिखरे राजा मार्त्तण्डामरनाथयोः। राजधान्यौ व्यधात् सौधधौतदूरनभस्तले।
सुभिक्षं सुय्यराजेन पूर्व्वमस्कारितं किल। ततः प्रभृत्यतीतेषु बहुष्वपि च राजसु।
प्रजानामल्पपुण्यत्वान्नावर्द्धत मनागपि। तपोबलात् पल्लवितं पुष्पितं फलितं तथा।
श्रीजैनोल्लाभदीनेन युगपत्तद्व्यधीयत। तपसामतिदृढत्वात् किमिव ज्ञापकं परं।
पूर्व्वपुण्यक्षये राज्यात् पतत्यन्ये महीभृत। तस्य जन्मान्तरे राज्यप्राप्त्यै राज्यमभूत्प्रभोः।
स नदीमातृका कृत्वा धरणीर्देवमातृकाः। अग्रहारानुद्भाप्य द्विजेभ्यायददात् सदा।
मराहजेचनगरविजयेशानकादिषु। सत्रदानेन स चासमपि गोत्रभिदो व्यधात्।
भूमिविक्रयभूर्जादिकृतचिह्नं महीभुजा। निह्नवप्रागभावाय धर्म्माधिकरणं कृतं।
योजयापीडदेवेन प्राप्तोनागप्रसादतः। स दण्डमिव तस्यादात् ताम्रं ताम्रकरोगिरिः।
मणीन् खनिभ्यस्सालभ्यांस्तद्राज्ये भूरजीजनत्। ये जैनमणयः ख्याताः पद्मरागमदच्छिदः।
सरितां सैकते नीतसिकताभ्रमदं सदा। काञ्चनं काञ्चनच्छायां विभक्षोकैरचीयत।
सरित्सुवर्णात् षडंशो याह्यो भाविभिरीश्वरैः। ताम्रपट्टेऽलिखद्यास्त्मावाध्यमेवं नरेश्वरः।
नगराधिकृतः काचडामरे दुस्तरे पथि। क्रोशमात्रं व्यधात् सेतुं नगरान्तः शिलामयं।
नात्मैव सेतुदानेन तेन पङ्कात् समुद्धृतः। सकलोऽपि जनो मध्येनगरं पुण्यशालिना।
विषये विषये चक्रे शिवभेट्टा मठान् पृथून्। अन्येऽपि सचिवा राज्ञो धर्म्मशालावबद्धधुः।
पद्माकरस्य मथनाय गजाधिराजावभ्युद्यतौ सततमेव तदम्बुदौ।
तावत्कराकरि रमादिह घातिमत्तौ कृत्वा क्षणादगमतां स्वयमेव नाशं।
सयोधशूरौ धात्रेयौ भूपतेरेकगात्रजौ। दौ रत्नाग्वेषिणवास्तामन्योन्यविभवासहौ।
राज्ञा तौ वारितक्रोधौ स्नेहदाक्षिण्यशालिनौ। कृतान्यनरमुत्पिञ्जमञ्जावभवतां चिरं।
कदाचिद्भूपतेरग्रे दृष्टः शूरेण याकमरैः। सेवादठक्कुरः प्रस्तधंश्य सं समकालयत्।

न्यस्तशस्त्रः स रजनौ गच्छन्मितपरिच्छदः। रन्ध्रं लब्ध्वाथ शूरेण ससोदः ठक्कुरो हतः।
विम्बाद्यैष्ठक्कुरैस्तस्य भ्रातृभिः ख्यातपौरुषैः। हन्तुमभ्यर्थितः शूरो भूपतेः प्रेमशालिनः। ८८
शूरे सानुचरे विम्बठक्कुरेण हते सति। प्रसादमगमत् कीर्त्तिठक्कुराणाञ्च धीसदा।
तथा स योगिनां मानमभूद्भूलोकवासवः। तेषामग्रे यथा भद्रराजाद्यैर्लिखितं स्मरन्।
सद् सद्योगिनां भोगं यागं तेभ्योऽग्रहीन्नृपः। कुण्डलं हेमपात्राणि दुकूलमपि दत्तवान्।
छित्वा पर्व्वतपद्धतीरपि नवाः फेणेन हत्वाम्बुधिं कृत्वा यत्नशतं त्रिलोकविजयी कीर्त्त्या न तृप्तिं गतः।
इन्द्र. पीतसितासितारुणहरिद्वर्णं विधत्ते तनुज्योतिर्धूमसमीरनीरघटनामात्रेऽप्यसारे घने।
भूतानां भाविनां वापि यदशक्यं महीभुजां। तदिष्टसाहसी राजा कीर्त्तये कर्त्तुमिष्टवान्।
कर्त्तव्यं साहसं यद्यदुचितं यदयं नृपः। कालस्थानवधित्वाच्च विपुलत्वेन च चितेः।
तत्तत्सम्भाव्य साध्यं स भाविभिर्मेदिनीश्वरैः। दूरादब्धिरिवायातो रत्नेष्वधिकदीप्तिषु।
साहसेष्वेकमादातुमपि प्राप न निश्चयं। उपचारैर्दरिद्राणां संभवोदारमानसः।
न तोषितः श्रुतै राज्ञामतीतानाञ्च साहसैः। अगम्येष्वपि भूपाल. शैलेषु च सरःसु च।
शब्देष्वर्थेष्विव कविस्तत. समचरन्नृपः। वणिजामिव वाक्यानि व्यवहारसमुत्सुकः।
राजा नीलपुराणादीन् पण्डितेभ्यस्ततोऽशृणोत्। चिन्तान्तराणि संत्यज्य साहसैकसमुत्सुकः।
कदाचिद्भूरणीपालश्चिरमेवमचिन्तयत्। देहस्येव त्रिलोकस्य मुखवत् क्षितिमण्डलं।
प्रधानं तत्र कश्मीरमण्डलं नयनं यथा। शैलराजशिखाः पक्ष्मतुल्या यत्र वहन्ति ताः।
तारामण्डलवत्तत्र महापद्मसरोवरः। महापद्मास्पदं त········मण्डलसोदरं।
तदापूर्य्य कथञ्चिच्चेत्कि··· ···· · क्रमात्। निर्म्माणं शक्यते कर्त्तुं तदा राज्य ·····। ८९
अगाधसलिलच्छन्नकोशाश्चाविंशतिप्रम.··· --। सरोराजः सहि महानाशयो महतामपि।
··सवि स्वयं तत्रोपाय सरोऽन्तरे। नावास्य गतवान् मध्यं योगीवात्मानमात्मना।
सदैवोद्धुतकल्लोलमहापद्मसरो महत्। नागाहन्त नृपाः पूर्व्वे तरङ्गीभङ्गशङ्किनः।
तप.प्रभावाद्धैर्य्याद्वा कार्य्यगौरवतोऽपि वा। स्थलवत् सलिले तत्र स राजाभ्यसरत्सुखं।
एवंतथा चिरतरं परिचिन्त्यमानं चिन्तामणिः किल ददाति तदेव मान्यत्।
चित्तस्य चापि यदगोचरतामुपैति तत्तु प्रयच्छतितरां वत बुद्धिरत्नं। ९०
तस्य हि क्षितिपालस्य निरालम्बमते. स्वतः। सरसः स्थलतां कर्त्तुमुपायः प्रत्यभादयं।
शिलापूर्णप्रवहणैरपर्य्यपरिपातितैः। शैलशृङ्गैरिवाम्भोधिमिमदापूरयाम्यहं।
हताभिर्नौसमूहाभिः पङ्क्तीभिर्दैवदारुणः। न छिद्यन्ते न भिद्यन्ते शिलाप्रवहणादिभिः।
ततः प्रत्यागतो राजा दृष्ट्वा गाम्भीर्य्यकौतुकः। अभ्यगात् शरणं तत्र ते चैनं नृपमभ्ययुः।
दारिकेव प्रभा तस्य पुरी सन्निभतो किल। सुदर्शनेन चक्रेण मनुजानां समाश्रिता। ९१
मर्य्यादिता तस्य महापद्मः ······।· मिवैतां दत्तुर्म्मधाम् पुत्रवत्पर्य्यपालयत्।

कलिकालबलात्तत्र दुराचारनिषेविणः। ··जनास्तद्देशवास्तव्याः प्रापुर्वृद्धिं दिनाद्दिनं।
अथ कर्मानुसारेण विपर्य्यासानुसन्धतः। क्रोधं नागपतिर्यातो दूषणादिव सज्जनः।
अनुज्झितनिजाचारं कुम्भकारं स कञ्चन। स्वप्ने वदन् दुराचारान् पौरान् मज्जयितास्म्यहं।
नागः प्रजादुराचारात्प्रजा मज्जयतीति तं। प्रातर्वदन्तमहसन् पौराः पङ्गुमिवाखिलाः।
फणाग्रैतोक्षसद्वारिधाराशब्दभयङ्करः। नागराजोऽथ नगरीं वैरीवावेष्टयज्जलैः।
मन्त्रान् पिठत्सु वप्रेषु नागेषु प्रणमत्स्वथ। ददत्स्वपि च बलिषु नास्थाभूत्तमरङ्गरः।
भयाद्बालेषु पुत्त्रेषु कण्ठलग्नेषु योषितः। वाष्पमुक्ताफलैश्चक्रुः पूजां फणिपतेरिव।
पादादङ्कं ततः कण्ठं ततः स्कन्धं ततः शिरः। प्राणाद्दव सुताजग्मुर्मातॄणां भयविक्लवाः।
सर्व्वाण्यङ्गानि नारीणां शृङ्गारीवानुरागवान्। कम्पमानानि लोल. स जलपूरः समस्पृशत्।
ह्रस्वं दीर्घञ्च सूक्ष्मञ्च स्थूलञ्चाणु महत्तथा। अन्धकारद्दवाच्छाद्य जलपूरो व्यजृम्भत।
अगाधे सलिले तस्मिन् खलस्पर्शासहस्तत.। फणिराज स्थितिं चक्रे विपिने मज्जनो यथा।
कालियः स हि नागेन्द्रः पदाक्रान्तो मुरद्विषा। शिरस्युत्पन्नपादत्वान्महापद्माभिधां गता.।
नष्टान्योजयितुं भूय कश्मीरानिच्छतोहरेः। अवतारस्त्वमेतत्ते सिध्यत्येव चिकीर्षितं।
राजा श्रुत्वेति स स्वप्ने चणमेवमचिन्तयत्। एवंविधानि कार्य्याणि सिध्येयुः कथमन्यथा।
प्रजाचारविपर्य्यासात् नाचमिष्ट पुरं फणी। ना निष्टं महतेऽल्पोऽपि तादृशस्तु महान् कथं।
नागराजोचितश्छत्रसगोत्रमहमत्र तु। स्थलम ······शोरत्नघटिकारम्य भारभे।
उल्लोलमरसोमध्ये वर्त्तमाने महास्थले। पवित्रे विजने चात्र सिद्धिं यास्यन्ति साधकाः।
चिन्तयित्वेति भूपाल.शिलाप्रवहणैर्दृढैः। उल्लोलसरसो मध्यमप्यगाधमपूरयत्।
सरःम··सुतस्तस्य स्थलीभूतेऽथ भूपतिः। मध्यदेशे महाराज····न लङ्कां विनिर्ममे।
अन्ते तस्यैव सरसो राघवेन्द्रप्रसादतः। जयापीडमहीपाल. स्थलभावमदापयत्।
हेमन्ते विश्रृङ्गाटकवुकोद्धरणादिना। श्रीजयापीडकोटस्य ज्ञायतेऽगाधवर्त्तिता।
उल्लोलस्यान्तभागेषु सुय्यकुण्डलकादयः। दृश्यन्ते बहवो ग्रामा विशालसदनाङ्किताः।
गिरयोऽपि निमज्जन्ति यत्र तत्र तु स व्यधात्। जैन··· कां महाटङ्कां तं निधायाधिकारिणं।
रूप्यभाण्डा ··शिल्पकौशलान्युक्तसम्मतिं। राजधानीमहादारयोधमा····योजयत् पुनः।
हिमाचलशिखादर्पच्छेदप्रासादमेदुरां। क्रमराज्ये स्फुरद्राज्यः सुरत्राणपुरं व्यधात्।
जैनकोट्टं घट्टितारिरट्टशालि समन्ततः। तत्तत्पट्टपताकान्तकान्तं राजा विनिर्ममे।
जीर्णोद्धारेषु सर्व्वेषु निर्माणेषु नवेषु च। आशाराशोषभो हेटरूप्यभाण्डपतेश्च धीः।
महापद्मसरस्तीरे जैनोपपदमालिनः। पुरमण्डयिकाघोषांस्तया श्रीजैनकुण्डनं।
स जैनपत्तनञ्चापि विदधे धरणीपतिः। भूपते. कोमलकरा मनोज्ञा धरणाङ्किताः।

अभिराममहो दन्ताकरुणावल्लभाभवत्। अनिघ्नन् करुणानिघ्नो नरेन्द्रोऽमितस्करान्।
बन्धयन्निगडैर्गाढं स्तस्करान्धारयन् सदा।
निर्दिशन् यशसा शुभ्रा दिशोनृपनिरादिशत्। अवधं खगमत्स्यानामनेकेषु सरःसु सः।
अथ जातु हृतां चौरैर्गां परिज्ञाय कश्चन। क्रन्दन्तं भूमिपः पृच्छंश्चौरांश्चाथाप्यटौकयत्।
वयोलक्षणसम्वादं विना गोर्भग्नश्रृङ्गताम्। सभाचोभेण हेतुं स सत्यवाक् ब्राह्मणोऽब्रवीत्।
तिलकादिव देवास्याः सदृशाभुग्नश्रृङ्गता। राज्ञा पृष्टे वदन्त्येवं चौरे मूका सभाभवत्।
परीक्षार्थं तिमिस्वेदे राज्ञा गोश्रृङ्गयोः कृते। कुटिलत्वं व्यपैति स्म प्राक् चौरस्याथ श्रृङ्गयोः।
एवं बुद्धिप्रकर्षेण व्यवहारविमर्षतः। अमात्यपर्षदोहर्षचित्तोत्कर्षमजीजनत्।
प्राड्विवाकः क्षमाबुद्धियुक्तरण्डलरश्नकः। राज्ञोवहत्प्रजाभारं गणनापतिगौरकः।
धैर्ह्त्तमुपकारित्वादुत्कोचद्रविणं स्वयं। कालान्तरे कृतघ्नेषु तेष्वेवास्थानमण्डपे।
प्रकाशयत्सुतं भारं कुपितेन महीभुजा। मल्लानमल्लामाषाकेस्तेभ्यस्तत्प्रतिदापितः।
आदौ पादतले तिष्ठन् करालम्बी कृतस्ततः। अथ चक्षुष्यतां गच्छन्नुत्तमाङ्गेऽङ्कितैर्तां।
कीर्तोदर्थ्यावखानोऽथ कृतघ्नेनेश्वरेण सः। कलानिधिर्हिमरुचिः कौमुदे हि ततोवहन्।

दिनपतिर्न रसातलगं तमः शमयितुं यतते यदवेक्ष्य सः।

अतिलसद्रुचिकालघनाहृतेर्हरति तत् प्रतिबिम्बमहोजगत्।

राजा भूभारखिन्नोऽपि खड्गधाराध्वगोऽपि सन्। स्वदत्तं विभवं यस्य दृष्ट्वा विश्राममाप्तवान्।
अस्तं मल्लदखानः स कलानिधिरथागमत्। अत्यन्तरमणीयानां सुचिरस्थायिता कुतः।
प्रत्यब्दं प्रतिहार्य्याधैर्य्याव्यधात् प्रीतिमर्थिनां। सत्यव्रतोदिवमगात् महिमश्रीः स ठक्कुरः।
तद्भ्रातृजेभ्य. स किलागूढं तस्य बधं व्यधात्। थोदूत्यच्कलतोराज्ञा स्वदेशान्निरवास्यत।
राज्ञ. सैन्धवश्रुङ्कादिस्थानेऽधो भिषं पुरे। प्रत्यागतः सतीर्थाध्वखिन्नो विन्नो दिवं ययौ।
राज्ञोधर्माधिकारेषु प्रत्यवेक्षापरा सदा। महाश्रीशिवभट्टोऽपि तस्मिन् काले दिवं ययौ।
गतेष्वप्येषु धर्माऽस्य राज्ञो नैवाल्पतां गत.। क्ष्मां दधानस्य शेषस्य दिग्गजाद्धि परिच्छदः।
एकाह्नएव दीनारकोटिरेका महीभुजा। बालेभ्यएव दत्तासीत् जय्यभट्टमुखेन यत्।
अद्भुता॰ । पदार्थानां तद्राज्ये संप्रहोऽभवत्। नारायणावतारोयज्जायते कथमन्यथा।
येषां हिमांशुपीयूषप्रवाहा नित्यभिक्षवः। इक्षवस्तेन मार्त्तण्डदेशभूमिषु रोपिताः।
त्यजता योगमाहात्म्यादशोपस्थितविक्रियां। श्रीजैनोल्लाभदीनेन विबुधत्वं प्रकाशितं।
तदीयसत्यसम्पत्तिरूपशमकरीं व्यधात्। ॰॰स॰॰दप्यस्य सिन्धुं भारीमगामिनीं।

इति श्रीजोनराजकृता द्वितीया राजतरङ्गिणी सम्पूर्णा ॥

## ॥ अथ श्रीवरपण्डितकृता तृतीया जैनराजतरङ्गिणी ॥

### प्रथम तरङ्गः।



शिवायास्तु नमस्तस्मै सर्वैलोक्यमहीभुजे। अशेषक्लेशनिर्मुक्तनित्यैश्वर्य्यदृशाजुषे।
प्रेम्णार्द्धं वपुषो विलोक्य मिलितं देव्या समं स्वामिनो मौलौ यस्य निशापतिर्नगसुतावेणीनिशामिश्रितः।
आस्ते स्वाम्यनुवर्त्तनार्थमिव तत्कला वपुः खण्डितं देयाद्दयभावनां स भगवान् देवोऽर्द्धनारीश्वरः।
वन्द्यास्ते राजकवयः पदन्यासमनोहराः। ख्याताये सरसैः शब्दैः चौरनीरविवेकिनः।
अनित्यतान्धकारेऽस्मिन् स्वामिशून्ये महीतले। काव्यदीपं विना कः स्याद्भूतवस्तुप्रकाशकः।
येषां करोमि वपुरस्थिरमत्र राज्ञां तेषामयं जगति कीर्त्तिमयं शरीरं।
आकल्पवर्त्ति कुरुते किमितीव रोषाज्जाताहरद्ध्रुवमतः कविजोनराजं।
श्रीजोनराजविबुधः कुर्व्वन्राजतरङ्गिणीं। शायकाग्निमिते वर्षे शिवसायुज्यमासदत्।
शिष्योऽस्य जोनराजस्य सोऽहं श्रीवरपण्डितः। राजावलीग्रन्थशेषापूरणं कर्त्तुमुद्यतः।
क्व काव्यं मधुरोल्लास्य क्व च मन्दमतेर्मम। वर्णमात्रेण मक्कोलं घनसारायते कथं।
राजवृत्तानुरोधेन न काव्यगुणवाञ्छया। सन्तः शृण्वन्तु मद्वाचः स्वधिया योजयन्तु च।
अथवा नृपवृत्तान्तस्तुतिहेतुरयं श्रमः। क्रियते ललितं काव्यं कुर्व्वन्त्वन्येऽपि पण्डिताः।
तत्तद्गुणगणादानात् स्वसम्पत्तिसमर्पणात्। पुत्त्रवद्वर्द्धितो राज्ञा ग्रामहेमाद्यनुग्रहैः।
अतो वाञ्छन्नमेयस्य तत्प्रसादस्य निष्कृतिं। सोऽहं ब्रवीमि तद्वृत्तं तद्गुणाकृष्टमानसः।
एकया तद्गुणग्रामं जिह्वया वर्ण्यते कियत्। रोमवत् कोटिशश्चेत् स्युस्तास्तदा सफ़िरः क्षमाः।
सत्यं नृपाम्बरेऽमुष्मिन्विपुले विमलाशये। गुणतारापरिच्छेदे न शक्ता भारती मम।
तथापि सकलं चित्रपटान्ते त्रिजगत् यथा। श्रीजैनोल्लाभदीनस्य न्यस्यामि गुणवर्णनं। १५
केनापि हेतुना तेन प्रोक्तं मद्गुरुणा न यत्। तच्छेषवर्त्तिनीं वाणीं करिष्यामि यथामति।
सात्मजस्य नृपस्यास्य प्राप्यते राज्यवर्णनात्। प्रतिष्ठादानसम्मानविधानगुणनिष्कृतिः।
स्वदृग्दृष्टमृतानेकविपद्विभवसंस्मृतेः। सूते कस्य न वैराग्यं नाम जैनतरङ्गिणी।

तद्देशकालविषमावस्थागतहतोऽपि सन्। स तत्र प्रेष्यवत् सैदपादशौचं समासदत् ।
उद्गन्धतामयोत्पन्नस्फोटवैकृतशान्तये । वैद्यैर्व्वरत्नाबद्धैकपादोऽभूज्जीवितावधि ।
तत्रोपायान् बहून् कुर्व्वन् स्वदेशविभवाप्तये। यथाकथञ्चित्तत्रस्थः पञ्चशः सोऽवसत्समाः।
अतःपरं किञ्चिद्वन्यचरितं कालवशाच्छिन्नं ।
स सिन्धुहिन्दुवाडादिदेशान् जित्वा वहिः स्थितान्। प्रतस्थे भुट्टदेशं स जेतुं सकटको नृपः।
वनमध्ये प्रविशैव नरकं कालपञ्जरं। भित्तिस्थदीपमात्रे ते पश्यन्ति स्म सकौतुकं।
तपस्तप्त्वा चिरं प्राप्य योगसिद्धिमसौ नृपः। फणीव कञ्चुकं पूर्व्वगुहायामत्यजत्तनुं।
इत्याकर्ण्य निनोऽन्ये वा ये वुद्धा सत्यमूर्जितं। तेषां प्रामाण्यमकरोत्स राजा च सविस्मयं।
ध्रुवं महानुभावत्वं विना व्यवहितं नृपः। जानीयात्कथमित्याह विद्वज्जनउदारधीः। इत्युपोद्घातः।

अथ राज्यवर्णनं।

ज्येष्ठमादमखानञ्च हाज्यखानञ्च मध्यमं। वहामखाममनुजं पार्थिवोऽजीजनत्सुतान्।
ज्येष्ठा लावण्यसौभाग्यसुभगैः प्राकृतैर्गुणैः। जनकं रञ्जयामास चन्द्रमाइव वारिधिं।
प्रत्यहं हाज्यखानः स कर्पूरइव सौरभैः। वाललीलायितैस्तैस्तैः स्वमुदात्तमजिज्ञपत्।
तौ सुतौ सम्मतौ पित्रोरपणायाचिपन्नृपः। स्वधात्रेयतया स्वस्योदयोष्ठकुरपत्रयोः।
स्वपत्तस्थापनादत्ताः परपत्तेष्टखण्डनाः। तार्किकाइव तेऽन्योन्यं धात्रेयाष्ठकुरावभुः।
सौदर्य्यस्नेहदृचस्य मूलच्छेदनकारिणः। तेऽन्योन्यगोत्रजद्वेषात्तयोरासन् समत्सराः।
राजपुत्रास्त्रयस्तस्य गुणातिशयसुन्दराः। तत्कृतान्योन्यवैरेण समं हृद्धिं समाययुः।
देहसमोदिशोऽयं तस्मात्मसमोमहीपालः। तस्मिन् ससुखे सुखितो दुःखिनि तस्मिन् सदुःखोऽसौ।
अन्योन्यं सरुषोराजपुत्रयोर्भिन्निदुर्णयात्। अभूज्ज्येष्ठकनिष्ठत्वं प्रक्रियारहितं तयोः।
श्रुत्वाथ पुत्रयोर्व्वैरमन्योन्यं जातु भूपतिः। आह स्मादमखानं स विदेशगमनत्वरां।
युक्तमुक्तं न गृह्णासि कुपुत्र यदि मद्वचः। मानप्राणधनध्वंसी प्रत्यूहस्तेऽन्यथाब्रवीत्।
श्रुत्वेति पितृसन्देशं स भृत्यानब्रवीदरं। तत्पर्णोत्समयायामः सुखं तत्रैव नः सदा।
अथोचुस्ते तव भ्राता दाता जातोऽत्युदारधीः। स्वतन्त्रीं भृत्यसात्कर्त्तुं स समो न भवान् कश्चित्।
वरं मरणमेवास्तु तदर्थे नोऽद्य सेवया। विक्रमादिगुणैर्हीनं न त्वामेवं भजामहे।
अग्रजानुजयोराजपुत्रयोः सुखदुःखयोः। विपर्य्ययं व्यधाद्वेधाः समातेव विभागिनोः।
अथाशङ्क्य नृपः पापं तद्धात्कृतिचिह्नैः। वहिर्न्निष्काशयामास भुट्टमार्गेण तं सुतं।
दक्षवाणप्रकारांश्च शिल्पिनः समदर्शयन्। यन्त्रोऽस्यापि ध्वनिर्धीरलोकहृत्कम्पकारकः।
तद्यन्त्रभाण्डभेदांश्च तत्तज्ज्ञातुमयान्नवान्। आनीतवान्नरपतिः संहतान् शिल्पिनिर्म्मितान्।
प्रशस्तिः क्रियतां यन्त्रभाण्डेष्विति नृपाज्ञया। मयैव रचितान् श्लोकान् प्रसङ्गात्कथयाम्यहं।
यदनुग्रहेण राज्ञां समयो लीलाविलासमयः। समयद्य यन्त्रतन्त्रैः स्थिराम्प्रतिष्ठां क्रियात्समयः।

रसवसुशिखिचन्द्राङ्के शाके नाकेशविश्रुतो राजा । श्रीजैनोल्लाभदीनः कश्मीरान् पालयन् विजयी ।
वर्षे शशिवेदाङ्के निर्मितवान् यन्त्रभाण्डमिदं । तदिति मौसुलभाषाख्यातं लोके च तत्काण्डमिति ।
दुर्गेषु दुर्गतिपरं छत्रस्फोटकरं तुरङ्गदत्तदरं । दूरोन्मुक्ताश्मशरं कटकबलान्यदृष्टचरं ।
सारं सुरीतिबद्धं घनघोषं शिल्पिकल्पितमहार्घम् । नवमिव नगरं नृपतेः कस्य स्याद्यन्त्रभाण्डमिदं ।
धातुविभक्तिस्फारात्पदप्रवृत्त्या प्रयोजिते शब्दे । अर्थोपलब्धिहेतोर्भवतिदं वृद्धिगुणयुक्त्या । ८०
इति पद्याङ्किता यन्त्रभाण्डाली व्यरचत्तदा । यद्गम्भीरध्वनिश्चक्रे मेघगर्ज्जिततर्ज्जनं ।
कालेनादमखानेऽथ भुट्टाञ्जिता समागते । हाज्यखानोऽकरोत् यात्रां लोहराद्रौ नृपाज्ञया ।
कथं हि छुरिकायुग्ममेककम्बुनि स्थाप्यते । इति ज्ञात्वा सुतौ राज्ञा कारितौ निर्गमागमं ।
जनकस्यान्तिके स्नानपानलीलोत्सवादिकं । आदमखानः सन्तोषविद्धेऽनुदिनं ततः ।

दृष्ट्वा सतीसरसि येन सुखस्थितिः सा भीतः स यद्यपि गतो घनकालदोषात् ।
यावन्न नाशमुपयाति किरातघातैस्तावत् कथं तदवमुञ्चति राजहंसः । ८५

अथाष्टाविंशवर्षेऽपि रात्रचलत्तादिभिः । इतोरितोऽकरोत् खानः कश्मीरागमनस्पृहां ।
स्वामिंस्त्वदग्रजीयास्ते कश्मीरसुखभागिनः । क्लिश्यामः परदेशेऽत्र वयमेव स्वदेशोज्झिताः ।
राजानकप्रतीहारमार्गेशकुलजादयः । अस्मत्प्रतीच्छिणः सर्व्वे तत्र वीरा बलोद्धताः ।
यद्यप्यवचनग्राही भूभुजो निश्चितो भवान् । तावतैव स किं क्रुद्धो हन्त्यस्मान् करुणापरः ।
युद्धायादमखानश्च निर्यातः स्वबलान्वितः । त्यक्तः स नश्यति चिप्रं श्येनाघातादिव पोतकः । ९०
अमी राजपुरीयाद्याः सर्व्वेऽस्मच्छुभकाङ्क्षिणः । तत्तेनैवाधुना यामो न किं सिद्ध्यति साहसात् ।
मृतेऽरिगप्रतीहारे वीराः के सन्ति तत्पुरे । इति त्वत्पैत्रकपदं हर्तुं गन्तुं तवोचितं ।
श्रियास्तेऽमी वयं भृत्यावीरास्तत्पैत्रके सह । यास्यामः कीदृशं शौर्य्यमेकदा द्रष्टुमर्हसि ।
तथेत्युक्ताय खानेन पृष्टो तन्मन्त्रिणो मतं । सफिर्य्यडामरस्ताजतन्त्रेशश्चेत्यवोचतां ।
देव त्वत्सेवकाः सर्व्वे स्वगृहोत्कण्ठिताशयाः । देशकालावनालोच्य कथयन्त्यसुखप्रदं । ९५
कथमभ्यन्तरं यामः सति राज्ञि बलोर्ज्जिते । प्रदीप्तं व्योम्नि मार्त्तण्डं कुण्डेन पिदधाति कः ।
यावज्जीवति भूपालस्तावत् कोऽवाधितुं क्षमः । मनोऽनुवर्त्तनं कर्त्तुं तद्युक्तं तव साम्प्रतं ।
प्रसन्ने जनकेऽस्माकं भवेयुः का न सम्पदः । ईश्वरे च गुरौ भक्तिर्जायते पुण्यकर्म्मणां ।
अस्य कोपेन यत्स्वार्थं परानुग्रहतोऽनु तत् । दुर्द्दिने या रवेर्दीप्तिः प्रदीपाज्ज्वलतो न सा ।
खेनोक्तिश्याममालिन्यं सततं नयसेविनः । हृदयादर्शवैशद्योत्थमकं नास्य दृश्यते । १००
निर्व्वाणगोष्ठीनिष्ठस्य तद्वच्छास्त्रविवेकिनः । कृपाब्धेरस्य नो किञ्चित् कृत्यमस्त्यसुखप्रदं ।
तद्दुग्धपिष्टपेषेऽपि स्वामिभक्तिं न सोऽत्यजत् । तेनैवाप्तत्वतः श्लाघ्यस्तस्याभूत् जैनभूपवत् ।
सौहार्दमार्दवोपेता योग्या कार्य्यविचक्षणा । जाने तेनैव पुण्येन सन्ततिस्तस्य राजते ।
स पिता त्वं सुतस्तस्य वयं सर्व्वे त्वसेवकाः । गत्वा चेत् कुर्महे युद्धं जयोऽस्माकं भवेत् कथं ।

हताश्चेत् केऽपि तद्भृत्या मद्भृत्यस्य का क्षतिः। एकपक्षक्षये किं स्यात् गरुडस्य अशक्तता।
न शिलाप्रचुराः सन्ति देशाः पर्व्वतदुर्गमाः। तथापि जनकस्तेऽस्मान् कालोविग्रहस्य नः।
भजत्वभ्यन्तरं राजा वयं वाह्यं भजामहे। तत्प्रमादादिदैवात्सा राज्यं छत्रं विना न किं।
ते चेद्युद्धार्थमेष्यन्ति न जेष्यन्त्यस्मदन्तिकात्। वयञ्चेदन्तरं यामो न जेष्यामः कदाचन।
इति दर्पात् स श्रुत्वापि खानः शूरपुराध्वना। अगाद्राजपुरीं त्यक्त्वा कश्मीरान् पिशुनेरितः।
अस्मिन्नवसरे श्रुत्वा स्वपुत्रं गृहमागतं। गृहीत्वा स्वबलं तूर्णं नगराच्चिरगान्नृपः।
गच्छन् सकटको राजा मरणे कृतनिश्चयः। सदुःखो निश्वसन् श्लोकमिममेकमपाठयन्।
राज्येऽपि हि महत्कष्टं सन्धिविग्रहचिन्तया। पुत्रादपि भयं यत्र तत्र सौख्यस्य का कथा।
अधर्म्मशङ्का दूरेऽस्तु युद्धे जनकपीडया। वैधेयातिविधेयेन येन स्नेहोऽपि विस्मृतः।
त्वयि कुर्व्वति साधाज्यं यः खेदाय समागतः। स यातु सबलः शीघ्रं त्वद्वीर्य्याग्निपतङ्गतां।
त्वमेवाद्यप्रभृत्येकं राज्यं क्रिया धर्म्मक्रिया भजन्। वैरिणो विमुखा यान्तु रणे लब्धपराभवाः।
सोमस्वित्यधिकारस्थास्ताः शृण्वञ्जनपदाधिपः। प्रापत् सकटकोराजा स सुप्रसमनाभिधं।
अथ पर्णशिलास्थाने पितापुत्रबलद्वये। सन्नद्धे नृपतिर्दूतं विप्रमेकं व्यसर्ज्जयत्।
स गत्वा नृपसन्देशमब्रवीदिति निर्भयः। किं वक्षीति क्षणं क्रुद्धैस्तद्भटैः परिवेष्टितः।
राजपुत्र महावाहो दाक्षिण्यामृतसागर। शृणु पित्रा समादिष्टं यत्तत् सर्व्वं ब्रवीमि ते।
फलं संसारवृक्षस्य लाभोऽमुत्र परत्र च। पित्रोर्नैवात्मजो नित्यं पुत्रः केनाम निन्द्यते।
सर्व्वः सञ्चिनुते सर्व्वं पुत्रार्थं प्रयतो यतः। वार्द्धके वचनग्राही भवेत् पितृसुखप्रदः।
इत्थं लोकद्वयं स्थित्यै त्वयि जाते सुते मम। दूरे सर्व्वसुखाशास्तु चिन्ता प्रत्युत वर्द्धिता।
त्वत्पतोदुर्व्वनाश्वासैर्निःश्वासैरयदवान्वहं। मलिनीकुरुते शुद्धं मद्राज्यं मुकुरोपमं।
जीवनाशैकघना ये मे समन्युच्छृङ्खलाः खगाः। सुचिरं नैव तिष्ठन्ति सरसस्सारसा इव।
मदादेशं विना देशं किमर्थं स्वयमागतः। केन राज्यं बलात् प्राप्तं निजभाग्योदयं विना।
वाह्यदेशावनिः सर्व्वा भुज्यते त्वयके न किं। येन मण्डलमात्रं मेऽवशिष्टं हर्त्तुमागतः।
तन्निवर्त्तस्व मा पुत्र पापबुद्धिं वृथा कृथा। बलद्वयवधात् पापं तवैतत् परिणेष्यति।
इत्युक्तिः पैतृकी प्रोक्ता किन्तु सत्यमहं ब्रुवे। नश्यन्ति भूपाः स्नेहनाशात् लड्डुदायादकाः इव।
इति प्रत्याचरामुक्तिं श्रुत्वा विप्रस्य ते भटाः। छित्वा कर्णौ व्यधुरक्ता दायादेषु विशेषकान्।
तं दृष्ट्वा हाज्यखानोऽथ सत्रपः पितुरागमत्। अभिमन्युप्रतीहारमुख्यानाख्यदिदं वचः।
वरं पादप्रणामार्थं पितुर्यामद्य मुतोदवात्। भूपस्तुष्टोऽथ रुष्टो वा यत् करोतु करोतु तत्।
सर्व्वथा तातपादा मे सेव्या रक्षेत् स नो ध्रुवं। तस्मात् कुरुत युद्धेऽस्मिन् धैर्य्यं चेन्मतं मम।
किन्तु स्वप्नेऽपि भूपाय नानिष्टं चिन्तयाम्यहं। योऽसौ देवाधिकः पूज्यो लोकद्वयसुखप्रदः।
कष्टोऽयं समायाति रणायायाति भो नृपः। इत्युक्तं तेन सर्व्वांस्ता नाहं पितृवधोद्यतः।

श्रुत्वेति मन्त्रिणस्ताजत्निपत्न्यादयस्ततः। तत्तुरङ्गान्तवल्गाग्रा निष्ठुरं तेऽब्रुवन्निति।
यदोक्तं समयेनायं याम इत्यवधीरितं। आरब्धस्यान्तगमनं तद्युक्तमधुना तव।
यूयं चेत् जातसौहार्दा मार्दवानन्दितापराः। वयमेव हताः कष्टं क्लिष्टास्त्वत्सेवनाश्रया।
भवेत् सन्ततयोः सन्धिर्नित्यं तैलकटाहयोः। तदन्तः पूरणी चिप्ता सैव दन्दह्यते क्षणात्।
भवान् स्वामी वयं दासाः पौरुषं पश्य साम्प्रतं। जयस्चेत्तव राज्यश्रिर्नष्टो याहि यथागतं।
यावत् युद्धं करिष्यामस्तावदेव विलम्ब्यतां। हतेष्वस्मासु कर्त्तव्यं यत्पुनस्तत् समाचर।
अस्मदुक्तं न गृह्णासि यदि त्वं पितृवत्स्थितः। त्वय्येवानुचितं कृत्वा पुनर्यामो दिगन्तरं।
इति निर्भर्त्सनावाक्यजातभीतिर्नृपात्मजः। ततश्चिन्तार्णवे मग्नो युद्धश्रद्धामगाहत।
अत्रान्तरे द्विजं तादृगवस्थं वीक्ष्य भूपतिः। मुराराति रिव क्रुद्धो युद्धसन्नद्धतां दधे।
शुक्रयोगजनामर्षपरीचणविचक्षणः। स्वपचरक्षणं क्षापः पृष्ठीकृतरविर्व्यधात्।
राज्ञः पृष्ठगतः सूर्य्यः खड्गान्तःप्रतिबिम्बितः। जयस्ते भवितेत्येव वक्तुं व्योम्नोऽवतीर्णवान्।
कियन्तोऽमीति यावत् सोऽचिन्तयत्तावदग्रतः। अर्कदीप्तिज्वलच्छस्त्रद्युतिद्योतितभूतलं।
निर्धावमानहयसंघोगपतद्भटदुरङ्गमं। गणशोगणशोधावत् तत्सैन्यं समवैक्षत।
कोऽन्योवीरोहाज्यखानाद्येराज्ञा वाग्रजेन वा। गृहीतसर्व्वसैन्येन धैर्य्यात् क्रष्टुमशक्यत।
तत्र मर्म्मप्रहारक्रमभङ्गतास्तत्रटा भटाः। व्यङ्गदङ्गविदङ्गानां मान्यभङ्गिमदर्शयन्।
ववर्ष शरधाराभिः स भूपकटकाम्बुदः। स्फुरच्छस्ततडिज्ज्योतिस्तूर्य्यगम्भीरगर्जितः।
अन्योन्यमिलिताः कांस्यघनत्वकठिमाघनाः। अन्योन्याघातमहता नदन्तः संहता बभुः।
भटा नयन्ति मां युद्धे मां मा ताडयत द्रुतं। इतीव तारं दध्वान खानस्यानकदुन्दुभिः।
पूर्व्वं मया प्रतीहारमुख्या गुरुतर्जिताः। रणे फलतया दृष्टा रवेर्हस्तेऽर्धना इव।
ततोभूपप्रसादात् क्रुद्धौ धाचेयौ भूपतेर्हितौ। ठक्कुरौ निरगातान्तौ वीरौ हसनहासनौ।
सुवर्णपीठपाद्या राजपुत्रा रणाध्वरे। शस्त्रज्वालाप्रलीढे जुहुवुः श्रीफलं वपुः।
ते वीरभ्रमरास्तत्र रणोद्याने तदाभ्रमन्। स्वामिमाधरसान्निध्यावमःकुसुमलम्पटाः।
ते वीरमस्तकच्छिन्ना रणभूभाजने स्फुटं। सुप्तमस्य हताम्तस्य कबन्धादिव रेजिरे।
रणतूर्य्यस्वनैर्धैर्यभङ्गकोलाहलस्तया। वीराणां सिंहनादैश्च शब्दाद्वैतमजायत।

तच्छुद्धये चणमिवेत्य नृपप्रसादं प्राप्ते चणे जहति ये निजजीवितांशं।
तत्रादिरस्तपरिरक्षणधर्मलब्धा धन्यास्तएव कतिचिन्नृपसेवकेभ्यः।

राजपादागताखोहणः शरासनपथपातिनः। स्वयं पातीति भीत्येव सुलक्ष्मः समपीदयन्।
भ्रमसेनाश्रया राजपुत्रस्यापि तु मापुना। सकम्पा रणभीत्येव पयात्प्रागमस्रियम्।
इत्थमत्रा[illegible]र्घोरचिरःक्षमम्भिर्भरा। श्रीवनामा सजम्भा नलिनी रणभूरभूत्।
शौर्य्यमत्यद्भुतं दृष्ट्वा तुनोत्स्यकटकस्य च। पुनर्मांगनिशाश्रमे रणोत्कीर्णे नृपोऽविशत्।

हत्वा सर्व्वदिनं युद्धं बलाद्भृत्यैर्निवारितः । हाज्यखानः सवित्राणः समरात् स न्यवर्त्तत ।
भग्नं निजानुजं दृष्ट्वा पश्चाद्भग्नो विनिग्नधीः । श्रयजोऽप्यावधीद्ग्रान् मग्नांस्तावार्णवे भटान् । १६६
किमुच्यते नृपबलं येन शूरपुरान्तरे । अन्ययाप्यागतोमोहाविहतः पथिकव्रजः ।
यस्यां मन्दप्रभो भास्वान् गणैः सर्व्वैर्विलोकितः । दक्षिणस्यादिशस्तस्याः प्रवासी स नृपोऽभवत् ।
दुर्य्योधनार्पितरसा गुरुमन्त्रविष्टा भीष्मप्रिया परहतिं प्रति दत्तकर्णः ।
ये धर्म्मजातिविमनस्कतया कुपेच्छास्ते कौरवाइव रणे न जयं लभन्ते ।
अन्येद्युर्हतशिष्टांस्तान् भृत्यानानीय पूर्व्ववत् । हाज्यखानः सानुतापश्चिरदेशे स्थितिं व्यधात् ।
खिन्नानाश्वासयन् कांश्चित् सभिन्नान् प्रतिपालयन् । अचयन् क्षुधया क्षीणास्तगाये सोऽनयन्निशां । १७०
मा वाधिष्ट सुतं कश्चित् मत्परो वातिविह्वलः । इति कारुणिको राजा न्यवर्त्तत रणात् द्रुतं ।
आमिथ्ये सुखितः सुतार्पितभरोवृद्धेति दत्तानिजा राष्ट्रेशावरसेवकाः सतुरगाः सम्वर्द्धिता ये मया ।
तेऽमी राज्यजिहीर्षव सुतरता युद्धाय मय्यागता धिक्कां येन नयोज्झितेन घृण्यानर्थः स्वयं स्वीकृतः ।
इत्यादि विमृशन् राजा स्वपुरं दुःखितोऽगमत् । विरोधादायिनो निन्दन् सेवकान् विधिकर्म्मणा ।
सङ्ग्रामस्तवीरेन्द्रच्छिन्नमस्तकपङ्क्तिभि. । आनीय राजा नगरे सुखागारमकारयत् ।
इत्थं सेवकपैशुन्यात् पितापुत्त्रविरोधत. । समरे तत्र सर्द्धं वीरलोकक्षयोऽभवत् । १७५
राज्यस्थितिप्रविकसन्नलिनीहिमौघोलोकक्षयोचितमहाभयधूमकेतुः ।
विन्नमसक्तखलघूकनिशान्धकारः शापः सुखस्य नृपतेः स्वजनैर्व्विरोधः ।
श्रीमानसिंहनृपते तव नामवर्णाः पञ्चेषुपञ्चविशिखन्ति नितम्बिनीषु ।
प्राणन्ति वन्धुषु विरोधिषु पाण्डवन्ति देवद्रुमन्ति कविपण्डितमण्डलेषु ।
इति पण्डितश्रीवररचितजैनराजतरङ्गिण्यां मल्लशिलायुद्धवर्णनं नाम प्रथमः सर्गः ॥
भूभर्तोनिर्गता प्रेमसरित् मोक्षानुजच्छलात् । प्रत्यावृत्ता कियत् कालं शुद्धायशर्मशिश्रियत् ।
स्नेहभागी सुदशाभिरामोभाति प्रदीपः समुपास्य पात्रं । आशाप्रकाशैकनिधेस्तदारादर्शविधानेन विरोचनस्य ।
दद्यावादमखानाय नायकः स चिनोत्तदा । प्रमेयान् क्रमराज्यस्थाननुजीयाच्चिरागतः । १८०
जस्टहे सं च वित्तोघं स्टहयामादिदेवगं । हाज्ये हैदरखानीयं पानीयमिव वाडवः ।
ततः प्रभृति ज्येष्ठस्य कश्मीरान्तर्नृपाग्रगः । यौवराज्ये सुखं तदद्भुभुजे पञ्चषः समाः ।
येषां सुखं वितनुते विधिरप्यहृद्या दुर्भिक्षदुःखमपि सन्तनुते स तेषां ।
हृष्ट्वा विवर्द्धयति यानि हत्वानि मेघस्तान्येव शोषयति भाविं तुषारभारात् ।
सर्व्वशस्यसमृद्धेऽस्मिन् देशे षट्त्रिंशवत्सरे । अकस्मादभवद्वैवे गगणात् पांशुवर्षणं ।
बभूव वर्षः षट्त्रिंशः सर्व्वहृष्ण्यिकुलक्षयात् । भयकृत् सर्व्वजन्तूनां भारतादिति विश्रुतं । १८५
अभवन् पञ्चपुष्पौघाधूलिधूसराननाः । भाविदुर्भिक्षपीडार्त्तजनचिन्ताविषादिव ।
भविता वत्सरेऽमुष्मिन् दुर्भिक्षं पांशुवर्षणात् । इत्याख्यन्नुत्तरं दृष्ट्वा भूभुजा दैवविज्जनाः ।

षट्त्रिंशोवत्सरोऽतीतोदुर्भिक्षातिप्रदोऽभवत् । श्यमस्तादृशः प्राप्तोभीतिरित्युदभूद्धृदि ।
पपात मार्गशीर्षेऽथ मास्युपद्रवदर्शनं । देशेऽत्र विलसच्छालिमाले प्रालेयवर्षणं ।
दुर्भिक्षदुस्थितं लोकं कथं पश्यामि साम्प्रतं । इतीव भूरभूच्छन्नमुखी हिमसितांशुकैः । १९०
छादिताः शालयः पक्का हिमैर्जनमनोहराः । खलमूर्खसभामध्ये पण्डिताः सगुणा इव ।
क्षुत्क्षामावेगाद्बुभुक्षार्त्तैः चपिताक्षः क्षणे क्षणे । आशु दुर्भिक्षयक्षोऽत्र व्यधात् प्रक्षीणलक्षणं ।
प्रविश्य रात्रौ गेहान्तः क्षुद्रचद्रोहपीडितः । हिरण्यादि धनं त्यक्त्वा भाण्डेभ्योऽन्नमपाहरत् ।
सर्व्वस्मिन् दिवसे रात्रावपि भिक्षुपरम्पराः । शरादशाविशन् देहे गेहे धान्यवहे तदा ।
धान्यवहृद्दसन्दिष्टकष्टकम्बुकदम्बकाः । नीरसापूपभोगेनाप्यरचन् कोऽपि जीवितं । १९५
पालीपालीवताशक्तघ्टद्धटङ्कितभाजनः । चिराच्चिरास्वादरतः कोऽपि कोऽपि हतोऽभवत् ।
क्षीणा ग्रामेषु वास्तव्याः केचिदन्नाम्हताशये । शाकमूलफलाहारा व्रतनिष्ठा इवाभवन् ।
चिराजाद्धान्तरे क्षिप्त्वा शाकं किमपि तण्डुलं । पक्त्वाऽन्ये केऽपि तद्भागादकुर्व्वन् प्राणधारणं ।
सर्पिर्लवणतैलानां तण्डुलेन महार्घता । हृता नीचेन साधूनामिव सर्व्वोपयोगिनां ।
बहुधान्यकथानिष्ठो योऽभूत्पूर्व्वं पुरान्तरे । बहुधान्यकथानिष्ठस्तत्कालं स व्यलोक्यत । २००
बन्धुजीवसदाकन्दो बन्धुजीवइवाभवत् । मन्दान् मन्दारयामास क्षुधान्धान् योऽन्धसा विना ।
धान्यखारः कृतः पूर्व्वं दीनाराणां शतत्रयं । दुर्भिक्षेनस्तदा सार्द्धसहस्रेणापि नापि सः ।
किमन्यत्कुत्रचिद्राष्ट्रे धात्रा निष्किञ्चनो जनः । अभवन्माण्डकुण्डस्य काञ्चिकेनापि वञ्चितः ।
यत्पूर्व्वमकरोद्देशे रसवद्वीहिशालिषु । मन्ये तेनैव शापेन भयमापत्प्रजेदृशं ।
करुणाकुलितो राजा स्वधान्यैः पुत्त्रवत् प्रजाः । पोषयामास मासेषु केषुचिद्यावदाकुलाः । २०५
तावद्देव माहात्म्यात् शस्यसम्पद्व्यजृम्भत । सत्यव्रतानां भूपानां कावकाशश्चिरं शुचां ।
मन्त्रिऽथ वारिधिर्भूपकारुण्यमयनेच्छया । दौर्भिक्षरौरवाद्लोकं सशोकमकरोत्तदा ।
पार्थिवोपप्लवे चौराश्चान्धकारेऽभिसारिकाः । दुर्भिक्षे चैव तुष्यन्ति धान्यविक्रयिणो जनाः ।
अतः क्षुधामहार्घाये पदार्थां धान्यविक्रयात् । गृहीतास्तेऽन्यदा पूर्व्वमूल्येन प्रापयन्नृपः ।
दुर्भिक्षभक्षिताचोटलोकदक्षः क्षितीश्वरः । धिया मरलहृदेभ्यस्तिलाकर्षणमादिशत् । २१०
तस्मिन्सम्वत्सरे राज्ञा कारुण्याद्बूरगामिनो । उत्तम श्रीवमर्णानां व्यवस्था विनिवारिता ।
चतुःषष्टिकलाः शिल्पं विद्या सौभाग्यमेव च । दुर्भिक्षोपप्लवे सर्व्वं तदाभून्निष्प्रयोजनं ।
पदवाक्यतर्कनवकाव्यकथासङ्गीतवाद्यनृत्यकलाः । सुरतप्रसङ्गचतुरा वनिताः क्षुधितस्य नैव रचयन्ति सुखं ।
इति जैनतरङ्गिण्यां पण्डितश्रीवरविरचितायां षट्त्रिंशवर्षे दुर्भिक्षवर्णनं नाम द्वितीयः सर्गः ॥

तुष्टः प्रसादमतुलं कुरुते क्षणाद्यः क्रुद्धः प्रजासु कुरुते भयमप्रतर्क्यं ।
उन्मत्तपार्थिवपतेरिव हन्त धातोर्लीलास्वतन्त्रचरितं भुवि बुध्यते कैः ।

षट्त्रिंशवर्षदुर्भिक्षदुःखविस्मरणं जनः । न यावदकरोत्तावदष्टात्रिंशेऽपि वत्सरे । २१५

इच्छया सह रजोवर्षमपतद्गगनाङ्गुवि । उपादीयत शान्त्युत्यभाविदुर्भिक्षचक्रं ।
अथाचिरेण गर्जन्तो धृतचापाघनाघनाः । जनानुद्वेजयामासुः शरासारैरिवारयः ।
दृष्युपद्रवसन्नद्धा ' इवर्द्धिहरणाकुलाः । उत्यिता वुद्वुदव्याजादुष्टा नागफणा इव ।
उत्पन्नध्वंसिनोभावान् करिष्याम्यहमञ्जसा । इति ज्ञापयितुं मेघो वुद्वुदानसृजद्बहुत्रं ।
इचाः सर्व्वत्र पत्रान्त.पतद्दृष्टिस्खनच्छलात् । अस्रुविन्दूनिवामुञ्चन् रुदन्तो जनचिन्तया ।•
वितस्ताचेदरीसिन्धुचिषिकाद्यास्तदापगाः । अन्योन्यस्पर्द्धयेवोग्रा ग्रामांसीरेष्वमज्जयन् ।
सविभ्रमाधृतावर्त्ता वाहिन्युत्थास्तुदेपिताः । जवादधावन्नुत्तुङ्गास्तत्त रङ्गतुरङ्गमाः ।
अत्युच्चापातकन्नीचोन्नतिदस्त्र निरङ्कुशं । आसीदपथगं सत्यं तदा जलविजृम्भितं ।
स्वदो जलस्य तत्कालेऽद्रिष्टसविटपालिषु । केनोपदिष्टं तत्काले मूलोत्पाटनपाटवं ।
अपायपशुगोप्राणिगृहधान्यादिहारक.। भयदोऽभूज्जलापूरः स स्वेच्छोत्पिञ्जसन्निभः ।
तदा मडवराज्यस्था विशोका शोकदा नदी । प्रदक्षिणेच्छयेवान्त [र्व्वि] वेश विजयेश्वरं ।
स्थानात्पापहरी पूर्व्वप्रवाहोपगता नदी । इतीव तज्जले हृष्टं ममज्जुर्गृहपङ्क्तयः ।
पुराणेषु प्रसिद्धा या विशोका शोकनाशिनी । तदाभूद्विपरीतार्था प्रजाभाग्यविपर्य्ययात् ।
येभ्यः प्रतिष्ठा प्राप्ता तान् दुःस्थान् द्रष्टुमसाम्प्रतं । इतीव तोये तत्कालं ममज्जुर्नगरे गृहाः ।
शिलादारुमयी सप्रस्तम्भीभूतचतुर्म्महा । चतुष्पादिव धर्म्मीया लोकोत्तरण्डदम्भा ।
दारदाधामपङ्क्तस्य दर्शनाय विशाम्पतेः । यात्रागतस्य लोकस्य सेतुवन्धइवाभवत् ।
वितस्तायां कृता जैनकदलिः सम्टहोज्ज्वला । जलावेशात्तटोन्मग्ना भग्नाद्य नगरान्तरे ।
पादद्वयावशेषापि स्थापितापि भविष्यतां । पाददयं पूरयितुं समेत्यत्र महीभुजां ॥ चतुर्भिः कुलकं ॥
क्रमराज्ये तदा कुर्व्वन् कल्लोलैराकुलं जनं । महानप्युसरोवेगाद्गाढुर्गपुरान्तरं ।
अन्य सरोवरः कोऽपि पद्मनागसरोन्तिकं । भीत्या किमागतो दूराद्यं दृष्ट्वा विशशङ्किरे ।
स्वयमुत्पाटयत्यस्मान् इचवत् सहसागतः । इतीव तत्र वेश्मानि चिक्षिपुः स्वजलान्तरे ।
दूरे समुद्रो मर्य्यादा कोऽयं हि समुपागतः । इत्थं वितस्ता तत्रैव प्रतीपमगमत्तदा ।
सीमोज्झिता चतुर्म्मार्गा पद्मातङ्ककलङ्किता । स्थितिः कलियुगस्येव भूरभूज्जलपूरिता ।
तस्मिन्नवसरे धारासारं वर्षति वासवे । नौकामारुह्य भूपालो निर्गाज्जलचिन्तया ।
पश्यन् जलान्तरे मग्नां कृषिं कृशतरः शुचा । जनकारुण्यपुण्यात्मा विचचार पतिः स्वयं ।
दृष्टानि यानि घोषेषु गहनत्वान्न जातुचित् । स्थानानि तानि भूपालो नौकारूढोव्यलोकयत् ।
प्रतापस्निग्धिखिनेवाथ शोषितोऽगान्मितैर्दिनैः । शान्तिं क्रूरोजलापूरस्तं विसारे समागतः ।
अथाचिरेण तद्वर्यं दानोत्कर्षादिव प्रभोः । हर्षमन्वभवन् सर्व्वे पक्वया शालिसम्पदा ।
प्रभाचन्द्रकलाहृष्टो कश्मीरेन्द्रपयोनिधिः । हर्षं पूर्णात्मतं प्राप दयापीयूषभूषण ।

आत्मेव कश्चित् सुकृती क्षितीशः प्रजा प्रियास्य प्रकृतिर्यथैव।
तस्यास्यदृद्धा सुखिता यदासीत् तदीयदुःखेन च दुःखयुक्ता।

वितस्तोत्तरतटे भूपस्तदुपद्रवशङ्कया। पुरं चिकीर्षुर्बभ्राम जयापीडपुरान्तिके।
अकरोत्तिलकं भूमेरलकादर्पहृत्पुरं। स जैनतिलकं नाम नदीतीरान्तरस्थले।
राज्ञोऽदिदृक्षयैवात्र राजधानी क्वचित्छलात्। सौधभित्तिगता नूनं चन्द्रिकास्ते सुधासिते।
मूलोत्पाटे दशास्येनारिभिर्मेषेन विवर्द्धितः। इतीव खिन्नः कैलासः सौधव्याजादिवागतः।
सुधासितगृहा यत्र सन्नागारवसुन्धरं। जयापीडपुरं जीर्णं हसन्तीव क्वचिच्छलात्।
तद्द्वारोत्सुकस्यास्य राज्ञः प्रत्यक्षतां गतं। मयासुरपुरं किम्वा यद्दृष्ट्वेत्यवदन् बुधाः।
यद्द्वारि कान्तं सङ्क्रान्तं परितः सरितस्तटात्। द्वारिकां हसतीवास्य द्वारिकान्त्या सुधासितं।
तत्र राजपुरीयाय जयसिंहाय भूपतिः। प्रददौ राज्यतिलकं निजजन्मदिनोत्सवे।
तत्रोपविष्टः सन्तुष्टः सेवयास्य महीपतिः। भट्टतन्त्राधिकारञ्च प्रददौ ब्राह्मणप्रियः।
काश्मीरकाश्यदेशीयसर्व्वगीताङ्कितानने। तस्मिन् सम्वत्सरे राज्ञा चक्रे कनकवर्षणं।
तत्रोपकण्ठे भूपालः स्मृत्यै कण्ठीरवद्विषः। हेलालनाम्नो दासस्य हेलालपुरकं व्यधात्।
शेषपीठं विधायोर्व्वीजयापीडपुरान्तरे। सरस्तीर्थे मनोहारिराजवासं स्वकं व्यधात्।
उदीपर्गुडितं जीर्णं निर्लुण्ठ्योपसरोवरं। महाप्रज्ञानपश्यक्षे तद्द्राजगृहावलिं।
नागयात्रोत्सवे यत्र प्रत्यब्दं दिनपञ्चकं। गणचक्रोत्सवे राजा योगिनीभोगिनीर्व्यधात्।
यत्र कादम्बरीचोष्यअन्नादिसंपूरितः। कृत्वा पुष्करिणीस्सर्व्वान् स यथेच्छमभोजयत्।
यत्र योगिसहस्रोत्थगद्गदनादासक्तश्रुतेः। जाने मानसनागोऽपि न्यमीलन्निजचक्षुषी।
न तदन्नं न तन्मांसं न तन्मत्स्यं न तत्फलं। न ते भोगा न ये राज्ञा भोजिता भोजनक्षणे।
योगिनां त्रिविधाशेषं मद्यमत्तमथोदितं। अपहिष्ट नृपो भक्त्या यदसह्यं जनैरपि।
महार्घपरिधानोद्दाममानादिलाञ्छनैः। तेषामधिपतिं यत्र मेरं स्वसदृशं व्यधात्।
सत्कन्या किन्नरामुश्रद्दण्डायैर्दशमीदिने। भारिकान् योगिनः कृत्वा प्रत्यमुञ्चत्ततो वहिः।
वितस्ताजन्मपूजार्थं त्रयोदश्यां ततो नृपः। दीपमालादिदृक्षुः स नौकारूढोऽभ्यगात् पुरं।
सुभावितानि संस्कृतम् मङ्गलानि जलान्तरे। समारोहावरोहाभ्यां सपौरान्प्रियमयहीत्।
पूजार्थं प्रस्फुरत्पौरदत्तदीपप्रतिच्छलात्। वितस्तान्तरमायाता तीर्थकोटिरिवाद्युतत्।
पारावारतटप्रस्तादीपमालाहृदा दृशा। अर्धनारसुरोत्सुकसुवर्णकुसुमश्रियं।
शितशायसिपूज्याससागरीमुक्तनिर्जितः। सज्जया यस्य तेन्दुसुधाशातः प्रतिमास्फसात्।
गर्भोपर्य्यीश्वरागतिः सुपर्वश्व सौनया। सम्भ्रान्ते राचिं स गान्धर्व्वपर्व्वरमयत् सुखं।
सन्धिः शिशौ गुणिकाम्यशोदिनपतिर्धवोदयानुपदाहृता कृत स सर्व्वदर्शनसुस्नात् प्रपञ्चकदर्पस्थितिः।
सिन्धौ सख्युः सुतौ पितुर्मिर्मद्गृहे रोचकयोपादकौ ये कालोऽयमिति प्रयागपगतौ क्रूरवधे निश्चितौ।

अत्रान्तरेऽनुजद्वेषवशात् कलुषिताशयः। आदामखानोऽनिशं देशमाक्रामयद्धठात्।
यत्रास्मिन्नतिकठिनसन्ततन्त्रिनयन्त्रिणः। दुर्मन्त्रिणोऽभजन्नाशि तस्मिन् सोऽपि स्वतन्त्रतां।
स्फीते भोतेन कामोऽस्ति शास्ति न रसिकोऽभवत्। केवलं मृगयासक्तश्चमत्कारं व्यभिर्व्यधात्। १७५
सरसामन्तरेऽरण्ये यत्र कुत्रापि तिष्ठतः। मृगयारसिकस्यास्य रात्रिं दिनमिवाभवत्।
किमुच्यतेऽन्यन्नीचत्वं यत्कृत्यैर्व्यवहारिवत्। श्येनसंघनपचौघविक्रयोनगरे कृत.।
अथैकदा विभज्यासौ यौवराज्यमदोद्धतः। क्रमराज्यं नखत्याज्यं ययौ प्राज्यपरिच्छदः।
यत्र यत्रोपविष्टः स पापनिष्ठोऽप्यनिष्टवत्। अभवन् पीडिताग्रामीणाक्रन्दमुखरा दिश.।
प्रसादमतुलोदग्रप्रतिग्रहदृढां चितिं। उपग्रहइवात्युग्रः सञ्जहार पदे पदे। १८०
क्वचिद्भीत्या क्वचिद्भीत्या क्वचिन्नीत्या विलोभयन्। लोभग्रस्तोबलात्कारान्न केषामहरद्धनं।
स प्राकृतइव व्याजमैत्रीं कुर्वन् गृहागतः। लोभादन्यांश्चवत्यांस्तानन्यान्नित्तैरवञ्चयत्।
नीताचारकृताद्युक्त्या सभयास्ताडयन् स्त्रियः। तदुक्तादण्डयत्तस्य ग्रामीणान् सेवकव्रजः।
तत्तद्दिनिग्रहस्थानसावधानमतिस्तदा। स तार्किकइवात्युग्रोराष्ट्रियैर्दुर्जयोऽभवत्।
जायासुषादुहित्राद्या भव्या येष्वभवन् गृहे। बलात्प्रविश्य सम्भुक्ता निर्लज्जैस्तस्य सेवकैः। १८५
समाण्डमत्स्यं कुण्डैस्ते पीत्वा शुण्डान्तरे मधु। भाण्डाइव मदोच्चण्डाः स्वाधैर्भाण्डमवादयन्।
तण्डुलांश्च कुसूलेभ्यः शालाभ्यः पीनवत्कराः। वीटिकाभ्यः स्वयं मद्यं भुक्तं तैर्बलकारिभि.।
सैव कानौचिती तस्य कियती वर्ण्यते मया। येऽश्वमूर्द्धनि वास्तव्यान् घृताभ्यङ्गमकारयन्।
हस्तौरिव ज्वालाभिस्तैलपूर्णा हर्षन्तिकाः। तान् कारयित्वा ये दीपान्निशास्वज्ज्वलयन्कठाः।
इत्यादि कुत्सिताचारं भारार्त्तइव भूपतिः। विश्वम्योदेजिनोलोकैर्निर्गन्तुं नाशकद्दूशात्। १९०
पीडां मा कुरुतेत्यादि राजदूते ब्रुवत्यमी। अवोचन्निति तद्भूत्या राजा क्रन्दतु पीडितः।
वैरं वो गुरुभिः करोति सततं पुण्याङ्कवं दुर्मतं कोपात् शक्रसमात लोक्यनुदिनं तद्द्रातभोगोज्झितः।
दीनान् ग्राम्यजनांश्च पीडयति योनिर्देतुमत्याचिपंस्तस्यासन्नविनाशिनः स्वविभवत्रायाय शापाय वा
कुर्वन् स्वसैन्यसामग्रीं कुद्दहेनपुरे स्थितः। एकदा जैननगरे भूपालं सबलोऽभ्यगात्।
तद्दिने शङ्कितस्तस्मात् पूर्णकर्णादुरुक्तिभि.। स्वसैन्यमङ्गुहं राजा राजधान्यां गतोऽकरोत्।
वितस्तान्तर्व्यधाद्दारुशैलपूर्णचतुस्स्थं। तरदायामपंक्तयश्च दृढकं नगरान्तरे। १९५
सेतुबन्धं व्यधाज्जैनयदलाख्यमयं नृपः। स्वकृतं तं तदाशाभीत् स्वविश्वमिव भीतिदं।
नगरोपप्रवाशङ्की मन्त्रियायक्षमास्थितः। पुनर्निष्कालयामास तं सुतं मन्त्रयुक्तिभिः।
सन्तापप्रदमुत्तरायणमिहालोप्यापि रम्यं गुणैर्ध्यावाञ्छत्यय दक्षिणायणममुं ज्ञात्वा हिमातिप्रदं।
लोकानामसुखक्षयार्थमुभयोरार्ध्यं पुनर्ध्याभजत्यर्थार्थेव परोपकारनिरत सूर्याय तस्मै नमः।
क्रमराज्यान्तरं प्राप्ते तस्मिन् देराज्यशङ्कितः। स्वाधरैर्हाज्यखानं स प्राहैषीत्पवमित्यदः।
पुत्र मेऽवसरोदृष्टस्तादृक् प्राप्तादुरुत्तरः। यत्र मत्प्राणसन्देहे गतिर्नान्या त्वया विना। २००

मत्पश्चावेक्षणे युक्तं शयितस्य तवासनं। आसीनस्य समुत्थानमुत्थितस्य च धावनं।
किमन्यत् सत्यमेवोक्तं त्यक्तापि श्रुतयन्त्रणां। यथागच्छसि तत्तूर्णं पूर्णं प्राप्स्यसि वाञ्छितं।
अतिष्ठणं न चेत् प्राप्तो मयि जीवति विह्वले। गते मयि मदभ्यर्णं पुनरागमनेन किं।
तावत् स्वय्यपुरं प्राप्तः सोऽभूत्तीर्णो नृपात्मजः। राजानीकैः समं युद्धमुद्धतं सवलोव्यधात्।
अथोदतिष्ठत्तुमुलस्तत्कालं सैन्ययोर्द्वयोः। उन्नद्धखानसन्नद्धयुद्धेक्षणसुदुस्सहः। १०५
अष्टाविंशाब्दवदस्मिन् पञ्चत्रिंशेऽपि वत्सरे। वैरं नीत्वा पितापुत्रौ पिशुनैः कारितोबधः।
तत्रत्यादरदावान्ये परितः सरितोजले। ममज्जुस्तद्भयाद्येन शवपूर्णमभूत्सरः।
हत्वा मृत्युरिवात्युग्रां तद्दिने नृशतत्रयीं। नौसेतुबन्धमुच्छिद्य नदीपारं समासदत्।
धिक्तं यः पैतृके देशे रक्षणीयेऽपि निष्कृपः। परदेशजयं त्यक्त्वा तादृङ्निन्द्यं समाचरत्।
पापास्ते शिखजादाद्या म्लेच्छोत्थाभयवेतनं। भूपमुद्वेजयामासुः फलं यैरनुभूयते। ११०
उच्चः सत्फलदोयथायमहमप्येतादृगेतावता स्पर्द्धां यावदियेष हन्त जनकेनैकेन मन्दः सुतः।
भास्वानभ्युदितः स तावदतुलः सर्व्वप्रकाशोद्यतोयन्माहात्म्यवशेन वक्रगतयोध्वस्ताभवन्ति स्वयं।
तद्देशकण्टकैर्दुष्टैः प्रजानां नाशहेतुना। आदमखानोविनाशोऽलक्ष्म्या भागैश्च तत्यजे।
इत्यातङ्कादिभिर्दुःखैर्व्वरं देशेऽत्र जीव्यते। सर्व्वनाशकरी मास्तु भूभर्त्तुर्व्वङ्कपत्यता।
सा चेत्तेषां स्वभेदोमा भूयाद्वैरात् परस्परं। मा जायेताथ वा दुष्टः सुतः कस्यापि दुःखदः।
प्रजान्तकारिणौ क्रूरौ राजपुत्त्रावुभावपि। सूर्य्यस्येव महीभर्त्तुः पङ्कुकालाविवोदितौ। ११५
अपकर्त्तृन्विपन्नशान्दयमानः परानपि। क्षमी दाता गुणग्राही स्वामीदृग्लभ्यते कथं।
व्यथितोयत्सुतैर्दुष्टैः सोऽस्मद्भाग्यविपर्य्ययः। शृण्वन् स रुदिताक्रन्दमिति पौरगिरः पथि।
पादहाहव्ययार्त्तोऽपि नगरान्निरगान्नृपः।
पुत्रोत्पत्तिमवेक्ष्य तुष्यति नृपोवोढा धुरः स्यादिति स्नेहात् सम्पदमस्य यच्छति निजामुल्लङ्घ्य नीतिक्रमं।
ज्ञात्वा तं मलवन्तमात्मसदृशं तादृक्प्रियाशङ्कते येनासन्नसुखो न जातु लभते निद्रां सचिन्ताज्वरः।
यद्वा मल्लिकजसयेन स यदा राजाशिखाहिदैतोभ्रातृद्वेषवशादभूव कदनं काश्मीरिकाणां महत्।
तदस्मिन्नमहीभुजोऽस्य तनयद्वेषात् किमालोक्यते तन्माभूद्वहसन्ततिर्नृपगृहे देशे विनाशप्रदा।
इति मार्गे कथाः शृण्वन् ग्राम्याणां जैनभूपतिः। वधात् कुतनयं निन्दन् प्राप स्वय्यपुरान्तरं। १२०
तीरद्वये वितस्तायाः पितापुत्त्रबलद्वयं। न्यवीविशत् समासन्नं परस्परजयोद्यतं।
अत्रान्तरे हाज्यखानः पर्णोत्सन्तूर्णमागतः। सुपर्णइव सद्वर्णदेशाभ्यर्णं समासदत्।
श्रुत्वा वराहमूलान्ते पुत्रं प्राप्तं बलान्वितं। अथ बह्रामखाननं सत्कर्त्तुं व्यसृजन्नृपः।
कालापेक्षी हाज्यखान. सेवायिव कृतादरः। प्रीतिनिष्ठं कनिष्ठं तं भ्रातरं स्वं समानयत्।
अन्येद्युर्म्मानितं दृष्ट्वा जनकेन निजानुजं। आदमखानो विचारज्ञश्चस्तोऽगाद्दिगन्तरं। १२५
शादिभङ्गपथा सिन्धुं समुत्तीर्य्य बलान्वितः। प्राप सिन्धुपतेर्देशं तथा कष्टपरिच्छदः।

इत्थं त्रिचत्वारिंशं वर्षे व्यर्थं निष्कास्य युक्तितः। हाज्यखानान्वितस्तुष्टो नगरं प्राप भूपतिः।
शिशिरसमये योऽभूत्क्लिष्टश्चिरं धुतपत्त्रतिर्धरणिकुहरेष्वन्तः कालं निनाय शुचाकुलः।
कुसुमसमये प्राप्योद्यानं विकाशिलतोज्ज्वलं किसलयरतः सोऽयं भृङ्गः सुखं रमते पुनः।
अस्मिन्नवसरे तुष्टाद्धाज्यखानो धृतं चिरात्। यौवराज्यपदं प्रापज्जनकाज्जनकोपमात्।
पितुः प्रेमसर्वस्वं प्राप्य स्वच्छं भक्तिपरायणः। हृदयात्मात्मजस्तातु श्रीमान्क्षाब्धिव कौस्तुभं।
विनयक्षिप्तदेवाग्रजानुसङ्कुचिताकृतिः। हकार इव सद्वर्णस्तोभा सर्व्वावधिर्व्वभौ।
न तत्तीर्थं न सा यात्रा न सा लीला न चोत्सवः। तदाभून्नैव यत्रागाद्धाज्यखानान्वितो नृपः।
योनित्यं परितोषितोगणमतैरत्यर्थमत्युज्ज्वलैः पुत्राभ्यां सहितो हितस्त्रिजगतां नानाविलासान्भजन्।
कालो गच्छति यस्य लास्यललितैः गीतश्च यच्छृण्वतः श्रव्यः कस्य न तन्नमस्यविभवः कैलासवासेश्वरः।
इति जैनराजतरङ्गिण्यां आदमखाननिर्व्वासनं हाज्यखानसंयोगवर्णनं नाम तृतीयः सर्गः॥

अत्रान्तरे मदनबन्धुरथाद्वसन्तः शृङ्गारसारकुमुदाकररोहिणीशः।
मानान्धकारविनिवारणभानुमूर्त्तिः स्फूर्जल्लतालिललनानवयौवनश्रीः।

ततश्चैत्रोत्सवे राजा पुष्पलीलाचिकीर्षया। ययौ मडवराज्योर्व्वीं नौकारूढः सुतान्वितः।
तरण्डामण्डली राज्ञोवितस्तान्तरगा बभौ। शक्रस्येव विमानाली छायापटविभूषिता।
स्वकीयराजवासस्थाराजावन्तिपुराङ्गनः। विजयेशादिदेशेषु नाव्यं द्रष्टुमुपाविशत्।
हरांशभूभुजं जेतुं यत्र राजसभानिभात्। भवासक्तो ऽभवत्कृत्वा बहुधा स्वं मनोभवः।
सालङ्कारप्रबन्धज्ञाः सिद्धान्तश्रुतविश्रुताः। यत्रान्तःकरणोद्युक्ता द्रष्टारो गायना अपि।
नानाग्रामगताश्चारुस्वररागमनोहराः। यत्र गीतारसस्फीतावभुर्युवतयोऽपि च।
कलाकलापवेत्तासौ ज्ञानमानससौख्यभृत्। रङ्गरङ्गद्रुचिर्नौकोविद्याविद्यातसंशयः।
प्रतितालैकतालादिबहुतालविभूषितं। तत्र तारा च नाराचसंज्ञामं विदधुर्नटाः।
उत्सवानामकामास्त्रं गायनी नयनोत्सवा। लास्यताण्डवनृत्यज्ञा न केषां रञ्जिकाभवत्।
भावानेकोनपञ्चाशत्संज्ञांस्तानांश्च तावतः। दर्शयन्त्योबभुः पात्र्यस्ता मूर्त्ताइव मूर्च्छनाः।
यासां नृत्ये च गीते च लक्ष्मीमेऽस्त्यधिकं सुखं। इति वादोऽभवत्क्षोचनेत्रयोः प्रेक्षणक्षणे।
पात्रीगानपिकध्वाने रङ्गोद्याने तदाद्युतन्। दीपचम्पकमालास्तामधुपैः परिवेष्टिताः।
राज्ञे राज्यक्षणात्तुष्टैर्नृत्यमेवागतैः सुरैः। दीपमालाच्छलान्मुक्ता नूनं हेमाम्बुजस्रजः।
जलान्तर्विम्बिता कापि दीपाली नागलोकतः। वहणेन नृपप्रीत्या दापितेवाद्युतत्तदा।
ता दीपिता दीपमाला द्विधा रङ्गे चकाशिरे। दिदृक्षागतनागानां फणामणिगणाइव।
किं राज्यालोकभावात्तटभुवि मिलिताः पूर्व्वभूपालजीवाः किं व्योमस्तारकौघः शशधरविमुखः सेवनायावतीर्णः।
किम्वा सिद्धाः सुरेन्द्रानिजरुचिरुचिराः प्रेक्षणायोपविष्टाः किम्वैतद्दीपमालाइति जनमनसामास्त दूरादितर्कः।
साक्षादेष पुरन्दरः कविबुधाविद्याधरास्सेवका अन्ते देवसभासदः सवपुषः सिद्धा अमी योगिनः।

॥ श्रीवरपण्डितकृता ॥

एता अप्सरसोरसोज्झितगुणागन्धर्व्वकागायनारङ्गोऽयन्त्रिदिवस्थलीति जगदुः सर्व्वे जनाः प्रेक्षकाः ।
अङ्गारचारचूर्णादिगन्धकौषधयुक्तिभिः । रागैः शिल्पिकृता लीला क्रीडालोकमरञ्जयन् ।
तथा द्यौषधसम्पूर्णान्नालादङ्किकणाघनाः । निर्यत्कुसुमसम्पूर्णस्वर्णवल्लीभ्रमं व्यधुः ।
सर्पाकारानलज्वाला निर्गता सलिलान्तरात् । चक्रे प्रेक्षकलोकानां त्रासाश्चर्य्यभयोदयं । ८५
नालकादुत्थिता व्योम्नि ज्वाला गोलकपंक्तयः । राजद्राजतरोश्चिच्छा जीवद्रुकोपमां व्यधुः ।
रज्जुबद्धागमद्दूरं ज्वलन्त्यौषधनालिका । आहूतये तथा नीतास्ताद्दृश्योम्नद्देवागताः ।
गतागतानि कुर्व्वन्त्योदीप्ताउल्कादवोल्वणाः । प्रेक्षकाणां मिथा दृष्टीरहरन्नद्भुतावहाः ।
अत्र पात्रीकरस्यापि ज्वलन्त्यौषधनालिका । द्युलोकोन्मुक्तसद्वर्णस्वर्णपुष्पश्रियं व्यधात् ।
वह्निक्रीडनलीलाया युक्तिज्ञेन महीभुजा । शिचयित्वा हबेभाख्यं तास्ताः सर्व्वाः प्रदर्शिताः । ९०
चारस्तदुपयोग्योऽत्र दुर्लभो योऽभवत्पुरा । तद्युक्तिशिक्षया राज्ञा स्वदेशे सुलभः कृतः ।
प्रश्नोत्तरमयी खोजिद्दिभेभं प्रति या कृता । पारसीभाषया काव्यं दृष्ट्वाद्य कुरुते न क. ।
ते शिल्पामतिकल्पितास्तु च सदा सङ्गीतवाद्योरसः सालङ्कारविचारचारुधिषणा काव्ये च तत्कौशलं ।
सच्छास्त्रश्रवणादरः स च नवप्रोत्पादनायोद्यमः श्रीमज्जैनमहीपतेर्बकमतेस्तस्यैव कस्याधुना ।
खुज्याब्दोल्कादराख्यस्य शिष्यः सर्व्वगुणाम्बुधे । भूभुजश्चित्तमनयद्रागतालादिभिर्मुदं ।
खुरासानागतोमल्लाजादकाख्योमहीपतेः । वादनात्कूर्म्मवीणायाः प्रापातुलमनुग्रहं । ९५
मल्लाज्यमालनामापि म्लेच्छवाग्गेयकारक. । नारदोवासवस्येव राज्ञोऽभूदतिरञ्जकः ।
तुम्बवीणाधरः सोऽहं सर्व्वगीतविशारदः । उदद्धन्नवगीताङ्ककौशलं समदर्शयं ।
अन्येऽपि जाफराणाद्या मया सह नृपाग्रगाः । तौरुष्कान्दुष्करान् रागानगायन्वीणया समं ।
गीतं द्वादशरागाङ्कं गायतां नः सभान्तरे । प्रीत्यैवैक्यमिवापन्नास्तन्त्रीकण्ठोत्थिताः स्वराः ।
देशसंस्कृतकाव्यज्ञो राज्ञोनिकटवास्यभूत् । पण्डितोनोत्यसोमाख्योदेशजैनचरित्रकृत् । १००
देशभाषाकविर्योधभट्टः श्रुङ्गश नाटकं । चक्रे जैनप्रकाशाख्यं राजवृत्तान्तदर्पणं ।
भट्टावतारः शाहनामदेशग्रन्थाब्धिपारगः । व्यधाज्जैनविलासाख्यं राजोक्तिप्रतिरूपकं ।
वीणातुम्बीरवावाद्याः सर्व्वान्पुष्टेन भूभुजा । सुवर्णरौप्यरत्नौघैर्घटितास्तायकाशिरे ।
तद्वाधिकाङ्किकाश्चार्य्यसात्त्विकाभिनयोज्ज्वलं । नाट्यं दृष्ट्वा जनः सर्व्वश्चतुर्म्मुखमशंसत ।
इत्थं त्रिवर्गविद्राजा त्रिजगत्ख्यातपौरुषः । त्रियामास्त्रिविधैर्नृत्यैरनयत् त्रिदशोपमः । १०५
स्फुरद्दीपकलिकाशालिसद्धामं स भवनान्तरं । आसदत्तारकापूर्णं पूर्णचन्द्रइवाम्बरं ।
ततोविमलकुण्डान्ते पानक्रीडां महीपतिः । कर्त्तुं प्रचक्रमे तत्र पुत्रमित्रविभूषित. ।
पिद्रप्रेमाख्तोखिकोद्वाव्यखानोऽथ भक्तिमान् । वसन्तवर्णनोन्निश्चां चाटूक्तिमवदद्विभोः ।

सङ्गीतनादनिपुणास्कलकण्ठभृङ्गास्तत्वानिलं प्रततिवाद्यविधा मदत्तम् ।

गीतमिथं नरपते किमु सेवितुं त्वां प्राभोवसन्तऋतुचारणचक्रवर्त्ती ।

मेघाडम्बरमम्बरं यदि तदा निर्नष्टशोभावयं नित्यं तीक्ष्णकरेण तेन दिवसे तत्राप्यहो बाधिताः ।
स्वामी नः शशभृन्मयोदयहतोदुःखादितीवागता उद्याने नरदेवसेवनपराः पुष्पच्छलात्तारकाः । १८०
पङ्कातङ्ककलङ्किता जलमया ये भोगिदेहार्त्तिदास्तद्देशे विलसन्तु पात्रविषयाः सन्मार्गविघ्नोद्यताः ।
ये याताः स्वयमेव देव विलयं श्रीमत्प्रतापोदयादस्मिन् हर्षमये वसन्तसमये प्रालेयपूरा यथा ।
श्रुत्वेति भूपतिर्हृष्टोद्याख्याताय सत्वरं । सौवर्णकर्त्तरीबन्धमभयं समार्पिपत् ।
यैर्यैः सेवा कृता तस्य शास्त्रादेशे विचार्य्य तान् । पुत्त्रस्नेहेन भूपालो योग्यराष्ट्राधिपान् व्यधात् ।
प्रेष्याद्यात्पेषसिन्दोवाघसंघान्स्तान् सेवकप्रजान् । प्रसादपट्टपोतेन समुत्तीर्णान् व्यधान्नृपः ।
विदग्धीताङ्गिम्स्तयेभ्यस्तस्मिन्नवसरे नृपः । सुतास्थानन्दवाप्याब्धौव्यधात् कनकवर्षणं । १८५
दत्तमार्गोपचारार्थो राज्ञिया दर्शनागताः । प्राप्तपट्टपरीधानमानतुष्टा न केऽभवन् ।
तान्विलोक्य भवनोपवनादीन् पुष्पपूरपरिपूरितनाक. । स्वं सुवम्भजवराज्यनिवासान् प्राप जैननृपतिर्नगरं स्वं ।
इति जैनराजतरङ्गिण्यां पुष्पलीलावर्णनं नाम चतुर्थः सर्गः ॥

अत्रान्तरे सुतप्राप्त्या निश्चिन्तः सुकृतोद्यतः । कुल्यानवनवाः कर्षन् प्रतिष्ठारसिकोऽभवत् ।
कविः श्रीजोनराजोयं स्वसन्दर्भान्तरेऽब्रवीत् । ग्रन्थविस्तारभीत्या तद्वर्णनं न मया कृतं ।
एकैवास्त्यमरावती ननु पुरी साज्ञातनिर्माणका तत्राप्यत्र सदा विमानवसतिर्देवादिषु श्रूयते ।
सोऽभूद्भूमिपुरन्दरः पुरशतं कुर्वन्नवं सर्वतोयत्रैते निवसन्ति मानसहितास्ते भूमिदेवादयः । १९०
श्रीजैननगरे पञ्चदशेऽब्दे या कृता पुरा । राजधानी नवात्युच्चा विद्धा देवगृहोपरि ।
तस्याः समीपे नृपतिश्चत्वारिंशेऽथ वत्सरे । दृष्टिकादारुसम्बद्धं राजवासं नवं व्यधात् ।
यत्पृष्ठे स्वर्णकलशोभाति भातिमनोहरः । हेमपद्मद्वोन्मुकः शक्रेण श्रुतकीर्त्तिना ।
यद्द्वारार्थनियुक्तेभ्यस्तत्तत्कर्म समादिशन् । आजीवं सोऽवसद्राजा राजधान्युज्झितस्थितिः ।
यत्र वापीगता हंसागीतशंसां स्वनच्छलात् । कुर्वन्तीव समीपस्था गायन्तीताङ्गिसंस्कृतैः । १९५
यत्र खर्व्वीकृताराति: सुपर्व्वाधिपतिर्यथा । सर्व्वाहः सुखगन्धर्व्वचर्व्वणैरनयत् सुखं ।
यदन्तरे सुविस्तीर्णः सर्व्वदर्शनमण्डपः । काचभित्तिमयोभाति व्यग्रसिंहासनोज्ज्वलः ।
यद्गर्भाद्युपसन्दर्भनिर्भरान्नृपसंश्रिनात् । वातोऽपि सफलोद्यातः प्रातर्घ्राणसुखप्रदः ॥ कुलकं ॥
कदाचिल्लाहरं दुर्गं यात्रां द्रष्टुं गतोनृपः । राजवासं नवं कृत्वा जीर्णोद्धारमकारयत् ।
समुद्रकोटादारभ्य यावच्छ्रीद्वारकावधि । तत्तद्भवनवावासवासवालयसुन्दरान् । २००
जैननामाङ्कितान् ग्रामानकरोन्नगभूषितान् । उपतीरं महापद्मश्रीमत्पत्तनगभूषितान् ।
तदन्नसत्रदृप्तानामर्थिनां त्रिपुरेश्वरे । उदरं मेदुरं चाल्लोराजा लम्बोदरः कथं ।
कृतपत्रे चितौशानैर्व्वराहक्षेत्रभूमिषु । अस्तु नर्मगिराः शेषयित्रमिन्द्रोऽपि नाभवन् ।
मत्स्येभ्योनित्यदृश्यः स घ्राणामभयं ददौ । मत्स्यानामत्ससत्रेण वितस्तासिन्धुसङ्गमे ।
अर्थिनामतिदृप्तानां श्रीयद्वरपुरे नृपः । अपेक्ष्य विदधे च्छायां न फलानि महीरुहां । २०५

# ॥ श्रीवरपण्डितकृता ॥

अश्मायां व्यधादन्नसत्रे व्यञ्जनसौरभैः । कथं न कुङ्कुमस्याभूत् गन्धभेदकदर्थनः ।
अच्छिन्नेनान्नसत्रेण विजयेश्वरवासिना । उदरे मेदुरे सिद्धमणामो यन्नतोऽविभोः ।
अन्नसत्रमविच्छिन्नं कृत्वा शूरपुराध्वना । शुल्कस्थाने व्यधाद्राजा भारिकानाभिसारिकान् ।
गुणी मूर्खो निराचारः साचारो यवनो द्विजः । नापोऽपि यस्तदन्नेन कश्मीरेषु स नाभवत् ।
शम्भुश्रीपतिधातृजह्नुमुनिभिः पूर्वं रवेरन्वये जातेनापि कृतः श्रमस्त्रिपथगा गङ्गेव जाता नदी ।
तेषां स्वार्थमभद्रसेननरपतिः सोऽयं परार्थे पुनर्देशेऽस्मिन् स्वधिया नदीर्नवनवा नाना पथः कृष्टवान् । ११०
नवीनोदारकेदारभूम्युत्पन्नप्रतिस्थलं । कूटाधान्यफलैः पुष्टादृष्टाः पर्वतसन्निभाः ।
धान्यकूटच्छलान्नूनं साभूद्धान्यैः कुचस्थली । आशोपाया प्रजा यस्याद्वृद्धिमापद्दिने दिने ।
दुर्लभोपद्रवानिष्टा यत्र यत्राभवत् चितिः । समुद्यद्व शस्याढ्या तत्र तत्राकरोन्नृपः ।
न तत्स्थलं न कान्तारो न स देशो न साटवी । यत्र नानीय कुल्याः स्वाः स्वनामाङ्काः पुरीर्व्यधात् ।
न सा नदी न तत् चैत्रं न स ग्रामो न सा पुरी । न तत्स्थानं न यद्राज्ञा जैननामाङ्कितं कृतं । ११५
यत्र यत्राभवन्निम्नाः प्रदेशास्तत्र कुल्यया । व्यधाद्राजा सरः पद्मिविसशृङ्गाटभूषितं ।
धन्यो वारिधरोधरोपकरणोद्युक्तः सदा जीवनैर्यः सिन्धोः सलिलं निरर्थकतया निम्ने निरुध्यान्वहं ।
कान्तारेष्वफलेषु केषु रुचिरं मुञ्चन्त्यभीष्टं यतस्तत्सेकोदितसर्वसस्यविभवो लोकः सुखी जायते ।
लोके डलदति ख्यातं यदगाधं सरोवरं । तस्य प्रतिष्ठाप्रस्तावाद्वर्णनं क्रियते मनाक् ।
आराजधान्या यद्दीर्घं सुरेश्वर्याः सरोवरं । नौकारूढोऽचरन्नित्यं व्योम्नीवेन्दुः सुनिर्मले ।
अरित्रपचा यत्रान्तः शोडीनाः पटसुन्दराः । पोतादवारुचन् पोताराज्ञः शाकुनिकान्विताः । १२०
तिलप्रस्थागता यत्र तटिनी त्रिपुरेश्वरात् । सङ्गच्छते सटाङ्कां यस्ताद्रष्टुमिवोत्सुका ।
श्रीपर्वतोऽपि यद्क्रोशस्तीर्थस्नानफलेप्सया । स्वसङ्गातिच्छलाद्यत्र मज्जतीव दिवानिशं ।
शैवलन्ति द्रुमा यत्र कमठन्ति च पर्वता. । पुर्य्यश्च नागलोकन्ति जलान्तर्यत्र विम्बिताः ।
यत्पत्त्रभृङ्गालिकुलानि सरसीरुहां । तत्सौगन्ध्यमिवाघ्रातुमानतानीचते जनः ।
यत्सुहायुगलोत्प्रेक्षाखेदपदद्वयसम्भ्रमात् । जाने याति रविः कुर्वन् प्रत्यब्दमयनद्वयं । १२५
यत्र तीरे सुरेश्वर्याः चेत्रं भुक्तिविमुक्तिदं । वाराणस्यधिकं भाति तीर्थराजिविराजितं ।
विहारैरग्रहारैश्च मठैः सुकृतकर्मठैः । आश्रमैरश्रमैराजवासे. स्वर्गोपमां व्यधात् ।
दीर्घदातुष्किकाहस्तैर्नृत्यन्तादव सम्भृताः । दृश्यन्ते ये जनैर्दूराद्धैमच्छत्त्रवरोदराः ॥ मध्ययुगलं ॥
येषां सिद्धपुरीनाम प्रसिद्धं नृपतेर्गृहं । स्वसिद्धौ कुरुते सिद्धविमानावलिविभ्रमं ।
जीर्णादेवालया यत्र राजधान्यन्तरीकृताः । धृत्वोन्नत्या निरालम्ब्या मत्यार्था भूभुजा कृता । १३०
यत्र सर्वंकृष्णच्छेदनिर्भेदोत्पन्नभूस्तनी । सत्त्वारिणुर्भरा राज्ञा सफला विहिता धिया ।
एकत्र देशे यत्रामात्सर्वं श्रीजैनवाटिका । योगिना यागपूजार्थं कृतं भोगालतालयं ।
मध्युष्करिणीमध्ये क्रान्तस्वादविप्सया । यत्रेति द्विजराजोऽपि योगिचक्रान्तरे ध्रुवं ।

भूपतिर्भोजयन् योगिसहस्रं मौलदीचणं । निष्कम्पमकरोन्नित्यं किं तपसा किं समाधिना ।
आहारमनुतोषोद्यत्कीर्त्या रसवती श्रिया । देव्याय क्रियते यत्र सर्व्वा रसवती प्रजा । ११५
पक्कान्नराशयोऽदभ्रा यत्राभ्रंशुभ्रप्रदाः । बिभ्रत्यभ्रमच्छुभ्रशरदभ्रशिखोपमां ।
यत्राधर्मस्त्रगं दत्तुं शृङ्गनादमिषाद्ध्रुवं । घण्टिकास्वरधारावं श्रूयते मृगयारवः ।
सामोदकामनिर्मुक्तमोदका यत्र योगिनः । श्रमघर्मोदकाजस्रंजाता राज्ञः प्रमोदकाः ।
योगिस्फुरत्करक्लिष्टदधिदिग्धाशनच्छलात् । योगाच्छशिकलास्वावास्तत्र वान्ता इवाश्रुतन् ॥ कुलकं ॥
मारी नाम नदी तस्मादितस्तान्तरमागता । केवलं याभवत्पौरस्नानपानप्रयोजना । १२०
हस्तिकर्णाभिधे चैत्रे युतया राज्ञा प्रवेशिता । सिन्धुसङ्गमपर्यन्तं निर्मिता शालिनालिनी
मृतानां देहदाहेन स्वर्गदो नगरान्तरे । स मारीसङ्गमः ख्यातो जातः सङ्गादितस्तया ।
यत्स्वेनपालाः कालेन किङ्कराः पञ्चवारिकाः । पौरेभ्यः शवदाहित्यमगृह्णन् शुल्कमन्वहं ।
मत्पितृप्रमये राजा विज्ञप्तः स मयैकदा । दण्डयित्वा किरातांस्ताञ्छवशुल्कं न्यवारयत् ।
ततः प्रभृति तत्स्थाने विमाना नगरान्तरे । दह्यन्ते दर्शनदेषिविच्छानां हृदयैः समं । १२५
निरर्गलं वयं जाता इतीव शिविकारकैः । छत्रहस्तैः प्रनृत्यन्तो दृश्यन्ते वाद्यनिस्वनैः ।
दिगन्तरीयया रीत्या यत्र राज्ञाप्यवारिताः । प्रियानुगमनं नार्य्यश्चितामारुह्य कुर्व्वते ।
अर्थिसङ्घोपकारार्थं पौराणां सुकृती नृपः । विहारं बहुविस्तारं तत्सङ्गमतटे व्यधात् ।
स च हाल्ये विहारस्य पारावारे पुरद्वये । स्वश्रेणिमणिप्रातनायकश्रियमापतुः ।
अन्याः प्रतिष्ठास्तत्कालं राज्ञा स्वस्येन कारिताः ।
श्रीहर्षानृपतिर्ब्बभूव कविताराज्ये तदा येऽभवन् सर्व्वे ते कवयः किमन्यदपि ते सुदाः क्लियोभारिकाः ।
सन्त्यद्यापि कृतानि तैः प्रतिस्पर्द्धं पद्यानि विद्यानिधौ राजा चेद्गुणवान् गुणेषु रसिकोलोकोभवेत्तादृशः । १३०
छत्रमाला विशालाख्या धर्मार्थं गुणशालिना । कृता याभ्यः श्रुतः सर्व्वस्तर्कव्याकरणोद्भवः ।
आचार्य्यपुस्तकावाससहायान्नसमृद्धिभिः । पाठयन् सर्व्वविद्यानां सङ्ग्रहयामास मण्डलं ।
न विद्यासुखयोः सन्धिस्तेजस्तिमिरयोरिव । इति व्यर्थं वचश्चक्रे मुनीनामभयप्रदः ।
सौराज्यसुखिते देशे विद्याभ्यासपरायणे । अकाङ्क्षीत् सर्व्वदारोग्यं नृपतेः स्वस्य चान्वहं ।
राज्योत्पन्त्या नृपस्तादृक्तुष्टोऽभूच्च प्रतिष्ठया । यथा पण्डितसामग्र्या सामग्र्यामविदद्गुणैः । १३५
येषां स्वप्नेऽपि पाण्डित्यं नाभूत्क्वापि चिरन्वये । तेऽपि भूपप्रसादेन जाताः पाण्डित्यमण्डिताः ।
यद्धिता जीवनोपायैर्द्देवेन फलदाः सदा । याताः सद्यःश्रावलं विद्याः कल्पलता इव ।
न सा विद्या न तच्छिल्पं न तत्काव्यं न सा कला । श्रीजैनभूपतेराज्ये नाभूद्या प्रथिता भुवि ।
विदुषां मान्यतां दृष्ट्वा भूपतेर्गुणिबान्धवात् । काङ्क्षन्ति स्मापि धामन्ताः पाण्डित्यं नित्यमादरात् ।
निदाघकाले विषमः प्रतापोदच्छहरिव्यां तृणगुल्मपूगान् ।
वन्द्यो न केषां घनकालरूकी यो जीवनैस्ताश्चितान् करोति । १४०

श्रीकन्धरधरानाथो यवनैः प्रेरितः पुरा । पुस्तकान् सकलान् सर्व्वांस्तृणान्यग्निरिवादहत् ।
तस्मिन् काले बुधाः सर्व्वे म्लेच्छोपद्रवाज्जवात् । गृहीत्वा पुस्तकान् सर्व्वान् ययुर्दूरं दिगन्तरं ।
किमन्यद्द्विजवद्देशे सर्व्वे ग्रन्था मनोरमाः । कथावशेषतां याताः पद्मानीव हिमागमे ।
सुमनोवल्लभेनात्र राज्ञा भूषयता चितिं । नवीकृताः पुनः सर्व्वे मधुनेव मधुव्रताः ।
पुराणतर्कमीमांसाः पुस्तकानपरानपि । दूरादानाय्य वित्तेन विद्वद्भ्यः प्रत्यपादयत् । ३६५
मोक्षोपाय इति ख्यातं वाशिष्ठं ब्रह्मदर्शनं । मन्मुखादशृणोद्राजा श्रीमद्वाल्मीकिभाषितं ।
श्रुत्वा शान्तरसोपेतां व्याख्यां स्वप्नेऽपि नो नृपः । असमार्षीदभिज्ञाः कान्ताहावभावक्रिया इव ।
यो यद्भाषाप्रवीणोऽस्ति स तद्भाषोपदेशभाक् । लोकेन हि जना नानाभाषालिपिविदोऽखिलाः ।
इति संस्कृतदेशादिपारसीवाग्विशारदैः । भाषाविपर्ययात्तत्तच्छास्त्रं सर्व्वमचीकरत् ।
धातुवादरसग्रन्थकल्पशास्त्रोदितान् गुणान् । यवना अपि जानन्ति स्वभाषाक्षरवाचनात् । ३७०
दशावतारपृथ्वीशग्रन्थराजतरङ्गिणीः । संस्कृताः पारसीवाचा वाचनार्थं व्यकारयत् ।
बृहत्कथासारं हाटकेश्वरसंहिताः । पुराणादि च तद्बुद्ध्या वाच्यते निजभाषया ।
कश्चिच्छ्रुत्वा शुचिर्वाचि चिरं धर्म्मशास्त्रं पवित्रं धत्ते चित्ते पट इव सितो रञ्जनं तत्क्रियां यः ।
आकर्ण्यान्ये प्रतिदिनममुं पद्मिनीपत्रतुल्याः कुल्याधारा अपि घृतगुणा गृह्णते नात्र किञ्चित् ।
नौबन्धनगिरेर्य्यात्रामाकर्ण्यादिपुराणतः । तीर्थयात्रोत्सुकं राज्ञः कदाचिदभवन्मनः ।
एकोनचत्वारिंशेऽब्दे पितृपक्षानुवासरे । यात्रादिदृक्षया भूपो जगाम विजयेश्वरं । ३७५
नानावर्णांशुकच्छन्नैः प्रेक्षकैः परिपूरितं । पुष्पाकीर्णमिवोद्यानमद्राक्षीद्रङ्गमण्डलं ।
यत्र वान्द्रपालाद्या राजानो वीक्ष्य सद्रसाः । तद्दर्शनायाता हर्षमन्वभवन्निति ।
गगनं तारकापूर्णं दीपाढ्यं रङ्गमण्डपं । यत्रान्योन्यं तुलाशङ्के रात्रौ कविबुधार्चितं ।
अमावस्यादिने प्राप्तैर्नानानागरिकामुखैः । शुशुभे शुभदं यत्र शतचन्द्रं भुवस्तलं ।
दीपपङ्क्तौ नवो छोऽपि यत्र रङ्गान्तरे स्फुरन् । दधे तारकमध्यस्थशक्तिकर्दचयोपमां । ३८०
विजयेशादथोत्थाय भूपः पुत्रदयान्वित. । पद्मामुद्दश्य दुर्मार्गं प्रपेदे वासरैस्त्रिभिः ।
दृष्ट्वा क्रमसरो विष्णुपादमुद्राकृतिं प्रभुः । पादप्रणामजानन्दमविन्दद्भक्तिसुन्दरः ।
प्रह्वाच्युतगिरयः पतत्तोयरवच्छलात् । अकुर्व्वन् कुशलप्रश्नं हरांशजमहीभुजे ।
कस्तूरीकुसुमश्यामोद्दामागारावनिं गिरेः । दृष्ट्वा तुष्टो नृपश्रेष्ठो योगीवेष्टां हरेस्तनुं ।
अथ नौकां समारुह्य धीवरैः पञ्चषैर्वृतां । धृत्वा मां सिंहभट्टञ्च चचार सरसोऽन्तरे । ३८५
गीतगोविन्दगीतानि मत्तः शृण्वतः प्रभोः । गोविन्दभक्तिसंसिक्तो रसः कोऽप्युदभूत्तदा ।
कुञ्जप्रतिश्रुतोमञ्जुगीतनादस्तदावयोः । अनुगीतइवाबभ्यैः किन्नरैराजगौरवात् ।
क्षणं सरोम्नायरतो हिमवृष्टिनिभाद्दिभोः । भक्तिप्रीतैरिवोन्मुक्तं देवैः कुसुमवर्षणं ।
दृष्ट्वा सरोऽन्तरे श्वेताहिमान्योभ्रमणाकुलाः । तीर्थधामाप्तकेलाघाटङ्घभङ्गिभ्रमं व्यधुः ।

सत्यं विष्णवतारस्य येन भक्त्या प्रदक्षिणं । चौन्दारानकरोन्नूनं ज्ञातुं स्वक्रमविक्रमं ।
योऽभूदागमसिद्धार्थो नौबन्धनगिरिस्तदा । प्रत्यक्षतः कृतो राज्ञा बद्धा नौका यदागतः ।
सुकुमारसरोयावत् सुकुमारः स्मरन् पथि । सुकुमारोऽम्बुपानेन सुखं पुण्यमिवासदत् ।
शृखन् स्थानाभिधाः पुण्याः स्पृशंस्तीर्थजलं शुभं । पिबन् मतुह्निनं तोयं पश्यन्घनतरुश्रियं ।
जिघ्रन्नोपधिपुष्पाणि पञ्चेन्द्रियसुखप्रदां । तीर्थयात्रां विधायेत्थं नगरं प्राप भूपतिः ।
इति जैनराजतरङ्गिण्यां क्रमसरोयात्रावर्णनं नाम पञ्चमः सर्गः ॥
ततः क्रमसरस्तुल्यं राजा पद्मपुरान्तरे । तत्कौतुकापनोदाय चक्रे जैनसरोनवं ।
फुल्लत्कुङ्कुमपुष्पौघश्यामीभूतस्थलच्छलात् । शरदीवागता प्रीत्या यमुना यत्सरोवरं ।
कुलोद्धरणनागाख्यमण्डिते यत्तटे नवं । राजद्राजगृहं राजा राजराजोपमो व्यधात् ।
उच्चैःपदस्थममलं रुचिरञ्जिताशं सम्पूर्णमण्डलमखण्डकलाकलापं ।
राजानमीशमवलोक्य हृतोपतापं काङ्क्षन्ति के न नितरामपि दूरसंस्थाः ।
दिगन्तरीया भूपालाः श्रुत्वैतद्गुणगौरवं । नानोपायनवैधौघैर्ववृधुर्नितराममुं ।
वेगेन जितवायुं स्वं ताजिकाख्यं तुरङ्गमं । उपदां व्यसृजत् सख्यादुच्चं पञ्चनदप्रभुः ।
किन्नरोऽश्वमुखः ख्यातः कण्ठानृत्यं न वेत्त्यसौ । इतीव नाश्वं योदर्पादरारूढोऽकरोत्पथि ।
प्रवालहस्तः षड्भिः सुखलीनः सुलक्षणः । यथासावहमित्यन्तु नासहिष्टास्य ताडनं ।
पादैश्चतुर्भिः शुद्धैर्योऽसुखमध्येन चावहत् । कल्याणपञ्चकख्यातिं कल्याणाभरणोज्ज्वलः ।
माण्डव्यगौडभूमीशः खलश्रेयोयोमहीपतिः । श्रद्धतुपन्दरन्दामनामवस्तैरुपाहितैः ।
इतोद्यमैस नृपोभव्यं काव्यं कृत्वा स्वभाषया । प्राहिणोद्गुव्यसंयुक्तं सव्यसाच्यपजोपमः ।
सोऽप्यनर्घैः पदार्थैर्न तथा तुष्टो महीपतेः । सालङ्कारैर्यया भूपकाव्यस्यातिमनोहरैः ।
यत्तं नारीकुञ्जराख्यं कुम्भराजो विसर्जयन् । अदरक्रृदि तच्छेपनारीकुञ्जरकौतुकं ।
राजा तुगरसेहाख्यो गोपालपुरवल्लभः । गीततालकलावाद्यनाट्यलक्षणलक्षितं ।
सङ्गीतचूडामण्याख्यं श्रीसङ्गीतशिरोमणिं । राज्ञे गीतविनोदार्थं गीतग्रन्थं व्यसर्जयत् ॥ युग्मं ॥
तस्मिन् राज्ञि दिवं याते कीर्त्तिसिन्धो महीपतिः । तत्पुत्रः पितृवत्प्रीतिमरचत् प्रहितोपदः ।
मण्डलीकाधिपो राजा स्वराष्ट्रनगराधिपः । प्राहिणोन्नृपतेः प्रीत्या ललामकमनीयकं ।
चित्रवर्णांसमत्पचवल्लशोभान् महीपतेः । पक्षिणो मुचुकुन्दाख्यान् प्राहिणोदक्षिसुन्दरान् ।
जिघांसया चरन् सोऽपि भूपतेः प्राक्तनैर्गुणैः । बद्धो हिंस्रोऽपि डिम्भो वधूकोरसकोपमः ।
कश्चिच्छ्रीराजहंसस्य राजहंसयुगं ददौ । अन्ये हंसा यदुत्पन्ना राजहंसमरञ्जयन् ।
सरस्वन्तर्भ्रमन्तस्ते निर्दाराः पंक्तिपावनाः । तरङ्गतरलोत्पुंस्त्वैर्नोत्पलतुलां दधुः ।
सुरासानमहीपस्य यस्यैवाज्ञा ह्ययप्रभोः । मूर्ध्ना मन्दारमालेव ध्रियते दिगधीश्वरैः ।
पञ्चायुधोऽर्पितकराः किङ्कराः प्रभयङ्कराः । यमस्य चार्पितकरा व्यचरन्भरणोन्नये ।

उत्तराशाधिपो म्लेच्छो भोसेदः स महीभुजे । उपाश्ववेसरीयुक्तं व्यसृजत्सोपधिस्वरं ।
कृतेद्दशोदसम्ख्यातख्यातवस्त्राद्युपायनैः । महम्मदसुरत्राणो गूर्जरीशोऽप्यतुतुषत् ।
गिलानमेस्समकादिदेशाधीशा हितेच्छया । दुर्लभोपायनैस्तैस्तैर्न के भूपमरञ्जयन् । १२०
अनल्पाः शिल्पिनः कल्पवृक्षकल्पसमं न के । भङ्गाद्वायशुर्दूराच्छिल्पकल्पितकल्पनाः ।
काश्मीरिका अथाल्पस्य तुरीवेमादिचातुरीं । कौशेयकं वयन्त्यद्य वज्रमूल्यं मनोहरं ।
और्णास्तोहादयोवस्त्रविशेषादूरदेशजाः । काश्मीरिकाश्च भान्त्यद्य समर्थास्ते नृपोचिताः ।
विचित्रवयनोत्पन्ननानाचित्रलताकृतीः । दृष्ट्वा चित्रकरा येषु जाताश्चित्रार्पिताइव ।
अनन्ततन्तुसन्तानवर्णविच्छित्तिसुन्दरः । बभौ कौशेयकख्यातो देशोवेशश्च भूपतेः । १२५
नानावर्णविशेषचित्रकटकालङ्कारसारोचितोविद्यामानवराजितोऽतिसुखदः कौशेयताख्यातिमान् ।
श्रीमान्नित्यमहोज्ज्वलोऽतुलगुणः सत्तन्तुसम्पत्तिभृद्राज्ञा तेन विशेषितोनिजधिया वेशोऽपि देशोऽपि वा ।
इति जैनराजतरङ्गिण्यां चित्रोपचयशिल्पवर्णनं नाम षष्ठः सर्गः ॥

दाता भवेत् क्षितिपतिर्यदि सादरोऽयं लोकोऽपि दर्शयति तत्स्वकलाकलापं ।
वर्षासु वर्षति घनो यदि चातकोऽपि नृत्यन्मुदा भवति तज्जनरञ्जनाय ।

अथोत्तरपथाद्दानख्यातकीर्त्तेर्महीभुजः । रज्जुभ्रमणशिल्पज्ञः कोऽप्यगाद्यवनोऽन्तिकं ।
विंशप्रस्थाभिधे स्थाने कदाचिद्यवनोत्सवे । तं द्रष्टुमगमद्राजा परिवारविभूषितः ।
धनुर्दण्डशतायामान्तरस्थान्दीर्घरज्जुभिः । उच्चान् स्तम्भानबध्नात्स स्वशिल्पप्रथनोद्यतः । १३०
अभवन् कलुषास्ते ये नागा रज्जुपुरादिषु । भाविस्तम्भकभूपालदेहानिष्टेक्षणादिव ।
अथो भूभागलग्नैकरज्जुमार्गेण निर्भयः । आरोहमकरोत्तत्र पतत्रीव नभोन्तरे ।
निपातास्खलितां तत्र लोकचित्तानुरञ्जिकां । कवितामिव शिल्पज्ञश्चित्रां पदगतिं व्यधात् ।
अनीचवर्त्तिमस्तस्य ग्रहस्येव फलप्रदा । सुरश्मिराशिगम्यालं बभूवाश्चर्यवर्त्तना ।

कृत्वा सुखं सुरुचिरं सुचिरं विधाता दुःखं पुनर्जनपदे जनयत्यसह्यं ।
वर्षं प्रदर्श्य जलदः कृषिकर्षहेतुं नेतुं फलं वितनुते करकाविकारं । १३५

सौराज्यसुखिते देशे नरेशे निरुपद्रवे । अकस्माद्दुःसहान् जातानुत्पातान् ददृशुर्जनाः ।
उत्पातद्वागमे सेतुर्हेतुः सर्व्वजनक्षये । अथोत्तरदिशा रात्रौ धूमकेतुरदृश्यत ।
दीर्घपुच्छोच्छलत्कान्तिरत्केतुकपटाद्ध्रुवं । कालेन द्रुघणं क्षिप्तं क्षयायेव महीक्षितां ।
मासद्वयं स्फुरन्नाशीत् स व्योम्नि विमले सदा । सदये हृदये राज्ञश्चिन्तौघोऽनिष्टशङ्कया ।
अदृश्यन्त सदा श्वानो विक्रोशन्तः पुरान्तरे । शुचेव रुदिताक्रन्दा भाविविप्लेक्षणादिव । १४०
एकपक्षेऽभवच्चन्द्रसूर्य्यग्रहणसंस्थितिः । एकपक्षमिवादातुं राज्यं राजविपर्य्ययात् ।
सूर्य्यसङ्क्रान्तयः क्रूरदिनेष्वाशास्तदा विशां । भाविक्रूरफलोत्पादसादचिन्तनभीतिदाः ।
मन्निर्माता क्षयं यास्यत्ययं किमिति दुःखिता । राजधान्यरुदच्छत्रतुलोलूकध्वनिच्छलात् ।

दृष्टोऽम्बरे द्वितीयस्यां सुधांशुस्तत्र तैर्जनैः । उत्पातइव भूपेशमन्यं सूचयितुं दिशां ।
अत्रान्तरे महाघोरमनाहूतिकृतं भयं । उदभूदन्यदेशेषु दुर्भिक्षोपद्रवावहं । १४५
भिक्षुकानन्यदेशीयान् प्रेतरूपानिवागतान् । दृष्ट्वा पृच्छन्नृपस्ते च वार्त्तां तस्याब्रुवन्निति ।
राजन् देशेष्वनेकेषु दृष्ट्यभावात्समन्ततः । सर्वान्तकृत् कालइव दुष्कालः समुपस्थितः ।
दुर्भिक्षेण प्रभवतां मणीनां सा महार्घता । नीता नोचेन साधूनामिव सर्वोपयोगिनां ।
भुञ्जते स्वादयोऽन्योन्यं पिशितं क्षुदुपद्रुताः । तत्तच्छून्यमहान्तःस्थनि शोषितशवप्रजाः ।
स्पृष्टोच्छिष्टतया दुष्टप्रायश्चित्तादिनिष्ठिताः । क्षुधा द्विजवरादेवप्रयाताः सर्वभक्ष्यतां । १५०
क्वापि विप्रस्त्रियस्तत्तदभक्ष्याम्नीक्षणक्षमाः । पक्वान्नं सविषं भुक्त्वा स्वमन्योन्य व्यसून् व्यधुः ।
अदृष्ट्या वसतिं त्यक्त्वा गते क्वापि मृते जने । शून्याः केन पुरग्रामा दृष्टा राजन् पदे पदे ।
प्रीतिं स्नेहश्च दाक्षिण्यं पत्न्यां पुत्रे पितर्य्यपि । कुक्षिम्भरिः क्षुदुत्तप्तो विसस्मार त्ववनौ जनः ।
खुरासानावनीशक्रं विक्रान्त्या प्रचुभूमिगं । अन्नाभावाद्भवान् मित्रमभिवेषेण निर्गतं ।
मेर्जाभीषिदनामानं सुरत्राणं रणान्तरात् । इराकभूपतिर्बद्धावधीत् कोटिबलान्वितं ॥ युग्मं ॥ १५५
तस्य दुर्योधनस्येव बद्धस्य हरणक्षणे । अभूत्संख्यान्तरेऽसह्यातुद्भक्तनृपतिचयः ।
देशेषूद्भूतदुष्कालबलाबलविपर्ययात् । अन्योन्यनृपयुद्धेन विघ्नदिव पदे पदे ।
सुखप्रदं भवद्देशं श्रुत्वाप्तादिसमृद्धिभिः । आगतांस्त्वद्दमापाल रक्षास्मान्विक्षतान् क्षुधा ।
श्रुत्वेति वार्त्तामार्त्तान्तां जानन्निव निजां प्रजां । द्रव्यकोटिं ददौ राजा तदर्थे करुणाकुलः ।
अत्रान्तरे स्वयं सिद्धकृतं स्वय्यपुरं महत् । समस्तं वह्निना दग्धं शून्यारण्यमिवाभवत् । १६०
क्रमराज्यस्फुरद्राज्यराज्यतन्त्रक्रियाङ्कितं । भूर्जभाण्डादि तत्रस्थं समस्तं भस्मसादभूत् ।
प्राज्ञो जैनगिरिश्चक्रे सप्तमांशोऽत्र भाविभिः । इति ताम्रमये पट्टे कल्पं यस्मिन् व्यधान्नृपः ।

श्रीमाज्जैनोल्लाभदीनीययाचे सर्वान् भूपान् भाविनो जैननिग्ध्यां ।

क्षेत्रोत्पाद्यं स्वैर्धनैर्भूर्जयाच तस्मा प्राज्ञः सप्तमांशो भवद्भिः ।

जलावतरणं कृत्वा गिरौ नुन्नड्य मत्स्यनः । पुण्यकेतुरयं सेतुर्वह्नीयः शुभेच्छया ।
इत्थं ताम्रमये पट्टे श्रीवक्राशीप्रनिर्म्मिता । प्रशस्तिराजीत्ता राजधानीवक्त्रोररच च । १६५
प्रदीप्तः सुकृतोत्कर्षद्वासेव महीपतेः । अरचद्राजधानीं तां मध्यस्थामपि पावकः ।
श्रुत्वा दग्धं पुरं राजा शुचा दग्धो विदग्धधीः । अचीकरत्ततं तूर्णं चारु दारुमयैर्गृहैः ।
राजा वराहमूलीयां राजधानीं पुरा कृतां । आनीय विदधे तत्र राजवासं नवं महत् ।
तंवायकनृपागारं सेतुमत्तोन्मितं नवं । क्रमराज्यश्रियो हारं सारं स्वय्यपुरं व्यधात् ।
सेतुमत्तोन्मिते तत्र गृहश्रेणिगणिश्रजे । राजधानी स्फुरच्छ्वा धत्ते मध्यमणिश्रियं । १७०

मानुष्यकं नववयस्तनिवाप्य स्वयं लोकावतताइव लसन्ति गरे वनेऽस्मिन् ।

तदाश्ववायचिकराइव पुष्पपूगाः स्थित्वा दिनानि कतिचित्पुरं प्रयान्ति ।

विहगेष्विव जातपक्षपूगः पुरुषेषु प्रभवेत्कुटुम्बवर्गः ।
सुखगत्युचितोऽपि तत्प्रतिष्ठो न चिरं तिष्ठति कायकष्टदायी ।

अत्रान्तरे दिवं याता सर्वोधाखातोनामिधा । श्रीमत्सैदान्वयोदध्यंचन्द्रिका नृपतिप्रिया ।
यत्संयोगसुखं प्राप्य सोऽग्रासीत्सफलव्ययः । तद्वियोगाद्विदग्धाङ्गः सर्व्वं शून्यमिवाविदत् ।
न्यस्तो राजेन्दुना सिन्धुदेशे यो गुणसुन्दरः । स्वत्राणेन सुरत्राणपदे प्राणाधिकप्रियः ।
श्रीक्यामदेनं सिन्ध्वीशं भागिनेयं सुतोपमं । एम्वराहिमनाम्ना तं हतं युद्धेऽशृणोन्नृपः ।
परमाश्वासनोपायः सुखे दुःखे च योऽभवत् । तदा तन्मरणं राजा भुजच्छेदमिवाविदत् ।
दर्य्यावखानादिमृतो याभून्मन्त्रिसभा नवा । सीलामित्रैः समं सर्व्वा सा ययौ स्मरणीयतां ।
समन्तदो विभुप्राप्तकार्य्योत्पादितसौहृदः । तत्कालं प्रमयं यातोदाता सैरखुराह्वदः ।
दुर्व्वार्त्तामन्वहं शृण्वन्नार्त्तां जानन्निजां प्रजां । सुतान्योन्यवैरेण चिन्तातप्तोनृपोऽभवत् ।
अतीतान् बान्धवान् भृत्यान् सखीन् प्राणसमान् स्मरन् । स्वात्मानमविदद्राजा यूथभ्रष्टमिव द्विपं ।
अत्रान्तरे राजसूनोर्हाज्यखानस्य रक्तजं । अस्वास्थ्यमुदभून्नित्यं मद्यपानातिसेवनात् ।
शौर्य्यौदार्य्यनिधेः सूनोरतिप्रियतया तया । राज्ञ्यैरोत्स्यतता राजहृदुद्याने फलाचिता ।
तदाभून्नीरसप्राया तदस्वास्थ्यदवाग्निना । अथानीयान्तिकं दृष्ट्वा सविकारं भृशं कृशं ।
स्नेहादित्यब्रवीद्राजा पुत्रं मन्त्रिसभान्तरे । अहो पुत्रफलं लब्धं दोषायत्तेन पानजं ।
येनेदृशी दशा प्राप्ता चन्द्रेणेव क्षयावहा । स्वार्थोपची हितः कोऽपि भृत्यस्ते नास्ति रक्षकः ।
पानव्यसनसंसक्तं यस्त्वामुपदिशत्यलं । कियन्तोऽद्यतना भोगाश्चमत्कारकरास्तव ।
किमेकेन भवान् ग्रस्तो विषयेण पतङ्गवत् । अस्मिञ्जन्मनि सामग्री येयं प्राप्तान्यदुर्लभा ।
प्राप्ता नैवेदृशी भूयो यदि दुर्व्यसनो भवान् । किं चिरन्तनवृत्तान्तैर्दृश्यादीनां समीरितैः ।
मद्येनातनु भूपाला दृष्टनष्टा विचार्य्यतां । तथाहि सवलारातिगणतूलसमीरणः ।
मल्लेकजसथा योऽभून्मद्राज्यप्रतिनिधानभूः । तेनापि दृष्टं दुष्टं प्राङ् सोऽत्यर्थी स्तत्सुतश्चकः ।
तस्य पुत्रोऽभवच्छाहिमषोदः प्रमये पितुः । सर्व्वं हारितवान् क्षीवः कुर्व्वन्नर्म तु चेष्टितं ।
यत्र प्रकृतिधात्वाढ्यं तन्मल्लकपुरं महत् । कुपुत्रव्यसनाघातं देहवत् स्मरणीयतां ।
मद्यं यत्लोहितं वर्णं विभर्त्ति चषकान्तरे । जाने पापप्रवृत्तानां हृद्रक्तमिव जायते ।
न मद्येनामुना तुल्यः शत्रुरस्ति हि देहिनां । सेवितोहितकृच्छत्रुर्मद्यं हन्यति सेवितं ।
मैरेयमदमत्ता यां कुर्व्वन्त्यनुचितां क्रियां । उन्मत्तोऽपि न तां कुर्य्यात्तस्य तस्मात्पलायते ।
मद्यरूपेण वेतालः प्रविश्य हृदयं क्षणात् । न केषां हरते प्राणान् सदापरहृदितक्रियं ।
विषेण वामुना पुत्र पीतेनातीदृशी दशा । पाहि स्वं त्यज सावद्यं मद्यमद्यप्रभृत्यतः ।
न चेत्त्यजसि मूढस्त्वं व्यसनार्पितमानसः । अचिराद्दक्षितो लक्ष्या प्रक्षीणायुर्भविष्यसि ।
श्रुत्वेति राजपुत्रस्य स्वपितुः सममतागिरः । त्वदाज्ञां न विना मद्यं पिबामीत्युत्तरं व्यधात् ।
दीप्त्युज्झितं क्षीणदशं मन्दमस्नेहभाजनं । सुतं दीपमिवेक्ष्याभूद्भूपो मोहतमोहतः ।

उपदेशगिरः प्रियाः श्रुतौ गतभाग्येषु भवन्ति जन्तुषु। विपदभ्युदये पुनः स्थिता न मयाज्ञावि किमित्यहन्तुदाः।

अथ खावषयं गत्वा सोऽपि वचन्वितोऽपि सन्। विपद्वह्निवशान्मानामुपदेशो निरर्थकः।

तावता लेहमाशङ्क्य राजपुत्रेति मन्त्रिणः। आदमखानमानिन्युर्गूढलेखैर्दिगन्तरात्।

अनुजागमनत्रासाधया यातोऽग्रजः पुरा। तथाग्रजागमत्रासादनुजो याति देशतः।

एतत्कलहनिश्चिन्तः प्राग्वत्स्वे निजमण्डले। इति बुद्ध्या मदेशेऽस्य कृतोपेचो नृपोऽभवत्।

हाज्यखानात्मजः श्रुत्वा तं पितृव्यं समागतं। युयुत्सु प्राप पर्णोत्सुत्यक्ता राजपुरीं ततः।

आद्रीढकोटमाश्रित्य भ्रातृपुत्रपितृव्ययोः। कश्मीरागमनद्वेषादभवद्युद्धमुद्धतं।

दृष्ट्वं हसनखानस्य चमितं बलशालिनः। विना पैतामहीमाज्ञां नागाद्देशोत्सुकोऽपि सन्।

अग्रजेऽभ्यन्तरं प्राप्ते द्वारस्थे लचिते पितुः। हाज्यखानोऽनुजयुतो युक्त्या साम प्रयुक्तवान्।

दिव्यं मौसुलदेवेन ते कृत्वापि परस्परं। नात्यजन् हृदयादेवं कार्य्यमैर्ण्यादवांशुकाः।

अहो गुहायामेकस्यां प्राप्ता सिंहचतुष्टयी। एतदन्योन्यवैरोत्थोनाशोऽयं समुपस्थितः।

राज्ञोदिशस्य खानानां परिवारस्य मण्डले। सर्व्वास्तान् मिलितान्दृष्ट्वा प्रोवाच सकलो जनः ॥ युग्मं ॥

अत्रान्तरे दयोर्दिष्टं कनिष्ठं श्रेष्ठमात्मजं। विचार्य्यानीय वह्रामखानं सविजनेऽब्रवीत्।

वह्राम ज्येष्ठोभ्रातायं दिष्टोदुर्येष्टितैः कृतः। स्वतपूर्व्वापकारोऽयं हितो जातु न ते भवेत्।

अन्ये यं सेवसे भक्त्या दुराशापस्मानसः। स कथं स्वं सुतं त्यक्त्वा कार्य्ये त्वां समपेचते।

तस्मात्त्वं पैशुनाचारं मा कृथा भाविदुःखदं। मदेकशरणो भूत्वा कालं नय ततोऽचिरात्।

प्राप्स्यन्ति सम्पदः सर्व्वा न्यायमार्गस्थितस्य ते। अन्यथा तैलतप्तायःकटाहफरणोनिभः।

तद्वैरानलमध्यस्थो मुग्धदग्धो भविष्यसि। श्रुत्वेति स पितुर्वाक्यं मुग्धधीरब्रवीदिदं।

देव मे पितृवत्स्नेहं हाज्यखानः करोत्ययं। सेव्यः सएव मे भाति तं त्यजे नैव जातुचित्।

रक्षिष्यति स मां काले कोऽन्योऽस्मादधुना बली। श्रुत्वेति भूपः प्रोवाच क्रुद्धस्तं कृतनिश्चयं।

हा धिक्त्वां मां परित्यज्य पितान्योऽङ्गीकृतस्त्वया। दुःस्थितो विहिता मूढ मोल्लङ्घ्य वचनं मम।

तस्यानाशोऽचिरेणैव भविष्यति न संशयः। इत्युक्त्वा प्रतिमुच्यामुं स्वान्तरेवमचिन्तयत्।

अहो प्रदीप्ताग्नसत्तोऽमी जाता विषद्रुमाः सुताः। चयोऽमी दहनागारादिव हा भस्मपुष्टयः।

अयोग्या दीप्तिरहितो काष्ठाः कष्टावनिष्ठिताः। कदाचिद्विजने राजा सुतानिष्टाविशङ्कितः।

अधुना करणीयं किं मयेति व्यक्तमब्रवीत्। तत्समचं बुधा येऽपि तत्प्रसङ्गादभाषिरे।

राजसुतावाप्ते देशोराज्यलुब्धैः सुतैस्तव। एकस्यैव निजं राज्यं किं नार्पयसि योचितः।

व्याकुलत्वं विशो येन तव न स्याच्च भूपते। तथापि माणिक्यदेवः श्रुत्वामुं सबलं श्रिया।

वैरी साधिन देशस्य सर्व्वनाशोऽचिराद्भवेत्। इति श्रुत्वाब्रवीत्पुत्रस्वभावेचणदचधीः।

स्नेहः श्रेष्ठोऽस्ति किन्त्वस्य कार्य्यज्ञो येन सेवकाः। न सन्ति तादृशा येषां राज्यं दार्ढ्यमवाप्नुयात्।

मध्यमोऽतीव दाताच प्रयुपावसक्षिभे। युवं चेत् स्याद्धायाम्नास्य कर्षमात्रोऽवशिष्यते।

कनिष्ठोदुष्टधीः पापमिष्ठोऽस्मादचिरात् सभा। मष्टा स्यात्सुतं श्रेष्ठं जाने कमपि नोचितं।
मया तावत् स्वयं राज्यं कस्मात्रपि न दीयते। गते मयि बलं यस्य स प्राप्नोत्विति मे मतं।
सहवो न मरिष्यन्ति यदि तन्मम कोगुणान्। गणिष्यति यतः स्थित्या द्वयोर्भेदोहि लभ्यते॥ कुलकं॥

ध्वान्तं पतेद्यदि न दिक्षु जनस्य दृष्टिर्नश्येन्न चेद्यदि मुषन्ति न तस्कराद्याः।
सङ्कोचमेति गुणवान् यदि नाम नासौ जानाति योदिनमणिं परलोकयातं। ३५

स्ववीर्य्येणार्ज्जितं राज्यं योजितं स्वधिया मया। कुपुत्त्रैर्नाशितं सर्व्वं परस्परविरोधिभिः।
सप्ताङ्गन्धातुसम्बद्धं राज्यं देहमिवोर्ज्जितं। दोषैरिवैतैः पुत्त्रैर्मे त्रिभिस्संदूषितं नु यत्।
तत्स्वास्थ्यमाधादयितुं शक्ताः पथ्यचिकित्सया। सन्नग्निर्णाऽगदङ्कारा न सन्त्यचतने चणे।
भुक्ता भोगाश्चिरं शास्त्रगीतकाव्यविनोदनैः। वयः सफलतां नीतं कार्य्यं किमपि नास्ति मे।
देशस्य यावत्युत्पत्तिर्नवा तत्त्रिगुणा मया। सम्पादिता प्रजास्नेहात्कुत्र्याकर्षणयुक्तिभिः। ४०
सर्व्वदर्शनरचायै पात्राण्यालोच्य सर्व्वतः। प्रतिपद्य शुभे काले भूर्नवा धर्म्मसात्कृता।
सच्छिद्रमधुना राज्यं वदने रदनोपमं। तुदति प्रत्यहं तस्मात्तत्त्यागेन सुखं मम।
चौराणामिव दीपोऽहं येषामस्थिगतोऽस्म्यहं। अचिरात् सगुणस्थित्या ते स्युरनुशयार्द्दिताः।
शाम्यन्ति न चिरं तेऽपि मद्विष्टा ये सुतादयः। सकलाः प्रलयं यान्ति भुक्ता धान्यफलं न किं।
युक्त्या निर्य्याणमेवास्य जीवस्येच्छामि साम्प्रतं। येन सर्व्वे भविष्यन्ति पुत्त्राः पूर्णमनोरथाः। ४५
श्रुत्वेत्युक्तिं सदुःखस्य नृपतेस्ते ऽब्रुवन्पुनः। देवेदं चेन्मतं तत्किं कोपोऽयं रच्यते महान्।
परलोकस्य पाथेयं कुरु जीवन्नमुं व्यर्थं। तदाकर्ण्याब्रवीद्राजा युक्तमुक्तमिदं वचः।
किन्तु शृण्वन्तु मे हेतुं यत्कोपोऽयं धृतोमतः। मयि प्रमीते मद्राज्यं मत्पुत्त्रः कोऽपि चेल्लभेत्।
मत्सम्बयेन दृप्तः स प्रजायाः स्वर्ज्जयिष्यति। पुत्त्राधिका प्रजेयं मे रचणीया विभाति या।
तस्याः पीडां भविष्यन्तीं हरिष्ये सम्बयादतः।
पूर्णाविलाषान् कुरुते प्रजेशोरिक्तः प्रजापीडनमातनोति। दृष्टो मृगेन्द्रोरमते गुहान्तं भुङ्क्ते क्षुधार्त्तोवनजन्तुवर्गं। ५०
मत्सम्बयोपकारेण भाविभिः पीडनोज्झितैः। आयतिशं वदद्भिर्मा करिष्यन्ते न गर्हणाः।
पूर्णाद्राजगृहादन्ये पूर्णाः स्युरुपकारकाः। नयन्त्यभ्रेन चेत्तोयं भूमौ वर्षन्ति किं घनाः।

इयं या सामग्री भवति नृपतेः सर्व्वहचिरा धनेनैकेनैव प्रभवति चिरं सा प्रभवता।
फलं पत्रं पुष्पं समदयति यद्विटपिनोधरस्यन्तर्भूतो जनयति तदेकोरसगुणः।

स दीर्घदर्शिनोवाक्यं श्रुत्वेति पृथिवीपतेः। आसंस्तत्रादकर्त्तारस्तद्येते भिषग्वराः।
राजवेश्मनि पयोनिधौ च या सार्हिनोभूति पदार्थपूर्णता। जीवनात्तजनयाचकाचिता सैव तस्य सुषमा समाहिता। ५५
यद्यथुक्तं नरेन्द्रेण तत्ता तत्तत्फलेचणात्। न कः शंसति शोकार्त्तस्तदीयां दीर्घदर्शितां।
सचिवाः सेवकाः पुत्त्रमित्रसम्बन्धिबान्धवाः। दुःखापनोदं कुर्व्वाणाः केऽपि नासन्महीभुजे।
राजा गर्भगृहान्तस्थः शृण्वन् पुत्त्रस्थितिं मिथः। कृतकप्रेमवैराश्चां न वदिनिर्य्याज्ञिया।

संसारदुःखशान्त्यर्थं मन्त्राख्याख्यानवेदिन । अष्टाणेद्गणरात्रं स श्रीमोक्षोपायसंहितां ।
स्वकण्ठस्वरभङ्गाद्यमुदृत्तपरिवर्त्तनैः । व्याख्यामकरवं येन निःशोकोऽभूत्क्षणं नृपः । ११०
भ्रमस्य जाग्रतस्तस्य जातस्याकाशवर्णवत् । अपुनःस्मरणं साधोर्मन्ये विस्मरणं वरं ।
दीर्घस्वप्नोपमं विद्धि दीर्घं वा प्रियदर्शनं । दीर्घं वापि मनोराज्यं संसारं रघुनन्दन ।

यदि जन्म जरा मरणं न भवेद्यदि वेष्टवियोगभयं न भवेत् ।

यदि सर्व्वमनित्यमिदं न भवेदिह जन्मनि कस्य रतिर्न भवेत् ।

यतोयतो निवर्त्तेत ततस्ततो विमुच्यते । निवर्त्तनाद्धि सर्व्वतो न वेत्ति सुखमण्वपि ।
महाव्याख्याश्रवणाभ्यस्तान् स्वावस्थासूचकान्बहून् । इत्यादिकान् स्वयं श्लोकानपठत्स महीपतिः । ११५
मोक्षोपाये श्रुते मत्तस्तत्तत्त्वार्थभावनात् । अथैकदाब्रवीद्राजा विबुधाननिकस्थितान् ।
किमर्थं स्वसुतस्नेहं करोम्येकोन ते हिताः । इत्येव वक्ति मे नूनं कर्णोपान्तागतो जनः ।
अस्थिदन्तादिभिर्भुक्ता मांसं मांसेन भुज्यते । रक्तबीजमये भोगे भ्रमोऽयं न व्यपैति मे ।
अहो मयि स्नेहो सर्व्वसुखदे च्छिद्रकारिणः । नागायामो सुताजाताराज्ञे किमयोग्यथा ।
येस्समं स्वयोनीतं तेऽवशिष्टा न केचन । आजीवनं चलत्येषा तद्वियोगविव्यथा । १२०
देहोटजमिदं जीर्णं केशवृषगणाहतं । सच्छिद्रं रोचते नाद्य दुर्दिने मन्मनोमुनेः ।
भुजगैरिव दष्टानि राज्याङ्गानि सुतैर्मम । तत्त्यागोपायस्वैकोयुक्तोमि नान्यथा सुखं ।
इत्यादि चिन्तयन्राजा पारसीभाषया व्यधात् । काव्यं शीकायताख्यं स सर्व्वगर्हार्थचर्व्वणं ।
राज्ञोधाचेयपुत्राद्याः प्रमेयैरपि मत्कृताः । भूपपक्षं परित्यज्य हाज्यखानमुपागमन् ।
किमन्यद्भक्तमेवाक्ति ये दृष्टा नृपसन्निधौ । अलब्ध्वन्तु निशि खेरं ते खानाये गतत्रपाः । १२५
तादृशेन स्थिते राज्ञि तद्भृत्यानां परस्परं । तत्तद्राचिपतो देशे कोऽप्यजृम्भत विभ्रमः ।
भविष्यन्निव सायाज्यस्याङ्गभागी न कस्तदा । नृपुत्रेषु नु रक्तोऽभून्नतु राज्ञि सुखस्थिते ।
इत्थं स्वभृत्यसञ्चारदुराचारविचारणात् । परिवारान्निजान् सर्व्वान्निर्व्विण्णोऽभून्महीपतिः ।
अद्य ये सान्तिके दृष्टाः प्रातः खानान्तिके श्रुताः । दास्यं कुत्रापि नो प्रापुः शारसादेव सेवकाः ।
यद्गदो वर्ण्यते यस्मै तादृगाश्वासभाजनं । तत्काले सेवको भक्तो दृष्टः कोऽपि न भूभुजा । १३०
यस्मिन्कं यत्र नो दृष्टं यच्छ्रुतं वा कदाचन । निर्यन्त्रणो जनः प्रोचे प्रत्यहं राजमन्दिरे ।
स्वभाद्यकलहकापस्तत्तत्पैशुन्यकर्म्मणा । यद्घामखानोऽनर्यानां कर्णौ मूर्त्तमिवाभवत् ।

स्निग्धोऽयमित्यवगते यदि काष्ठखण्डे दण्डे प्रदीपपदवीपरिदीपिताग्रे ।

किं स ज्वलन्नपि करोति चिरं प्रकाशं दीपं न कं वितनुते निजकान्तलोपैः ।

प्रागस्त्राणाय राज्ञोऽमात्यिप्रा यत्नवेष्टिता । अभूदादमखानः स विचार्णोऽप्यात्मरक्षणे ।
भ्राता मम जिघांसुं मां मत्तामोदेधनिष्ठुरः । अहमेकोऽवलस्तन्मे गतिः कान्या त्वया विना ।
मात्यस्माभिः स्वजीवाशा तत् स्वात्मा रक्ष्यतां विभो । त्वयि जीवति राज्यस्ते भयं मम न विद्यते ।

कुर्व्वन्त्यन्ये तदास्कन्दमन्योन्यरणोद्यताः। इत्यादि वार्त्ता श्रृण्वन्स बभूव भयविह्वलः।
इत्यमादमखानेन कदाचित् ज्ञापितो नृपः। ऊचे तं नास्ति मे लोभो राज्ये वा निजजीविते।
गच्छ हापुरुषाव. त्वं विज्ञार्थं किमिहागतः। इत्थं निर्भर्त्सितः पित्रा कुट्टदीनपुरीं गतः।
अनुजास्कन्दभीतोऽभूत् स्वरक्षणकृतक्षणः।
लुब्धेऽमुष्मिन् भवति हि सुखं सर्व्वदैवेति बुद्ध्या यः संहर्त्तुं रिपुकृतभियोरक्षणीयोऽत्रभाति।
तत्तस्यैवायदि भवति स स्वात्मरक्षाक्षमः को भाण्डग्रामादिव तुरगतः प्रत्युतोपद्रवः स्यात्।
पित्रास्मदर्थमानीतो ज्येष्ठो द्विष्टो भयाय नौ। इति क्रुद्धौ सुतौ श्रुत्वा चकितः स नृपोऽभवत्।
राजा च राजपुत्राश्च तदमात्यपुरोगमाः। अन्योन्याशङ्किताः सर्व्वे न निद्रामुपलेभिरे।
भोगोपचारं सन्त्यज्य तत्कालन्नेपु सेवकः। यत्नस्त्रिङ्गोपकारेण रञ्जयन् स्वामिनो निशाम्।
कर्त्तव्यमाद्यिशत्किञ्चित् यत् स भृत्यान् क्षणान्तरे। अवोचत्कृतकर्त्तव्यान् किमुक्तं न स्मराम्यहं।
स्वहस्ताक्षरसम्पन्नां त्यक्त्वा रीतिं पुरातनीं। ज्ञात्वा प्रकृतिवैगुण्यस्वके नन्वं स मन्त्रिणात्।
यैरस्मत्सदनोत्क्षिप्तः सोऽयं वैरानल. खलै.। तच्छमाय कृतोपिक्ष्मा तैस्तैरुभयवर्त्तनैः।
मदर्द्धितास्ते नश्यन्तु मन्त्रिणस्तनयाश्च मे। ये मन्नाशेन तुष्यन्ति राज्यलुब्धा जिघांसवः।
इत्युद्विग्नो महीपाल' श्मसञ्जपपरायणः। प्राप्तदुःखोऽशपत् सर्व्वे यास्यति क्षतिमेषतां।
स्वामी विरक्तस्तत्पुत्रा मिथो वैरपरायणाः। किमुत्रोत्रविधेयं नः कष्टमापतितं महत्।
इत्थं पौरजन. सर्व्वेष्वुक्रोशातितरां तदा। यवनव्रतमासाप्तो त्यक्तमांसाशनो नृपः।
सन्दध्या च कुपुत्रोऽयं यैरानीतो दिगन्तरात्। तैः स्वात्मरचिभिस्त्वद्यं राज्यं मे बत नाशितं।
एकत. सबलौ पुत्रौ नगरे मिलितौ मिथः। एकतः पुत्र एकाकी तन्निष्ठामन्त्रिणः शठा.।
पुत्रायुद्धं करिष्यन्ति कष्टमापतितं महत्। किन्तु दूये पुरी सेयं पाल्या कुलवधूरिव।
त्वयि जीवति नश्येच्चेत्किं कार्य्यं जीवितेन मे। भक्ताः शक्ता गताभृत्याः किं पृच्छामि करोमि किं।
इत्यादिचिन्तासन्तापजाताधिव्याधिबाधितः। किमुक्तराज्यनिर्व्वन्धः सनिस्पन्द इवाभवत्।
सबालवृद्धं नगरं क्षुभ्यत्तत्तत्कुवार्त्तया। सोऽभूदब्धिमिवोद्धृत्तं समास्थापयितुं क्षमः।
भोक्तव्यं यन्मया भुक्तं किं भोक्ष्येऽद्य नय द्रुतं। आनीतभोज्यसन्येद्युः शिवभट्टं क्षुधाब्रवीत्।
अतिचिन्ताकुलो राजा छायायामथविश्वसन्। दुर्भुक्तान् सचिवान् श्रुत्वा श्रद्दधे न स्वजीवितं।
गतसंविदिव स्थित्वा दिनानि कतिचिन्निजैः। स पृष्टोऽप्युत्तरं राजा न कथाश्चपुदैरयत्।
पृष्टः प्रकृतिभि. कार्य्यं सम्भाष्यानर्थकं वच.। रुजार्त्त इव शय्यायां स सुष्वापैकदालस.।
नाविदंस्तद्रुजोहेतुं लक्षणं वा चिकित्सकाः। जाने वाच्यां शुचं हन्तुं बभूवानशनव्रती।
अत्युन्नतान् सुफलदान्वितितोच्चशाखान् ख्यातान् द्विजप्रियतया शुभमार्गसंस्थान्।
धाता निपातयति सर्व्वजनोपयोग्यान् पृथ्वीधरांस्तरुवरानिव दुष्टवातः।
अत्रान्तरे त्रयः पुत्रा दोषा इव महोल्बणाः। धातुवद्दूषयामासुर्देशे प्रकृतिधातकं।

मूकप्रायं नृपं तादृगवस्थं द्रष्टुमन्वहं । सशङ्कास्तमुपाजग्मू राजपुत्रा भटोल्वणाः ।
गजांस्तुरङ्गांस्तत्पुत्रभीत्यै तादृग्दशन्नृपं । द्वाराग्रे स्थापयामासुः सर्व्वदर्शनदित्सया । ७१५
स्वस्तिवादध्वनिं श्रुत्वा सबाह्याभ्यन्तरा जनाः । द्वितीयेन्दुमिवाद्राक्षुः सानन्दा दर्शनागताः ।
श्रुत्वा बहामखानोऽथ चकितोऽनिष्क्रमागतः । गत्वरं लघुशैर्ज्ञात्वा दूरं भ्राचेऽब्रवीदिति ।
जीवत्यक्षत्पिता नैव मिथ्यैवोत्थाप्यते विटैः ।। द्वाराग्रात्पतितो भूमौ मूकप्रायो विचेतनः ।
तदुत्तिष्ठ वयं यामः ससन्नाहानुपाङ्गनं । हरामस्तुरङ्गादि वद्धा दुष्टांश्च मन्त्रिणः ।
नैमित्तुवन्धं कृत्वामस्तेन नश्यति तेऽग्रजः । श्रुत्वेति सोऽभ्यधात्तैवं वक्तुं युक्तं ममाग्रतः । ७२०
स्वप्नेऽप्यनिष्टं यस्याहं नेच्छामि स्वामिनः पितुः । तच्छ्रुत्वैकां निशां यावत्तदग्रे सोऽनयच्छुचा ।
तावन्मुमूर्षुं तं श्रुत्वा पितृराज्यजिहीर्षया । आदमखानः श्रीजैननगरं सबलोऽभ्यगात् ।
भटसन्नाहसामग्रीं प्रापय्य पथि गोपिता । अत्रमत्तनिशामेकां राजधान्यन्तरालये ।
तावद्धस्सनकोपेशः स्वार्थान्मोमोहयन् परान् । गृहीतदिव्यः श्रीहाज्यखानपक्षं समाश्रयन् ।
अथ निष्काशितोऽन्येद्युः सचिवैः सबलोऽग्रजः । कुम्भदीनपुरीं गत्वा धिया भाग्यश्रियोज्झितः । ७२५

ज्येष्ठोऽप्यभूत्कुशलधीरपि भृत्ययुक्तः शूरोऽप्यनन्यसदृशोद्यमधैर्ययुक्तः ।

प्राप्ते चणे किमपि साधु न कर्म कुर्य्यात् पुण्यैर्विना न हि भवन्ति समीहितार्थाः ।

स चेत्तस्मिन्नपि हलैकमहरिष्यत्तुरङ्गमान् । अभिलप्स्यत्परं राज्यं बुद्धिः कर्मानुसारिणी ।
अत्रान्तरे हाज्यखानः कोपेशानुजचोदितः । राजधान्यङ्गनं गत्वा तुरङ्गाद्यहरत्पितुः ।
यदार्त्तया विनिर्धैर्य्या ये ऽभवन् सुतसेवकाः । विविशुस्ते ससन्नाहाः ससदाः कालपर्य्ययात् ।
अभिमन्युप्रतीहारमुखानिन्द्यं यदभुवन् । तदुत्पिञ्जे तत्फलस्तैरचिरेणानुभूयते । ७३०
तद्दिने हाज्यखानः स सवेलावहिरास्थितः । नाशकज्जनकं द्रष्टुं सोत्कोऽपि द्रोहशङ्कया ।
तदार्त्ताकर्णनाद्भीतो निराशः सपरिच्छदः । आदमखानो विज्ञाणे विपुलाटाध्वना ययौ ।
स तारवलमार्गेण गच्छन्निजजनावृतः । अन्वागतानुजस्याद्वीरलोकत्रयं व्यधात् ।
अभिमन्युप्रतीहारमुख्याः शौर्य्यमसानुषं । दृष्ट्वादमखानस्य सान्वर्थाभिधमूचिरे ।
यावान् स्वप्नपुरे तेन हतोलोकत्रयः क्रुधा । तावानेव हतस्तत्र सङ्कटे गिरिगह्वरे । ७३५
तावद्धस्सनखानोऽपि राजपुत्रोगुणोज्ज्वलः । तूर्णं पर्णोत्समुल्लङ्घ्य कश्मीरान्तरमाययौ ।

यो भ्रातृशोपितनुश्चिरमश्चिरं यश्छायोऽम्नोमरुतरुः पथिकैर्निरस्तः ।

वर्षाम्भसेकमहिमा जनतापशान्त्यै सेव्यः स एव वन पुष्पविचित्रशोभः ।

सदृशैवावहमध्ये या दयोस्तटयोरिव । एकपार्श्वगता सर्व्वा तदाभूद्राज्यनिम्नगा ।
इत्थं भ्रातृद्वयस्थित्या विजयावजयक्रमः । अन्यथा कल्पितः सर्व्वैरन्यथाभूद्विधेर्व्वशात् ।
पुत्रः स्यात्क्व कदेति शोचति पिता जातेति हर्षाकुलस्तद्वृद्धौ यततेऽन्वहं विधिवशैश्चिन्तास्तदीयावहन् ।
वृद्धोविप्रियमिव स्वकं स्वजनकं जानाति सोभान्विनस्तद्वित्तान्निधिया मरिष्यति कदेत्यन्तः सदा चिन्तयन् । ७४०

# ॥ श्रीवरपण्डितकृता ॥

अस्मिन्नवसरे राजा कियद्भिः सेवकैर्वृतः। श्रुतमश्रुतवत्कार्यं स निश्चिन्त इवाभवत्।
दर्शिताशा स्यवास्यस्थ्यकपेयाद्युपक्रमः। नृपेन्द्रो विरुचिः क्षीणकालचन्द्र इवाभवत्।
प्रजाभाग्यविपर्यासात् सर्वोपायाभाव विच्छविः। कल्पान्तरविवस्वांस्तं गन्तुं प्रावर्त्ततातुरः।
कम्पितोष्ठपुटज्ञातमन्त्रपाठः कवेर्दिने। द्वादश्यां ज्येष्ठमासस्य मध्याह्ने जीवितं जहौ।
प्राणप्रयाणसमये नृपतिः स समेचितः। सर्वाङ्गनिर्यत्सौभाग्यभाग्याहृतमुखच्छविः। ०५५
जाने तद्वदनं लक्ष्मीसदनं खेदसन्ततिः। निर्यद्भाग्यतरङ्गिण्याः प्रवाह इव दिद्युते।
तज्जीवरत्नहरणाज्जातभीतिरिव ध्रुवं। प्राणवायुर्हरस्नायुः क्षणं त्वर्णगतिं व्यधात्।
प्राणान्ते विगलत्तूर्य्यघोषमनेत्रजलच्छलात्। निरगान्नरदेवस्य प्रतापो हरसो ध्रुवं।
दापञ्चाशतमब्दान् स राज्यं कृत्वा सुखप्रदं। पट्चत्वारिंशवर्षेऽगाद्दिवं श्रीजैनभूपतिः।
कर्णे स्ययवप्रोद्यच्छत्रचामरकैतवात्। शुचेव पतितौ नूनं सूर्याचन्द्रमसौ दिवः। ०६०
तत्काले मन्त्रिणोऽभ्येत्यादासाजनपदाश्च ये। रुदितास्तुतियाजास्त्रिवापाञ्जलिमक्षिपन्।
राज्यं पञ्चत्ते वर्षे ज्येष्ठे मास्यग्रहीन्नृपः। उत्तरायणकालान्तस्तेनैवान्तरमासदत्।
अतीतगणितेकोनसप्तत्यब्दायुषं नृपं। वदनावगतप्रोद्यल्लक्षणकूर्चकचच्छटं।
शवीभूतं शिवीभूतं शिबिकायां शवाजिरं। रुदन्तो मन्त्रिणो निन्युश्छत्रचामरराजितं।
यत्र सुप्ता इवैकत्र भान्ति पूर्व्वे महीभुजः। भर्तृप्रेम्णा धरण्येव निहिता हृदयान्तरे। ०६५
रुदत्पौरजनप्रोद्यत्तारोरोदननिःस्वनैः। बभूवुस्तच्छुचेवारं साक्रन्दमुखरा दिशः।
क्व प्रयासि प्रजास्त्यक्त्वा हा देव नरजीवित। इत्यसाद्परः शब्दो नाश्रावि नगरान्तरे।
तत्तदाक्रन्दितैः शश्वत्कर्णसञ्जातसंस्रवाः। शून्येऽप्यरण्ये शोकानामाक्रन्दितमयाभवत्।
कर्णे रथाद्योऽक्षिप्य पितुः पार्श्वे नरेश्वरं। कृत्वा पटैकसंवीतं भूगर्भाभ्यन्तरे न्यधुः।
नेत्रनालस्रवद्वाष्पधाराः स्वाचारकारणात्। मुखावलोकनं कृत्वा सर्व्वे स्वम्मुष्टिकाजगुः। ०७०
भूपतिर्भविता नान्यस्त्वत्समो भूरियं गता। इतीव भावनां चक्रुर्मन्मुष्टियदणच्छलात्।
जित्वारीन् प्रबलान् रणे क्षितिमिमां हृत्वा धनैः सर्व्वतो दत्वा कोपमशेषदेशविदिताः कृत्वा पुरीः स्वाभिधाः।
सप्ताङ्गोर्ज्जितभङ्गिसङ्गिसुभगं कृत्वापि राज्यं चिरं हित्वा सर्व्वमहो पटैकरचनामन्ते लभन्ते नृपाः।
स वैरराज्यदावाग्निसन्तप्त इव शीतलं। तद्गृहान्तरमासाद्य सुखनिद्रामिवाभजत्।
मुखं निद्राहतस्येव दृष्ट्वा सौभाग्यसुन्दरं। हाज्यखानोऽकरोत्पित्रे मस्तकं स्वमरात्रिकं।
अपराद्धं मया तात यद्भवः पापबुद्धिना। मन्ये तेनैव रुष्टस्त्वमसहायो गतो दिवं। ०७५
शोकान्धरभूपो धन्योऽयस्त्वां पश्यति नाकगः। धिङ्मां योऽवस्थितो राजन्दर्शनास्तत्वर्पणे।
विघ्नं वापि नो तात मां विना मोक्षवर्त्मने। वदाद्य कथमेकाकी भजसे स्वर्गसम्पदः।
यात्स्ये कोमलशय्यासु मागा निद्रां गणावृतः। स कथं भूगणस्यान्तस्तिष्ठस्येकः सशर्करे।
प्रतिमुच्य भवनं मे प्राप्तस्य स्वराट्कं स कः। अपप्राप्तस्तु मे लापो भूयोवामिति कोपितः।

श्रान्तिच्छं कारितोऽस्माभिः कुपुत्रैः सततं भवान्। श्रेयसावसरं प्राप्य दीर्घनिद्रां करोषि किं। ७७०
स्खलिताभूत्तनुर्नित्यं सततोदितया यया। साद्य किं चलिता राजंश्चिन्ता ते मानसान्तरं।
चित्रे वाथय सङ्कल्पे पश्यामि वदनाम्बुजं। शृणोमि ताः कथाः कुत्र तात ते वज्रपातकी।
राज्यं विपद्दिनं रात्रिः स्वयानं पितृकाननं। जीवनं मरणं नाथ त्वां विना मम साम्प्रतं।
कुपितोवा प्रसन्नोवा कुतोऽप्यागत्य तात मे। दर्शनं देहि नो सोढुं क्षमो विरहवैशसं।
विहाय क नु मां तात गतः पादैकसेवकं। द्युतिं न लभते पद्मकोशको भास्करं विना। ७७५
किं रुष्टोऽसि महीपते त्वमधुना दासोऽस्मि सेवापरो मानं मा भज देहि वाक्यमधुनाप्येकं ममात्यादरात्।
नो जीवामि विना त्वयेति विलपन् कुर्व्वन् भुजाराजिकां साक्रन्दं रुदितं चकार सुचिरं दृष्ट्वा मुखं भूपतेः॥
इति प्रलापमुखरं हाज्यखानं शुचार्द्दितं। राजधानीं ततोऽनिन्युर्दिनान्ते मन्त्रिणो बलात्।
पितुर्लोकान्तरस्थस्य प्रीत्यर्थं तत्क्षणं सुतः। सालोरग्राममात्मीयं न्यधात्तत्र प्रशाजिरे।
ग्रीष्मपानीयदानेन तृप्त्यर्थं तत्प्रदायिनां। बहूनां प्रददौ घोणीमहार्घ्यां धर्म्मसात्कृतौ।
राज्ञानेन विना शून्यं नास्मिन् क्षामीचितुं क्षमः। इतीव दुःखात्तत्कालं स्वनभो रविरविपत्। ७८०
सन्ध्याभ्रशाटीमुत्सृज्य रोदनार्थमिवेशितुः। शुचेव विस्तृतं चक्रे तमःकचचयं चितिः।
आशाप्रकाशकैश्चन्द्रदर्शने गुणिवान्धवैः। परलोकं गते तस्मिन् मण्डले प्रोदभूत्तमः।
तद्दिने रन्धनाभावात्कृहधूमविवर्ज्जिता। शोकमूका निरुच्छ्वासा निर्ज्जीवाभवत्पुरी।
शवागारोपरि शिलां स्फाटिकीं रचनोज्ज्वलां। दीर्घां सर्व्वोन्नतां राज्ञोमूर्त्तिं परिणतामिव।
घनोत्कण्ठदिदृक्षावानहृद्शोकाश्रुबिन्दुभिः। यत्र मुक्ताफलैः पूजा क्रमतोवोपरि प्रभोः। ७८५
पौराः शुक्रदिने भान्ति यत्रान्तःप्रतिबिम्बिताः। राज्ञेव निकटं नीताः कुतूहलतयात्मनः।
कवाटविकटं वक्षो मुखं पूर्णेन्दुसुन्दरं। शुकवद्दीर्घनासाग्रं नेत्रे कमलकोमले।
भ्रूलेखे लोमशे भालं प्रभालम्बितलक्षणं। सा बुद्धिस्ते गुणास्ताश्च राज्यकार्य्यावधानताः।
स्मारं स्मारं जनः सर्व्वो राज्ञः पुरइव स्थितः। पश्यंस्तनोरसासारं संसारं निन्दति न कः।
ज्योत्स्नापूर्णसुधाकरस्य कुसुमोत्कर्षे वसन्तस्य यत् सौभाग्यं शरदि प्रसन्ननभसो नार्य्या नवं यौवनं।
राज्ये चैव विवेकिनो नरपतेर्यत्सर्व्वसौख्यप्रदं धाता तत्कुरुते स्थिरं यदि जने स्वर्गार्जने न स्पृहा। ७९०
बाल्ये पितृवियोगावरसचिवभियोभ्रातृभृत्यैर्व्विरोधः प्राप्ते राज्ये प्रवासो जहिरय समरोऽप्यग्रजेनातिकष्टः।
पुत्रेभ्योऽथ चिन्ता तदनु निजसुतैर्यावदायुश्च बाधा संसारे सर्व्वदासुस्तिष्ठति भविनां नित्यदुःखां स्थितिं धिक्।
नूनं जातकयोगेन पुत्रेभ्योऽदुःखमन्वभूत्। अभूदस्य सुतस्थाने भीमोयत्पापवीचितः।
पण्डिताः करयत्नस्य वाचाला येऽभवन्सदा। तएव तं विना दृष्टाः पौषे मूकाः पिका इव।
याभ्रसरस्वती नेत्रनिभा विकसिता सदा। सन्ध्या संकुचिता साभूद्बुधपुस्तकसन्ततिः।
तर्कव्याकरणादीनां शास्त्राणां ये श्रमं व्यधुः। ते राजरञ्जनायात्र देशभाषाश्रमं व्यधुः। ७९५
राज्ञा ये बहु मानिता गृहसुखश्रीमण्डिताः पण्डिताः शास्त्राभ्यासमहर्निशं प्रविदधुर्धन्यार्जनाद्युक्ताः।

पृष्टाः किं पठतेति ते प्रतिजगुः श्रीजैनभूपे गते कुत्र व्याकरणं क्व तर्ककलहः कुत्रापि काव्यश्रमः ।
योऽभूत् सर्व्वकलानिधिः शुभविधिर्दाताभिगम्यो गुणी काव्यज्ञो घनभायया गुणिरत' कारुण्यपुण्याकुलः ।
सोऽयं हन्त समीक्ष्यतेऽवनितले धिक् पापिनोऽस्मान्छठान् ये जीवन्ति शुचा न यान्ति विपिनं संसारतृष्णाजिताः ।
हारेणेव विनाङ्गनाकुचतटी शास्त्रेण हीनेव धीः सूर्य्येणेव विना प्रफुल्लनलिनी तारुण्यहीना तनुः ।
चन्द्रेणेव विना यथैव रजनी पत्या विना भामिनी येनैकेन विना नृपेण न बभौ कश्मीरराज्यस्थितिः ।
श्रीमत्तर्कादिविद्याभ्यसनरसलसद्दर्व्वसर्व्वप्रवीणप्रेक्षेघोद्दानमानोर्चितविचितयशोभूषितारोषदेशः ।
श्रीजैनोल्लाभदेनो नरपतितिलकः सर्व्वशास्त्रप्रवीणः कश्मीरान् योजयित्वा दिवमपि स गतो योजनायेव नष्टां ।
इत्यादि सन्ततं सन्तो वदन्तोऽत्यन्तचिन्तया । नितान्ततान्तहृदया विश्रान्तिं नाभजन्त ते ।
दृष्टोरम्यश्चिरमुपवने वंशवाटीजनैर्य्यो नानावर्णैर्नवदलगणैर्भूषितो भूरिपत्रः ।
तत्रान्योन्यस्वजनहननात्तादृगभ्युत्थितोऽग्निर्य्येनैकान्तादुपवनगतं सर्व्वमेव प्रनष्टं ।
या कारकसभा भव्याऽभवच्छ्रीजैनभूपतेः । वर्षेणैकेन तच्छापात्सैवा स्वप्नोपमाभवत् ।
क्षुब्धे राज्यमहाम्भोधौ भूपप्रमयवायुना । तत्तत्सेवकरत्नौघ शतैको योऽवशिष्यते ।
प्रभवत उत यावत्स्वप्रभुः सौख्यदाता विदधति खलु तावत्सेवकास्तस्य मानं ।
इह वसति वसन्तो यावदेव स्वनन्तो मधुकरपिकभेकास्तावदेवाद्रियन्ते ।
केचिदप्यवशिष्टा ये सेवकास्तस्य भूपतेः । तेऽप्यनन्तरविज्ञानात्तृणतुल्योपमां गताः ।
इति पण्डितश्रीवरविरचितायां जैनराजतरङ्गिण्यां जैनशाहिवर्णनं नाम प्रथमस्तरङ्गः ।

॥ अथ श्रीवरपण्डितकृता तृतीया जैनराजतरङ्गिणी ॥

## द्वितीयस्तरङ्गः ॥

वन्दे विश्वमयं देवं सर्व्ववाङ्मन्त्रनायकं । यदंशवर्णनस्तुत्या तत्पूजाफलभाङ्क कः ।
पादोदक्षिण एष यच्छति पदं यत्रैव नाट्यक्रिया तत्रैवेच्छति नाम वामचरणः सञ्चारसंस्कारतः ।
इत्थं कण्डलमण्डितं समपदं चारी नरो नर्त्ति यः सन्ध्यायां स सदा ददातु सुखितां देवोऽर्द्धनारीश्वरः ।
अथ हैदरशाहाख्यां ख्यापयन्मुद्रिकार्पणैः । हाज्यखानोऽग्रहीद्राज्यं स ज्यैष्ठप्रतिपद्दिने ।
कृष्यार्थोदक्षिणानन्दी तत्तत्कुशलसूचकः । बभावर्थिजनानन्दो स राज्यग्रहणोत्सवः ।
शुद्धांशुकचितैराजवल्लभैः सुखशालिभिः । बभौ शेकन्धरपुरी पूर्णा द्यौरिव तारकैः । ५
राजधान्यङ्गने हैमं सिंहासनमशिश्रयत् । कृतितीक्ष्णनवोराजा मेरोस्तटमिवांशुमान्
सभतुर्भूपतेरग्रे स्थितौ तस्यानुजात्मजौ । इन्दोः पुरस्तादुद्यन्ताविव शुक्रबृहस्पती ।
राज्ञोऽहस्स्नकोपशस्तद्राज्यतिलकं ददौ । सौवर्णपुष्पपूजाद्यं यदृच्छाविहितव्ययः ।
स हाज्यैदरनृपो घनकान्तोर्जितप्रभः । धाराधर इव धरां दधार धरणीधरः ।
सोऽनुजं स्वसमं भूमिनायकः सुचिरेरसात् । बहामखानं नाम्नामदेशे तं स्वामिनं व्यधात् । १०
चिरान्निजसुतप्राप्त्या यौवराज्यसुखादपि । पितृशोकहतोऽप्यन्तर्विश्रान्तिमभजन्नृपः ।
तस्मादिहितमेवास्तु देशाधीमलराजिताः । प्रसादमतुलं प्रापुरावत्रलवकादयः ।
अन्येऽप्युचावचान् यःमान् सेवकानवभूपतेः । पूर्व्वसेवानुसारेण प्रसादं प्रतिपेदिरे ।
राजा राजपुरीसिन्धुपत्यादीन्दर्शनागतान् । सत्यमुत्सदनकृत्य पार्थिवोचितया श्रिया
सौवर्णकर्त्तरीबन्धसुन्दरान्नृपमन्दिरे । ननन्दुर्मन्त्रिसामन्तसेनापतिपुरोगमाः । १५
पितृशोकार्पितानर्धपट्टांशुकविभूषणाः । विचेरुस्तेरकास्तस्य तदन्तिकगताः सदा ।

आसीद्राजा च सततं मद्यामन्दोाय निष्क्रियः । स्वराज्यपालने दक्षः सन्ध्याघनइवोडुपः ।
पक्षपातोऽज्झणापत्यप्रतिपालनतत्परः । लोभक्रोधविरक्तात्मा मोहान्धक्षपणक्षमः ।
सैदनासिरपुत्राद्यः स मेर्जाहस्सनाभिधः । अहो तत्पितृवत् पूज्यो वज्रकूपादिराष्ट्रभाक् ।
उत्सवादिसदाचारसत्कारेषु सभान्तरे । तएव प्रथमं मान्यास्तद्राज्ये सर्व्वदाभवन् ।
एतान् पक्षाश्रयान्मदङ्गाव्ययं बलवानिति । मेर्जाहस्सनपुत्र्याः स पाणिं पुत्रमजिग्रहत् ।
कृत्वा ज्यंसरमार्गेशात्मजस्याङ्गिरमार्गपे । वाञ्छितं प्रददौ राजा तद्गुणाकृष्टमानसः ।
चक्रे कृतापकाराणामप्यनुग्रहमेव सः । प्रणम्य सिंहः पूर्व्वं हि हन्ति दन्तिगणन्नगः ।
गूढभावो महीपालस्तत्तच्चेष्टाचरैर्व्विदन् । तदा हस्सनकोपेनं सन्नान्याधिकृतं व्यधात् ।
प्रतापतापितारातिश्छन्नकोपो महीपतिः । भक्तान्तरगतो वह्निरिवासीत्परमस्त्युदः ।
कांश्चित्सन्नभयान् कांश्चित्सन्धाय प्रतिपालयन् । कांश्चिदुन्मोलयन्नीत्या नानावृत्तिरभून्नृपः ।
प्रसादकृत्स भृत्यानामभूद्देश्रवणोपमः । मनागप्यपराधेन बभूवान्तः कमन्निभः ।
पयःपिहृकृतामात्यफिय्येडामरकादयः । विचार्य्यासहनं कोपं बभूवुर्व्रतयन्त्रणाः ।
चौराजाराश्च रिपवो भृत्यादुर्णयकारिणः । अक्षीव जम्बुकाश्चेहस्तद्राज्ये भयविह्वलाः ।
श्रीजैननृपतौ शान्ते मूढं गूढशिवोपमे । अत्राधन्त पुनर्लोकं व्यालाइव नियोगिनः ।

विशुद्धपक्षोरुचिरं जिताशः कलाकलापैर्व्विबुधोपजीव्यः ।
पूर्णेन्दुनानेन समोऽस्ति कोऽन्यः कलङ्क एकोयदि नास्ति दोषः ।

श्रुत्वासद्दूषणाः सोऽयं सर्व्वान् हन्तीति कद्धिया । ऐक्यं परप्रवेशार्थं मिथस्तद्भूपका व्यधुः ।
कुकृत्यप्रेरकः पापश्चान्यायोत्कोचहारकः । प्रियोऽभवद्दिवाकीर्त्ती राज्ञोरिक्तेतराभिधः ।
कामीव व्यसनं नित्यमुपालब्धोऽपि भूभुजा । यं त्यक्तुं नाशकद्राजा धैर्य्यवाह्रृदयङ्गमं ।
सञ्चितार्थः प्रजायाधैर्मुद्रादानादिकर्म्मभिः । आसीत् स्वकार्य्यकुशलः ख्यातोधूर्त्तः स नापितः ।
दृढं चित्तेन काठिन्यं माधुर्य्यं जिह्वया धृतं । शठस्य यस्य सततं लोकोद्वेजनकारकं ।
येनाधिकारादेशेऽस्मिन् प्रजाः कुकर्म्मभिः कृताः । दुःखिता रचिताः पूर्व्वं पुत्तनक्षोनहीभुजा ।
भेरभोखारनामापि बुद्धिमान् प्रथितो भुवि । नितरामपकोपाग्रे राज्ञः साचिव्यमादधे ।
वात्सल्यादिहितोराज्ञा मचुर्य्यागणनापतिः । समस्तकार्य्यस्थानेभ्योभुङ्क्ते राजोपजीवितां ।

योवर्षणैकनिरतः शिखिहर्षहेतुः मन्दर्शितातुलफलः कृतकर्षणेषु ।
जातोऽपि यः प्रतिदिनं कृतसर्व्वतापः सोऽयं घनस्तुदति दुःसहवज्रपातैः ।

दुर्मन्त्रिप्रेरितोराजा व्यधात्मदविचेतनः । प्रजाभाग्यविपर्य्यासाद्विवेकविगुणाः क्रियाः ।
स्कन्धरपुरीपार्श्वेषनिर्म्माणचिकीर्षया । अमृतोपवने प्रांशुतरुच्छेदनमादिशत् ।
छिन्नांस्तान् पुष्पितान् वृक्षान् समीक्ष्यैतत्समुत्थिताः । तच्छ्रुत्वेव व्यधुस्तत्र रोलम्बारोदनध्वनिं ।
तन्निर्म्माणप्रदोऽन्येषां न केषां मत्यभाङ्कुदि । अपि दिनपतेर्दीप्रप्रकाशनरसोपमः ।

तद्भूमः चीव एवैष करोतीति विनिश्चितं। स्वाहितापि क्रिया हेतोः पूर्णितं तं नृपं व्यधात्। ८५
बहूनामथ लोकानां नापितोऽवयवच्छिदां। भूपालादाप्तनिर्देशः चीवतोऽपि तथाकरोत्।
नापितोनिर्घृणः पापी क्रोधी क्रकचपाटितान्। पैटकांठक्कुरादींश्च कारयामास भूपतेः।
चलितानग्रजभ्रातुः स्वावनायान्तिकं पथि। रुद्धा शूलेऽधिरोप्यान्यान्पक्षपानप्यघातयन्।
जीवन्तोगणरात्रन्ते स्वकुटुम्बोक्तवेदनाः। पौरैः सास्रुजनैर्दृष्टाः शूलपृष्ठे पुरान्तरे।
वैदूर्य्यभिषजं ज्ञात्वा दूषकं परपक्षगं। अमुञ्चद्बन्धनात्यक्तभुजनाभोष्ठपल्लवं। ९०
तथैव नोनदेवादीन् शिखजादादिसंयुतान्। पञ्चपानकरोत्कृत्तजिह्वानासिकहस्तकान्।
विरुद्धावयवच्छेदशूलारोपणकर्म्मणा। स पूर्णनापितः पापी बभूव नरशौनिकः।
आचार्य्यपुत्तोजय्याख्यस्तथा भीमाभिधोद्विजः। छिन्नाङ्गौ खं ययाशक्तौ वितस्तायां समौज्झतां।
मध्यलीलाव्यसनतस्तद्राज्ये वाद्यदेशवत्। आसीन्मार्दीकवद्भाण्डीदेशेऽत्र प्रचुरा सुरा।
तन्माध्वरसिके राज्ञि सर्व्वभोगपराङ्मुखे। खण्डादीक्षुविकारास्ते सुलभान गुडोऽभवत्। ९५
खुज्याब्दोल्कादिर्यस्यान्तेवासी गीतगुणाम्बुधेः। मल्लाडोदकनामासीत्तन्त्रीवाद्यगुरुर्नृपे।
कूर्म्मवीणादिवाद्यानां प्राप्याप्यङ्गीतकौशलं। आजीवं क्षणमप्यासीन्न तन्त्रीवादनं विना।
तन्त्रीवादविशेषज्ञोराजा व्यञ्जनधातुभिः। स्वयं वादननिष्णातो वैणिकानप्यशिक्षयत्।
स्वावबाद्यरचनैर्ब्बह्मोलाद्यैश्च गायनैः। राज्ञः प्रसादात् किं नाप्तं तत्तत्कनकवर्षिणः।
शौचालयस्थैः सुरतालयश्चैर्भूतैरिवान्तःस्खलनप्रवीणैः।
वशीकृतोयः पिशुनैर्नरेशो बिभेति तस्मान्नु कोनु मर्त्यः। १००
स्थः स्थितं नृपं जातु पिशुनः पूर्णनापितः। अपृच्छत्प्रेरितोऽमात्यैश्चिकीर्षा पूर्व्वमन्त्रिषु।
भवत्पक्षविनाशोयैः कृतस्त्वत्पितृमन्त्रिभिः। प्राप्तराज्येन भवता तएव प्रवलीकृताः।
अमी हस्तनेकोपेशमुख्यास्त्वदनुजादृताः। सोऽपि धूर्त्ताधिया तत्तद्वशीकारसमुद्यतः।
असमर्थशरीरस्त्वं भ्रात्रर्पितभरस्तदा। तत्ते सपुत्तभृत्यस्य न नाशोभविता चिरात्।
श्रुत्वेत्यवोचन्नृपतिः सत्यं मदनुजाप्रियः। किन्तु ब्रवीमि येनायं रक्ष्यते कुटिलाशयः। ५
उग्रोमदनुजस्तीक्ष्णोमत्पदाक्रान्तिसद्यतः। अनेन क्रष्टुमिच्छामि कण्टकेनेव कण्टकं।
कार्य्यापेक्षावशादेतं रक्षामि न तु गौरवात्। श्रुत्वेति दिवान्महनोऽप्यधाज्ज्ञातचिकीर्षिताम्।
अत्रान्तरेऽग्रजो राज्ञामद्रदेशाद्बलान्वितः। भ्रातृराज्यजिहीर्षया पर्णोत्सं प्राप दर्पितः।
तच्छ्रुत्वा नृपतिः क्रुद्धस्तान् समानीय पैटकान्। अवोचत् किं नु कर्त्तव्यं ते तमित्यूचुरुत्तरं।
तटिकाभेतुबन्धनाच्छेत्तुं यामोऽस्य तिष्ठतः। अन्यया दुःसहः प्राप्तस्तदाज्ञा दीयतां विभो। १०
श्रुत्वेति कातरं वाक्यं तेषां दुर्लक्ष्यचेष्टित.। तत्पक्षपातिनो ज्ञात्वा तथेति प्रत्यपद्यत।
प्रतिमुच्य नृपस्तान् स राचाविच्यग्रवीन्निजान्। आनीय फिर्य्यडारादीनन्त्रिणः कार्य्यनिष्ठुरान्।
इयं हस्तनकोपेशपक्षिका यत्समागनः। एतद्बधेन नष्टः स्यादन्ययाभ्यन्तरे विभेत्।

तस्मात्तरैते हन्तव्या युक्त्यानीयेति तान्नृपः। छन्नकोप. सेवकान् स्थानकरोत्कृतसंविदः।
राज्ञा प्रातः समाहूय विसृष्टानुचरा गृहात्। सर्वे हस्सनकोपेशमुख्यास्तूर्ण समाययुः।
कम्पते तुरगस्तो प्रातहृत्त इवाचलः। ताडनैर्बङ्कश सास्त्रः प्राप कष्टान्नृपाङ्गनं।
महोद्दासरणस्यास्तान् राजकर्त्तव्यताकुलान्। कोपेशहस्सननेरकाकादीन् पञ्चपान्नृपः
भृत्यैर्ज्यघरमेराद्यैराज्ञः मेमण्डपान्तरे। छलादिभ्यास्समुत्पाद्य राजधान्यन्तरेऽवधीत्।
किं द्रोहइति यावत्स कोपेशोऽभ्युत्थितोऽब्रवीत्। द्रुघणैकप्रहारेण तावत्प्राणैर्व्ययुज्यत।
शस्त्राघातैर्मुमूर्षुः सन्नुत्थितो नेरकाककः। राज्ञएवाशिष. कुर्व्वन् पुन. परशुना हतः।
लिखन्हसदमेराख्यः स विद्याव्यसनी गुणी। हतो जनमन.कान्तो ययौ कस्य न शोच्यतां।
जीवतां मनसा चैक्यं तेषां नित्यमभूद्यथा। शस्त्रकृत्ततनूद्गच्छच्छोणितैक्यमभूत्तथा।
वर्णकम्बलपृष्ठस्थाजीवन्तस्ते यथाभवन्। निद्राणाइव ते तत्र मृता अपि तथेक्षिता.।
क्षणमात्रात्तथा शस्त्रैर्मरणं राजवेश्मनि। अनन्यसुलभं तत्र तेषां श्लाघार्हतामगात्।
न वित्तं न च दारास्ते न मृत्या न शवाजिरं। तेषां तथा प्रमीतानां ययावन्नोपकारितां।
निजपरिभवभीत्या बन्धवो यान्ति दूरं त्यजति च निजपत्नी का कथा सेवकानां।
प्रतिदिनमृणदैतास्ताडनं बन्धनं वा भवति हि यमभङ्गाद्राजभङ्गोऽतिकष्टः।
स्फुलिङ्गालिङ्गनात् क्रुद्धकृष्णसर्पोपमर्दनात्। मकराकरपाताच्च कष्टं नृपतिसेवनं।
प्रद्युम्नगिरिपादान्ते चण्डालैर्निश्यनाययन्। दृष्टिकाभिस्ततो नीला भूगर्त्तेषु निवेशिता।
कुर्व्वन्ति मौग्धजनाः स्वशवाजिरार्थं यत्नं सदैव बहुकालमपु दत्तचित्ताः।
नो चिन्तयन्ति परमेश्वरमन्तरेण जानाति को मम कदा मरणं कथं स्यात्।
यः स्वायुषोऽवधि भवेति स्वदेहनिष्ठां यस्यान्तको भवति मित्रतयातिवश्य.।
युज्येत तं प्रति शवाजिरकर्म्म कर्त्तुं म्लेच्छेषु दुर्व्यसनमात्रमिदं मतं मे।
ते वैश्रवणभट्टाद्याः क्वापि स्वशवाजिरं। अन्ते यत्र मृता यामे भुवि तत्रैव शायिता.।
एक एको भुवोहस्तशतमानाहृतो रतः। परार्थेऽशदोषस्त्वात्प्राप्नोतो लभते न किं।
श्रुतं यच्छावस्तः स्वर्गमित्रायं स्फुटशूनत्वे। स्वयन्ते तत्सुखं तस्मिन् परलोकगते भवेत्।
अहो लोभस्य माहात्म्यं जीवदवमृता अपि। शवाजिरापदेशेन कुर्व्वन्त्यावरणं भुव.।
महात्मा हन्त कुर्व्वन्तः शतयत्ना. शवाजिरं। तन्निर्माणेन जीवन्ति कियन्तोऽपि बुभुक्षिताः।
बन्धोऽन्यदर्शनादारोहणमापे भुवस्तले। दृष्टा यत्कोटिशोनित्यं सावकाशं तथैव तत्।
इत्याद्यनुचिता निन्दा प्रस्तावादिदिशताच यत्। चन्तव्या श्रीमुखेर्वचात् कविसाधोनिरर्गलाः।
ये गाजरेभरमवाप्य निपीड्य लोकं कुर्व्वन्ति सञ्चयमतो न च दानभोगौ।
अत्युत्कटापभरतप्तजनुष्कदुःखाप्ते कोपरघसनिभादितरन्ति गाशु।
इत्थं तस्मात् रक्षादि तेषां तद्राजमादगात्। सत्कुटुम्बैर्भिराहस्मैर्नाशापिका वराटिका।

कोपिशसञ्चितं स्वर्णपूर्णं रूपकभाजनं। दृष्ट्वा धिक्कृत्य कृपणं थुत्कारं नृपतिर्व्यधात्।
तत्यचान्वह्वरागादीन् हृतसर्व्वस्वसञ्चयान्। कारायामक्षिपद्राजा मुक्त्वैकं मेदहोस्सुनं।
अन्ये पितृपराधेन तस्माद्भृगुसुतोपमान्। क्षत्रियादिव ते सर्व्वे नाशं प्रापुः पुरातनाः।
धासीत् पितुः सभायोग्या तत्तकार्य्यविशारदा। स्मृतपूर्व्वोपकारेण तेन सर्व्वात्रपादिता।
अन्तरङ्गान् हंभभादीन् पञ्चपानधिकादरैः। अरचत् प्राक्तनं स्मृत्वा प्रेम सेवाश्च पैतृकीं।
आदमखानः पर्णोत्से श्रुत्वा कोपिशनाशनं। स्वनामान्वर्यतां बिभ्रद्यो भीतो ययागतं।
बह्रामखानो विभ्राणस्तद्धाच्चकिृतोभृशं। गृहमेत्य नृपेणाश्वासित. कार्य्यावलोकिना।
अस्मिन्नवसरे मद्रमण्डले सुभटत्रयः। अभून्माणिक्यदेवस्य तुरुष्कै. सह संयुगे।
मातुलेन समं यातोयोद्धुं तत्रैव सङ्गरे। आदमखानः स प्रापच्छरभिन्नमुखः क्षयं।
केऽप्यूचुः स निजैरेव हतस्तत्र भयाश्रितैः। केऽपि शस्त्रशलाकापातकृष्टिमर्म्मविदारणात्।
श्रुततन्मरणो राजा दूतैरत्यन्तदुःखितः। तद्देशाच्छवमानीय जननीसन्निधौ न्यधात्।

ज्येष्ठोऽपि शौर्य्यनिलयोऽपि बलान्वितोऽपि प्राप्तोऽपि जन्मभुवमात्तधनप्रपञ्चः।
नैवाप राज्यमुचितं स कृतप्रयत्नो भाग्यैर्विना नहि भवन्ति समीहितार्थाः।

अथवा पितृशापस्य तस्यापि फलितोऽभवत्। यदाप्तोऽपि निजं देशं परदेशे क्षयं गतः।
अत्रान्तरे महोत्पाता दिव्यभौमान्तरीक्षगाः। अहंपूर्व्विकयेवापुर्नृपतेर्जनकम्पदाः।
तथा हि प्रथमं राज्ञि पुष्पलीलाचिकीर्षया। गते मडवराज्योर्व्यां भूमिकम्पोऽभवन्महान्।
अस्मत्कर्त्रंजनः कोऽपि सुखी नैवाधुना स्थितः। इतीव देशे तत्काले चकम्पुर्जनवत्कृताः।
उदभूत् पूर्व्वदिक्पुच्छः केतुर्नभसि विस्तृतः। पूर्व्वं बह्रामखानेन दृष्टोऽरिष्टस्य सूचकः।
स दूरविस्तृतः पुच्छः कालकुन्तोपमोदिने। स्फुरन् प्रतीचीं सत्याशान्तस्थैव ददृशे जनैः।
युग्मसर्व्वडवाराजमन्दुरान्तर्गताभवत्। देशात् क्रष्टुं दंष्ट्रौ राजा यां भिया यवनक्षये।
विहाद्ययोदिने चेदर्व्यन्याः श्रीनगरान्तरे। विडालपोतं सुषुवे शुनी च प्रसवक्षणे।
निष्फलोयः सदानन्दो तरुः स सफलोऽभवत्। उपराजगृहं मूलाद्दाडिमीकुसुमोद्गमः।
सुमनोवाटशाटान्तर्भवं शोणितवर्षणं। इति दृष्ट्वा जनः सर्व्वः क्षते क्षारमिवान्वभूत्।
अत्रान्तरे बहस्पेदखानागाहादिपीडनं। हिन्दुका विदधुः पूर्णनापितादलितक्रुधा।
तच्छ्रुत्वा यवनाः सर्व्वे गत्वा क्रुद्धा नृपान्तिकं। चुक्रुशुर्थेन राजापि द्विजपीडनमादिशत्।
अजरामरबुद्धादीन् ब्राह्मणान्मित्रकानपि। तत्कोपेनाकरोद्राजा निकृत्तभुजनासिकान्।
त्यक्तस्वजातिवेशास्तद्दिनेषु ब्राह्मणादयः। न भट्टोऽहं न भट्टोऽहमित्यूचुर्भटलुण्ठने।
मज्जखादकमुख्या ये पुरे सन्तीष्टदेवताः। तन्मूर्त्तिलोठनं राजा म्लेच्छभैरवयादिशत्।
दत्ता भूर्जैनभूपेन येषां गुणपरीक्षया। तेभ्यस्तां निर्निमित्तेनाप्यहरन्नधिकारिणः।
समाहितफरोमासः ससिद्धोऽपि च्छद्दर्शने। सर्व्वदर्शनविज्ञाय न केषां भयकार्य्यभूत्।

भूपं नित्यमदोन्मत्तं सतन्त्रं मन्त्रिमण्डलं । उत्कोचहारिणः सर्व्वानन्तरङ्गांस्तरङ्गितान् ।
दर्शितावलपोडान्तिपण्डितानवलोक्य च । स्मृतश्रीजैनभूपालगुणमालस्तदा जनः ।
देशे सरुदिताक्रन्दं शुशोचात्यन्तदुःखितः । सर्व्वत्रदुःस्थिराच्छेदायत्तोदितपराभवः ।
सर्व्वकार्य्यान्तरज्ञोऽयं चयं याति कदा नृपः । इति येऽप्यवदन् दुष्टास्तात्मना विभवार्थिनः ।
पारसीभाषया काव्ये यद्दूचे दूषणं विशां । स शापः फलितो देशे श्रीमज्जैनमहीपतेः ।
सेवकाः कितवप्राया भुक्तप्रेष्या नियोगिनः । तच्छापादिव कालेन प्रापात्यन्तनिपीडनाः ।
किमसद्वचकोदैवहतोऽहङ्कामहीपतिः । इत्यादि साखमाक्रन्दाः शुशुचुस्तेऽपि पार्थिवं ।
स्वल्पोऽपि राज्यकालोऽभून्नवाधाभैः सुदुःसहः । निदाघरात्रिसन्दृष्टदीर्घदुःस्वप्नसन्निभः ।
लोत्तराशिगृहद्रव्यहरणैः परपीडनैः । तुतुषुस्तस्य भृत्यौघाः कौशिकास्तिमिरैरिव ।
शय्यारूढोमधुचीवः प्रजाकार्य्यपराङ्मुखः । सर्व्वं दिनं निनायान्तः स्वपार्श्वपरिवर्त्तनैः ।
कुलालगायनोद्गीतं गीतं शृण्वन्दिवानिशं । गुणिभ्यो राजयोग्येभ्यो नादाद्दर्शनमात्रकं ।
शाहाभदेनराज्ये या सम्पन्नातिमनोहरा । लक्ष्मीपुरे राजधानी तां पुलोपोदितः शिखी ।
या बलाद्यमठस्थाने वेश्मालो विपुलाभवत् । सापि दग्धा समं तत्र तत्तत्पौरजनश्रिया ।
इत्याद्युपद्रवान्देशे दृष्ट्वा वास्तव्यनाशकान् । रत्नाशाङ्कवेदित्वशान्तिरित्यवदज्जनः ।
राजा पश्चगृहावासं स्वं ज्वलन्तं समीक्ष्य च । हर्म्यमारुह्य सन्तुष्ट पानलीलां व्यगाहत ।
अस्मिन्नवसरे नैषधिपणः पिशुनैरितः । याचार्थं सबलं पुत्रं वहिर्देशे व्यसर्जयत् ।
यत्सैन्यं वीक्ष्य दैन्यन्ते ययुर्वाह्यमहीभुजः । प्रदोषं रविरश्म्योघं दिवसे तारका इव ।
पूर्व्वं राजपुरीराजो जयसिंहो नृपात्मजं । स्वसारश्च स्वसारश्च दत्वा तोषयति स्म तं ।
कालोधारामसिलतामिव वीक्ष्य तदाश्रितां । कम्पं के नात्र वेशस्थाः प्रापुस्तद्गयतो जनाः ।
सेनादीन्नारकोटीयाः श्रियियुस्तां भयच्छिदः । वलिभिर्मङ्गला देवीमिवोन्नतभुवि स्थितां ।
मद्रगक्खरचित्तेशा राजहंसास्समाययुः । सरोवरमिव प्रोद्यच्छुक्लपक्षविनिर्म्मलं ।
राजपुत्रान्तरोधेन स्वपदार्थोपपादकैः । मातुलैरपि तस्याग्रे सुहृद्भिः कहणायितं ।
कौमारोद्धसिकं वीक्ष्य कटकावकृता अपि । अभूवन्नैश्वर्यरहिता माहिला महिलादव ।
वद्धपङ्क्तिस्सरन्तो सा व्यत्तभेस्तन्नदीतटात् । तत्सेना रामवद्धाब्धिसेतुकौतुकमातनोत् ।
कुटीपाटीश्वरीप्रायं तत्सैन्यं दैन्यवर्जितं । नारायणोदरोद्गच्छदिश्वलोकभ्रमं व्यधात् ।
संशुष्टे भोगपालानां पुरे मद्राचितान्यपि । सुचिरं धूमितान्यासन् गृहाणि हृदयानि च ।
उन्मादद्वदसंघट्टतन्तुरङ्गतरङ्गिता । वाल्लेश्वरगिरेः पादमूलं प्रापास्य वाहिनी ।
तदीयकटकोद्दीपलत्तुरङ्गतरङ्गितः । तं तमेव नतं चक्रे येन येन पथावहत् ।
निस्तृणं भूतलं सन्तु निष्पानीयाजलाशयाः । निरिन्धनान्यरण्यानि तत्सैन्ये चलितेऽभवन् ।
कोऽहं समान्य राज्ञाश्री दत्तसाम्यमयेऽभवं । कुर्व्वन् दृहत्कथाख्यानमभूवं एतपुस्तकः ।

करदीकृतभूपालः स पञ्चाब्दकृतस्थितिः। अभवच्चैत्रमासान्ते कश्मीरागमनोत्सुकः।
तावदभ्राम बह्रामखानोद्दामनिरर्गलः। आक्रान्तमन्त्रिसामन्तोऽज्ञात्वा व्यसनिनं नृपं।
अथ सन्ततपानेन क्षीणदेहबलच्छविः। स वातशोणितव्याधिबाधितोऽभून्महीपतिः।
प्राप्तोहस्सनखानस्य पूर्णचन्द्रइवोदितः।, तान्दुष्टमन्त्रिणः पद्मानिव संकुचितान्व्यधात्।
किं नैतेन समानीतो बह्वापि हर्जगह्वराः। इति रोषं सुते राजा पिशुनप्रेरितोऽग्रहीत्।
पश्चिमाशागतं श्रुत्वा तमपूर्व्वाद्रिसन्निभं। बह्रामखानोऽसन्देहोमन्देह इवशोऽभवत्।
प्राप्ते सुतेऽधिकं सोऽभून्न तदत्यधिकादरः। प्रत्यासन्नविनाशानां धीर्भीत्येव पलायते।
अन्याभ्यर्थनया मन्त्रिसामन्तानां महीपतिः। यात्रागताय पुत्राय ददौ दर्शनमात्रकं।
नूनं स्वानुजभीतोऽभूत्तत्कालं सोऽन्यथा कथं। परिधानादिसत्कारं नूनमेवाकरोत्सुते।
बह्रामोबाधते नूनं मत्पुत्रमिति शङ्कितः। स तस्मिंश्छन्नकोपाग्निः शमीतरुरिवाभवत्।
पानार्थं राजधान्यग्रं तस्मिन्नवसरे नृपः। आरुरोह मनं मृत्यैर्मृत्युनेव प्रचोदितः।
तत्र दुष्करसौधान्तर्लीनया काचमण्डपे। धावन्पपात नासाग्रस्रवदसृग्विसंष्ठुलः।
कथाञ्चिन्नभुजैर्भृत्यैर्नीतः शयनमण्डपं। ध्वस्तच्छायइवादर्शः संमूर्च्छन् शयनेऽपतत्।
भिषजोऽस्यावमन्यासान् कोऽपि योगी चिकित्सकः। विषोत्कटौषधस्यास्य शमने स्म कारयत्।
तस्यौषधप्रयोगेन प्राप्तदाहो दिवानिशं। काङ्क्षति स्म स्वमरणं वेदनार्त्तं न जीवनं।
राजधान्यन्तरे राजसुतः स्वजनकान्तिके। आयुकाद्यदर्शयुक्तस्तद्दिनेषु स्थितिं व्यधात्।
मुमूर्षौ पितरि ज्ञात्वा महतो दर्शनागतान्। तन्निर्गमनिरोधाय द्वारधान्यां भटान् व्यधात्।
स्वालयस्थोऽनुजो राज्ञोभयहर्षाप्तसम्भ्रमः। करानिव रविर्लीनांश्चारान् सञ्चारयन्नभूत्।
तत्कालं राज्यलक्ष्मीः सा पितृव्यभ्रातृपुत्रयोः। दयोरासीत् समारूढा चित्ते संशयधीरिव।
अत्रान्तरेऽह्मदायुकस्तंमत्य सचिवैः सह। बह्रामखानमागत्य युक्तमित्यप्रवीदवः।
स्वामिदेधरमादाज्य रुमस्यं स्वत्वयस्त्वयि। सुग्रहीताभिधो भ्राता प्रयातः कीर्त्तिशेषतां।
ज्येष्ठोऽधुनावशिष्टस्तद्भवान् भज नृपासनं। स्वयं हस्सनखानाय यौवराज्यं प्रदीयतां।
त्वत्पित्रा महतोद्यमाद्रचिता चकिता सती। सेयं त्वयाद्य नगरी पाल्या कुलवधूरिव।
इमन्यत् पुरलुण्ठाकाः काकाइव बलिप्रियाः। ययागतं संयान्त्वेते कुमन्त्रा मलिनत्विषः।
श्रुत्वेति भाषितं तस्य कोपरूक्षाक्षरोऽब्रवीत्। सुस्निग्धोजनकस्यकस्ताद्दक्कल्पद्रुमोपम.।
सदैवादमखानस्य बाधितस्तदुपाधिभिः। परलोकमनालोच्य स्वार्थं सन्त्यज्य दूरतः।
अस्वस्थस्य यथा भ्राता सेवितस्सततं मया। जानात्येवं न कोराज्यं यथा तस्य मयार्जितं।
कोऽयं मद्भ्रातृपुत्रोऽद्य वद कैवास्य योग्यता। अस्मिन् मत्पैतृके राज्ये योग्यो मदपरस्तु कः।
स कनीयानहं ज्येष्ठोवयसा च गुणेन च। पृथिव्यां वीरभोग्यायां साध्वः कोऽत्रपरोऽधुना।

इत्याद्यनुचितं यत्तैरोक्ता तं प्रत्यमोचयत्। यैः संप्रार्थितकन्योऽभूद्राज्यार्थं कृतभावनैः।
असाध्यतांस्तदा मत्वा निराशस्तमपश्यत।
प्रत्यासन्ने नाशे बद्धजलौघस्य बद्धमूलस्य। कुपथाश्रयत्यादौ धृतिरिव सेतौ मतिर्जन्तोः। १९०
युक्तमयुक्तवाक्यैर्भेदयन्नौष्यबलान्वितः। तुरगार्जितं सर्वमदास्यत् स्वयं गतः।
अथवाहं तमेवाश्वैर्दहनिष्यदलोन्नतः। कोपं हन्तुमयास्यचेत् स्थितं पितृपुरान्तरे।
अथवा वाह्यदेशस्थैर्दर्गमिष्यत्तदध्वना। निष्टत्तक्रमराज्ये चेदाक्रमिष्यज्जनैर्महीं।
क्रमात्पक्वलस्यास्य विमुनर्येदिलम्बतः। बालबालिशमन्त्र्योक्तायुक्ता न्याविनिश्चयात्।
अनभिज्ञतया तेन बत किं किं न स्मारितं। नास्मत् कोऽपि चिरं भौक्ष्ययतितो रुषया धिया। १९५
वरमद्य सुते राज्ञा राज्यं दत्त्वास्मि नस्सुखं। इत्येकमेवं सम्बोध्य बलिनं नृपवल्लभं।
आयुक्त्यच्छादमल्लेकसंमन्त्र्य सचिवैः सह। चक्रे सम्भावनां राज्यनिश्चये राजसूनवे।
गत्वा स्कन्दं प्रदास्यामि बद्रामिति दर्पतः। अभिमन्युप्रतीहारो निर्जिकायामिवेषणं।
अथ स्वच्छन्दवार्तां स श्रुत्वा द्रुतं सुतान्वितः। बद्रामखानो वित्राणो निरगान्नगरान्तरात्।
दृष्ट्वा महार्घमणिमौक्तिकविद्रुमौघाकरं श्रयति लुब्धमतिस्त्वएकः। २००
तत्तन्महाभयकरान्मकरांस्तदोषान् वीर्येण यः प्रमथितुं गतभीस्समर्थः।
श्रुत्वा स्वभ्रातृपुत्रस्य चरितं चित्रमत्र सः। निर्नाशितबलः पुत्त्रयुतोऽध्वाराध्वगाचरत्।
यथैव दमखानस्य निष्कासनमयं व्यधात्। तथैवास्याभवद्रात्रौ न चिरेण फलत्यघः।
राज्यस्य द्विपञ्चाशाब्दे कृत्वा मासि च माघके। वर्षेऽष्टचत्वारिंशेऽगाद्दिवं श्रीपञ्चमीदिने।
वेतालोऽवसद्दुर्दण्डस्तम्भमण्डितमण्डपे। तेनैवोच्चण्डकोपेन खण्डितोऽक्रियया नृपः। २०५
इत्यूचुः केऽपि केऽप्यूचुर्योगिनोऽप्रसहस्ततः। न्यस्तात्कृष्टौषधैर्व्यलस्चिरस्तमगान्नृपः।
केचिद्गाढैव दुष्टेन केनच्यात् सुतवर्जितं। भूपतेर्दुश्चिकित्सार्थे कारिताभिषजस्त्वरां।
दिव्यं भोसल्लवेदेन कृत्वा श्वस्ततया तथा। बहिः सौटालदेशादौ कृत्वा द्रोहेण पार्थिवान्।
येभ्यश्च राज्यतिलकं सिंहासनगतोऽग्रहीत्। पित्र्यांस्तान् सचिवान्दत्त्वा प्रमोत्स्यति केचन।
नूनं स पितृशापेन तत्तत्पापेन दूषितः। स्विभोपद्रवतापेन विलयं प्रापदञ्जसा। २१०
निष्कण्टकं पुरं ज्ञात्वा निःशङ्कोनृपनन्दनः। जनकं शिविकारूढं स निनाय शवाजिरं।
मञ्जूषिकान्तराक्षीला तं पटेकावृतं शवं। पितुः पादतले तत्र भूगर्भाभ्यन्तरेऽविशत्।
सर्वं त्वम्मुष्टिकामाचमेतदेवेति शंसिनः। मुखावलोकनं कृत्वा तस्मिन्मुष्टिकं जगुः।
गर्त्तं तत्र समापूर्य शिलां मध्योन्नतां न्यधुः। कतिदिनोऽयमभूत् दुःखं जनानित्येव सूचितं।
अरुदन् सेवकास्तस्य हतवचोपदारणाः। स्मृत्वा स्वामिप्रसादांस्ता मुखरीकृतदिङ्मुखाः। २१५
तद्राज्यं स्वल्पकालीनं प्रमादप्रभवोर्जितं। अविन्दन् सेवकास्तस्य स्वप्नसर्गानिर्धयं।
पारसीभाषया हिन्दुस्तानवाचा च भूपतिः। काव्यं गीतं यथाचेन प्रसंसन्ति न के जनाः।

पुराणधर्मशास्त्राणि शोचापायादिसंहिता । शृण्वतोऽभूपतेरासीद्यामिनीषु प्रजागरः ।

दोषाकुलाः परमृहाग्रहभय कदा ये घूकादयो दिनपतेरुदयं द्विषन्ति ।

तस्मिन् समुद्यति महारुचिरप्रकाशे निद्राभ्रमन्ति विपिनेषु गुहासदुःखाः ।

दुष्टान् भेरिभकारादीन् कृत्वा निष्ठान्विशिष्टधीः । खानोऽन्येद्युः सदुःखोऽपि कारागारान्तरे न्यधात् । ९०

निर्वर्त्यान्त्यक्रियां सर्वां स पितुर्वंशशालिनी । राज्याभिषेकसम्भारं चक्रे षोडशभिर्दिनैः ।

घूकादयो नभसि सन्ति पराभवस्तास्तावत्प्रदोषसमयात्प्रसृतप्रचार. ।

आशाप्रकाशविषदोविलसत्प्रकाशोभास्वान्न यावदुदयं कुरुते सुचण्डः ।

इति जैनराजतरङ्गिण्यां पण्डितश्रीवरविरचितायां हाज्यदेरशाहराज्यवृत्तान्तवर्णनं नाम द्वितीयस्तरङ्गः ॥

॥ अथ श्रीवरपण्डितकृता तृतीया जैनराजतरङ्गिणी ॥

॥ तृतीयस्तरङ्गः ॥

शिवायास्तु नमस्तस्मै त्रैलोक्यैकमहीभुजे । अशेषक्लेशनिर्मुक्तनित्यैश्वर्यैकभाजुषे ।
भूतं यद्राज्यवृत्तान्तं वर्त्तमानं करोत्ययं । स्वर्गाग्ग्याग्यप्रकारेण वन्द्यो योगीश्वरः कविः ।
प्रतिग्रहानुग्रहाभ्यां भुक्ता यन्नृपजीविका । तद्वृत्तं स्वस्य निष्कृत्यै वच्मि श्रीवरपण्डितः ।
स्वदृग्दृष्टमतस्मात्स्वदिपदिभवैकृते । सेयं कस्य न वैराग्यं सूते राजतरङ्गिणी ।
राज्यवृत्तानुरोधेन न काव्यगुणचर्चया । सन्तः शृण्वन्तु मद्वाचं सुधिया योजयन्त्वपि ।
काव्यसौकिर्यदेवेयं कृता सत्यै भविष्यतां । इतीदं लिखितं काव्यं कुर्वन्त्वन्येऽत्र पण्डिताः ।
मतः श्रीहस्सनो राजा यवनोऽस्मिन्नवासनः । शेकन्धरपुरीं त्यक्त्वा पित्र्यां प्रासस्यसुन्दरे ।
अगमज्जैननगरं पितामहविनिर्मितं ।
सिंहासनोपविष्टस्य निर्मलाम्बरभूषणः । बभौ कुवलयानन्दो शशीवोदयपर्वते ।
मल्लकोऽथाह्मदायुक्तो विधाय तिलकं स्वयं । सौवर्णकुसुमैः पूजामकरोन्नवभूपतेः ।
रोध्यासनसमुद्भ्रान्तः कृत्वा छत्रपिधानकं । एकशेषतयैव श्रीरेरचदंशभूषणं ।
चित्रं नवनृपस्यास्य मुखचन्द्रावलोकनात् । नगराननपद्मानां विकाशः समपद्यत ।
अभिषेकक्रियारम्भहोममधूममिषाद्ध्रुवं । हर्षेवोद्धतराज्ञीमुखोच्छ्वासइवाबभौ ।
वाद्यमानोद्यतातोद्यनोदप्रतिरवच्छलात् । सुप्रसन्नाद्दैवास्य प्रोचुः पूर्णाशिषो दिशः ।
ध्वजमालासमुद्दीर्घस्फुरद्रक्तपटाश्चलाः । ज्वाला इव प्रतापाग्नेर्निर्गता नवभूपतेः ।
छायाकुसुमकार्पासास्ता यमुश्चैताः प्रविसृताः । चिरात्स्वगुणराज्याप्त्या हर्षहासाइव श्रियः ।
कौशेयकाञ्चनरश्मिभेर्सेवका नवभूपतेः । स्फुरद्भाग्यतरङ्गस्य तरङ्गाइव तेऽरचन् ।
कार्पासकपरीधानं यत्र यत्राभवत् पुरा । तत्र तत्रास्त तद्राज्ये कौशेयक्रययोर्महान् ।
राज्यलाभे वसन्ताभे सर्व्वस्यैव महीपतेः । भृत्यापहारकाराश्च दुष्टमेघाक्षयं ययुः ।

रविः प्रदीप्तः कुरुते प्रकाशं विभाति चास्मिन् सति सूर्य्यकान्तः ।
तस्मात् समुत्थस्य च पावकोऽन्यस्तमोपहः किं न करोति कार्य्यं ।

आसन् पितृपितृव्याद्या यत्कृते विफलश्रमाः । पौत्रेण हेलया प्राप्तं तद्राज्यं गतकण्टकं ।
पितुः पितामहस्यापि पितृव्यस्य च सम्पदः । भाग्यभाजं नृपं प्रापुस्तुर्व्वाः सिन्धुमिवापगाः ।
षड्दर्शनपरिचयं सोऽग्रहीत् मत्सरोज्झितः । षड्दर्शनक्रिया यस्मिन्नैकमत्यमिवाययुः ।
भूपतेरहमदायुक्तोऽनियुक्तस्सर्व्वकर्मसु । साचिव्यं पुत्त्रसंयुक्तः पुष्याद्युक्तस्तदाकरोत् ।
अथ प्रथममेवाहमदायुक्तं मल्लिकं नृपः । सग्रामग्रामनाथाममेयस्वामिनं व्यधात् ।
पुत्त्रोऽस्य नौरुजा युक्तो द्वारपालादिकार्य्यभाक् । दृषिकामभजद्राष्ट्रं सग्रामविभवोर्जितः ।
पानलीलान्तरे तत्र प्रसादामृतवर्षिणा । येन दारिद्र्यदावाग्निः केषां न क्षपितः क्षणात् ।
वहिर्देशस्थिते राज्ञि बाल्ये यस्त्वेकोऽभवत् । स ताजिभट्टोमल्लेकमतः प्रापान्तरङ्गतां ।
निग्रहानुग्रहव्यग्रः समये राज्यविग्रहे । दत्तदूत्याधिकारेण राज्ञोजिक्केव सोऽभवत् ।
अधिकारनदी पूर्व्वं स्फुरन्ती शतधाभवत् । तदा द्वितीयया वृत्त्या तस्मिन् हतपदा बभौ ।
अन्येऽप्युच्चावचान् ग्रामान् जोनराजानकादयः । पूर्व्वसेवानुसारेण प्रसादं प्रापुरञ्जसा ।
श्रीमल्लिकाहमदस्सर्व्वकार्य्ये यां स्थितिमब्रवीत् । तां नोदलङ्घयद्राजा वेलां सिन्धुरिवोल्बणः ।
पित्र्याः पैतामहावापि विरुद्धा बन्धनेऽवसन् । भुट्टदेशं धिया तस्य तेषां निष्कासनं व्यधात् ।
सर्व्वदर्शनसंयुक्तोनृपो मन्त्रिविधेयधीः । पितामहसमाचारं प्रावर्त्तयत मण्डले ।
स्वामी क्षमी कृतज्ञश्च मन्त्री भक्तः स्मयोज्झितः । संयोगोऽयं प्रजापुण्यैः सुचिरेण निरीक्षितः ।
उच्चासनेषु मार्गेशठक्कुरादीन्निवेशयन् । तद्वत्तद्वद राजाग्रे स निषण्णोऽभवत्तदा ।
हितं प्राणपणेनापि प्रभोस्सम्पादयन्स्वयं । मेहस्वरवदेतस्मिन्नाभवद्भक्तिखण्डितः ।
मठाग्रहारसदननिर्माणातिथिपूजनैः । नृपोपचारैस्साफल्यमनैषीत् सर्व्वसम्पदः ।

कमलममलं दृष्ट्वा श्रीमत्स्वकोषविभूषितं मथयितुमथ प्राप्तोयावन्मदान्धद्वारणः ।
प्रकृतिमलिनस्तावत्तस्य पद्मसरोवरे श्रवणचपलोवद्धो याति क्षयं मधुपैस्सह ।

अत्रान्तरे स बहामखानः पिशुनमोहितः । देशान्तरोद्यमं त्यक्ता युद्धायागान्मदोद्धतः ।
तद्दशान्तरमेष्यामोवयन्तत्र रणक्षणे । इति सेवैर्धृताभक्तमकुर्व्वनाजपूरुषाः ।
कर्णाभ्यन्तरतः प्रैलानुमह्य कटकोत्कटः । क्रमराज्यपुरं प्राप्तः क्रमराज्यजिहीर्षया ।
तावन्मन्त्रियुतोराजा स्थितोऽवन्तिपुरान्तरे । तत्प्रत्याहृत्तिवार्त्तां तां श्रुत्वा तूर्णं न्यवर्त्तत ।
राजा स्वय्यपुरं प्राप्तः पितृव्यागमविक्लवः । आनीय सचिवान् सर्व्वान् सभान्तरिदमब्रवीत् ।
पितुः क्रमागतं राज्यं पुत्त्रस्येत्युचितं मम । कोऽयं पितृव्योज्येष्ठोऽपि कनिष्ठोनिर्मितोद्यमः ।
अथवा वीरभोग्यायां भुवि कोऽयं नयोदयोः । युद्धेन विजयी य स्साम्राज्यभाक् सोऽस्तु मण्डले ।
श्रुत्वेति नृपतेर्व्वाक्यं प्रत्यूचुर्मन्त्रिनायकाः । ये तेऽप्यादमखानाद्यास्त्वदर्थं विधिना हताः ।

## ॥ तृतीया राजतरङ्गिणी ॥ ३ तरङ्गः ॥

कोऽयमल्पबलस्ते स्योधाद्धा स्थानपरिच्युतः। किन्त्वद्यावधेरानास्ति समित्युभयत्रेतनाः।
अमुमेव मिलन्त्येते यदि किं क्रियते पुनः। तच्छ्रुत्वा कोशसामयोमितो गत्वा वहिस्ततः।
देशमाक्रम्य नः कार्य्यं सिध्यत्येवाचिरादिभा। श्रुत्वेति मन्त्रिकः प्राह भूपं तत्र सभान्तरे।
तिष्ठत्वत्र भवांस्तावन्मौनं मन्त्रिसभान्वितः। स्वकीयादमखानोयां जेतुं तं विसृजामहे।
ते चेज्जिता वयं स्याम. पुनस्सुर्व्वबलान्विताः। कोऽयं तत्सम्भ्रमः कस्य सहायः किं करोत्यसौ।
श्रुत्वेत्यादि मतं तेषां विविधं निश्चयोज्झितं। मन्त्रिकाद्धादमन्त्रेण कर्त्तव्ये प्रत्यपद्यत।
पितुः पितामहस्याथ सैन्यं हृत्वा निजान्तिके। पितृव्यान् सेवकान् स्वांश्च दत्वा तत्तद्बलान्वितान्।
सफिर्यडामरांस्ताजिभट्टादीन् व्यसृजन्नृपः। योद्धुं वह्रामखानाय मावरीदेशवासिने।
अथ स्वल्पबलानेतान् जेष्यामीति त्वराकुलः। तावद्वह्रामखानस्तु प्राप दुलपुरान्तरं।
अनागतैः कृताश्वासैरपि राजमहत्तमैः। स्वात्मानं वञ्चितं मेने तन्निराशो नृपात्मज.।
तद्दिने राज्यलक्ष्मीस्सा पितृव्यभ्रातृपुत्रयोः। दयोरासीत् समारूढा कोष्णोस्सन्देहधीरिव।
चौरादवान्धकारौघे दैराज्योपप्लवप्रियाः। तुतुषुश्चक्रभावाद्यास्तं श्रुत्वा क्रमराज्यजाः।
अथ जैनगिरिं यावद्रायया तद्रणाकुलः। दूतस्तावत्समागत्य भूपतेरिदमब्रवीत्।
देव वह्रामखानस्य तनयोनयविच्युतः। युयुत्सुस्समरे बद्धः करीव मदनिर्भरः।
पतिते तद्रणोद्याने त्वद्बलोद्धतमानसे। तत्यजेऽनुचरैः खानः पौषे पर्णैरिव द्रुमः।
ततस्सञ्चरमेराद्यागर्ज्जन्तस्सैन्यनायकाः। दुष्टमेघादिवायातास्वकुलच्छरवर्षणं।
धन्यास्ते श्लाघ्यमरणास्सुरणाः स्वामिनः पुरः। स्वत्वामितप्रसादानां जीवं यत्तृणवत्त्यजुः।
तच्छुद्धये च्चणमवेत्य मितप्रसादं प्राप्ते चणे जहति ये निजजीवरत्नं।
प्राणानपि पुष्पनिकरानिव संविदन्तोधन्यास्तएव कतिचित् प्रभुसेवकेभ्यः।
अथो देवस्य माहात्म्यं यत्तस्यैव रणे भटाः। शिरालमार्गपाद्या ये तद्भृत्याः प्रलयं ययुः।
इदं चित्रतरं यस्य कटके कोऽपि नो मृतः। किन्त्वसङ्कटनिर्मुक्तशराघफलसन्धिजात्।
निष्कृष्टं माग्रकत्कोशात् खड्गं खाने रणोद्यतः। तेनाफत्रायुधः खानोदीनस्सङ्कटवेष्टितः।
चितानलदवासारैर्मिथोपा समपद्यत। यावत्समेत्य हन्तुं तं प्रारभन् कृपया द्रुतं।
तं फिर्य्यडामरस्तावद्रचदाऽऽपञ्जरे। भूः पङ्क्तिगतिदृष्टिश्च द्विजोऽपे निस्सहायता।
मृत्युभीतिरिति प्राभूत् किं किन्त्वस्य दुःखदं। शीतवातभयोद्विग्ना मग्नाः केदारकर्दमे।
त्यक्त्वा तं तद्भटा मग्ना गर्त्तांटाइव तेऽचलन्। अर्जितां सर्व्वसामग्रीं पामरैः परिलुण्ठितां।
साक्रन्दश्च सुतं पश्यन्नश्रद्धैर्य्येण विग्रथे। दृष्ट्वा च क्व च मे भ्राता क्व भृत्याः क्व गृहादिकं।
सपुत्रः सपुभिर्बद्धः क्व पृच्छामि करोमि किं। वरं मरणमेवास्तु मा मास्तु मम जीवनं।
फलितं वचनं मेऽद्य यदुक्तं जनकेन मत्। धिङ्मांश्चिन्तामणिं त्यक्त्वा येन काचमणिः श्रित.।
इत्यादि निन्दन् स्वात्मानं पश्चात्तापहतामयः। जीवन्मरणसम्पन्नः सामग्र्यम्प्रति सर्वांते।
पौषे तद्दिवोसम फन्दपक्षविवर्जितः॥ कुङ्कुमं॥

राज्यं तव क्रमायातं दत्तं देवेन भुज्यतां । फलितो धर्मविजयः सोऽयं भाग्यैर्महीपते ।
किमन्यत्तस्य कर्त्तव्यं यत्तु तूर्णं समादिश । श्रुत्वेति नृपतिस्तुष्टो दत्वास्मै पारितोषिकं ।
जयवाद्यनिनादौघैस्तुर्व्यं बलमतोषयत् । अन्येद्युस्तन्नटाजैनगिर्य्यां कटकवेष्टितं ।
अद्दामखानमानिन्युस्सुसुतं भूपतेः पुरः । संग्रामविजयोत्सिक्तं सत्कर्त्तुं स्वभटव्रजं ।
सहर्षो राजधानीं तामारुरोह नरेश्वरः । उच्चावचोक्तिमुखरपौरान्तरगतं नतं । ८०
भूमेरभ्रमिवेचन्तं लज्जया च भयेन च । रणचणभटन्यस्तहस्तध्वस्तविभूषणं ।
दयालुर्नीचदत्तात्मजीर्णवस्त्रावगुण्ठितं । मुखलग्नेषु भेदोद्यद्रक्ताक्तध्वजवेष्टनं ।
अलक्ष्मीवीचितं दूरात् पितृव्यं चक्षमैचत । भाग्यार्जितस्य भूभर्त्तुरग्रे बद्धस्य मात्मजः ।
दीनात्मा ददृशे पौरैः स्थिराः कस्य विभूतयः ।
लोभाक्रान्तधियो विवेकमुचितं मुञ्चन्ति यन्मोहिताभुक्ता या मनसापि दर्पकलिताल्लब्धुं न शक्याः स्वयं ।
सन्तापाय भवन्ति सन्ततमलं नीताः परैश्चेद्वलात्मा मा सन्तु भवेऽच हन्त चपला वेश्यादृवेताः श्रियः ।
उपेक्षितः पिता तादृगवस्थेः स्वार्थलिप्सया । ज्येष्ठोऽप्यादमखानस्स वाधितोपाययुक्तिभिः । ८५
दुराशयापरोभ्राता श्रियोऽस्वाध्यामयेचणात् । राज्यलोभाद्गृहस्तुते तास्ताद्रोहधियः स्ताः ।
अचेतेन फलं प्राप्तं तदधर्मविनिश्चयात् । दृष्ट्वा बद्धं तमानीतं खानमित्यवदञ्जनः ।
कोऽप्युच्चस्य पितुः शापाद्विमूढस्समपद्यत । तथाहि तं पिता जातु पितृदेधे रहोऽब्रवीत् ।
राज्यं त्वदनुजाभ्यां मे नास्ति वैरतो मिथः । तथाप्यनिष्टौ द्वावेव मम चिन्ताज्वरप्रदौ ।
तदेतौ विनिवार्य्याहं युक्त्या देशसुखाशया । त्वामेव वर्द्धयिष्यामि त्वं मदेकाश्रयो भव । ९०
श्रुत्वेति प्राह तं नाहं जातु चेद्भ्रातरं त्यजे । यतोज्येष्ठोऽस्मि मे लिष्टो द्वयोः किं स करिष्यति ।
श्रुत्वेत्याह्यग्रजं हन्तुं स्वयेच्छुस्त्वां स रच्यति । प्राणप्राघुणहस्तेन भुजङ्गमिव वेश्मगं ।
सिद्धकार्य्यस्य पुत्रस्य वाधते यदि का गतिः । तच्छ्रुत्वा संस्कृतग्रस्स शोकेनेत्युत्तरं ददौ ।
विद्यातीर्थे श्रुतपरिचितास्साधवस्सत्यतीर्थे गङ्गातीर्थे सकलमुनयो योगिनोऽध्यात्मतीर्थे ।
लज्जातीर्थे कुलयुवतयो दानतीर्थे वदान्या धारातीर्थे धरणिपतयः किल्विषं चालयन्ति । ९५
तदाकर्ण्याब्रवीद्राजा सक्रोधं तं दुराशयं । बहुधा युद्धदृष्टोऽसि नाहं यत्रास्मि तत्त्वमः ।
वराकः खड्गधारार्थी तव त्वमपि दर्पितः । किं चक्षुरुत्पाटनेयोग्ये नेत्रे पश्यामि दुर्धियः ।
तदेकएव नष्टस्त्वं भवेस्त्वां नुभयोऽचिरात् । इत्युक्तमस्मिन् पित्रा यत्तदद्य फलितं वचः ।
तमीचेति कथा लोकः सशोकोऽप्यकरोन्मिथः । इति अद्दामखानपराजयः ॥
यथोचितैर्दानमानैस्तोषयित्वा निजं बलं । तस्मिन्नेव दिने राजा तुष्टो नगरमाययौ ।
बद्धं रिपुं समादाय नौकारूढं सुतान्वितं । श्रीजैननगरे राजवाधे स्वे बन्धने व्यधात् । १००
जननी नृपतेः प्रीता दर्शनात्स्नहर्षणा । अमन्यत रणोत्तीर्णं पुनर्जातमिवात्मजं ।
शङ्कितो यौनसम्बन्धाद्भूपतिः कतिचिद्दिनैः । हवावतारसीहादीन् कारागारान्तरे व्यधात् ।

पापीमल्लिकटाजस्य पञ्चगङ्गरदेशजः। पुनश्चाटुकतन्त्रेण तत्रादायासकार्य्यभूत्।
उल्कोचमुद्रादानादिप्रपञ्चाञ्चितवञ्चनः। सुसञ्चयकृता येन देशोऽशेषो विलुण्ठितः।
अभिमन्युप्रतीहारः स्वतन्त्रोमन्त्रिमण्डले। स देवसरसि स्वाम्यमभजद्दलदर्पितः।
सोऽत्रप्रतिगृहचैत्रदत्तवृद्धिः पदे पदे। लुब्धस्य निजमात्मानमनाशीर्भाजनं व्यधात्।
शङ्कोराजगृहासन्नः पित्र्योवन्धनस्थितः। त्वय्यत्र स्थिते कोऽपि नीत्वा द्वैराज्यमाचरेत्।
इत्यादि प्रेरितोऽनेन नेयबुद्धिर्नरेश्वरः। क्रुद्धोबद्धामखानाय नेत्रोत्पाटनमादिशत्।
तस्य तूलाचिते नेत्रद्वये तप्तां शलाकिकां। जैनराजोनकोलोर्ही दृष्ट्वाशार्यमदापयत्।
नैर्गुण्यादचिहन्तुर्य्यत्वष्टाचस्य च या व्यथा। इयं न शक्यते वक्तुं यथार्थं मादृशां गिरा। ११०
दुर्णीतिमवदन् केचित् केचिदीश्वरजृम्भितं। प्राक्कर्म्मपाकमपरे नीचसङ्गमथापरे।
केचिद्विभववैशस्यं कातरत्वमथापरे। तदन्धकरणं श्रुत्वा कोऽप्यवाच्यगिरोऽब्रवीत्।
मानुष्यं मास्तु तच्चेत्स्यादरं प्राकृतवेश्मनि। राजगेहेऽस्तु मा जन्म कस्यापीति न कोऽवदत्।
स्फूर्जद्भाग्यसमुद्भवन्नवनवप्रोल्लाससम्पत्सुखः प्रायोवेत्ति विभुर्व्विनोदकलया कालं विशालं क्षणं।
दौर्भाग्योदितदुर्गतेः स्मृतिनिजप्राच्यप्रकर्षान्ततेस्तस्य प्राप्तमहाभयस्य स भवेत् स्वप्नोऽपि कल्पोपमः।
अयःशृङ्खलबद्धाङ्घ्रिस्सोऽन्धस्तत्रैव बन्धनैः। स्मरन्विभवसामग्रीमनयत्क्षेपमायुषः। ११५
नायं गीतैर्विना जातु वर्त्तते स्म गृहान्तरे। इत्येव तस्य सारावाञ्छिझोजागरणं व्यधुः।
योऽभूच्छय्यागृहे नित्यं सर्व्वाङ्गे सेवकैर्वृतः। अभूवन् केवलं तस्य भृत्यास्तत्कमत्कुणाः।
वितानावलयोयस्य बभूवुर्दुर्लभाः सुरैः। दृष्टास्तएव तद्गेहे लूतातन्तुविनिर्म्मिताः।
यद्वपुः कोमलं पट्टतूलशय्यामभूषयत्। तदा तत्तस्य भूपृष्ठेऽशयिष्टादृष्टविष्टरं।
दीयतां दीयतां तस्य वाणी या त्यागिनः श्रुता। विपत्क्षणेन सैवाभूत्तत्तदन्नपयाचने। १२०
गतं स्वाम्यं हता भृत्याः प्राप्तः परिभवो नवः। बन्धनं शृङ्खलावन्धैर्नेत्रोत्पाटनतो व्यथा।
इत्येवैकः स्मरन् दुःखं सोऽन्धोराजसुतश्चिरं। नाज्ञासीत् स्वात्मनस्तुच्छमपरं प्राक्तयास्वपि।
कोषोज्ज्वलं कमलमेत्य नवं समन्तादस्मिन् रमेऽहमिति तुष्यति चञ्चरीकः।
दोषानुषङ्गमधिगम्य निबद्धमूर्त्तिस्तत्रैव नाशमुपयाति विधौ विरुद्धे।
राजवासःस्वलीलार्थं निर्म्मितस्तेन यः स्वयं। सएव बन्धनायाभूत् को वेत्ति भवितव्यतां।
इत्थं वर्षचयं तावदनुभूतमहाव्ययः। अस्थिशेषतनुःक्षेत्रासस्मिन्नेव क्षयं ययौ। १२५
देशकालमनालोच्य वैरं यः कुरुतेऽरिभिः। स नश्यत्यचिरेणैव शौर्य्यश्रीमण्डितोऽपि सन्।
अभिमन्युप्रतीहारस्तत्तच्छौर्य्यमहोद्धतः। अयुक्तपदं प्रवसं नासहिष्ट स निष्ठुरः।
स्वातन्त्र्येण स्फुरन्नाप्यत् स्फुरदाकच्छरताडनं। दर्पादायुक्तपदस्य स्वघोत्राचिगतोऽभवत्।
उपायान् कुर्व्वतस्तांस्तांश्छद्मकोपेन मन्त्रिणा। बन्धुं तं मल्लिकेनात्र नावाप्यवसरः क्वचित्।
एकदा तद्गृहं गत्वा स्वस्तं श्रीविजयेश्वरे। तद्भिया नृपतीराज्यधान्यन्तरामबन्धयत्। १३०

अभिमन्युः स्वयं ख्यातः पाण्डवाद्यास्य तत्सुताः। शृगालवत्तदाभूवन्निगिच्छा विविधा विधिः।

यस्याहवे मुखमवेक्ष्य महागजेन्द्रा दूरं प्रयान्ति बलिनस्त्वमिलीमुखाद्याः।

दर्पोद्धिमैर्यदि न निर्मितकूटयन्त्रं कस्तं निरोद्धुमलमुत्सहते मृगेन्द्रं।

सपुत्रं हृतसर्व्वस्वं बद्धा नौकान्तरे ततः। ताजिभट्टः समानीय कारागारान्तरेऽक्षिपत्।

यादृग्बह्रामखानाय कारयन्नृपतेरसौ। वर्षैकेन तादृक्षं नेत्रोत्पाटनमन्वभूत्।

यादृग्बह्रामखानस्य व्यथाभूदतिदुस्सहा। अविन्दत्तादृशीं सोऽपि वक्तुं नान्येन शक्यते। १६५

यस्मिन्नेव दिने यस्मिन्मासे विप्रियमातनोत्। तस्मिन्नेव दिने तस्मिन्मासे सोऽपि समासदत्।

सोऽपि वर्षद्वयं भुक्त्वा सपुत्रो नरकव्यथां। बह्रामखानवद्द्रोह्यव्यसनान्तव्यपद्यत।

अद्यैव मद्दृशौ धन्ये याभ्यां मत्कुलवैरिणः। सर्व्वस्वहरणं दृष्टं मरणं जैनभूपतेः।

इत्यूचे निष्ठुरं यस्य दुष्टात्मा कृतलुण्ठनः। तदुक्तिफलमापासौ तयोर्नाशोऽभवत् फलं।

चिन्तितं जैनभूपेन सम्पन्नं नैव यत्पुरा। हेलयास्याद्य पौत्रेण कृतमित्यवदज्जनः। १७०

यत्कर्तुमिच्छति परापचयं मनुष्यस्तेनैव तस्य नियमेन भवेद्विनाशः।

शृङ्गं बिभर्त्ति हरिणः पररन्ध्रबुद्ध्या शार्ङ्गीकृतं तदिषुभिर्हरते तमेव।

दृष्टोरम्यस्थिरमुपवने वंशवाटी जनैर्या नानावर्णैस्तृणगणगुणैर्भूषिता भूरिपत्रः।

तत्रान्योन्याहननजननात्तादृगभ्युत्थितोऽग्निर्येनैकान्तादुपवनगतं सर्व्वमेव प्रनष्टं।

या कारकसभा रम्याभवन्मालमहीभुजां। अचिरेणैव कालेन सर्व्वा स्वप्नोपमाभवत्।

क्रष्टुं मलिकजादोऽयमन्धजं खानमिच्छति। राज्यार्थमिति केनापि राज्ञोऽग्रे पैशुन्ये कृते।

सर्व्वस्वहरणं कृत्वा कारायां बन्धुमादिशत्। श्रुतेन तेन यद्विष्टेन कः सौख्यं समासदत्। १७५

आक्षेपैरर्जिता यद्वित्तेन श्रीर्न्यायवर्जिता। तद्दाक्षेपतस्तस्मान्नीता राजाधिकारिभिः।

उत्कोचमुद्रादानादितत्तदायासकारणात्। स विपत्पतितो माभूत् कस्यापि करुणावहः।

कदर्य्यहस्तेक्षणसौख्यनिष्ठं विमत्ययुक्तं प्रसभं धनं यत्। कष्टेन निर्याति तदेव कष्टं शुनीभगे विङ्गमिव प्रविष्टं।

एकैकं सञ्चितं वस्तु क्रष्टुं कष्टेन तस्करात्। नियुक्तैः पीडनं कृत्वा वित्तान्तर्गतमर्पयत्।

पूर्णनापितमल्लिकजाद्याद्या हृतसम्पदः। बन्धनस्थाश्चिरं भूत्वा ते सर्व्वे प्रमयं ययुः। १८०

तत्तद्राज्यहिताकाङ्क्षिकुले तस्य क्षयावधिः। शापः श्रीजैनभूपस्य प्रसारितभुजोऽभवत्।

मन्त्रैराज्यविवर्द्धनं कुरुत भोस्त्वयं भ्रूते मन्त्रिणो मायं स्वामिनि कुर्व्वतां नहि सुखं स्यादः परत्रेह च।

ये यैर्जैनमहीपनावपकृतं पुत्रैर्न भृत्यैर्न वा तैस्तैर्भ्रं फलमीदृशं तदहिता मात्सर्य्यधीस्त्यज्यतां।

अन्येऽप्युषावधास्तस्य सेवका ये तदाभवन्। तदनिष्टकरास्सर्व्वे नदत्तेऽपि प्रमिम्यिरे।

यावदस्ति वसन्तस्तावद्विलसन्ति समन्ततं भृङ्गाः। तस्मिन्निष्टे नष्टे भ्रष्टच्छाया नु चेष्टन्ते।

पूर्व्वं जैननृपस्तैर्दनासीरादीन् समागतान्। पैगम्बरान्वये जातान् पूज्यान्मत्वा महागुणान्। १८५

सौषाधनकरस्पर्द्धर्मिताद्युपसत्कृतौन्। स्वसुतादानमानेन यांस्तान् राज्ञाधिपान् व्यधात।

तेभ्यश्चोद्ध्यमाला रीम् राजा शाला तरङ्गिणाम्। मध्यगुश्चन्दा देशात्तगुग्णमनर्थयत्।
स सैदनाधिपो धन्यो गण्यो युधि मनीषिणां। योविधाय्यायतिं राशि मति देशागारं ययौ।
सुतोपनयनाद्राज्ञसुचिरं धैर्य्यपाचितं। मक्रूपाधिराज्ञाधिपत्यनित्यमुखोऽप्यसै।
इतस्ततोऽभ्रमन्तस्ते केचिद्दिल्लीपुरं ययुः। केचिदिभश्चाभिम पुनर्निष्काशिता अपि। १९०
नारमन्त वहिर्देशे माघे मधुकरा इव।
प्राप्ता ये परदेशजाः फणभुजा देशेऽत्र सम्पच्युता गर्भोत्यादिव विश्रुतात्मचरिताः कुर्युः प्रजापीडनं।
ते तत्पापभरेण नष्टविभवा निष्काशिताः स्वामिना गच्छन्ति इदशष्टमत्यतुलमा तत्सोऽरमाशाकुलाः।
राजानकैठक्कुरैश्च तर्म्भोर्गपतिभिस्सह। नियद्दूयोगमपम्नभश्शतेश्चेमल्लिकोऽभवत्।
सर्व्वतन्त्राधिकारेण राजतन्त्रमखण्डितं। ताजिभट्टाय मल्लेको मुष्टिपन्थमिवाकरोत्।
पुत्तीकृतोऽयं मद्वंश्यः सदाकश्मात् स्फुरत्यत्न। इति तस्याच मिष्टादो मल्लेकः स्फूर्ज्जितं स कं।
स्वसारं वीचते स्वस्य मार्गेशोऽपि ज्यहंगिरः। स्वसारं सैदनिर्मुक्तिदत्तपत्राह्वितां व्यधात्। १९५
तन्मार्गेशाग्रजं राजा नमते न प्रसन्नधीः। अभ्यर्थ्य ताजिभट्टाय मल्लेकस्तामदापयत्।
ज्यहङ्गिरोऽपि मार्गेशः चितिपालानुरोधतः। स्वापगार्पणमेतस्मै चक्रमे नयदृधीः।
चञ्चरीका इवोद्यानं कुल्या इव महोदधिं। भाग्यभाजं समायान्ति कलत्राणि च सम्पदः।
तां मार्गेशकुलोद्यानकल्पवल्लीं फलप्रदां। तैस्सम्पूर्णगुणैः पूर्णां भट्टोलक्ष्मीमिवासदत्।
सैदनिष्काशनं नैव सम्पन्नं जैनभूपतेः। हेलयैवास्य पौत्त्रेण कृतमित्यवदज्जनः। २००
कृते निष्कण्टके देशे मल्लिकाह्वदसन्ततः। प्रतिष्ठारसिकोराजा तत्प्रभा च तदाभवत्।
विवाहोत्सवसन्देशनाध्ययाचादिमङ्गलान्। नापरामपदीष्चिन्तां चैराज्यमुखितोजनः।
पञ्चाशद्वत्सरे राजा निर्म्ममे निर्म्ममेङ्गितः। दिद्दामठे नदीप्रान्ते राजधानीं मनोहरां।
धन्याहमन्या किं शून्यादत्येवाम्बुनि विम्बिता। स्फुरच्चतुष्किका हस्तैर्नृत्यतीव दिवानिशं।
मद्दर्शनेन कृता केनापीदृशीति दिदृचया। स्वर्णछत्रच्छलाद्यस्याः प्राप्तोव्योम्नो दिवाकरः। २०५
यत्काहल्लिमकोणस्थदारुगारुडमूर्त्तिभिः। त्रस्तास्तरन्तोनायान्ति पक्षिणस्तत्रभोध्वना।
गोलूखातोनाभिधा राज्ञी माता दिद्दैव देवता। विशालां धर्म्मशालां साप्यकरोन्मद्रसाख्यया।
यत्प्रवेशे नृपस्तुष्टो मातामहसमागतः। पत्त्रमेकं व्यधाद्भूरिव्ययशालिमहोत्सवं।
प्रतिष्ठामर्द्धनिष्पन्नां निर्लोच्यानुचितां नृपः। नगरे पितृपुण्यार्थं स्नानगार्हं निनिर्म्ममे।
कुलोद्धरणनागस्य तटभूमौ महीपतिः। वह्निदग्धं नवं चक्रे राजवासं मनोरमं। २१०
विजयेशनदीप्रान्ते राजवेश्म नवीकृतं। भाति भातिशयान्मध्यरत्नं हारावलेरिव।
छत्रं यत्र स्फुरत्पत्रं वितस्ताम्बुनि विम्बितं। प्रेत्य तुष्टैस्सुरैर्मुक्तमिव सौवर्णपङ्कजं।
भाति सुय्यपुरे राजधानी राजविनिर्म्मिता। पुरातनी पराकीर्णा हसतीव सुधासिता।
राज्ञा कृतैरल्पकाचे सोद्याने राजवेश्मभिः। यद्दर्शनादनेकाचोनूनं स्वमभिनिन्दति।

प्रतिष्ठा विहिता राज्ञा मता या निजमण्डले । अन्यास्ता वर्णिता नात्र ग्रन्थगौरवतो मया । १८५
दिद्दामठेऽन्नदायुक्तः क्रमात् लग्नहावलि: । मशीदाहजिरोदारशिलाभित्तिविराजितं ।
स्नानगाहेति विख्यातं धर्मवासं विनिर्ममे । येन नानादिगायाततत्तत्पथिकशालिना ।
दिद्दामठपुरं सर्व्वं ययौ नेत्राभिरामतां । प्रवेशे नृपमानीय षष्टिलक्षकृतव्ययं ।
दत्त्वा प्रतिपुरग्रामं सत्रं यत्रावतारितं । शाहाभिधास्य भार्यापि मठं सुकृतकर्मठं ।
खेरीविषयमार्गान्तर्निर्ममे सप्रतिग्रहं । तत्पुत्री बीवजायुक्ता कृत्वा धर्ममठं नवं । १९०
नगरात् चिन्निकां यावन्महिलसेतुं नवं व्यधात् । तद्दीपे सति यो हन्ति सर्व्वेषां पुरवासिनां ।
स्तम्भनिर्म्मितदीर्घाश्मसेतुबन्धकुतूहलं । भ्रातरावपि तौ धन्यावन्यौ रिचकनूयकौ ।
व्यधातां क्रमराज्यान्तर्मठौ सौधमनोहरौ । ताजिभट्टोऽपि भूपालवाल्लभ्यविभवोर्ज्जितः ।
करालविषये जैनपुरीमध्ये मठं व्यधात् । कुम्भदीनपुरीमध्ये चक्रेऽश्मरचना नवा ।
इन्द्रोऽपीचेत तस्योऽपि भवेत् कर्म्मकुतूहली । रुद्रराजानकोराजवल्लभोभाधिकारभाक् । १९५
खानगाहं स निर्म्मर्त्य वलाह्यमठकान्तरे । नव: सिद्धविहारान्ते निजजन्मभुवोऽन्तरे ।
येन लोकार्त्तिहृच्चक्रे विहारः स्वच्छहोज्ज्वलः । मठाग्रहारमस्जेदाविहारहट्टपंक्तिभिः ।
विंशद्दिग्प्रतिष्ठातामण्डले येन कारिताः । सर्व्वदर्शनसम्पन्नप्रतिपादितदक्षिणे ।
प्रतिहार्य्यचणे येन कोटिरेका व्ययीकृता । स फिर्य्यडामरोजैननगरे मन्त्रसुन्दरं ।
मशीदाहजिरोदारं खानगाहं विनिर्ममे । हयातखातोना राजवल्लभा विभवोज्ज्वला । २००
स्वगवाटाभिधे स्थाने मठं दधं नवं व्यधात् । मोमारखातोना राजमहिषी स्वधनैर्नवं ।
राजधान्यन्तिके जैननगरे स्वमठं व्यधात् । जयरालाभिधा राजपुत्री राजान्वयोदिता ।
शेकन्धरपुरप्रान्ते खानगाहं नवं व्यधात् । श्रीजैननगरीयस्य मशीदाहजिरादयः ।
भान्ति प्रतिष्ठा यत्नैताः पुण्यकीर्त्तिमनोहराः । कर्म्मसत्यधिकारस्थो नापितः फेरठकुरः ।
विजयेशनदीपारे मठं चारुतरं व्यधात् । सव्यभाण्डपतिश्चक्रे विहारो विजयेश्वरे । २०५
योधर्म्मभट्टाद्युपक्रयोधमार्गद्वावभौ । प्रासादं सश्मगेहाद्या भ्रातरोऽस्य वणिग्वराः ।
भीमस्वामिगणेशस्य व्यधुः शैलमयं नवं । तद्गणेशालयं दृष्ट्वोन्नतं सुधया सितं ।
देवात् दक्षमुखं चित्रं भवत्येवासितं नतं । अन्येऽप्युच्चावचा वेश्मप्रतिष्ठा विविधा व्यधुः
याभिः स्वर्गोपमं भाति मण्डलं वेश्ममण्डितं ।
देशेऽस्मिन्विभवोऽभवन् कति न ते यैः सद्व्ययार्थं वयस्संनीतो न नतोस्ततेदपचतायेकाकिनो काकिनेः ।
सोऽहं सम्पदः करोमि यदि नो धर्म्मं प्रतिष्ठादिभीरिक्तो यस्य सुतोऽचिरादिति मतिः पुण्यात्मनो जायते ।
कपोद्दीपे नरेन्द्रस्य वेगाद्दिनसमुत्थिते । दिवामधोर्गतेर्जाता नतु तद्देशनां क्वचित् । २१०
योऽभद्राजविरुद्धानां दण्डखड्गप्रपाठनं । तच्छाब्दे प्रभविष्णूनां तद्दिकल्पोगनहृदः ।
किमन्यद्देश्मनिर्माणव्यसने शास्युपद्रवात् । जाता वनभुवः शून्या दिशो वसतयो यया ।

श्रीतोरमाणदीनारान्निर्यचारानवेत्य च। द्वितीयारीनागमयो न वा तेन प्रवर्त्तिता।
पञ्चविंशतिकोयोऽभूत्पुराणसाधनिर्म्मितः। किञ्चिदूनीकृतयाभूद्व्याप्राचुर्य्यलक्षणात्।
मुक्तामणिं नृपतिमौलिषु योग्यमूर्त्तिं या वर्द्धयत्युपनतेन पयोधरेण।
सा पावनी शुचिरुचिर्जननी सुमुख्या सङ्गच्छते न चिरकालमनेन साकमिति पाठः।
सा शुक्तिकास्य जननी जननीतचित्ता साध्वीव तिष्ठति चिरं वरभुक्तिकामा।
शैशवे स्ववयोदत्त्वा राजा सम्बर्द्धितो यया। गोलखातीनास्य जननी साकस्मात्त्रिदिवं गता।
का पौर्व्वविक्रीतेराज्ञस्तरङ्गतरलात्मनः। सततं प्रतिबन्धाय सिन्धोर्व्वेलेव याभवत्।
तां हिन्दुकसमाचारशतपञ्चरविभ्रमां। स्तला सहदिताकन्दं शुशोच सकलोजनः।
तया वियुक्तस्तत्कालं राजा कृष्णाम्बरास्तरः। दिनश्रियेव पद्मोऽभूद्दुःखसङ्कुचिताननः।
ग्राहयित्वाशुकं शुद्धं व्यतीते दिनसप्तके। सथ्यं मल्लिको राज्ञोव्यधाद्दुःखनिवारणं।
शाहाभदीनपुर्य्यन्तैर्न्निसेतुं विपुलं नवं। तद्धनेनादिशत्कर्त्तुं तत्पुण्यैर्ध्यै महीपतिः।
अभूत्सैद्रान्वये जाता वल्लभा या महीपतेः। हयातिखातोना राज्ञी प्रेमाश्वासविलासभूः।
पदार्थान् घोषभूषादिपरिवारसमन्वितान्। अनन्यरसिकोराजा तस्यै सर्व्वं समार्पयत्।
तयैकयैव राजेन्दुः स सुन्दरगुणश्रिया। अविन्दत् परमानन्दं मालत्येव मधुव्रतः।
विभवे सति भवति भवे कस्यचिदेवेप्सितोलाभः। वर्षति मेघे कृषिकृत्कोऽपि मणिं मौक्तिकं लभते।
महाराज्ञ्यां महीभर्त्तुरस्यां राजसुतोऽजनि। यस्य महम्मदखानाख्यामकरोन्नोसुलेचितां।
ततः पूर्व्वाधिकप्रीते ताजिभट्टे स भूपतिः। स्वसुतं रक्षणायादात् सिन्धुरिन्दुमिवेश्वरे।
चतुःपञ्चाशवर्षेऽथ वैशाखे नरनायकः। पुत्रजन्मोत्सवानन्दमभजद्भाग्यसुन्दरं।
विदग्धचर्चरीपालनर्त्तकीनटगायनान्। उद्दिश्य त्यागरसिकेन कैर्व्वैश्रवणायितं।
पट्टकोशयवस्त्राणी राज्ञे श्रीजैनभूपतेः। सामन्तसचिवादीनामासीत् सत्कारसिद्धये।
तद्राज्ये विभेवादारव्यये स प्राकृतालयात्। उत्सवे चर्चरीपालनटाद्यैः प्रापि तैरपि।
एतोतराजश्रिया प्रीतो नृपतिर्न्नवयौवनः। आनीतगीतविन्दर्यः सङ्गीतरसिकोऽभवत्।
सङ्गीतशास्त्रपड्ङ्गमार्गेशाघाः सुखोचिताः। तारकाइव चन्द्रार्थे व्यरुचन्त सभासदः।
दृष्टचन्द्रावलीराजनृपाभिनयनैपुणात्। राज्ञे वरनटा नाथ्यात्तद्दर्शनकुतूहलं।
प्रत्यक्षतकाम्यसुदन्तभूविक्रियाञ्चलैः। तारामुधारितद्भावनाथ्यहास्यकथाक्रमैः।
अनीकमुख्यवाद्येय प्राणिभाषानुकारकैः। भण्डिमापण्डितोभण्डोमूर्त्तोहास्यरसोऽभवत्।
महाहसनमामापि पितुरभ्यधिकोगुणी। प्रयत्नं दृष्टतम्बीकोमोदवीणामकारयत्।
भाषाभिगीतमामपीं पारसीगीतकोशनं। तुम्बवीणाधरः सोऽर्कं नृपाश्रमोऽप्यदर्शयं।
नाथ्यागीतप्रियो राजा स्वयं संस्कृतपद्यवित्। मादश्रमामयं योक्तं रागालयेदमब्रवीत्।
दृष्ट्वा येन समुल्लसन्ति नरयो वप्साभरेषु क्षणाः पत्रे चावतरन्ति देवतगणा जस्य नयदृष्टाश्रपि।

योदुःखे च सुखे च मूर्खविदुषोर्न्नास्य हृद्बुस्य। वा प्रायः प्रीतिकरो ममास्तु सततं श्रीनादनामा रसः।
अथकण्ठे नृपो गीत्वा रागैकालस्थितिवहन्। रागान् स प्रोच्चगीतांश्च सायर्थ्यान्सदाकरोत्।
अथ गायनवृन्दन्तं प्रवेश्य समागतः। गीताङ्गाधिपतेराज्ञामदान्मे नृपनायकः।
आनीय स्थापिताः सर्व्वे नामधार्हं निवेद्य च। ते ते वहावदेनाद्याः सर्व्वाद्या वृन्दनायकाः।
निर्दोषकण्ठसञ्जातमञ्जुलध्वनिरञ्जकाः। अधीतगीतसद्धातुमातुन्द्रव्यक्तमट्टकाः। १४५
शिक्षाकारादयः पञ्च स्वर्णपञ्चातिचञ्चलाः। अमुञ्चत्पञ्चमथाजातपञ्चेषुरससञ्चयं।
सङ्गीतज्ञं नृपस्तन्ते श्रुत्वैवं तत्समुत्सुकाः। गीते शब्दगुणाः पञ्चदशसंख्यास्थितिं व्यधुः।
केदारगौडगान्धारदेशभङ्गालमालवाः। कर्णाटगायना राज्ञो रागांश्चाप्यस्फुरन् पुरः।
मदनोद्दीपितारात्रौ नव्यभाव्यदशोज्ज्वलाः। अशोभन्तानुगाराज्ञो लासिका दीपिकाअपि।
रत्नमाला दीपमाला नृपमालाङ्किताभिधाः। अकुर्व्वन् लासिकालास्यं हावभावमनोहरं। १५०
झम्पाकम्पाकुलाधमसरसरसताधारसर्व्वाङ्गहारप्रारब्धाश्वास्तलास्योत्तरतरललसद्धावभावानुभावा।
उत्कण्ठाकारिकण्ठोद्गतसततततस्फीतगीतप्रपञ्चा पात्रीयं रम्यगात्री लसति सतिलका कीदृशी रत्नमाला।
गुणिसद्व्रणधात्री प्रेक्षकानन्दधात्री नवकरणविधात्री रूपलावण्यधात्री।
कलितललितगात्री शुद्धसङ्गीतगात्री गुणगणमणिपात्री रूपमालेव पात्री।
यस्या मुखं हिमरुचिं सृजता विधात्रा सम्पूर्णसर्व्वमतेशपतयाच मुक्तः।
आश्यानतामुपगतोऽस्य रुचायमास्ते नासाग्रमौक्तिकमिषादमृतस्य विन्दुः।
आसां कर्णालिकप्रोतलम्बिमुक्ताफलच्छलात्। मुखेन्दोर्निर्गतानूनं लावण्यामृतविन्दवः।
इत्यादिशंसां कुर्व्वाणोनृपतिर्नवयौवनः। लीलामित्रैः समं ताभ्यो मद्यपात्रमगाहत। १५५
तत्तत्कलापरिचये कविवाक्प्रपञ्चे पञ्चेषुसञ्चयनिभासु वराङ्गनासु।
सङ्गीतचर्व्वणविधौ वसुधानुभोगे धन्या नृपाः प्रतिदिनं व्यसनं भजन्ते।
श्रुत्वा दिगन्तरात्कीर्त्तिं राज्ञ कर्णामृतप्रदां। गीतकाव्यकलाख्यातः पवारकदेनोऽभ्यगात्।
गायतः सोऽनुगीतानि स्वकृतानि सभान्तरे। तुष्टोमहीपतिस्तस्मै व्यधात् कनकवर्षणं।
प्रबन्धगीतचतुरः कदाचित्स नृपाग्रगः। अगायत्स च लीलाख्यं प्रबन्धं देशभाषया।
अनभिज्ञतया राज्ञ पृष्टोऽहन्तस्य लक्षणं। ढेंण भरतशास्त्रादेस्तोदाहरणमब्रवं। १६०
पदपाठस्वरैस्तैस्तु तालरागैर्मनोहरं। श्रुत्वा षडङ्गं तं सन्तोराजाभूदुदिताशयः।
उद्गीतस्याप्यवैकल्यं ज्ञात्वा मामब्रवीदिदं। गीतदर्पभृता वादं कुर्व्वनेन सभान्तरे।
तथेत्युक्ते महाराजोद्वयोर्वादमकारयत्। सभायां विहिते वादे गीतग्रन्थावलोकनात्।
श्रुत्वा प्रबन्धान्मत्तस्तु सायर्थ्यागदनोऽभवत्। अहो काश्मीरिकोऽपीदृक् चतुरः सर्व्वशास्त्रवित्।
इत्युक्त्वालिङ्ग्य मां मे त्वं गुरुरित्यब्रवीत् स्फुटं। कौशेयकपरीधानप्रसादानन्दिताशयं।
अकरोन्मां नृपस्तूर्णं तद्वादजयरञ्जित.।

घोषास्त्वोत्पत्तितोषागतिगुणचतुराः पीवराङ्गास्तुरङ्गाः स्फीतं यज्ञोपवीतं कनकमणिचितं द्रव्यमन्यच्च भव्यं।
वस्त्राद्योतास्य पोता निजवपुषि धृतावस्त्वयोगाः सभागाराञ्चा श्रीहस्सनेन प्रथममिह मयि श्रीवरे किं न दत्त।
नयज्ञः शंसदेनोऽभून्मन्त्रीवालाभदेनकः। वीरः शाहाभदेनः स कुददेनो विवेचकः।
श्रीशेकन्धरशाहोऽपि यवनेन्द्रमतिप्रियः। आलिशाहोऽभवद्दाता श्रीमाञ्जैनमहीपतिः।
सर्व्वशास्त्रप्रियः सर्व्वभाषाकाव्यविचक्षणः। राजा हैधरशाहस्तु तन्त्रीवाद्यविशारदः।
सङ्गीतनिपुणः सोऽयं हस्सनेन्द्रो नरेश्वरः। एकैकगुणवाहुल्यात्प्रसिद्धा नृपमण्डली।
मण्डलेऽस्मिञ्जनैर्दृष्टेत्यवोचन्नृपतिः सदा। श्रुत्वा राज्ञोमहागीतं रागालप्तिमनोहरं।
श्रीज्यहाङ्गिरमार्गेशमुख्याः पादौ ववन्दिरे। १७०
देशेऽस्मिन् परवञ्चनात् प्रकुरुते लोको यदा सञ्चयं तत्तद्धर्मविपर्य्ययेण च भजन् स्वाचारनिःसारतां।
उत्पातैर्विविधैस्तदा समुदिताः खम्पीडयन्ति प्रजा दुर्व्वात्यानलदाहदुर्हिममहाशैत्यक्षभेदामयाः।
कदाचित्पौरवणिजेर्गोवधं नगरान्तरे। आजन्महिंदुकाचाराश्चक्रुर्मौसुलवल्लभाः।
यत्र गावो हता भुक्ते तन्मांसैस्तैर्दुराशयैः। सविहारः सनगरः शुद्धेवाग्नौ स्वमक्षिपत्।
अथ नैर्ऋतदिग्वातोजातोत्पातप्रताचितः। अकस्मादुदभूद्देशे प्रत्यूहापातदुःसहः।
आरम्भएव कोऽप्येतं शोकं स्तुर्व्विपश्चितः। गणराचं समालोच्य दुर्व्वातन्तं महाद्भुतं। १७५
खरवर्णेन मेघेन चन्द्रवर्णेन भानुना। नैर्ऋतेनातिवातेन हा प्रजे क्व गमिष्यसि।
वत्सरे पञ्चपञ्चाशे प्रवरेशपुरान्तरे। गोसौनिकापणोपान्तादकस्मादुदभूच्छिखी।
मारी तथैकपार्श्वस्था गुलिकावाढिकावधि। चणात्नगरभूर्दाहाद्दग्धारण्यमिवाभवत्।
भूर्जत्वग्वायुनोद्भूता ज्वलन्ती सजवागता। हृहन्मसजेदाच्छन्नान्तः पपातोत्पातदूतिका।
प्रसारिता चतुर्दिक्षु यत्र नित्यसुधासिता। श्रीशेकन्धरभूभर्त्तुर्मूर्त्ता कीर्त्तिरिवाभवत्। १८०
व्यधाद्यदन्तर्जनताप्रणीता पुनरुत्थिता। त्वत्सङ्गरोवरोत्तुङ्गतरङ्गावलिभङ्गितां।
मन्त्रपाठोद्यतं यत्र यवनानां कदम्बकं। गुञ्जन्मधुपगर्भाब्जषण्डमिव राजते।
चतुर्दिग्द्वारनिर्गच्छत्प्रवारागता जनाः। कुर्व्वन्ति भूगतच्छन्नतद्दर्निर्गमभ्रमं।
यन्मध्योच्चचतुस्तम्भदम्भादिधिदिदृक्षया। चतुष्पादिव तद्धर्मः प्राप्तोभात्युज्झितस्थितिः।
स्वर्णच्छत्रच्छलाद्यत्र मायाकर्णनकौतुकात्। कर्ण दातुमिवाभ्यर्णं भजन् भाति दिवाकरः। १८५
तत्प्रासादनं व्याप्तगगनं रचनाद्भुतं। म्लेच्छदर्शनरासाथारचादुर्गश्रियं ददत्।
कुर्व्वन् कस्याग्निमिदं धविश्वस्यात्मसन्निभं। चणमात्रात्तदायत्तं भित्तिमात्रावशेषतां।
निमित्तशाविधा यस्मा म्लेच्छाः कुर्व्वन्ति भक्तितः। रधामहोत्सवाद्येषु गणशोमिलिताश्सदा।
अभूद्धामधानीयपञ्चावाधादिभिर्दहैः। मसाण्डवचटत्कारं तैः खाण्डववनायितं। ;
ज्वलद्भूर्जत्वचोयातविसृष्टाम्रशिलाकारं। दग्धा जलगता मावः शेकुः प्रशमयितुं न याः। १९०
सुरपत्तनघोषेषु तदुपप्लववायुना। षट्खषष्ट्यावेशोघाच्छिन्ने जज्वलुर्न के।

उत्पातवातजातोर्म्मिमहापद्मसरोन्तरे। शतपञ्चा दिने तस्मिन् किराताः प्रलयं ययुः।
वर्णाचारविपर्य्यासस्तमासः कुजवत्सरः। पुरश्रीर्विहितोद्दासे नित्रासचयकार्य्यभूत्।
अथवा पूर्व्वरूद्वर्णा जाते पुण्यचये सति। नवीनकर्तृनिर्म्माणकीर्त्त्यर्थं कुरुते विधिः।
निर्म्मिता तादृशी राज्ञा सा महासदनस्थितिः। पुण्यश्रीरिव या स्फीता विभाति नगरान्तरे। १९५
अचिरात् सा पुरी दग्धा नवीकृतगृहा बभौ। भूपं तरुणमेवेच्छ विहिता तरुणी प्रिया।
भूपालदुर्व्यसनजाः प्रभवन्ति दोषा नाशाय यद्यपि हिमाध्वनि मण्डलेऽस्मिन्।
अन्योन्यमन्त्रिवरवैरसमुत्थदोषो राज्यं समस्तमपि नाशयति क्षणेन।
शक्तिस्फीतं समुदयलसत्सप्रधालङ्घभङ्गं दत्ते नित्यं यदपि सुभगं सर्व्वकार्य्यचमत्वं।
दैपावातादयइव महामन्त्रिणोऽन्योन्यदुष्टा यत्रैते सुर्गलति नचिराद्दैववत्तत्र राज्यं।
अत्रस्थैः सर्व्वदा रक्ष्यः स्वभेदः प्रमविष्णुभिः। चार्व्वाकाणामिवैषां हि भयं न परलोकतः।
ललितादित्यदेवोक्तामिति नीतिं विलङ्घ्य ये। मिथोवैरं प्रकुर्व्वन्ति ते नश्यन्तीह मन्त्रिणः। २००
मलारसाकदर्य्यावस्थानादीनां विरोधतः। स्वभेदजर्जरं राज्यं दृष्टं श्रीजैनभूपतेः।
तदा प्रभृति तेनैव दृष्टे नाभ्यत्र मण्डले। मन्त्रिणानेन कस्यापि मत्सरो विरमत्ययं।
अहो दोषपिशाचोऽयं रुद्धा राजसभाश्रये। केनापि मन्त्रिणा नैव जीयते सर्व्वनाशकः।
रोगोहतप्रयोगोप्यालोवा एतमहाविपज्ज्वालः। नाशिस्ताद्दृग्भयपूत् प्रकृतिविरोधोयथा देशे।
अत्रान्तरेऽश्वदासुकोयुक्तोऽपि नयसम्पदा। अधीरइव नाशाय नेयबुद्धिमग्रहीत्। २०५
एकदा पितरं पृष्ट्वा विजने नारुजादयः। इत्यूचुर्दूषणं ताजिभट्टीयं त्रिभवासहाः।
नियहानुपदेकायाः समये मन्त्रिमण्डले। उग्रोभट्टः प्रजायासैर्दैशनाशाय वर्द्धितः।
तत्रापि दर्पपिहता राजस्तनुर्नृपास्पदे। अये यथा समायोगः सोऽयं दाहाय दुःसहः।
राज्ञो राजावद्घासि सेनानीरयमेव हि। प्रवर्त्तं बाधते ह्यस्मान् यदि नायं प्रणाश्यते।
इत्याकर्ण्य सुतैरुक्तं गुण्याद्वचोक्त च। पुत्रोक्तोऽपि सत्तेकस्मिंश्चिदपि स्वरव्यत। २१०
राज्याङ्गानि समस्तानि योऽरचत् समया दृशा। प्राक्पुण्यसङ्क्षयात् सोऽपि शनैराशीत् खलन्मतिः।

स्वार्थं परित्यज्य विभोर्हितं ये कुर्व्वन्ति तत्कार्य्यकृतावधानाः।

विनाशकाले समुपस्थिते ते भवन्त्यकस्माद्विपरीतचेष्टाः।

इति चिन्ताकुलस्तांस्तानुपायान् मलिकोऽकरोत्। अथैकदाब्रवीद्राज्ञः सभायां मल्लिकः क्रुधा।
राज्यनाशेन किं राजन्नाक्रान्ता वाह्यभूः परैः। चिन्ता कस्यापि नैवास्ति यावत् सर्व्वं प्रणश्यति।
वैरं स्वैरमहं यामि तदाज्ञा दीयतां विभो। इति श्रुत्वाब्रवीत्ताजिभट्टस्तं साहसोत्सुकः। २१५
यात्रायै दीयतां राज्ञा सेनानीर्मत्परोऽधिकः। तच्छ्रुत्वा सर्व्वसामर्षो दत्वा मलिकवोदितः।
राजा तं कटकोपेतं वाह्यदेशं व्यसर्जयत्। भीत्या प्रीत्या च नीत्या च जग्मुस्तमनुसेवकाः।

मधुपाद्व गर्जन्तोयातुं मधुकरेश्वरं। राजप्रक्रियया रम्यं दृष्ट्वा तं ध्ययशालिनं।
नृपा राजपुरे याद्या बभूवुर्विस्मिताशयाः। अन्येऽप्यत्याभदेवाद्याः समस्ता मद्रमण्डले।
तत्तारखानमुत्सृज्य तुष्टास्तमुपतस्थिरे। तदपोद्दलिता मद्राः क्षुद्राविद्राविताश्रयः।
देशे तत्तारखानीयं सोपद्रवमचीकरत्। दहन् शृगालकोटादौ मस्जेदां खाननिर्म्मितां।
सामान्यकुलजोऽप्येष निःसारोऽनुमितोजनैः। अचिन्त्यक्षतकार्य्यासीत् स्वामिस्नेहे प्रभावतः।
पुरपत्तनघोषादीननयत् स्मृतिशेषतां। प्रतापस्तस्य तत्कालं तीक्ष्णांशोरिव दुःसहः।
तत्तद्दिल्यादिदेशस्थराजोलोकभयं व्यधात्। करदीकृत्य सामन्तांस्तत्साहसनिष्ठुरः।
स्वदेशं प्रत्यगात्तूर्णं पूर्णस्तुरगसम्पदा। स्वामिकार्य्यपरान्मन्त्री पुत्रं पश्यति शत्रुवत्।
शत्रुमप्यति वैराहं पुत्रवत् परिरक्षति। इत्यादि नीतिमुल्लङ्घ्य मल्लिकोदैवमोहितः।
तदुत्कर्षासहस्तस्य दर्पनाशोद्यतोऽभवत्। सबलो बाधते सर्व्वान् बालभ्यादिति शङ्कितः।
मल्लिकस्तं प्रति क्रुद्धो भूपं द्वेषमजिग्रहत्। अत्रान्तरे सुतोराज्ञः कनीयान् दोस्तनामिधः।
पयोदानाय मल्लिकेनोरुजाय समर्पितः। तेन श्रुतेन तद्रूपविधेयत्वविस्फुचितः।
आगच्छन् कटके भट्टा ययौ मन्दप्रतापतां। तस्य सेनागतस्याथ नेयबुद्धिर्नृपेश्वरः।
सत्कारञ्चोदितं तस्मै नाकरोद्विरसीकृतः। अथ तस्यापकारार्थं मल्लिकः स्वयमक्षमः।
देशे गतानां सैदानां पुनरागमने मतिं। यदीयास्तनयाराजंस्तव पुत्रवतीं प्रियां।
रक्ष्यः श्वशुरपक्षः स कथं नानीयते त्वया। इत्यादिप्रेरणाद्राज्ञोराजाराधनतत्परः।
सोपधीन् व्यस्तजस्तखान् सैदाण्डिलीशमण्डले।

तस्यैवेति प्रभवति जनोदुर्णयैर्दूषणाद्यैरेतद्बुद्ध्वा नयति न वयः स्वं कथं गाढमूढः।
सर्व्वां पृथ्वीं जयति न कथं तन्त्रमन्त्रोर्जितोऽसावित्याशङ्क्य भवति पुरुषोभाग्यभाग्यावदास्ते।

अपहृत्य पुनः सैदान् यदानयति मल्लिकः। तेन स्यात् सर्व्वनाशोऽस्येत्यवदत्तीक्ष्णधीर्जनः।
सैदानयनवृत्तान्तं बुद्ध्वा श्रीफिर्जडामरः। स्वद्द गत्वाह्नदायुक्तं युक्तमित्यब्रवीद्वचः।
ताजिभट्टाविधेयोऽयं भृत्यवद्वर्त्तते त्वयि। तदेतं रक्ष युक्त्यास्य विधाय मद्धातनं।
मा प्रवेशय सैदांस्त्वं दुर्धरान्देशकण्टकान्। तुरुष्कपुष्करार्श्वासान् यत्नान्निष्काशितानपि।
एकनाशार्थमिच्छा चेत् सर्व्वनाशस्तदागते। पोतैकदेतोश्चैत्यस्य ज्वलनं किं समर्थ्यते।
नूनं सपुत्रभृत्यस्य नाशो न भविता चिरात्। यत्सैदानयने बुद्धिर्जाता भाग्यविपर्य्ययात्।
कृतापकारान् सैदांस्तानानिनीषुर्भवान् यदि। विषमुष्टिं क्षिप स्वास्ये मात्रायां तत्स्मृत्यते।
मद्वेषात्स्मृते सत्यं शमन्येन त्वया न तत्। विपत्तौ स्मरणीयं स्यान्मयि लोकान्तरं गते।
श्रुत्वेति मल्लिकः प्राह किं कुर्व्वन्ति मयि स्थिते। एकदाज्ञातसामर्थ्याघाटकारा भवन्ति नः।
तयेत्युक्त्वा गते तस्मिन् शमन्यत्वादृणाद्रुते। सैदानयनसङ्कल्पान्न मनाग्विरराम सः।

ध्यात्वा यतित्वादुपदिष्टमिष्टं स्पृशति वाक्यं न हि नष्टचेष्टः।
कष्टे निविष्टः सहि वक्ति शोकाद्विभ्रान्तमतिर्हं न हितोपदेशे।
ततो लेखान् समालोच्य तस्योत्कण्ठितमानसाः। हंसाइवाययुः सैदाः कृतपक्षपरिग्रहाः।
अथ प्रथममेवेह स मेधाहस्सनेऽग्रणीः। अध्यात्मनोहजायुक्तयुक्तोभूपाग्रमाययौ।
विहितान्योन्यकं शपथन् मल्लिकोऽस्मै प्रसन्नधीः। खीयाश्रमं प्रदेशन्तत् स्वकीयं स समर्पितं।
यस्येदहस्सनेनापि सिन्धुदेशाधिकारिता। तस्य तेनैव नाम्नार्थं सिन्धुदेशाधिकारिता।
क्रमात् समागतैः सैदैराक्रान्ते मण्डले बलैः। आभ्यन्तराश्च वाह्याश्च काश्मीरास्तत्रसुर्जनाः।
सैदास्तरङ्गितान् दृष्ट्वा तुरङ्गाद्भूपतेर्मतात्। नृपोजायाविधेयत्वात्तद्विधेयक्रमागतः।
सपुत्रः सोऽह्मदायुक्तोऽबभूवानुशयाकुलः।
पश्चाद्भवेद्या मनुजेषु बुद्धिः कार्य्ये कृते सा प्रथमं यदि स्यात्।
मिथ्यार्पितश्रीः परिभूतशत्रुर्न कोभवेत् सन्ततसौख्यभागी।
अथ सैदाः स्वतन्त्रास्ते कलत्रहरणेच्छया। बन्धनं ताजिभट्टाय कर्त्तुमैच्छंन्स्वद्वेषिणः।
एकदा निशमाकर्ण्य स्वात्मनः सैदचिन्तितं। मल्लिकमदनं प्रायात्ताजिभट्टोभयाकुलः।
सैदविस्फूर्जितं दृष्ट्वा साशङ्कः सोऽभवत्तदा। स फिर्य्यडामरोदृष्टस्तत्कालं प्रमयं ययौ।
प्रातिर्हिर्थादिसुकृतैरिह वा परदुर्लभं। य एक सकलः श्लाघ्यामलस्त्वा न्यचणे क्रियां।
तच्छ्रुत्वा नृपतिस्तूर्णं क्रुद्धः सैदप्रतारितः। रोद्धुन्तश्चसजश्चैनराजानकमुखान् भटान्।
स्वगेहे स्थाप्यतां बद्धोहतस्वोदत्तरचकः। इत्युक्तोमल्लिकस्ताजिभट्टं तेभ्यः समर्पितं।
तथैव स्थापितो बद्धः पुण्यशेषतयात्मनः। कालं हृत्वाकृतापायः सकुटुम्बोऽत्यवाहयत्।
भूर्य्यर्थव्ययपुण्यः स बद्धोऽपि स्वस्वहान्तरे। सकुटुम्बः सुखं तस्थौ मरालइव मानसे।
विभवे दानभोगं यः करोति सुकृतेच्छया। एतद्दृष्टः समाप्नोति भूयस्ताजिभट्टवत्।
एवं मल्लिकाह्लादेन परोद्रेकासहिष्णुना। ध्वस्तमाया व्यधीयन्त सर्व्वे ते प्रभविष्णवः।
कृतापकारिसैदेभ्योभागिनेयप्रणाशनात्। व्यहाङ्गिरोऽपि मार्गेशो मल्लिके शङ्कितोऽभवत्।
सर्व्वाधिकारसामग्री स्वपक्षस्य समर्पिता। प्रतीहारादिवीरेन्द्राः स्वार्थबुद्ध्या विनाशिताः।
इत्यादिदूषणे राजा मल्लिके विरसोऽभवत्। रचत्युक्ता स्वमात्मनं कदाचित्कृतदर्शनः।
नैकत्रावस्थितिस्तिष्ठन् स्वराष्ट्रान्तःस्थितिं व्यधात्। अथागात् कुसुमक्रीडां कर्त्तुं सैदसमन्वितः।
भवनोपवनं राजा मत्रैश्चिचरथं यथा। विधाय लीलां पुष्पाणां नौकायातो महीपतिः।
मार्गेशनोहजायुक्तः पानलीलां व्यगाहत।
सर्व्वे परस्परक्षीवास्तत्तद्वाचानुबन्धिनः। ते दृष्पयदवान्योन्यं चक्रुर्मांकुकुरताडनं।
क्षोभे प्रवृद्धे क्रुद्धोऽथ त्यक्तमस्तकवेष्टनः। अगात्कर्त्तुमुपालम्भं नृपोमल्लिकमन्दिरं।
प्रसादितोऽपि स प्राप राजधानीं क्रुधान्वितः। पुत्रदुर्णयजः शोकोमल्लिकस्य च मानसं।

अन्येद्यूरहितांस्तस्य राजा विरलमानसः । रक्षोनायुक्तपत्तोमे युक्तमित्यब्रवीद्रहः ।
अवश्यमेव छिद्रं तं समासाद्य विरोधिनः । अपकाराय सन्नद्धा देहे दोषाइवाभवन् ।
राज्ये योसौभखानश्चेत् कुर्युः..किं क्रियते त्वया । एभ्यानीत्वा तदन्यस्मै देह्येतं रक्षणाय भोः ।
तथेत्युक्त्वा नृपोऽन्येद्युर्जोनराजानके द्रुतं । विन्यस्य रक्षणे युक्त्या मल्लिकात् खानमग्रहीत् ।
पुत्त्रं विन्यस्य भूपश्चे तद्दिने खण्टहस्थितः । अपकर्त्तास्मि शत्रूणां प्रातरित्यब्रवीत् प्रियां ।
अत्रान्तरे मार्गपतिर्नृपाहूतो बलान्वितः । स्वराष्ट्रात् साहसोद्युक्तो नगरे तूर्णमाययौ ।
प्रातः श्रुत्वाथ मल्लिकः सबलोऽगान्नृपान्तिकं । रुषा निष्टत्तोत्सृष्टोऽपि चिन्तया दक्षिणस्तया ।
पादाभ्यां ताडयन् वचोगच्छतोऽस्य तुरङ्गमः । भविष्यत्स्वामिविरहाच्छुचेवाश्रुमुखोऽभवत् ।
तत्कालोदितसूर्यार्च्चिःसंक्रान्तिज्वलितायुधः । नृपाज्ञयोऽपि मार्गेशः ससैन्योऽविशदङ्गनं ।
अन्योन्यस्पर्द्धया तत्र द्वयोः प्रविशतोस्तदा । सन्नद्धयोराजधानी ययौ सम्भ्रमलोलतां ।
सशस्त्रोऽयं प्रविष्टः किमित्यायुक्तः स भाङ्गिलं । अदापयत् ज्यंसराय मार्गेशाय नृपः क्रुधा ।
तावन्निर्गत्य भीतेन राज्ञा स प्रेरितस्ततः । पुरान्तर्बन्धनं छत्वा ससैदः पुनराययौ ।
निर्मुच्य बन्धनात्ताजिभट्टं राजानकान्वितः । राजधान्यङ्गनास्कन्दं ददौ जिष्णुर्ध्वहाङ्गिरः ।
प्रेरितास्ताजिभट्टेन तद्भटास्तमरोद्यताः । पश्चिमद्वारधानीं तां राजधान्यामदाहयन् ।
सोऽग्निर्दहन्नराजानकावासान्तं क्षणान्तरात् । सौधागारां गृहश्रेणीं दग्धारण्यमिवाकरोत् ।
इन्द्रवासोपमा वेश्मरचना ज्वलिता श्रुता । दूरस्थितानामप्यन्तस्सन्तापमुदपादयत् ।
उद्गमस्तोमसद्दृढज्वालाजालगतोष्मणा । सर्वेऽन्तस्थाः कटाहान्तर्जीवन्मत्स्योपमां दधुः ।
अङ्गनेऽग्निं समालोक्य ज्वलन्तं राजसद्मनि । सभीतिर्नृपतिर्भीतिविक्लवः समपद्यत ।
घण्णायमानमार्गेषु स्फुरन्तोऽपि युयुत्सवः । न कोऽपि शेकुस्तान् योद्धुं तद्भाग्यैर्यन्त्रिताइव ।
स्वभर्त्यार्चलितान्दृष्ट्वा पुत्त्रास्सैवावशेषितः । बभूव मल्लिकस्तत्र किंकर्त्तव्यतयाकुलः ।
पुत्त्राः कुर्वन्तु मा युद्धं राज्यं नश्यति भूपतेः । अयं राजास्य देशस्तु रचितोदशवत्सरान् ।
तत्कथं नाश्यते युद्धादस्मिन् विषमविग्रहे । तंचापि ज्येष्ठःपुत्त्रो मे तटस्थोऽरिष्ठमध्यगः ।
अनिष्टं नोत्सहाद्यामि लभन्तेऽस्माद्रणक्षणे । वरं ममैव नाशोऽस्तु नाकीर्त्तिं वार्द्धके सहे ।
इति ध्यात्वाब्रवीत्पुत्त्रान् योद्धव्यमिशाषत । इत्युक्त्वा गलितोत्साहो नृपं शरणमाययौ ।
मण्डपे राजधान्यां स राजा विन्यस्य रक्षिणः । स्नेहादरक्षदायुक्तान् पूर्व्वंसेवामनुस्मरन् ।
आयुक्तनर्षकाद्यास्ते ज्ञात्वा भूपं तदाश्रितं । पुद्धामकाय निर्गत्य भुट्टदेशान्तरं ययुः ।
अथोत्तरदिशा द्वारधान्या मान्या जयोद्यताः । ज्यहाङ्गिराद्या गर्जन्तः प्राविशन्त नृपाङ्गनं ।
रणदुन्दुभिनिःस्वानप्रतिशुद्यारवभ्रकस्तान् । अहमद्राजधानीव तुष्टा तत्राद्यमक्रमात ।
राजदर्शनतुष्टानामुत्सृष्टानां जयार्जनात् । प्रापुः प्रसादं तत्कार्यं मर्माणि च वपुं
प्रातः सपुत्रं मल्लिकं मन्त्रिसवकर्धयुतं । क्रुद्धेन्धेयोदितो राजा कारागारान्तरे

आयाता युक्कमदनाह्वीतेत्रातिव्ययादिभिः । अकरोद्राजवत्नीः सा स्वस्हे सुखसुप्तिकां ।
तेषां राजविरुद्धानां दासकायस्थपीडनात् । सञ्चितं रौप्यकुप्यादि सर्व्वं तद्राजसादगात् ।
यन्मन्त्रात् सभयात् सजैननृपतिः श्रीहाज्यखानोऽभवद्यन्नीत्या दशवत्सरी गतभयः पुत्त्रोऽस्य राज्यं व्यधात् ।
यातास्ते स्मृतिशेषतां यदमता बहामखानादयः सोऽपि व्याकुलतामगाद्रिपुभये धिग्वैभवं स्वामिनां ।
आतङ्कपङ्ककलुषाः प्रभवन्ति येऽर्थाः सन्मार्गविघ्नकरणाहृतजाड्यदोषाः ।
तत्तद्दरिद्रजनपीडनहेतुभूतास्तिष्ठन्ति ते न सुचिरं हिमपूरतुल्याः ।
तद्भृत्यैः फेरवखाद्यैरित्यादिजनपीडया । यदानीय धनं दत्तं तत्सर्व्वं राजसादगात् ।
वहिर्देशात्समानीतांस्तुरङ्गांस्तान्मनोहरान् । स्वांश्चकानचिरांश्चापि निक्षेपमिव दत्तवान् ।
भूपालवन्महेच्छत्वाच्च जन्मदिवसादिषु । यद्दत्तं यच्च भुक्तं स्वं तदेवास्याभवद्धनं ।
हे मर्त्या नृपविभवाप्तभूरिवित्ताश्चित्तार्त्तौ कुरुत यथार्थदानभोगौ ।
संसारे जलधितरङ्गभङ्गुरेऽस्मिन् सामग्री न पुनरियं सदैव लभ्या ।
राज्ञः प्रियोऽस्मि विभवप्रथितप्रभावो हे सेवकास्त्यजत मानमिदं स्वनिष्ठं ।
गन्धर्व्वनिर्म्मितपुरे च कुसुम्भरागे वेश्यारसे नरपतौ च कुतः स्थिरास्था ।
प्राप्ता पूर्णा सपदि पदवी शत्रुवर्गो जितो यः कोशोऽशेषो मम सदनगो भृत्यवर्गः ससर्गः ।
इत्थं यावत् कलयति नरो वैभवोत्सिक्तचित्तस्तावत् सर्व्वं क्षपयति विधिः स्वप्नवत्तद्विरुद्धः ।
एकदा जुगभट्टस्तं बन्धने प्रष्टुमभ्यगात् । अन्यत् किमस्ति ते स्वर्णं तूर्णं राज्ञे समर्प्यतां ।
क्रुद्धस्तमब्रवीद्द्रव्यकोटिसंख्यं हृतं मम । एतावतापि नो तृप्तिः प्रभोर्लुब्धस्य विद्यते ।
किं ब्रूमो राज्यरक्षार्थं स्वपक्षोलाशितोऽखिलः । शक्रेनापि न युद्धाय सोढं तत्तनुजेऽन्तरे ।
कान्दिशीकाः समानीय सैदाः सम्बर्द्धिता मया । द्रोग्धारस्तेऽपि मे जाताः छलघ्नेऽस्मिन् महीपतौ ।
सर्व्वं मयोर्जितं राज्यं सन्धिस्तावत् करोत्वसौ । पुनश्चेद्धुज्यतां राज्यं मन्त्रायाम्मुदितस्तु सः ।
दशवत्सरपर्य्यन्तं राज्यतन्त्रनियन्त्रणा । मदीयाशीद्भवे दग्धे यदोद्वृत्त्यपि तद्विभुः ।
तुष्यत्वसत्प्रणाशेन मयि लोकान्तरं गते । इत्याद्युक्ता नृपाग्रे स स्वविश्रान्तिं व्यसर्जयत् ।
धिङ्मां येन स्टहीतं न वचनं दीर्घदर्शिनः । श्रीफिर्यडामरेशस्य निनिन्दात्मानमन्वहं ।
यद्यहं सुविरुद्धोऽस्मि तन्मद्द्रोहकराश्च मी । मार्गेशताजिभट्टाद्य लभन्त्वल्पदिनैः फलं ।
इत्यादिदुःखदग्धः स बन्धनस्थो यदब्रवीत् । अचिरात्तत्फलं दृष्ट्वा माध्यस्थ्यो भविता जनः ।
इत्थं निर्मोहचित्तेऽस्मिन् सपुत्त्रे मलिकाह्वदे । नाशितेऽन्ये व्यजृम्भन्त खलप्राया नृपास्पदे ।
ताजिभट्टादयो लुब्धाश्चैदानामधिकारिणः । प्रसेयान् पीडयामासुर्दुष्टादेहमिवामयाः ।
आनन्दपुष्पदीनारखण्डप्राप्त्यादि नामभिः । सैदाधिकारिणश्चक्रुः प्रजायाश्चैधनार्जनं ।
श्रोजदशाह्निरमार्गेशनामराजानकादयः । सधाविव द्रुमाश्चिरश्चास्ते स्रियुः श्रियः ।
मल्लिकपदवीं सम्यां श्रीसैयाहसनोऽभजत् । नायामधामराज्यादि तदीयं तद्दधौ ।

सम्प्रत्यपुत्रवर्गेभ्यः प्रमेयान्विभजन्नवान्। स मेयामद्रादायाद्दैधनराद्दं समार्पयत्।
स्वायत्तीकृतभूपास्ते सैदा जयविशृङ्खलाः। दूतान्विसृज्य चतुरमार्गान्मुः सैदनामिदं।
प्राप्ते पाञ्चालदेवाग्रे तस्मिन्क्रूरपुराध्वना। ज्वरस्तद्धृदयं पूर्वं पश्चात्स पुरमाविशत्।
पौत्रीजामातृसम्बन्धिवान्धवाः सर्वमन्त्रिणः। अपुनःसङ्गमाएव सर्वेषां दर्शनं ददौ।
तदर्थमिव संप्राप्तैःम्हतकल्पो दिनद्वयं। अतिवाह्य ज्वराक्रान्तः स्वगृहे पञ्चतां ययौ।
मल्लिकोवन्मनस्द्मन् चस्तः पुत्रप्रवासनात्। तत्तच्छोकामयग्रस्तसोऽप्यस्वस्थो व्यपद्यत।
बद्धस्यापि स्मृतिं तस्य शुचा मन्त्रिशिरोमणेः। देशे सरुदिताक्रन्दं शुशोच सकलोजनः।

सत्कार्य्यभाजां महतां वियोगाद्भवन्ति नीचाः पदवीषु योग्याः।
प्रकाशकेऽस्मिन् द्युमणौ प्रयाते भवन्ति दीपाः शरणं प्रजानां।

दुष्टिचभाग्यसौभाग्यसंप्राप्तविभवोर्ज्जिताः। सैदाः काश्मीरिकान् सर्व्वान् न तृणायाप्यजीगणन्।
याभूत् सैदमुखादाज्ञा निर्यान्ती स्वार्थलिप्सया। राज्ञस्तदर्थनिष्ठस्य प्रतिश्रुतीव साभवत्।
सैदेषु द्वेषनिष्ठेषु क्षान्तिशीले महीपतौ। प्रबलासु च नारीषु कोऽप्यजृम्भत विप्लवः।
उत्कोचग्रहणं धर्म्मः प्रजापीडा च कौशलं। स्त्रीषु च व्यसनं सौख्यममन्यन्ताधिकारिणः।
प्रातिबन्धिकनिर्दृत्त्या स्वाच्छन्द्यामाप्तिदर्पितः। स सैयाहसनः सर्व्वतन्त्रेभ्यो यन्त्रणां व्यधात्।
प्रवर्द्धमानो राज्ञस्य शनैराक्रान्तमण्डलः। ग्रहाधिपत्यं सर्व्वेषां राज्ञश्छायामिवाकरोत्।
अथ खश्महश्कुट्ट देशान् सैदा जिगीषया। श्रीज्यहाङ्गिरनाथेरौ याशाथे द्वौ व्यसर्ज्जयन्।
उभावेकत्र गच्छावोयद्यावां कर्म सेत्स्यति। इति मार्गपतेर्वाक्यं सैदौ नैवान्वतिष्ठतां।
तयोर्देशं विजित्यैकः सयशाः प्राविशत् पुरं। अन्यो विशङ्कितोयद्धो युक्त्यात्मानमरक्षत।
निपत्य पश्चात्कुट्टेर्षत् सेनायाः कदनं कृतं। कालापेक्षानुरोधेन स मनाग्वर्णनं कृतं।
यद्भारागादयस्तस्य सेवका युद्धभूभुजः। केचिदाश्यानभुद्वाजिवङ्कौ शलभतां गताः।
पूर्व्वापकारस्मरणात्सैदास्ते रभलम्बिताः। नोरस्सराजानकं हद्दुदर्शनं तं न्यवारयन्।
तेभ्यः स्वामिष्टमायद्य निजरक्षणदक्षधीः। युक्त्या तद्दर्शनोराशोराद्दं मार्गपतिर्ययौ।
ततः सैदेषु नष्टेषु प्रजानाशनकारिषु। आमद्भ्यानिष्टमात्मीयं युक्त्या राजाप्रमापयो।
एकदा रहसि क्ष्मापमब्रवीत् स ज्यहाङ्गिरः। राजन् सैदा यदानीता अमी निष्कासिता अपि।
कोऽयं निष्कण्टके देशे त्वयानर्थः स्वयं कृतः। यैव राज्ययोग्यस्त्वं पौत्रः श्रीशेनभूपतेः।
दौहित्रोऽपि तथैवास्य प्रांशोर्यामहम्मदः। सैदास्ते सर्व्वदामद्भ्यान्तदुष्कार्यसमानसाः।
तथाधुनामिये राज्ये ये मुख्याः सन्ति सन्ततं। न युक्तैकमियामर्शिषंऽभावस्य से विभो।
एवं वसोरतोयाहः सतां येन सम्यते। यदि जायाविधेयत्वं न त्याज्यव महीपते।
सर्व्वं लिप्सति यार्थं सत् प्रोक्तिनो मा भव प्रभो। गया महाज्यरणार्थं स्वरणार्थंच गम्यते।
दर्विदेशोहतः स्यास्ता रक्षणीयो यथा मदा। इति श्रुत्वा तथेत्युक्त्वा राजा रात्रौ प्रियान्तिके।

तदुक्तमशृणोत् सर्व्वं खेदमोहवशीकृतः। तेन मार्गपतेः क्रुद्धा भोगिनीव भयावहा।
अनिष्टं चिन्तयन्त्यासीत् विपक्षपक्षसत्कृता।

पुरुषानवधीर्य्य यत्र नारी प्रभवत्येव जितप्रिया स्वतन्त्रा।
कुपितेव तदीक्षणादिशिष्टा न चिरन्तिष्ठति तत्र राज्यलक्ष्मीः।

अमुष्यदक्षभापार्श्वं तत्पक्षानुग्रहग्रहः। महेक्षाक्षदवद्राज्यं तदायत्तं ततोऽकरोत्।
सैदेभ्योऽनिष्टमाशङ्क्य त्वक्तो राज्ञा विदग्धया। कार्कोटद्रङ्गमार्गेण मार्गेशः सबलो ययौ।
सर्व्वां कुटुम्बसामग्रीं भाङ्गिलान्तरतो नयन्। गच्छन् दुर्गममार्गेण न स धैर्य्याद्व्ययुज्यत।

तद्राज्यसिन्धुविपुलः सन्दृष्ट्वा व्यलचि यस्सुमृतवाहिनीकः।
परस्परामात्यविरोधवात्याविचोर्भितोऽभूत् स विकीर्णरत्नः।

साम्ना दैन्यमुदारदानविधिना चित्तप्रकर्षक्रियाभेदात्पैशुनकर्म्म सर्म्मदलनं युद्धेन नाशो द्विषां।
इत्यालोच्य विरोधिषु प्रतिदिने वर्द्धत्स्वशक्ते प्रभौ देशत्यागमुपायमेकमुचितं कोऽप्युत्तमो गाहते।
अयुक्तपचनाशेन पश्चात्तापाहतो नृपः। मार्गपत्यादिनाशेन घाते घारमिवान्वभूत्।
मार्गेशाद्यैर्विना राजा सर्व्वसैदान्वितोऽपि सन्। स्वात्मानं गणयामास यूथभ्रष्टमिव द्विपं।
मार्गपत्यन्वये जाताः प्रतीहारान्वये च ये। ठक्कुरान्वयजाः कोशाध्यक्षजा अपरे च ये।
स्वस्वपक्षोर्जिताः पूर्व्वं येऽभवन् विजयोर्जिताः। नष्टमन्त्रविरोधेन शतैकोयोऽवशिष्यते।
तस्मिन् याते वह्निर्वर्षतुषारं प्रसभं नभः। भाग्याधिकोऽयं सर्व्वेभ्यो विशां चिच्छेद संशयं।
हिमानीपातभारेण येऽवसन्नत्र मण्डले। पर्युर्निम्लायतां दृष्टा भग्नशाखाजनादिव।
प्राक् चेत्पतेद्धिमं तावद्ध्रियेरन् त्रुटिताः क्षणात्। पिष्टराभ्यन्तगर्त्तोष्टाः प्रविष्टाइव तद्भटाः।
तेनैकेन विना सर्व्वहृदयाह्लाददायिना। नाशोभत् सभा राज्ञश्चन्द्रेणेव कुमुद्वती।
तदस्तोभत्यकार्य्येषु सैदभार्य्याविधेयधीः। विश्ववयवहारस्त्वं निन्द्यलक्ष्यागमन्नृपः।
स्वराज्यरक्षणाचारलक्षणाक्षमशासनः। निन्दन्दाह्यं सदैवासीत् प्रियेक्षणक्षतक्षणः।
निग्रहानुग्रहव्यग्राः सोत्कोचग्रहतत्पराः। अन्तरङ्गाः स्त्रियोऽभूवन्न मन्त्री न च सेवकः।
भोगलोभोज्झितोचित्या अमी विन्दन्ति साम्प्रतं। तुरुष्कपुष्कलाश्यामाः स्वार्थमर्थं न च प्रभोः।
अनायका विनश्यन्ति नश्यन्ति शिशुनायकाः। स्त्रीनायका विनश्यन्ति नश्यन्ति बहुनायकाः।
स्त्रीविधेयं समालोच्य राज्यं तस्य महीपतेः। इति श्लोकं पठँल्लोकः सशोकः समदृश्यत।
ध्यायतो मार्गपत्यादींस्तत्प्रत्यानयनक्षमः। शयनीयविमुक्ताङ्गस्तप्यते स दिवानिशं।
तत्रान्तरे स मार्गेशो लोहरान्तरसंश्रयः। स्वामिचिन्ताकुलो लेखं शिशामित्यं व्यसर्जयत्।
राजन् पुरस्य कोशस्थो योऽभूत् सर्व्वार्थसाधकः। उत्पाटोत्सारितः सैदैर्यद्दारिद्र्यं सुदुःसहं।
निसर्गगुरवो नान्यसङ्गमिच्छन्ति षड्बलाः। अमी परस्पराभिन्नाः पारदस्य कणाइव।
हरिचन्दनवद्राजन् सर्व्वथोपसदो भवान्। किन्तु फोत्कारकारिण्या भोगिन्या वेष्टितोऽसि।

यस्मिन् स्फूर्जद्विषज्वाला व्याला: सन्ति परासहा: । निधानमिव तद्राज्यं त्याज्यं कस्य न सम्मतेः ।
प्रदीप्तापि न या स्पृश्या दृश्यापि भयकारिणी । श्मशानाग्निशिखेवासौ लक्ष्मीः सा केन सेव्यते ।
स सैयदहसनस्तत्तद्दुर्ग्रहग्रस्तवासन: । आत्मैकोऽपि सन्मार्गे न तिष्ठतीव रावण: ।
मेराख्या ताडकेवात्र सोत्कोचामिषभक्षिणी । पौलस्त्यस्येव ते सर्व्वनाशार्थं निकटे स्थिता ।
तिष्ठन्त्वभ्यन्तरे सैदा यदीष्टा भवदन्तिके । तुरुष्ककरवीन्द्रेशमिहस्थः साधयाम्यहं ।
राजद्रोही न कोऽप्यस्मत्कुलेऽभूद्भक्तिवर्जित: । त्वदेकशरणः सोऽहं स्वामस्योदास्त्वदसे ।
वयमेव सदाचारा विचारविशारदा: । उन्मार्गे यदि गच्छामः कोऽप्यस्मासु न विश्वसेत् ।
कल्पान्तमपि जीवित्वा कृत्वापि धनसञ्चयं । हत्वाप्यरीन् कोऽप्यत्र भवे भवति सुस्थिर: ।
नष्टेऽन्यस्मिन् भवांस्त्राता त्वयि नष्टे परोऽस्ति क: । इति लेखं नृपस्याग्रे बुद्ध्वा मार्गपतेर्द्रुतं ।
स सैयदहसन: क्रोधाच्छ्वसन्नहिरिवाब्रवीत् । सोऽयं स्थानच्युतस्तत्र स्वजीवनविवर्जित: ।
नूनमसत्प्रतापेन शुष्यतीवाब्जषण्डवत् । यौवीगणा विमुक्तस्य पङ्कमात्रावशेषिण: ।
भृत्यास्तस्य न तिष्ठन्ति तडागस्येव पक्षिण: । किं करोतु स्थितस्तत्र तत्रत्यैर्विहितादर: ।
मदीयदासमात्रोऽपि तं जेतुं क्षमते युधि । अथवाहं स्वयं यामि तं निष्काशयितुं तत: ।
स तुरुष्कै: समं तत्र यथनं कुरुते ऽन्यथा । अथोचे सैदहसन: पूर्व्वमैत्रीमनुस्मरन् ।
किं मस्लेन स्वतं राष्ट्रं दीपतामानयाम्यहं । अयुक्तापशवे पूर्व्वं कृतदिव्या: परस्परं ।
अनिष्टं चिन्तयामयैस्तन् कथं सहते विधि: । तच्छ्रुत्वा नृपतेरग्रे तदैकायमानस: ।
तूर्णं डामरयानं स्वं भीमद्वाराधिपं व्यधात् । वाह्यस्थ: साधयाम्येव कार्य्यं सकृतकारणी: ।
द्रव्यकोटिं ददाम्योऽस्मै सैन्यसङ्ग्रहसिद्धये । इत्युक्त्वा प्रतिमुक्तसैधराजानकस्तथ: ।
दूतं निवर्त्तयामास दत्तद्रव्यमपि स्वयं । श्रुत्वा परशुरामाद्या सद्रा: काश्मीरदेशत: ।
स्वानिष्टमहया गन्तुं मार्गं सैन्यो यथोचिरे । अधुनाम् प्रति मुञ्चामो युष्मान् पाथेयसंयुता: ।
कियद्दिनानि तिष्ठध्वं सदूपं दत्तवेतना: । तेषु स्ववसतिं यातु सैदास्तेऽन्योन्यमब्रुवन् ।
निष्काश्या: सर्व्वथैतेन तुरुष्कैकविरोधिन: । अथान्तरे नरेन्द्रस्य तत्तद्व्यादिविप्लवात् ।
जाताधिव्याधितं सर्वं येये पथमिशाभवन् । मृगयारसिका: सैदा नित्यशो मादृशं नृपं ।
माये विषयवादादिगतान् हन्तुं मृगमजान् । यथ यथावमुद्राघो सयेदकटकोत्कट: ।
पीदमानमजनान्दगुणराणदिशोऽभवन् ।

पङ्क्ती: प्रधार्य परितोऽद्रिषु तद्विभागं यथेपयेशमकरोत्कटकोनृपस्य ।
तथोदतिष्टरतिनिष्ठुरवाग्भवानां द्राधावत्थाञ्चिदि द्रुपा नदिगसनोप: ।

निष्येऽसत्प्रयाणाय सुपदा: धार्म्मनिसंता: । वाक्कामा: कटकैर्दिषैर्दुर्जनैरिव बाधश: ।
प्रालेदपुष्पगाधा: पुष्पा गिरिद्रुमा: । सुमा वेलाद्वसं यथा: पथुदुमा: समायपु: ।
दृष्ट्वा निज्ञान् स्युद्ररुभिलाषांश्च मनाहनाम् । मांसधापानमान्दृष्ट्वा सैदाश्चे तुरुष्प्रंश ।

हराम्मान् पीवरानेतान् पोतान्मा हर दुर्ब्बलान्। इतीव वक्तुं भूपाग्रे प्रापुस्ते सार्भकामृगाः।
सिद्धाध्युषितशृङ्गस्थवस्तैणवधदर्शनात्। क्रुद्धाः सुर्देवताराजन्मा कृथा मृगयामिमां।
इत्याद्युक्तोऽपि वक्रमस्तचैत्यस्थकैर्जनैः। शृङ्गारीवाद्रिनामद्रावध्वंसीन्मृगयद्यात्।
आस्थानमृगगोष्ठेयं नान्यया क्रियते त्वया। मुनिर्वैश्रवणोऽद्रिस्थोनृपमेत्याब्रवीदिति।
साक्रन्दमाहता हत्वा मृगीस्ता रुचिरोचिताः। तद्गर्भनिर्भरां भूमिं सेदाद्यकुर्दशोज्झिताः।
अहृष्टस्तदधात् हत्वा निर्मृगांस्तान् गिरीश्वरान्। सायं श्रान्तः मघोपैाधान्वसतोरादिशन्नृपः।
भव्या सुपास्य तनया तरुणी च जाया कादम्बरं प्रसरकं पयश्च मीनाः।
तिष्ठाम्यमुष्य सदनेऽहमिहैव रात्रौ ध्यात्वेति कोऽपि न्यविशद्यमकिद्धराभः।
धानुष्कपुष्कलवहावलिनस्तुरुष्काः पङ्कर्षधर्मनिरताश्यमृहोपविष्टाः।
तद्भाण्डपक्कहतकुक्कुटमांसभक्षा यथादवात विरधुर्मधुपानगोर्ता।
पशुतण्डुलमद्यादि हृत्वा वास्तव्यलोकतः। लुब्धास्तत्सेवकाः केऽपि स्वगृहे भरणं व्यधुः।
मान्यदागमनं भूयाद्युष्माकं जनपीडया। इत्यादि चाशिषः शृण्वन्नपि तो विव्यथे नृपः।
मृगयाव्यसनं राज्ञो धिक् फलं भुज्यते न यैः। मृगापदेशाल्लोकानामेव सा क्रियते स्फुटं।
पशुवच्छतशो बद्धा मृगौघा यत्र सार्य्यते। मृगया सा विनोदाय यदि शौनिककर्म किं।
असत्त्वं चले लक्ष्ये स्पृहणीयोऽस्ति सादिनां। कोऽयं बद्धे मृगे श्लाघ्यः शराभ्यासो धनुष्मतां।
क्षत्रियैर्मृगया कार्य्या निरवद्यत्वणाशनात्। नैकान्तव्यसनं युक्तं ह्यति सर्व्वत्र गर्हितं।
महापद्मसरस्तीरगिरिगांश्च मृगव्रजान्। आगतोनृपतिस्तद्वन्निःशेषानकरोद्वधात्।
इत्याद्यनुचितं किञ्चिन्मृगयादूषणं क्षतं। विलोक्य यद्वक्ष्यतीतिर्भाविनां मृगयायुषां।
आखेटिकां नृपः हत्वा राजधानीं समागतः। अस्वास्थ्यमवहद्देहे ग्रहणीगदसम्भवं।
केऽप्यूचुर्मृगयादोषात्कुपितादेवतास्ततः। अतीसारगदारम्भास्तत्रैवास्य विलोकिताः।
केऽपि प्रच्छन्नराज्येच्छाः वैद्याः स्वात्मकाङ्क्षिणः। व्यधुः किमपि भूपाले तुरुष्कादृतमारणाः।
केऽपि मन्त्रिवियोगोत्थचिन्तासन्तापितात्मजं। रुजमाऊर्नं तद्व्याधेर्निश्चयः कस्य चिदभूत्।
भूपस्तादृगवस्थः स नववर्षादिवासरे। यथौ सर्जप्रदेशान्तश्च्छेया शकुनीच्छया।
तद्दिने गच्छतस्तस्य राज्ञोनौकान्तरस्थितेः। जैनवाटविहारायात् सर्पस्तत्राट पद्धतिं।
तद्दुर्निमित्तमोशान्त्यै हत्वा तं शायकैर्नृपः। अहरङ्कृदयामद्यां न शरीराद्रुजं पुनः।
किमर्थं निर्गतोऽस्यपि चिरं त्वं सुकृतं कुरु। इतीवायागतोवायुस्तत्रैवगन्तं न्यरुध्यत।
अस्मिन् गते प्रजापीडा भविष्यत्यत्र मण्डले। अकम्पत शुचेवोच्चत्तरङ्गतरलं सरः।
तत्र सर्व्वोत्सवे भुक्त्वा मेदमन्त्रिसभाहृतः। अपुनर्दर्शनायेव सर्व्वेषां दर्शनं ददौ।
नौकारूढस्ततस्तूर्णं सम्भ्यः षड्दिनावधि। उन्कण्ठाखण्डनायेव श्येनैः पक्षिवधं व्यधात्।
अद्यैवेमं विनोदं सः करोति न पुनः प्रभुः। इत्येव श्येनाः पक्षीणीं मृहीत्वोपायनं व्यधुः।

प्रत्याहृत्तस्ततो राजा सैदांस्तान् प्रतिमुच्य च। नाहं स्वस्थोऽस्मि तल्पस्थो देवीं ज्ञातरुजं व्यधात्।
तत्पथ्यपरिचारिण्या स्वयं देव्या हतो नृपः। दिवसेन्दुरिव चीणरुचिं विच्छायतामगात्।
कवाटविकटं वक्षः श्यामगौरं तदाननं। कम्बुरुजानुपादाश्च पीनाः पद्मदलोपमाः।
सुन्दरं नयनद्वन्द्वं ललाटं भ्रूमनोहरं। तद्रुजा नृपतेः सर्व्वं विवर्णं समपद्यत। १५५
एकदा सोऽवदद्राजा तं मेयाहसनं रहः। नाहं जीवामि राज्यार्हान् सुताः शिशवो मम।
वद्धो वह्रामखानीयेन पाति मम बालकान्। वरमादमखानीयं युक्तानीयाभिषिच्यतां।
अथवेयं भवत्कन्या यद्वक्ष्यति करोतु तत्। श्रुत्वेति भर धीरस्ते स्वास्थं स्यादिति सोऽब्रवीत्।
केवलं सैदहसनोपरोध भग्नदुःखितः। ॥ कुलकं ॥
अथ राज्ञ्यवदत्पित्रे रहोमेरमुखादिदं। सन्देहितास्त्रराजायं राज्ये किं क्रियतेऽधुना।
वरं वह्रामखानीयोयुवायमभिषिच्यतां। यौवराज्ये च ज्येष्ठोऽयं दौहित्रः स्थाप्यतामिति। १६०
द्वित्रादिष्टाश्च वध्यन्तां सर्व्वे सुरविनश्वराः। श्रुत्वेति मेयाहसनः सक्रोधस्तामभर्त्सयत्।
तच्छ्रेयः प्राप्तिसंकल्पकल्पितद्रव्यसञ्चयान्। भीरुलेभ्योददुः सैदा द्विजभक्तिविवर्जिताः।
प्रभुं द्रष्टुं न यच्छन्ति गच्छन्त्यभ्यन्तरं स्त्रियः। मन्त्रपाठं निषेधन्ति तत्तद्गारुडिकोचितं।
चिकित्सां वैद्यकोक्तान्तामन्यथा रचयन्ति च। तथापि गुलिकां भोक्तुं रचयन्ति स्वसाधितां।
किमप्यनिष्टं कर्म्मेति कृतमित्यादिवादिनः। वर्चोविवर्णं पश्यन्तोऽप्यन्तरङ्गा महीपतेः। १६५
वैद्योगारुडिकश्चाहं दुष्टकर्म्मेति कल्पयन्। तथाभूद्रूप्यभट्टः स स्त्रीवैद्यकृतार्थनः।
मुमूर्षुः सेवकैः पृष्टः कारः किंश्चिचमे विभो। मण्डोनिवार्य्यनामपादित्यूचे तान्महीपतिः।
कृतान्तमहिषोद्दृष्टो दिष्यमद्येव यात्ययं। इत्युक्त्वा रुरुदुः सर्व्वे साक्रन्दं साश्रुलोचनाः।
ध्वंसद्रुवमनः साश्रु घूर्णयन् दृष्टिमण्डले। तस्यामेव रजन्यां स मुमूर्षुरभवन्नृपः।
वर्षे षष्टितमे कृष्णनवम्यां मासि माधवे। पञ्चाहं द्वादशाब्दांश्च राज्यं कृत्वा दिवं ययौ। १७०
आक्रन्दमुखरा रात्रिः सर्व्वा सा जनताप्यभूत्। प्रातर्यानं समारोप्य छत्रचामरसंयुतं।
सैदाः समेवधाः सर्व्वे निन्युः पितृमहाजिरं। श्रीजैनभूपसमये दुःखिता नाभवत् प्रजा।
तादृशी यादृशी तस्य मरणे शरणोज्झिता। तद्दुःखाम्भसि यत्नाद्धि तस्य मस्तकवेष्टनं।
तदम्बरघनं दुष्प्रेक्षोऽज्वलनं मस्विलोव्यधुः। तदालोक्य जनः सर्व्वादर्शनोत्कण्ठिताशयः।
स्मारं स्मारं नृपं मेने सिवत्समिव सध्वगं। प्रातः प्रातः समागत्य सैदाः सप्तदिनावधि।
स्वेदाश्रयमं चक्रुर्मिश्रितं रुदितैः स्वनैः। १७५

विहितरतयोद्भुता येऽन्यैर्महाविभवोज्ज्वला मालवयधीशानामाशीलाविनाससदाशमाः।
कतिपयदिनैर्लोकी ते तिक्ता प्रजन्ति मृषान्विताविरसमनभोरज्यदेश्याश्रयादिव कामुकाः।
देहो मेऽयं रचितरचना राजधानी समेयं कोशो मेऽयं दुर्वलिरपि ते मे गुणा मे च भृत्याः।
इत्येवात्मः रमयति नृपो यावदेवात्मकाश्चं त्यक्त्वा सर्व्वं व्रजति सुचिरः पुण्यपापैकभागी।

सप्ताङ्गसुभगं राज्यं ममेदमिति योऽब्रवीत्। तदीयेनाभवत्तस्य स्वदेहान्ते पृथक्स्थितिः।
इत्थं शवाजिरे लोकः शुशोच नृपसंहतिं। अश्मैकरचनामात्रावशिष्टां तत्र संस्थितां।
राज्यदानाय राज्ञी सा म्लेच्छसम्पर्ककर्कशं। बहामखानजं पुत्त्रं दुःखोदर्कमतर्कयत्।

इति श्रीजैनराजतरङ्गिण्यां पण्डितश्रीवरविरचितायां हस्सनशाहिराज्यवृत्तान्तवर्णनं नाम तृतीयतरङ्गः।

इति हस्सनशाहिस्वर्याणं॥

---

## ॥ श्रीवरपण्डितकृता तृतीया जैनराजतरङ्गिणी ॥

### ॥ चतुर्थस्तरङ्गः ॥

तृतीयेऽहनि सैदास्ते मिथः संमन्त्र्य सत्वरः । व्यधुर्मैहम्मदखानाय राज्यदानाय निश्चयं ।
प्रतीक्षाक्षममालोक्य कालं सैदास्त्वराकुलाः । राज्याभिषेकदानेच्छामकुर्व्वन्नृपसूनवे ।
अथ राज्ये व्यधीयन्त तत्सुतं सप्तवार्षिकं । कृत्वा मह्मदशाहाख्यं गोनर्दमिव सुन्दरं ।
तस्य सिंहासनस्यान्ते स्थापिता वस्तुसन्ततिः । त्यक्ता भोजनसामग्रीं पूर्व्वं शार्ङ्गोऽपतत्करः ।
एतद्राज्ये सदा युद्धं भविता मण्डलान्तरे । दृष्ट्वा शकुनविज्ञाः केऽप्यूचुस्तत्रान्तिकस्थिताः ।
रौप्यसिंहासने छत्री विबभौ बालभूपतिः । दत्तानन्दः पयःपूरैर्बालेन्दुरिव सुन्दरः ।
सैदाः शुभ्रांशुकन्यस्तकुङ्कुमाशोधितत्विषः । भाविद्रोहरुजोद्गच्छद्रक्तसिक्ताइवाबभुः ।
भ्राता हुस्सनखानोऽस्य कनीयान् रुचिराकृतिः । बभौ बालनृपस्याग्रे शुक्रस्येव बृहस्पतिः ।
शोकहर्षान्वितैर्लोकैस्तद्दिने पितृपुत्रयोः । दधौ तमःप्रकाशाढ्यां लोकालोकाचलश्रियं ।
दौहित्राभ्युदये सैदायैहरानन्दसुन्दराः । सुगन्धिमकरन्दाढ्ये मधौ मधुकरा इव ।
वाद्यमानैस्तवातोद्यघोषप्रतिरवच्छलात् । अकुर्व्वन्निव हृष्टार्थं राज्ञस्तस्याशिषो दिशः ।
राजधान्यङ्गने सैदाः परिधानप्रसाधनैः । अतोषयन्नुत्सवान्तः सर्व्वं नृपपरिच्छदं ।
एकस्मिन्कीर्त्तिशेषेऽन्या दिग्दयाद्धुस्सनद्वयी । ताद्दृशे ददृशे पौरैः स्फूर्ज्जत्सादिशताहता ।
राज्यसम्पत्समप्राप्ता नहुषे समतत्प्रत । तत्कन्यादेजितैर्वाप्ता वक्तुं रिपुपराभवं ।
राज्ञः सेवकधामस्थाः प्राभुवन्नात्मदर्व्विकं । प्रवेशं लेभिरे नान्तर्लुठन्तः कुक्कुरा इव ।
देशसंस्कृतशास्त्रज्ञविदग्धजनविडम्बनाः । स्त्रैणे स्त्रीषु बहिः श्येनजीवासु व्यसनं दधुः ।
विदुषव्यवहारेषु क्रूराचारेषु दर्पिषु । दुःसहान्त्यकदूतेषु लोभेन योभितेषु च ।
दौःशील्यामभिगम्येषु प्रमरत्मत्सरेषु च । विरागितेषु सैदेषु सप्रज्ञाः सेवकाययुः ।
हितानामपि सैदानां केचित्कृपालसेवकाः । साध्यमन्दस्परिचयं काकानामिव कोकिलाः ।
दिनस्थितिः सुखं यायात् सतीवर्त्मसि निर्दया । तेषां शैलेन भृत्येन भ्रामिता चपलाप्रया ।

स्फीतगीतोत्सवस्वादा येऽभवन् हृन्दगायनाः । शोकमूकादिवाभ्यर्थे माघे भङ्गादिवाभवन् ।
अथ प्रथममेवैते गृहीत्वा नवभूपतिं । शकुनापेक्षिणो नावा वितस्तातटमभ्यगुः ।
स्वपत्न्यावर्जकास्तत्र दृष्टनौव्यापसम्पदः । स्वातन्त्र्यप्राप्तिदर्पान्धाः काश्मीरा नादरं व्यधुः ।
अपुनर्गमनायेव विधाय शकुनिचयं । एकदा स्नौयसंयुक्ता व्यधुः किमपि मन्त्रणं ।
तेषां तत्केवलतया श्रुत्वा षाड्गुण्यमन्त्रणं । काश्मीरिकाश्च मद्राश्च शङ्किता नगरेऽभवन् ।
ततः परशुरामाद्यैस्तद्दिष्टैः सह तद्दिने । मिलिताः पञ्चशस्त्रीवृत्ताः सैदा द्रोहमचिन्तयन् ।
जिघांसतामथैतेषां वैजन्यावसरेच्छिणां । न भेदमगमन्मन्त्रो गुप्तस्तद्दुष्कृतैरिव ।
एकदा तत्सुताभीष्टा मेराख्या मेरहस्सनं । मूर्त्तेव दुर्दशा गेहमागत्येत्यब्रवीद्रहः ।
राज्ञः कापि क्रिया साध्या त्वर्णमागम्यतां प्रभो । इत्युक्त्वानिष्टमप्येनं सा निनाय गृहान्तरात् ।
द्रोहस्ते सूर्य्यवारे स्यात्र गन्तव्यो नृपालयः । पित्रेत्युक्तोऽपि स स्वप्ने ययौ दैवविमोहितः ।
तावत्स सैदहसनोऽप्यायययौ स्वगृहाद्द्रुतं । पादोच्छेदोऽस्ति ते द्रोहान्मा पलायनमारुह ।
इत्येव पादकटकच्छिन्नोऽश्वादपतद्भुवि । प्रतोल्यां सैदसाद्यश्वखुरोत्कीर्णरजोमिषात् ।
नैते पुनर्व्विशन्तीति शुचेवोच्छ्वासमक्षिपन् । तत्तारखानलेखेन त्वदनर्थादिहेतवे ।
प्राप्तनाद्य मिथोमन्त्रं विधाय कृतनिश्चयाः । आक्रान्तमण्डलाः सैदायुग्मच्छेपविशङ्किताः ।
प्रातर्व्वधुन्ति वस्तस्मादुपायः कोऽपि चिन्त्यतां । मिथ्येति बोधिता मद्रा जोनराजानकादिभिः ।
हन्तास्त न्वयमेवादौ सम्भव्येति समाययुः । सर्व्वानस्त्रतवाद्यन्तः समेतानवगन्य तान् ।
अन्तः परशुरामाद्या विविशुः शस्त्रधारिणः । रच्चोद्धारस्त्वया तैरित्युक्तो द्वारेशताजकः ।
मन्त्रे प्रवृत्तिरित्युक्त्वा सैदभृत्याद्यवारयत् । कुर्व्वन्ति भोजने तुष्टिं त्वद्भृत्यादिति तद्गिरा ।
सैदाः समस्तान् स्वान्भृत्यान् स्वसमीपाद्यवारयन् । जोनराजानकस्तावत्पयान्येनागमद्द्रुतं ।
गृहीत्वा राजभृत्यौघं जिघांसुर्व्वाटिकान्तरात् । ताजदौवारिकोऽप्यस्मारुद्धाप्तो नृपाग्रगं ।
वप्रामाभ्यन्तरेऽन्यत्र तन्मतेन जिघांसया ।
वाटिकान्तश्चतुष्खण्डमण्डपोपरि संस्थिताः । सैदा मद्रान्समालोक्य साशङ्का इव तस्थिरे ।
किं न गच्छत देशं स्व प्रतिमुक्ताः किमागताः । इत्यागतांस्तान् दृष्ट्वैव सैदं सिंहदिशोऽभ्यधात् ।
मार्गमुक्ताचरोनाप्तस्वत्तोयाम कथं वयं । अद्य वः प्रतिमोच्यामस्युत्यार्थमिति तेऽभ्यधुः ।
वैजन्यमेत्य पाथेयव्याजादस्मादुपाजतः । परशुसिंहभट्टन्तं न्यवधीत्प्रथमं रुषा ।
चतुष्खण्डपिकाप्रान्ते प्रचरत्क्षतजोचितः । सिंहोऽपि विनटस्कोत्तः शृगालइव सोऽपतत् ।
किं द्रोहो द्रोह इत्युक्त्वा यावद्भीताः समुत्थिताः । तावत् खड्गप्रहारैस्तान्मृगुर्भद्राः समेत्य ते ।
निर्यातः प्रस्फुरन्मेदा द्वाराग्रे सैदहस्सनः । हतो मुष्यायुधस्तत्तत्प्रहारशतविक्लवः ।
तं दृष्ट्वा मेयहसनं सभयं विद्रुतं द्रुतं । प्राकारारूढमवधीत् कोऽपि छिन्नपदद्वयं ।
गद्यामीनयासीममस्तजाधास्तदन्तिके । त्रिंशन्मात्रा हतास्तत्र पुत्त्रमित्रसमन्विताः ।

वदन्तो हाहहेति रक्तसिक्ताकृपाणयः। चेरुस्ते तद्वधोयुक्ताः कृतान्तस्येव किङ्कराः। १०
गृहेषु गोवधात्तेषां पापभीतेर्निभवद्यथा। तथा तत्र प्रतं सैदान्मरणं नाभवद्घृणा।
मृगयान्ते कुरङ्गादीन्छिन्नाङ्गान् यदधर्षयेया। तथा सैदाः कृता मद्रैः छुरैस्तदाटिकान्तरे।
द्विपदूत्तांशुका नग्ना महार्हशयनोचिताः। अनाथादव लोकस्य प्रययुः प्रेक्षणीयतां।
केचिद्धैभतखानाद्या निष्कृष्टच्छुरिकास्ततः। हर्षं प्राकारमुल्लङ्घ्य गृहीलाश्यान् पलायिताः।
तद्दृष्ट्वा तुमुले जाते वहिस्तदनुजीविनां। कस्यापि निश्चयोनाभूदन्तरे के हताइति। १५
भयत्यक्ताभिमानेषु विद्रुतेष्वनुजीविषु। चकर्ष शस्त्रं तन्मध्यात् कोऽपि नैवाङ्गनान्तरे।
मल्लजादात्मजाहृतास्तावन्मेयामहम्मदः। गृहादेत्य द्रुतं प्रादादास्कन्दं राजमन्दिरे।
प्रतोलीपालकः सोऽयं द्रोहीत्यथागतं द्रुतं। राजमार्गान्तरे क्रुद्धो नोरोल्लाहमघातयत्।
यद्वाररिपुटां दृष्ट्वा राजधानीं नवीकृतां। ज्वालान्तस्थान् रिपून् प्राग्वत् चोभेनाग्निमदापयत्।
न शक्तोपद्रवं द्रष्टुं स्वर्गं मद्रचको गतः। शुचेवेति द्वारधान्या जुहुवे ज्वलने वपुः। २०
सौधप्रान्तलसद्धूमस्तोमव्याजान्नृपश्रियः। क्व मां खला नयन्तीति निःश्वासौघाइवास्फुरन्।
अत्रान्तरेऽग्निमालोक्य द्रोग्धारो धारितायुधाः। राजधान्यङ्गनं प्रापुर्निर्गता वाटिकान्तरात्।
जोनराजानकोऽगच्छत् क्रुद्धः केनापि पत्तिना। वीरः खड्गप्रहारेण द्विवांस्तत्राङ्गनेऽवधीत्।
समारुह्याथ राजाश्वान् सर्व्वे मद्रसमन्विताः। मुक्तामूलकनागान्ते प्राप्ताः प्रोचुः वचं मिथः।
वरमत्रैव तिष्ठामः सैदैर्युद्धं विदध्महे। स्वल्पावशिष्टैः शत्रूणां न शेषः परिरक्ष्यते। २५
ज्वलालठक्कुरः श्रुत्वा तानूचे नयकोविदः। न युद्धसमयोऽस्तीह गलानेन यथा द्रुतं।
वितस्तापारमासाद्य तिष्ठामः सपरिच्छदाः। तत्रोपायान्विधास्यामो येन नश्यन्त्यमो स्वयं।
अभिनन्द्येति तद्वाक्यं सर्व्वसाधसशालिनः। शुद्दिल्लामठमार्गेण वितस्तापारमासदन्।
अत्रान्तरेऽन्तरं प्राप्तः क्रुद्धो मेयामहम्मदः। अवधीद्भ्रातरौ ताजपाजकौ द्वारपालकौ।
राजधान्यङ्गनात्स्पष्टौ श्वपचैर्गुल्फदामभिः। अनैष्यमध्यमग्राङ्गौ ययतुस्तौ श्वभोज्यतां। ३०
आजन्मक्षपणग्राम्यपीडोत्कोचार्जितश्रियौ। प्राणदामवशे तस्मिन् गतौ सर्व्वस्वदाहृतां
सञ्चितं ग्राम्यपीडाभिर्लुब्धैर्धर्यपरवञ्चनैः। तेषां सद्रूप्यकुप्यादि सर्व्वं तद्राजसादगात।

क्षपणस्य गृहं विशन्ति येऽर्था न वहिः क्षुमनो जनाः समन्तो।
विलमध्यगताइव द्विजिह्वा यदि निर्यान्त्यसुभिः सहैव सर्व्वे।

भिक्षोः प्रवर्तिमात्रं येन दत्तं तद्गृहान्तरात्। शतं तण्डुलखारीणामिस्वाधैरेव तद्धृतं।
गोधूमपिष्टं पूपैकपर्याप्तं मात्रमर्थिभिः। यत्तत्तुष्छिपतच्चूर्णैर्हिमपातायितं पथि। ३५
अत्रान्तरे गृहद्वारोऽप्यानिपानोभटोद्भटः। प्राप्यासिक्तप्रतोलीन्तामदहत्तच्छिद्रोवेधया।
एदराजानकाद्याय तावद्ग्रामपामजं। उन्मुच्य बन्धनात्तूर्णमपमार्गेण निर्ययुः।
ऋपे दृष्ट्वारिभिन्यस्य पयादपि कृताश्रमं। धर्मोपाहुं न च स्तातुं गृहमावदवाभवत्।

छष्टोऽरिष्टाय सोऽयं नोविरुद्धैरिति तं विदन्। आलिखानः समाश्वास्य सिंहोऽन्तर्गमिवावधीत्।
महाराज्ञैव छष्टोऽयं पाजभट्टमतस्तथा। राज्यार्थमिति सैदास्तं चुक्रुशुः केचनावदन्। ८०
उपायो बन्धनात् कर्तुं चिन्तितस्तस्य योऽपरैः। अपायः प्रत्युतात्राभूद्दैवं केन विलङ्घ्यते।
तस्य मीरादयो भृत्याः पापास्तेन प्रचोदिताः। प्रहारविवशं चक्रुः शशकं शबरा इव।
राजपुत्त्रवधोत्पातविवशं पृष्ठपातिनं। अवधीत्पाजभट्टन्तं श्वपचमिव राघवः।
भुक्तं किमपि नो राज्यान्निर्हेतु किमयं हतः। शुचेवारोदि तद्दृष्ट्वा हृच्चैः पिकरवच्छलात्।
मा मा वधीरिमं श्यामं सुचिरादन्धनोद्गतं। रुरुदुस्तच्छुचेवेत्थं मरुता कम्पिता लताः। ८५
केऽमी तुरुष्का दुष्कार्यकराः पुष्कलपातकाः। इत्येव तरवः कम्पमापुर्वायुविघट्टिताः।
चतुर्विंशतिवर्षोयन्मात्रा प्राप्तस्थिराच्छवः। व्यहं खड्गान्तिके स्नेहात् कृतोऽन्त्यक्रियया ततः।
यवान्नभक्षिणी तस्य जननी विधवा सती। सोवाणदेवी साजीवमवसत्तच्छवाजिरे।
राजसैदद्विजानेतान् हतान्वीचाम्यहं कथं। इतीव तत्क्रुधा रक्तः सूर्य्यो लोकान्तरं ययौ।
परितो राजधान्यास्तान् दृष्ट्वा नग्नान्महत्तरान्। न शेकुः केऽपि वस्त्रैकखण्डं दातुं त्रपाहते। ९०
सरस्तीरगता भेका अविच्छिन्नरवच्छलात्। साक्रन्दाः सर्व्वरात्रन्ते तच्छुचेवाभवंस्तदा।

ये राजवेश्म विविशुः सुभगाः सुवेशास्त्वङ्गत्तुरङ्गखुरधूलिकृतान्धकाराः।
ते दिव्विवोढशिबिकाहृतजीर्णवस्त्रा निष्काशिता नृपगृहात् स्रुतरक्तधाराः।

इत्थं षष्टितमे वर्षे भाव्युपद्रवकारणं। वैशाखस्य चतुर्द्दश्यां सैदानां विप्लवोऽभवत्।
नूनं हसननाम्ना स भृत्यानां तत्र वत्सरे। अन्तकः सन्निविष्टोऽभूद्येनैते प्रलयं गताः।

सामान्यवेश्मनि वरं जनिरस्तु पुंसां मा मास्तु राजनिलये बहुदुःखकर्त्री।
ते शेरतेऽत्यरुचिरेऽल्पपटैकमध्ये नोमाति राजयुगलं विपुले स्वदेशे। ९५

अथालिखानमेयाद्याः क्रुद्धाः पश्चादवालगन्। नदीपारगतान् श्रुत्वा द्रोहिणस्तान्निरोधिनः।
नौसेतुबन्धानुच्छिद्य माद्रैः काश्मीरिकैः समं। ज्यसालटक्कुराद्यास्ते मतं चक्रुर्जिगीषया।
विंशप्रस्थान्तरे सैदाः प्राप्तसन्नाहवाहनाः। तत्तत्पटकुटीषण्डमण्डिताः शिबिरं व्यधुः।
पुरमात्रावशिष्टास्ते सैदा द्वैधान्निवर्त्तिनः। वाजिवर्म्मासिभूयिष्ठां राज्यलक्ष्मीं विभेजिरे।
येषां वराटिकैकापि नाभूत् करगता क्वचित्। स्वर्णरूपकदत्ताढ्यास्ते वेशभूषिताः। १००
तेऽप्युत्तुङ्गतरङ्गेषु सर्व्वतोवसुवर्षिषु। अकारि शस्त्रग्रहणं शिल्पिशाकटिकैरपि।
मन्दुरासुन्दरा येऽश्वा राज्ञोऽभूवन्महागुणाः। तानारुह्याधमास्ते ह्यसङ्गत्या नित्यदुर्लभान्।
ततो हस्सनराजानकाद्यैरन्यैश्च संयुताः। षाड्गुण्यं विदधुः सैदाः काश्मीरिकजिगीषवः।
ते सेयामत्तनाराचमुख्यानां यन्त्रणोज्झिताः। स्वसेवकानां विदधुरधिकारसमर्पणं।
अत्रान्तरे पारगताष्टक्कुराद्या महाधियः। सैन्यानां सङ्ग्रहं चक्रुस्ते जालद्रगरान्तरे। १०५
श्रुत्वेति साहसोदात्तं नगरे मद्रनिर्मितं। आययुः सर्व्वराष्ट्रेभ्यो लोकास्ते शस्त्रधारिणः।

प्रवृत्ते च पुरक्षोभे पुरे ग्रामे च पत्तने। अत्युल्वणजनः सर्व्वो धावति स्म धृतायुधः।
धमालावांगिलीयाद्याः क्रमराज्यगताश्च ये। स्वामार्थं वितस्तिकातीरे शिविरं समकल्पयन्।
दरङ्गियकवाकाद्यैर्दरङ्गिः सुभटैः समं। वैदूर्य्यभट्टः स्वामस्थो युद्धसन्नद्धतां दधौ।
नीलाश्वलोकं सङ्गृह्य पद्मराजानकादयः। दुग्धाश्रमान्तिके सिन्धोः पारं स्वामार्थमासदन्। ११०
सर्व्वतोधान्यसम्भारानानीयानीय नाविकैः। प्रवासवेतनं कोशाभावात् काश्मीरिका व्यधुः।
क्वचिल्लुण्ठिं क्वचिद्दाहं परदेशद्रवात्र ते। पारावारगताश्चक्रुर्नदीं तीर्त्वा पुरद्वये।
धनुर्यन्त्रशरैर्मुक्तैः प्रतितीरं पुरद्वये। पञ्चसप्तमृता युद्धे प्रत्यहं कटकद्वये।
खशाद्योपान्तसामन्ताः चौणश्रेष्या रटहोज्झिताः। नामावशेषाः खानाश्च शूरादारिद्र्यपीडिताः।
चौराः कृतप्रमोषाश्च चिरवन्धनयन्त्रिताः। तत्तद्राजविरुद्धाश्च पिशुनाश्च श्वहृत्तयः। ११५
हृताधिकारास्तत्कार्य्यन्यायप्रत्यायनक्षमाः। एते चान्ये च तत्पुरेऽस्मिंस्तदुपद्रवे।
नौसेतुबन्धान्नावश्च सर्व्वामडवराज्यतः। आनीय वामतीरस्था विदधुः स्वोपयोगिनीः।
देवाभिधः शाकुनिको नाविकाधिपतां भजन्। प्रतीर्य्य नौकायुद्धेन विदधे सुभटक्षयं।
सैदा दुग्धसरस्तीरस्थितान् शाकुनिकान्नवान्। सपोतान् व्यसृजन् योद्धुं तत्तन्नन्दपुरस्थिताम्।
सेयावस्ताकनामापि पुररक्षाधिकारभाक्। विचार्य्य चौरांस्तत्काले द्विजान् शूले न्यरोपयन्। १२०
आसमुद्रमठाच्छेननगरान्तं सडिण्डिमं। तस्मिन् स्फुरति पौराणां न भीश्चौरकृताभवत्।
छिन्नेषु सेतुयन्त्रेषु तत्तन्नौपुरकादिषु। पूर्दुर्गरक्षनेवाभूद्दुर्गना नदिरोधिनां।
आस्कन्दं स्कन्दभवनादामक्षोपरटहाङ्गनं। पञ्चहस्तमितां सैदाः परिखां समकल्पयन्।
द्वारधानीसमीपेऽपि रुद्रराजानकान्तिके। तादृशीं परिखामन्यां चक्रुर्वैरिभयच्छिदे।
विरुद्धवेशमलुठनं कुर्व्वन्तो धततद्रुमाः। सैदभृत्या भयं चक्रुः प्रजानां गोवधादिना। १२५
विरुद्धमुक्तलुण्ठितगृहदारुसमाश्रितः। दिद्दामठो रुद्रवनवासिस्थमहतोऽभवत्।
अनभिज्ञतयाप्यामां नदिरुद्धरटहस्त्रियः। ययौ चक्रुर्यथा सैदागावोहला शूनामिव।
निःशस्त्रपथाः पश्चादसमुद्यमो दिने दिने। राजधान्यङ्गने सायास्तद्भृत्याः प्राविशन्मदात्।
मत्सामीनपशंपुन्दकापस्यसद्मानि च। राजानको हस्तनस्य ददाह स्वगृहं क्रुधा।
काकतानीयकन्यायः सैदकाश्मीरसैन्ययोः। परस्परभयभ्रंशद्वैयोरभवत्तदा। १३०
पारावारगता धीराश्चौर्य्या साहसिनो द्रुतं। हत्वा तांस्तान्छिरश्छित्वा तीरे दण्डे न्यरोपयन्।
सोमाख्या रोहिणि हते तीर्थे सैदभटद्वये। लुण्ठिं विदशधामाधायकः पद्मपुरान्तरे।
सोमराजानकाद्याश्च दृष्ट्वा तीर्णा भटोद्भटाः। उत्तराद्दिषु मठ्ठावाद्युत्पिच्छं चक्रुरत्रणाः।
तेन पैरा अपि ग्रामे जग्मभूगो गृहावनैः। सोमराजानकस्यैव क्रोधाद्वह्निमदापयन्।
तद्दृष्ट्वा च नदीपश्च पदवीं विपणान्तरे। ताजिभट्टस्य सदने तद्वह्निमदापयन्। १३५
गृहान् प्रातिमाचः स दग्ध्वा सहरसाथगः। दुग्धाश्रमादिस्वामस्थान् पलायनपरान् व्यधात्।

अथ लोहरकोटस्थं श्रीमार्गेशप्रत्यहंगिरं । ज्यञ्चालठकुराद्यास्ते लेखमित्थं व्यसर्जयन्।
यत्प्रमादभिया देशात् सकुटुम्बो गतो भवान्। स मद्रैर्विहितोऽस्माभिर्युक्त्या तदधसाहसः।
मेयामहम्मदाद्यैस्तत्पुत्रैरस्मज्जिगीषुभिः। वैतस्ता दक्षिणे वामोऽभगोऽस्माभिः समाश्रितः।
जिगीषवोऽवयं सर्व्वे क्रान्तकश्मीरमण्डलाः। पुरमात्रावशिष्टास्ते सैदास्तिष्ठन्ति वेष्टिताः।
तद्विलम्बधियं त्यक्त्वा तूर्णमागम्यतां यतः। प्राप्ते त्वयि जयोऽस्माकं तव स्युः कीर्त्तिसम्पदः।
राजभक्ताश्च शक्ताश्च यूयमेवात्र मण्डले। तदनागमनात् कीर्त्तिं मा कार्षीः स्वां कलङ्कितां।
बद्धे रणादालिशाहे पूर्व्वं मलेकजः स्वयात्। राज्यरक्षां व्यधादत्र यथा मार्गेशमल्लदः।
तदत्राणं त्वया रक्ष्यं तूर्णमागत्य साम्प्रतं। अन्यथास्य शिशोराज्ये स्थापयन्ति न सैदजाः।
इति लेखं विचार्य्याशु स्वदेशोत्कण्ठिताशयः। तूर्णं पर्णोत्समार्गेण स मार्गपतिराययौ।
प्राप्ते तस्मिन् दिनैर्द्वित्रैः कुम्भरीनपुरान्तरं। चकम्पुः शिविरे सैदाः प्रदीपाइव वायुना।
अथ सम्भ्रम्य सैदास्ते भयात् सन्धातुमिच्छवः। इत्थं शिखशह वार्दोसिखइम्नान् व्यसर्जयन्।
प्रधानपुरुषास्सन्तः कृतसैदवधाः कथं। भवन्तोऽत्र न कुर्व्वन्ति कार्य्यं लोकविगर्हितं।
दैवाद्यदि मृतो भूपस्तत्सुतस्तत्पदे कृतः। कस्य किं वो हृतं येन सर्व्वे छेदार्थमुद्यताः।
न सर्व्वे द्रोहिणः सन्ति यूयं काश्मीरिका जनाः। वैदेशिकैर्हतायैस्ते द्विजांस्तान्नः प्रयच्छत।
अथवा परदेशात्ताञ्छिष्कास्य सपरिच्छदान्। यूयमेवात्र देशे स्य मुख्या मन्त्रिषु पूर्व्ववत्।
या यस्य पदवी पूर्व्वमासीत् सा तस्य तिष्ठतु। संभूय सर्व्वे भुञ्जामो नास्माकं विग्रहे ग्रहः।
मरणं नियतं जन्तोर्यथैव विधिकल्पितं। तथैवावश्यभावीति के निवर्त्तयितुं क्षमाः।
इति लेखार्थमालोच्य मार्गेशाद्या महत्तमाः। यवनाचरसंबद्धमिति लेखं व्यसर्जयन्।
रक्षार्थं नृपस्यादृश्यचितो न दुराशया। किमर्थं स हतो राजपुत्रो वह्रामखानजः।
नेरोजोहादिवधतः कस्याश्वासो भवत्विह। तत्राप्यस्य शिशोराज्ञः सर्व्वः कोशो विलुण्ठितः।
सैाहीमा घटिकैवैका द्वारि तिष्ठति भूपतेः। सैदैः शिष्टाद्भवेति श्रुवन्तीव ध्वनिच्छलात्।
गच्छन्त्वनिष्टा मद्रास्ते वहिर्युक्त्या निवारिताः। सन्तोषपूर्त्या तिष्ठन्तो यूयं पैतामहे पदे।
इत्यादि श्रुत्वा सैदैस्तु समाहूतोऽप्यनागतः। तदयं व्यसृजद्दूतं स च प्राप्तोऽब्रवीदिदं।
स्थापयन्तु धनं कोशे यद्धृतं बालभूपतेः। शस्त्रं त्यजन्तु मन्त्रादौ तिष्ठन्तु भयवर्जिताः।
अक्षता एव कुर्व्वन्तु राज्यकार्य्याणि पूर्व्ववत्। किञ्चिन्नश्यति नो देशे दोषाः शान्तिं व्रजन्ति च।
यद्गतं गतमेवात्र मृता जीवन्ति नो पुनः। अन्योन्यशुद्धिर्वैरस्य जातान्योन्यकृतादघात्।
इत्यादि युक्तमुक्तं तद्वाक्यं श्रुत्वा मदोद्धताः। सैदास्तदुक्तिजनितक्रोधदग्धाइवाभवन्।
नृपः कोशश्च शस्त्रञ्च युद्धदक्षास्तथा भटाः। सर्व्वमित्यस्मदायत्तं किं कुर्व्वन्ति विरोधिनः।
इति हैमतखानोक्ता युद्धसन्नद्धबुद्धयः। अभूवंस्ते कृतोद्योगाः कौरवाः पाण्डवेष्विव।
अथैकदा सैफडारजीनराजानकादयः। पुरे नौसेतुमुत्तीर्य सैदयुद्धार्थमाययुः।

उपायैः सर्व्वदा जेयास्समयो न रणस्य वः। इति मार्गपतेर्वाक्यं नागृह्णंस्ते रणोद्यताः।
दावोदनामा मार्गेशपुत्रो धामाकरोद्द्रुतं। प्रतीहारादिभिर्युक्तो नगरान्तरमासदत्।
समुद्रमठमार्गेण प्रविष्टा पृतनाथ सा। प्रापक्षोदविहारान्तं कर्त्तुं सैदभटचयं।
रणं सन्त्यज्य डोम्बाद्यायेऽन्ये लुब्धा महाभटाः। सर्व्वस्वहरणव्यग्रा बभूवुर्नगरान्तरे।
डोम्बाद्याः सुभटाश्चान्ये घ्नन्तोऽन्योन्यमुदायुधाः। प्रसिद्धपौरवेश्मभ्यो भाण्डागाराद्यलुण्ठयन्।
भूमौ निखन्य यन्न्यस्तं पौरैर्गुप्तं गृहे धनं। चिह्ना प्रतिपदं शङ्कुर्नीतं तत्तैरिकापितं।
मद्राहते भटे दृष्ट्वा सैदा दिक्पतितं शिरः। नाद्यास्माकं जयोऽस्तीति तूर्णं जग्मुर्यथागतं।
अथ सैदचमूः श्रुत्वा तान्प्रविष्टान्पुरान्तरे। अग्रे जगाम युद्धाय सायकायुधवर्षिणी।
अयागतं पद्मभटं हत्वा स्वशिबिरान्तरे। तद्रक्ततिलकं चक्रुः सैदाः स्वायुधसिद्धये।
आलिखानः स तत्रस्थस्त्रस्तः श्रुत्वागतां चमूं। लब्धभद्रविहारेऽग्निं मार्गरोधार्थमार्पयत्।
ज्वालाजटाकुले मार्गे प्राप्तो दावोदमार्गपः। सहोसनप्रतीहारः स वीरो रणमग्रहीत्।
सेतुसङ्कटमार्गेण पतितः परिखान्तरं। स मार्गपतिदावोदो युध्यन् प्राणैर्व्ययुज्यत।
तत्राह्लादप्रतीहारमुख्या वीरा रणाङ्गने। ययुः शौर्य्यं दर्शयन्तो दिव्यस्त्रीसुखभागितां।
रूपं तस्य मृतस्यापि स्मृत्वा पौराङ्गनाः पुरे। वदन्ति नैव पश्यामस्तादृशं सुभगं क्वचित्।
सुरूपो मानुषो योग्यो नायं तन्नीयते दिवं। इतीव देवताभिः किं मृतं तत्र न्यधीयत।
तावद्दुर्भतखानाद्यैः पश्चादन्यपथागतैः। विदधे खानगाहाग्रे तत्तत्सुभटसंचयः।
भूताविष्टैरिव प्राप्तविजयैरुद्धतायुधैः। रणप्रेक्षागताः पौरास्तद्दिने कोपितैर्हताः।
किमन्यत्परदेशीया दूता विप्रगृहे स्थिताः। एते मद्रा इति प्रोक्ता लोभाद्भित्त्वा निपातिताः।
विमुच्य बन्धनस्थान् स्वान् युध्यन्सैदभटैः सह। स सैफडामरः पौरान् सैदांश्चोत्पाटकान् व्यधात्।
अस्मद्वैरिहितः सोऽयमिति सैदभटास्तथा। जघ्नुर्गृहस्थितं वैद्यपण्डितं यवनेश्वरं।
अत्यन्तानुचितं सैदाश्चक्रुर्यत्तस्य मस्तकं। छित्त्वा चन्दनलिप्ताङ्गं न्यधू राजपथान्तरे।
प्रविष्टा राजधाः केऽपि तद्दिने ते पुरान्तरे। अविचार्य्य क्षयं चक्रुः सर्व्वेषां यत्कृपोज्झिताः।
तस्य चन्दनलिप्ताङ्गं मस्तकं वीक्ष्य नागराः। न के निन्दां व्यधुः सैददुष्कर्माधर्मनिश्चयात्।
आमक्षेकपुराक्षोद्रविहारान्तं पुरान्तरे। शवा दन्धनगण्डाख्य इवार्धान्विहिताः पथि।
आसन् येषु वपूंषि तूलशयनन्यस्तोपधानाङ्गसंस्पर्शोत्कर्षसुखावमर्शविलसच्छृङ्गारसाराण्यलं।
नग्नास्ते भुवि काककुक्कुरवृकैः सम्भक्षिता लक्षिता मेदोमांसवसावमत्क्रिमिलसन्निष्यन्ददुर्गन्धिनः।
जयेन तावन्मात्रेण तुष्टाः सैदाः परस्परं। विश्रमस्थान्तरे चक्रुर्वाद्यैस्ते विजयोत्सवं।
हतावशिष्टान्सर्वांस्तांस्तद्दिने चलितान् बहून्। पश्चाच्चेदलगिष्यन्त सर्व्वसंहरणं भवेत्।
किन्तु प्राक् लुठिता देवा ज्वलिताः केऽपि देशगाः। तां बुद्धिं विजयायैषामदास्यन् कुपिताः कथं।
अहंपूर्व्विकया याततरङ्गटभराग्रहः। सैसेतुबन्धसुचोट तावच्छ्रीनगरान्तरे।

सन्नाहभारमग्नाङ्गाः सेतुभङ्गात्परिच्युताः। शतसङ्ख्यादिने तस्मिन् वितस्तायां विपेदिरे।
नूनं सा शारदा देवी वितस्तारूपधारिणी। तदधर्मक्रुधा ग्रामं विदधे कटकद्वये।
प्रेक्षागताहताः पौरा इति निन्दानिवृत्तये। तत्क्षणोत्कृत्तशिरसां सैदैराशिः कृतोऽग्रतः।
तत्तत्कील्यर्पितमुखैस्तैर्व्वितस्तातटान्तरात्। काष्ठमेकं न्यधुः सैदा भोत्यै दीपधरोपमं।
वितस्तायां शवाः केचित् सलिलोच्छूनविग्रहाः। विससुर्व्विस्रगन्धाढ्या महापद्मसरोन्तरे। २००
अत्रान्तरे समानीयावशिष्टान्यरितोभटान्। काश्मीरिकाः पुनश्चक्रुः पूर्व्ववत् सैन्यसंग्रहं।
श्रीज्यहाङ्गिरन्यमानसैफडामरकादयः। मुख्यान् सैदान् पुनर्ज्जेतुं रणोपायं व्यचिन्तयन्।
ससैफडामरः प्राप्तसिद्धादेशपदस्ततः। उच्चावचेषु व्यभजद्विषयान् सप्तविंशतिं।
काष्ठागता लसत्पचाल्लीत्वणाश्च सफलीकृताः। यत्रैषवश्च योधाश्चाघट्टंस्तेषु दिने दिने।
क्षुभ्यद्दैतस्ततोरद्वयजयघटनारब्धयन्त्रेषु युध्यत्क्रुध्यद्दोरक्षणात्तप्रचुरपुरजनस्वान्तसंक्रान्तशौर्य्यैः।
धावत्सन्नाहिताश्वोत्कटसुभटघटाघातजाताग्निवर्षं चक्रुः क्रोधात् पुनस्ते प्रवरपुरवरे युद्धमत्युद्भुतं तत्। २०५
यामदुन्दुभिवाद्यानां ध्वनिः सर्व्वैस्तदा श्रुतः। पूर्व्वं राजगृहे पश्चात् सैदकाश्मीरसैन्ययोः।
अवतीर्णा जलार्थं याः पारावारपुराङ्गनाः। यन्त्रेषुभिर्व्विदीर्णाङ्गास्तत्रक्षणात्तत्र विपेदिरे।
स नासीद्दिवसो यत्र द्वित्रा वीराः पतत्रिभिः। विद्धा मुमुर्षवस्तीरान्न नीताः स्वगृहान्प्रति।
वह्निदानस्फुरद्योधसंहाराद्यैरुपद्रवैः। एकमेकं दिनं तत्रानेहस्साभूद्युगावहं।
अश्लीलालापिनोऽन्योन्यं रक्षोवाट्टाटनोद्यताः। तटद्वये भटाः क्रूरा अवाच्यमपि तेऽब्रुवन्। २१०
राजसैदद्विजद्रोहरोहत्पापादिवादिनः। मिथोगार्लीं वदन्तस्ते किं नावाच्यं बभाषिरे।
प्राप्ता दौलतशीहाद्याः कष्टवाटादिदेशतः। शिष्टाः मल्हणहंसाद्य शाहिभङ्गनृपात्मजाः।
पञ्चगह्वरजाः केचित् सिन्ध्वपत्यन्वयोदिताः। खशाश्च क्रास्तथान्येऽपि रुरुधुः सर्व्वतो दिशः।
काश्मीरिकाः स्वभेदेन बलप्राप्त्या तथापरे। ययुस्तामवशिष्टचलमज्ञातान्योन्यनिश्चयाः।
अत्रान्तरे नभस्युल्का सार्धं दीप्तोदभूत् स्फुटं। उदीच्या दक्षिणां याता प्रज्वलद्रुक्मसन्निभा। २१५
दृष्ट्वा तामद्भुतां सर्व्वे सैन्ययोरुभयोरपि। सङ्ग्रामाशङ्कितानिष्टावभूवुर्भयविह्वलाः।
अत्रान्तरे सैदलेखैः प्रेरितोदेशलिप्सया। तत्तारखानोव्यसृजत्तौरुष्कं पुष्कलं बलं।
प्राप्ताः शस्त्रगलस्थानं तुरुष्कास्ते सुदुष्कराः। इभाभोडनराद्यैः प्रातैः शलभा इव।
कालीधारापदेशेन काली भगवती क्रुधा। व्यधात्तद्विघ्नं नूनं सतीदेशहितेच्छया।
आदामखानजस्तस्मै विसृज्य इति चोदितः। निवर्त्य तं तुरुष्कः स स्वान्तिके समरक्षत। २२०
तदीयाश्वपदार्थौघप्राप्त्या तद्देशवासिभिः। अनन्यसुलभां प्राप्य श्रियं वैश्रवणायितं।
अथ काश्मीरिकाः श्रुत्वा तद्वधं वाद्यवादनं। चक्रुर्य्येनाभवन् सैदा विच्छायवदनाः श्रुते।
गतावशिष्टा दुर्न्निष्टदुष्टतत्कटकान्तरात्। सहस्रदितथी तत्र शवानां निहिताभवन्।
विशुद्धपार्ष्णिग्रन्थनभयाः प्राप्तबलोद्धताः। काश्मीरिका मतश्चक्रुरणार्थं दृष्टमानसाः।

मध्ये सर्वैन्यास्तिष्ठन्तु मार्गेशाद्याः पुरान्तरे । राजानकाद्या मद्राश्च स्यामस्था यान्तु दिग्द्वयं । २२५
एकतस्ते स्थिताः सर्वे नश्यन्त्यल्पबलाः पुनः । इत्येवमतनिष्ठास्ते सम्मन्त्र्य कृतनिश्चयाः ।
स्यामार्थमादिशंस्तीर्थं स्वप्रदेशादुपर्यधः । नावा सिन्धुं प्रतीर्याथ जोनराजानकोद्धृतं ।
स्यामस्थान् पञ्चषान् हत्वा पलायनपरान् व्यधात् । वस्त्रवाजितनुत्रादि हृत्वा सैद्बलान्नरात् ।
काश्मीरिकाश्चभाग्यन्त प्रयाताः प्रतिवासरं । किमन्यत् स्फुटमेवाक्षि येऽवसन् सैदसन्निधौ ।
निर्लज्जास्ते व्यलज्यन्त काश्मीरिकबलान्तरे । इतोयाति ततश्चैति लोकोविगतयन्त्रणः । २३०
वाले राजनि मन्दाग्नौ कोऽप्यजृम्भत विप्लवः । गृहेषु लुण्ठ्यमानेषु विटैर्विहितपेटकैः ।
निरुद्धमार्गसञ्चारोदेशोऽभूद्भयविक्लवः । मासद्वये व्यतीतेऽपि पारावाररणोद्यमैः ।
जिगीषा नात्यजंस्तत्र सैदाः काश्मीरिका अपि । पूर्व्वमङ्कुरितः सैदवधे पल्लवितः क्रमात् ।
परस्परं वैरतरुस्तदागाच्छतशाखतां । दक्षिणे राजकोशादि वामे सेनाद्यवेक्ष्य च ।
वलद्वयेऽपि विजयः सन्दिग्धः प्रत्यभाद्दिशां । पुंसां निरुद्धे सञ्चारे नावा नद्यास्तटद्वये । २३५
स्त्रियएव तदाकुर्व्वन् पारावारगतागतं । पारानेत्य विटैर्लुब्धैर्मुषिते पथिकव्रजे ।
अधिष्ठानादिदेशेषु मार्गः प्रचलितोऽभवत् । पारावारगतान् कांश्चिदन्योन्यच्छलनोद्यतान् ।
निरुद्धः प्रत्यहं द्विषः क्रोधाच्छूलेऽध्यरोपयन् । अवोचन्नेकदा सैदा भटाः काश्मीरमन्त्रिणः ।
आयान्तु यदि शक्तिर्व्वोयुध्यन्तु पुनरप्यलं । सीमा वा दीयतां तावत् प्रतीचामो रणं प्रति ।
नित्यं जनवधे लोका उद्विग्नाः शरवर्षणैः । भजतां विभवं सोऽत्र विधिर्य्यस्मै प्रयच्छति । २४०
निश्चयेति पुरप्रान्ते सीमार्थं वामपार्श्वगैः । चिच्छिदुः रुन्धितां रज्जुं तूर्णं सैदभटास्तटात् ।
ततो पुर्वैरिणो ज्ञात्वा सैदाः कादीलनस्ततः । न्यधुर्हसनराजानकादीन् स्यामार्थमाकुलाः ।
छिन्नेषु सेतुबन्धेषु सैदैर्शीपुरकादिषु । नगरीं दुर्गमां दुर्गतुल्यां चक्रुर्द्विषद्भयात् ।
अथ काश्मीरिकाः प्रोचुः सैदांस्तीरान्तिकस्थितान् । नौसेतुबन्धरज्जुर्य्यद्वत्तश्छिन्नोभयेन गः ।
पुरमात्रावशिष्टत्वादुत्तिष्ठध्वं कियच्चिरं । पर्य्याप्तं भुज्यते धान्यं किं कुरुध्वं पुनः पुरे । २४५
श्रुत्वेति सैदास्तांस्तारमूचुरित्थं स्वसैनकैः । अन्नाभावादभुञ्जानां न चलामो भयादितः ।
का जुगुप्सा तुरुष्केषु सर्व्वमांसभुजो वयं । यावत् पुंपशुगोमांसपर्य्याप्तिस्तावदास्महे ।
पुनर्देहस्यतेऽस्माकं कः शकोरोद्धुं स्वदन्तरात् । श्रुत्वेत्युत्पुलकास्तीरे व्यप्तालमल्लिकादयः ।
एकत्रमिलिताः सर्वे चक्रुः सम्मन्त्र्य निश्चियं । सैन्यं स्यामविभागेन विभज्य पथिभिस्त्रिभिः ।
उत्तीर्य्य यामः शीर्घ्यमि सैदाः कटकभेदतः । अन्यथैकत्र सम्बद्धा दुर्ज्जयाः सैदपत्तगाः । २५०
एवतर्येक्लिताः सर्व्वाम् जेय्याभोऽस्पयस्तागमम् । अस्माकं प्रथमं सर्व्वं न विलम्बोऽधुनोचितः ।
श्रुत्वेति मद्रधंयुक्ता जोनराजानकादयः । स्यायुर्धा नोजयो वेति युद्धमग्रद्धतां दधुः ।
अथैकं मतमाश्रित्य स्यामस्थाः सैन्यनायकाः । पुराणनगरस्थानात्तीर्त्वा पर्ब्बतमाश्रयन् ।
प्रौलभट्टादयो रलवाटिकाख्यप्रदेशतः । नौभिस्तीर्णाएतौ द्यालाः शालेकाम् सभटान् व्यधुः ।

दृष्ट्वा धैर्य्यं द्विजस्यापि रणश्रमरतः क्षणात्। गङ्गाद्योभटाः सर्व्वे शशंसुर्वीरमानिनः। २५५
अन्योन्यप्रहृतिर्माभूदिति काश्मीरिकाभटाः। पञ्चशाखान्यधुर्मूर्ध्नि हर्त्तुं निजपरभ्रमं।
सैफडारादिवीरेषु शक्तयः करगा बभुः। निर्गतांस्तान् रिपून् हन्तुं मूर्त्तिमत्यद्वान्तरात्।
तानुत्तीर्णान्समाकर्ण्य सैदाशङ्कितमानसाः। द्राग्भिमं व्यसृजंस्तूर्णं शागजयोद्धतमानसं।
सम्प्राप्तोऽभिवनायुर्यमठन्तीराध्वना व्रजन्। गिरिशृङ्गगतैर्दृष्टस्तैः शिलाभिरवार्य्यत।
तच्छिलावर्षणत्रस्तस्तुरङ्गात्पतितः क्षितौ। पदातिः स चलन् छच्छाच्छिन्नस्तीर्णोरणसङ्कटात्। २६०
तदीयं तुरगं बद्धखड्गं सन्नाहभूषितं। काश्मीरिकाः करगतं मूर्त्तं जयमिवासदन्।
तं पराभूतमालोक्य तद्युद्धार्थं भटान्वितान्। सैदाः पिरुजखानादीन् रात्रावेव व्यसर्जयन्।
दुग्धाश्रमागतामेथाभांकिराद्याश्च तत्क्षणात्। वर्षाघाद्रत्र गर्ज्जन्तः आपुः पूपामठान्तिकं।
तावन्मद्रप्रतीहारडामराद्यामहाभटाः। सन्नद्धाः सुमनोवाटप्रदेशान्तं समासदन्।
सैदखानादय सैदहोस्सनादिसमन्विताः। सैदानां सुभटाश्चान्ये प्रापुस्तत्रैव ते प्रगे। २६५
करवालाः स्फुरज्ज्वाला बभुः श्यामलकान्तयः। भूपीडनादिव व्यालाः पातालविवरोद्गताः।
अथोदतिष्ठत्तुमुलः समरः सैन्ययोर्द्वयोः। सखड्गफलकक्षुद्रमद्रव्यूहसुदुस्सहः।
भोवीरास्स्थमयेऽत्र युध्यत मुदा मा यात पश्चादमी जेतारो यदि तद्धरन्ति सकचं सैदाः क्रुधा निर्घृणाः।
प्राप्तश्चेद्विजयः सुखं स्वविभवात् स्वर्गेऽपि तच्चेन्मृता युद्धादाविति मद्रपः सपरषुः काश्मीरिकानब्रवीत्।
पूर्व्वं पिर्वजखानोऽग्रे निर्ययौ रणगर्व्वितः। तं पिरुजप्रतीहारो रामोराममिवाभ्यगात्।
अनभिज्ञतया युद्धे स्फुरन्तं वीक्ष्य तं द्रुतं। स्वभटान् प्रेरयन्मद्रास्तत्तुरङ्गखुरच्छिदे। २७०
खड्गकृत्तखुराश्वोद्यतस्तुतिनष्टरणक्रियं। गङ्गाद्याः प्राहरन्सर्व्वे शक्त्या शक्तिसमन्वितं।
तद्भृत्याः शाहिभङ्गीया भ्रमरादव सारवाः। ददंशुः कटकं क्रुद्धाः स्फुरन्तः खड्गकण्टकैः।
पतितं सम्मुखं दृष्ट्वा तं काश्मीरारणाङ्गने। जयोऽद्य वर्त्ततेऽस्माकमित्युक्तोत्साहमादधुः।
व्याहन्यमानाः काश्मीरैः भटैर्मद्रसमन्वितैः। भृत्यास्ते शाहिभङ्गीयाः क्षतं सलोचितं दधुः।
एहि तिष्ठात्र युध्यस्व क गच्छस्यधुना मम। इत्यन्योन्यं भटास्तत्रातर्जयन् रणगर्व्वितैः। २७५
काश्मीरपृष्ठगः सूर्य्यः खड्गान्तर्मतिबिम्बितः। जयोऽद्य युष्मास्वित्येव वक्तुं व्योम्नोऽवतीर्णवान्।
अहम्पूर्व्विकया सर्व्वे ते वीरभ्रमरास्तदा। रणोद्याने स्फुटश्चेर्यशःकुसुमलम्पटाः।
तद्रणाङ्गनरङ्गान्तःसङ्गतास्ते भटानटाः। लग्नदङ्गविभङ्गाढ्या नाट्यभङ्गिमदर्शयन्।
अहाङ्गिराद्यास्तद्भृत्याः प्रविष्टाः सम्मुखे रणे। विधाय युद्धं सन्नद्धावीरवृत्त्या विचक्रिरे।
ववर्ष शरधाराभिः ससैन्यकटकाम्बुदः। स्फुरत्खड्गलतडिज्ज्योतिर्युक्तोगभीरगर्जितः। २८०
सैदेषु भाकरस्तत्र सम्मुखस्थविभाकरः। शौर्य्यशोभाकरः सापदये भाःकरवालभृत्।
लङ्घनुङ्गतुरङ्गस्थोरणरङ्गान्तरे स्फुरन्। सोऽङ्गहारसमासङ्गोनाट्यभङ्गिमदर्शयत्।
प्रहारविचतं सर्व्वे मिलित्वापि रणान्तरे। शेकुस्सन्नाहिताश्वस्थं चिरात् पातयितुं क्षितौ।

द्विचान् हत्वा भटान्वीरो वीचितः श्लाघ्यविक्रमः । अभजद्वीरशय्यां स रक्तसन्दोत्तरच्छदां ।
येषां प्राणपरित्यागे निर्णयं बध्नतामपि । रणयोग्येच्छयोपेक्षा नास्ति किन्तैः पशूपमैः । २८५
सैदवोसनमुख्याये काश्मीरास्सैदपक्षगाः । आक्रादीन् हताम् दृष्ट्वा रणं त्यक्त्वा पलायिताः ।
ततः काश्मीरसेनान्या वात्ययेव तटद्रुमाः । भग्नास्तत्रीडनिःहता मत्याः शावादवाहताः ।
न खड्गी न हयारोहीन चापी न च शक्तिमान् । व्याहृत्य मेचितुं कश्चिन्नाशकद्विद्रुताम् बलात् ।
हठलुण्ठितविध्वस्तास्समस्तास्ते विरोधिनः । हृचाच्छादानपि ध्नन्तः प्रापुस्ते नगरान्तरं ।
आसमुद्रमठात्पूर्वाधिष्ठानान्तं निरम्बराः । मार्गेष्विभ्मनगर्त्तौघादवासन्निहिताः शवाः । २९०
केचित् कुल्यान्तरे मग्ना भग्नाः केऽपि रणान्तरे । केचित् प्रमुषितानग्नाभयाद्दिशाद्दिशोऽचलन् ।
तद्वीरावयवैः श्वभ्रैः पूरिता विपुलैर्मही । तद्ग्रासार्थं प्रवृत्तस्य मृत्योरिव महानसः ।

ये सुन्दराविपुलभोगपुरन्दराभास्सैदनैरैश्वविभवप्रथितप्रपञ्चाः ।

नग्नान् विलोक्य भुवि तान् धृतदुष्टगन्धान् कस्यापि शाम्यति न देहभवोऽभिमानः ।

वरं मरणमेवास्तु रणे स्वर्गसुखप्रदं । न सदेऽयतनस्वामिदृष्टित्तियाज्ञाकदर्थनाः ।
इत्युक्त्वा प्रविशन् युद्धे धीराश्वस्थोऽप्यकातरः । हर्मेभमेरः शस्त्रेण स श्लाघ्यमरणोऽभवत् । २९५
अन्यान् प्रचलितान् दृष्ट्वापीचिताग्राम्रवैरिणः । पलायनेच्छा नैवाभूद्युयुत्सोर्यस्य मानसे ।
छिन्नाङ्गुलिकरोऽप्यश्रमारुह्य स्वधमान्वितः । अकरोत् चणमात्रं यः शस्त्रप्रहरणं रणे ।
स्थामस्थितः पुरस्तात्ते स राजानकहस्सनः । हतस्तेराज्ञमेराद्यैर्मारीकुल्यातटान्तगः ।
प्रच्छिन्नाङ्गुलिहस्तेन सममस्य शिरोभटैः । नीत्वा न्यदर्शि हर्षार्थं मार्गेशादिसभान्तरे ।
किमाकारनिकारेण कुर्व्वन्त्वस्यान्त्यसत्क्रियां । इत्युक्त्वासौ स मार्गेशः शवमुक्तिमकारयत् । ३००

योऽभूच्चिरं नृपगृहेऽखिलमन्त्रिवर्य्योधूर्य्यः पदेषु विमशोचितदानमानः ।

शोच्यां दशामितरवत् स गतः किलान्ते धिग्वामनां भविषु शाम्यति या न भोगैः ।

स चेत्प्राप्तखलीकारस्तिष्ठेत् स सदने शमी । सर्व्वामन्त्रिगणस्तस्य भवेत्पाटुपरोऽत किं ।
पुनर्विभवलोभेन सैदपक्षं समाश्रयन् । आगामिकम्पनेशाधिकारितां प्रार्थयन्निजां ।
अज्ञातदैवदृत्तान्तोऽयमौ लोकेषु हास्यतां । अथवा नाशकाले स्याद्बुद्धिः कुपथगामिनी ।

कुर्व्वन्ति ये परशरीरनिकारमाज्ञौ दर्पान्धलोचनयुगाः स्वविचारवाह्याः । ३०५

ते प्राप्नुवन्ति वधमाशु तथा यथामी लोकावदन्ति नरकोचितएव मर्त्याः ।

धिग्धिग्घभतखानन्तं वीरंमन्योऽपि योरणात् । निर्गत्य सभयः प्राप्तः फखुवाविषयान्तरं ।
त्यक्तोत्तुङ्गतुरङ्गः स निःशस्त्रिर्भतकोज्झितः । तत्र प्राकृतवेशेन जुगोप स्वं भयादटन् ।
क्रुद्धैर्दैवादमार्गेशवधात् मार्गपतेर्भटैः । स चौरइव वाप्यन्तर्हतोऽप्यात्तशिरोऽभवत् ।
छित्वात्तमाङ्गन्तस्याशु निन्युर्मन्युनिवृत्तये । मृतमार्गेशपुत्रस्य शवारात्रिकतां भटाः ।
स चेत् पलायितः सैदशिविरं प्राप्स्यन्निशि । तदत्तग्नोत्तरचा स्यात् सुबुद्धिः पापिनां कुतः । ३१०

तद्भृत्यैर्लुण्ठितादेशोगोवधोथत्पुरे कृतः। जाने भृत्यापराधेन प्राप्तास्ते तादृशीं दशां।
दौहित्रोऽपि महीभर्त्तुर्ज्जातोवीरकुलादपि। तत्पापेनाभवत्तस्य चित्तं वीररसोज्झितं।
विम्राराजसुताः सैदाः काश्मीरा अपरेऽपि ये। सहस्रसङ्ख्याः समरे तद्दिने प्रलयं ययुः।
निहतानीकसुभटसमूहान्तरलचितान्। भूमिदाहाय निष्क्रष्टुं नाभूत् कस्यापि पौरुषं।
ये सर्व्वचङ्गाः पीनाङ्गा भोगैर्मण्डलवर्द्धिताः। यातार्घैर्भीत्यदुर्गन्धास्ते श्ववायसभोज्यतां। ११५
रत्नाककर्त्तरीशक्तिमुद्गरद्रुघनादिभिः। शाल्मलिद्रुमवत् पुष्पैर्वभुर्युद्धगताभटाः।
स्मृत्वा रुद्रविहाराग्निदाहं सैदकृतं क्रुधा। अलाभपुरदाहाय मार्गपोऽग्निमदापयत्।
ज्वालाजालकरालोऽमावग्निर्व्विस्माशदारुणः। अलाभदीननगरं दग्धारण्यमिवाकरोत्।
श्रीमत्सैदहमादानखानगाहोदितानलः। राजप्रजापचारोत्यतत्क्रोधाग्निरिवाद्युतत्।
हतेषु भाकराद्येषु पलाय्यान्येषु यात्स्वपि। विदधुर्न्नगरे लुण्ठं तद्भृत्याः श्वपचादयः। १२०
आसन् जन्मदरिद्रा ये ते महाढ्यत्वमाययुः। सदैवाढ्या दरिद्रत्वमुत्पिञ्जापन्नते तदा।
केचिच्छ्वान्विचिन्वन्तोयत्र कुत्रापि तिष्ठतः। भीतिं प्राप्तैस्तदीयार्थैर्ययुः कापालिकादव।
विरुद्धसञ्चयापूर्णगृहलुण्ठिविधायिनां। अभूत् परस्परं युद्धं समांसास्थि शुनामिव।
आदावेकेन यन्नीतं तस्मादन्येन तद्धृतं। तस्मादप्यपरेणेत्थं मात्स्योन्यायद्वोत्थितः।
द्विधा जयप्रवाहोयस्तदाहिन्योरभूत् पुरा। एकपार्श्वागमात् सोऽत्र शाख्युन्मूलनमातनोत्। १२५
आढ्यान् द्विजवणिक्प्रायान् पौरान्नित्यसुखार्ज्जितान्। मुष्णन्तस्तङ्कटाद्यकुर्द्दरिद्रान् दुःखभागिनः।
दारुणोश्मचयात्तत्तदस्तुनाशाचितान्यपि। पौराणां समदह्यन्त सदनानि मनांसि च।
नगरान्तः कुलीनानां पुण्याः कन्याश्च योषितः। विटाः केऽप्यधमाश्चकुर्हठसम्भोगदूषिताः।
व्यधायि यत्र निर्म्माणं कल्पान्तस्थिरताशया। कोटिकोटिधनं दत्वा दग्धं स्वक्रस्तसादगात्।
आसदन् केऽपि केऽप्युच्चैरनदन् केऽप्यलुण्ठयन्। दस्यवोदक्षिणे पारे चौरादव जयोद्धताः। १३०
न शोधुचषकोऽप्यास्त येषामुत्सवतर्पणे। सहस्रसङ्ख्याः कुम्भानामभोवन्नगराद्धृताः।
केचिद्बन्धुवियोगार्त्ताः केचित् सञ्चयवञ्चिताः। विरुद्धलब्धताचेपाजितरुद्धभुवः परे।
वहवो दुःखितास्तैरः शतैकीयोऽभवत् सुखी। तत्तद्रणविपन्नैश्च चतैः प्रेतैः स्वेश्मनि।
उच्चावचैर्ज्जनैः सार्द्धं सहस्रद्वितयी मृता।
इत्थं षष्टितमे वर्षे श्रावणप्रतिपद्दिने। एकान्तविजयार्त्तयां तत्तल्लोकचयोऽभवत्।
पूर्व्वमङ्कुरितः सैदवधात् पल्लवितः क्रमात्। परस्परं वैरतरुस्तद्दिने फलितोऽभवत्। १३५
पौराणां वीरवर्गः प्रतिदिनमहरत् सञ्चयं वञ्चयित्वा दुःस्थावस्थः समस्तः कृषिफलहृतिभागास्त वास्तव्यलोकः।
उच्छेदस्याद्ववाटावनिसफलतरुच्छिन्दनार्थं दुरन्तः सैदद्वधात् समुत्थः प्रवरवरपुरोपसर्गोऽभूत् समन्तात्।
अत्रान्तरे वधं श्रुत्वा सैदाः काश्मीरिकैर्ज्जिताः। आलिखानमुखास्तस्युर्दासमात्रावशेषिणः।
दिनान्निहत्य नगरे निवृत्तः स्वस्वभावतः। मेयानहमदः प्रापत्तावत्स्वशिविरान्तरं।

भाकरादीन् हतान् श्रुत्वा सैदाभीताश्चपि व्यधुः । द्विवान्निहत्य नगरे पुनर्युद्धाय निश्चयं ।
पश्चात् प्रतीर्य्य मार्गेशोहन्यात्रस्तद्रणेऽस्त्विह । इत्युक्ता ताजभट्टस्तान्निन्ये चाश्वविद्धचतां ।
अस्मिन्नवसरे पारादागतोयुक्तिपूर्व्वकं । सैदानादाय रावत्रः स्वालयन्तान्व्यसर्व्वयत् ।
कृत्वा वालनृपे मन्त्रं सैदाभ्रपटलोज्झितं । पौरानानन्दयामासुश्चान्द्रिणोमरुतोयथा ।

दुर्व्योधनैकशरणाः कृतशल्ययोगाये धर्मजातिविरताः कविदत्तकर्णाः ।
अन्यायवृत्तिधृतराष्ट्रकृतावशादास्ते कौरवाइव रणे न जयं लभन्ते ।

राजधानीं समानीय नवां पद्मपुरान्तरात् । खानगाहं नवीचक्रुर्दग्धे श्रीनगरान्तरे ।
भाभसैदमादामखानगाहानदीतटे । पूर्णस्तत्पुण्यसम्भारस्तदाकारइवोत्थितः ।
सर्व्वस्वमपहृत्याथ सैदास्ते सकुटुम्बकाः । मण्डलादालिखानाद्यानिरवास्यन्त मन्त्रिभिः ।
एकमत्येष्वमात्येषु काश्मीरेष्वविशङ्किताः । ययुः परशुरामाद्याः स्वदेशं प्राप्तसत्क्रियाः ।
शिशौ दत्वा राज्यं वयमिह भजामः सुखमिति व्यधुः स्वार्थं शिष्टागलितमतयः सैदपतयः ।
हतेष्वेवं तेषु प्रसभमभजन् मन्त्रिपदवीं परे तत्तज्जुष्टां विधिरिह वलीयान्न पुरुषः ।
मेयाहसनसामग्रीं नायामादिप्रमेयजां । ज्यङ्गालठक्कुरोऽगृह्णात्तत्पुत्रोलहरादिकं ।
गृहीत्वा वाञ्छितं राष्ट्रं स्वकं मार्गेशमागतः । मखूयादिप्रमेयांश्चाभजत् श्रीमान् ज्यहाङ्गिरः ।
माचाश्रमादिराष्ट्रेषु स्वान्यभूत्तैफडामरः । अन्याश्च ग्रामसामग्रीः सैदरेषु यथोचितां ।
परिहासपुराधीशोजोनराजानकोऽभवत् । सैन्याधिकारनिर्द्दैन्यस्वातन्त्र्योज्झितयन्त्रणः ।
एभ्राहिमश्च मार्गेशोद्वारपालाधिकारभाक् । चक्रे सैदादिमृत्यानां रक्षामक्षामपौरुषः ।
राज्ञोऽधिकारसामग्रीं भूमेर्द्रव्यावलीमिव । महाभूताइवामात्याः सम्भूय व्यदधुर्नवां ।
एकोमार्गपतेः पक्षठक्कुरोडामरोऽपरः । राजानकीयोदीप्तास्ते सर्व्वेश्रयइवाद्युतन् ।
आत्मैव निष्क्रियः साक्षिमात्रं वालनृपोऽभवत् । सर्व्वं प्रकृतिनिष्पन्नं राज्यतन्त्रमभूत्तदा ।
विभजन्तोभुवं सर्व्वां यथेच्छं स्वेषु केवलं । अलेखयन्नृपं पत्रे साङ्गीकाराक्षरवर्षीं ।
कष्टप्रदाः प्रजानिष्टादुष्टभृत्यविचेष्टिताः । यथेष्टं समचेष्टन्त दृष्टास्तेऽरिष्टचेष्टया ।
स्वपक्षरक्षणे दक्षाः परपक्षेष्टखण्डनाः । तार्किकाइव ते तस्थुर्व्वितण्डावादशिक्षिताः ।
मण्डलं तापयन्ति स्म सर्व्वे तीव्रकरात्मके । कल्पान्तकाले भुवनं द्वादशार्काइवोदिताः ।
आक्रन्दितोत्पातादाधिय भूरिभूकम्पसम्पदा । वेपमानोजनोजज्ञे प्रत्यासन्नमुपद्रवं ।
शिशौ नृपे व्यधुः पीडां विशङ्कितन्नियोगिनः । आमयाइव देहानां वार्द्धके शक्तिवर्ज्जिते ।

नृपतेर्यदि मत्सरात् सहाया रचयन्ति प्रयता मिथो विरोधं ।
कुपिताइव धातवः शरीरं क्षपयन्ति प्रसभं सहर्द्धि राज्यं ।

ये सर्व्वकण्टकास्तीक्ष्णाः परेषां छिद्रकारिणः । करभाणामिवैतेषां ते तेऽप्यासन्नतिप्रियाः ।
पैशुन्योपायनाद्वैरं नयद्भिः प्रतिवासरं । चाक्रिकैः कृतसञ्चारैर्वैरं प्रौढिमनीयत ।

उक्तं यन्नैव केनापि स्वबुद्ध्या परिकल्पितं । तेषां तद्भृत्यपैशुन्यं द्दर्यं काव्यमिवाभवत् ।
इत्थं मन्त्रिद्वन्द्वादर्थैर्यान्योन्यविम्बिता: । तद्भृत्यपैशुनाश्यामैर्मालिन्यमभजन्त ते ।
अथ मार्गपते रुचपदवीं प्राक् क्रमागतां । नामहन्तापरे रम्यां चक्रवाङ्कादवेन्दवीं ।
इहास्माभिर्हृता: सदीयश्रीया विद्रुतोऽप्ययं । नृपस्यास्य सभामध्येऽथ स्थापित: कुरुते मदं ।
इत्यादि प्रख्यत्वद्भृत्यवर्गान्मार्गपतिस्तत: । तादृश्यं राजकार्य्येषु विरक्त: सोऽभजद्रुषा । १७०
वह्नामखाननयनोत्पाटनेन निजं वपु: । विश्रामनाशियं पात्रं जोनराजानकोऽनयत् ।
प्रस्थाधिपत्यानौचित्यनिग्रहानुग्रहक्रमै: । ग्रहाणामिव तेषां स क्रूरोराङ्करिवाभवत् ।
कुन्दानकादिदेशस्थग्राम्याणामनियन्त्रण: । लोद्रभ्रम्यपहारेण तद्देशेशोऽपि सोऽभवत् ।
सैदद्वैधान्तरे तस्थै: सर्व्वत्र मुषितप्रज: । तत्पदार्थैर्गृहे पूर्णां कोष्ठागारावलीं व्यधात् ।
यत्कष्टेनार्जितं लोकैर्बलात्कारहृतं धृतं । स्वं ब्रह्मदेयमिति यत्परस्वं वेत्ति लुब्धधी: । १७५
सङ्गृह्य वाहिनी: सर्व्वास्तदीयाहृतजीवनै: । और्वाग्निरिव तृप्तोऽसौ न बभूव कदाचन ।
देवाग्निरर्थकाचेये ग्रामे वा नगरान्तरे । नाग्रकद्रवितुं कश्चिद्दलिना तेन पीडितं ।
यदि धर्म्मधिया कश्चित् प्रवृत्तोदीनरचणे । स तन्मन्त्रैरैराजसद्द्वाप खलीकृतिं ।
स्वप्रमेयेषु वास्तव्यांल्लुब्धान्निरपराधिन: । अन्येऽपि पीडयामासुर्गोगादव नियोगिन: ।
राजा शिशुर्गतवयावहवस्सहायाश्चानिमत्सरमताश्च मिथ: स्वतन्त्रा: ।
राज्याङ्गभङ्गमधमं नृपतेर्दिशन्तस्त्वचिरात् समुदयन्ति न के ह्यनर्था: । १८०
अत्रान्तरे वाह्यदेशे यात्रार्थं यौ विसर्ज्जितौ । रुद्रराजानकहृष्टकुराह्लादश्यापतु: पुरं ।
तद्दर्शनापदेशेन श्रुत्वा किमपि मन्त्रिणां । नगरे नागमद्दूतैर्मार्गेश: शङ्कितोभृशं ।
सपैकडामरेणाशु गत्वा स चकितोगृहे । वैदेशिकभटाज्ञानात् साशङ्क: सोऽनयन्निशां ।
शङ्कोपु सदनाशेषु प्रातस्तन्मतमास्थित: । अह्लादहृष्टकुरोजोनराजानकमथावधीत् ।
शस्त्रव्रणमुखोद्गच्छद्रक्तवर्षसिक्तमण्डपं । तद्गृहे तं शवं दृष्ट्वा न कोऽरोमाञ्चितोऽभवत् । १८५
इत्तकन्यमयं जन्यमवधीद्गृहमागतं । दिव्यं कृत्वापि साम्यस्तं धिग्भोगाभ्यासवासनां ।
मिथोऽसहिष्णवोभेदान् मन्त्रिण: प्रभविष्णव: । विनश्यन्त्यचिरेणैवं द्रोहिणेत्यपि केचन ।
केऽप्यूचु: स यथा सैदानवधीन्मद्रूपै: सह । वर्षेणैकेन तत्पापात्तदवस्थापादितोऽरिभि: ।
भृत्याश्चैव रच्यन्ते पोषितायै सहस्रश: । नैकोऽपि तेभ्यस्तस्यान्ते प्राणत्राणचमोऽभवत् ।
अर्जितं यद्यथैवाशु तत्तथैव हृतं परै: । न तिष्ठन्ति चिरं गेहेष्वन्यायोपार्जिता: श्रिय: । १९०
पापं पुण्यं बलं दाच्यं परं स्वं दूषणं स्तुतिं । नो वेत्ति राजपुरुष: कदाचिद्विधुरे विधि: ।
वैदेशिकभटै: किं नस्त्वाच्या सैन्याधिकारिता । इत्युक्तोऽपि स पुत्रेण नाग्रहीद्भाग्यवर्जित: ।
विपरीता मति: पुत्रे विश्वास: परसेवके । जायते गतभाग्यानां विनाशे प्रत्युपस्थिते ।
वैदेशिकभटान्मेने यत्सजातीनिवान्वहं । अवत्यान् शस्त्रिणो वीरान्मेने भोहन् परानिव ।

स सैफडामरोवीरवरस्याच्छौर्य्यशङ्कितः। भीतः समार्पिपच्छस्त्रं वीरवृत्तेर्न निश्चयः।
ज्यशालठक्कुरस्तावद्राजधान्यङ्गनस्थितः। बद्धोऽन्तः स्वैर्द्वारपालैर्गतिः क्व विधुरे विधौ।

भास्वानपि प्रतिदिनं मृदुतीव्रताभिमत्तां तां बिभर्त्ति गगनान्तरगोऽप्यवस्थां।

नित्याकुलस्य मनुजस्य बलप्रभावे को निश्चयो भवति तत्र विचित्रवृत्तौ।

मसोदडामराद्यास्ते छिन्नसेतुबन्धनाः। प्राप्य ते जालन्धरगडे विदधुः सैन्यमङ्गलं।
शृङ्गारसीर्फानिकटं ययुः शूरपुराध्वना। ठक्कुरास्तालिथाद्यास्ते ऽप्यसक्ताः स्वयमागताः।
कारागारान्तरं प्रापुः कस्य स्युः सम्पदः स्थिराः।
जेराकनामा तद्भृत्यः साहसी नगरान्तरात्। ठक्कुराङ्कादतुरगान् हृत्वा राजपुरीं ययौ।
इत्थं तत्सैन्यबधतोजोनराजबधोऽधिकः। पाददाहादिवासह्योगलरोगो यथावहः।

यावन्नरस्त्यजति कार्य्यकृदेकचिन्तां चिन्तान्तरं सृजति तावदमुष्य धाता।

याते क्रमिन्विशशिनः किल पूर्णिमात्वं संजायते द्युतिहरो ग्रहणप्रचारः।

निष्प्रतिद्वन्द्वि निश्चिन्तं मार्गेशोयावदाप सः। तावच्छुश्राव सम्प्राप्तं पुत्त्रमादमखानजं।
स यथाभ्यन्तरं प्राप्तोयथा राज्यं गृहीतवान्। बाल्यात्प्रभृति वृत्तान्तं तत्खानस्य ब्रवीम्यहं।
पितुः श्रीजैननृपतेः समये निर्गतोबहिः। श्रादमखानोविन्नाणः प्रपेदे मद्रमण्डलं।
भावीश्वरांशतैश्वर्य्यप्राप्तिसूचकपर्व्वणि। शिवरात्र्यन्तरे तस्य तत्रस्थस्य सुतोऽजनि।
जनकेऽस्य दिवं याते तुरुष्कसमरान्तरे। मातामहगृहे चन्द्रोवद्धधेऽम्बुनिधाविव।
काले तात्तारखानेन रचितः स गतः स्वयं। जालन्धरमहीपीठे निनाय कतिचित् समाः।
स्यदागिरोऽस्य मार्गेशः सैदभीत्या गतोबहिः। सोपधिं व्यस्तजलेखं धर्त्तुं पैतामहं पदं।
तात्तारखानसमये ततः स्थानमिमं पुनः। सुतोहस्सनखानोऽस्य कञ्चित्कालमपालयत्।
तुरुष्कान् वञ्चयित्वाथ विहितोत्साहसाहसः। खानोऽमितपरीवारः प्रापद्दूहणमण्डलं।
इतः काश्मीरिकाद्भूतामार्गेशेन विसर्जिताः। शृङ्गारसीहेनानीतस्तावद्राजपुरीम्प्रति।
ततोराजपुरीनाथोमार्गेशदेवनिष्ठितः। फताहखानमानिन्ये स्वान्तिकं स्वाश्रये च्छया।
जोनराजानकवधात् कश्मीरेभ्योविनिर्गतैः। डामरैर्धराजानठक्कुरदौलतादिभिः।
तत्रस्थैः शिश्रिये खानस्तद्मधुकरैरिव। प्रयां निन्ये यथा पूर्व्वं नृपेर्देवात्मजोऽभवत्।
थैनसम्बन्धबद्धोऽपि मार्गेशाधिकारभाक्। मसोदनायकः सोऽपि खानपक्षं समाश्रयत्।
दीनोयाम्यजनोदुष्टवङ्कनायकतार्दितः। तदागमनवार्त्तां तौ चते चारमिवाविदत्।
सापराधर्षिकन्यायप्रेष्यवद्दुष्टलेखकाः। चौराविटादरिद्राश्च तत्पुः खानवार्त्तया।
ग्रामे वा नगरे वापि त्यक्त्वा गृहकुटुम्बकं। मद्धाशो राजविभवे न कः प्राप तदन्तिकं।
तांस्तान् देशादिनिर्य्यातान् खानोऽग्रहीत् समृद्धिमान्। श्रेच्छलब्धप्रतिष्ठः स राज्ञः प्रत्यभियोगितां।
पौत्रश्रीजैननृपतर्योग्योऽयमिति सर्व्वतः। त्यक्त्वान्यान् सर्व्वराष्ट्रेभ्यस्तमेवाशिश्रियज्जनः।

तदार्त्ताश्रवणात्तुष्टास्तैराराधान्छन्नमास्थिताः। तत्कालमुत्प्लवन्ति स्म मत्स्या इव तडागगाः॥
न मम महती सेनैकोऽरिर्ब्बिलोऽस्यपरो महान् चितिरतिवलैरुद्धा भिन्नाः परेश्वरसेवकाः।
स वरतुरगोऽस्वस्थः कोशे न चाधिकृतो हितस्तदमिव घुणास्तास्ताश्चिन्तास्तुदन्ति विभुं न कं।
तुष्टोऽप्यहाङ्गिरस्तावत्तत्राप्या प्रेषितोपधिः। तावत्तन्मतगं ज्ञात्वा सचिन्तः समपद्यत।
अहितोन्मूलनोद्भूतदेशैकविभवाशितः। सुखेच्छुः प्रत्युत प्रापदुःखमुद्भूतविस्मयः।
प्रवर्द्धमानया नित्यं खानागमनवार्त्तया। वेपमानोऽभवल्लोकोवात्ययेव वनावलिः।
चाक्रिकाश्वतुरगः खानमन्त्रिणोऽथ जिगीषवः। इत्थं लेखाङ्कितं दूतं व्यसृजन् मार्गपं प्रति।
भोभोमार्गपते गर्व्वसर्व्वखर्व्वितविक्रमः। कश्मीरान्तः सुपर्व्वेव भवांश्चर्व्वितसद्यशाः।
सोऽयं खानस्त्वया नीतोलेखैस्तैरस्मद्देशतः। उपेक्ष्यते कुलस्वामी कथं मार्गपतेऽधुना।
स्वयं कृतं कथं कार्य्यं पश्चात्तापाय जायते। शिशौ राज्यं परित्याज्य भुज्यते मण्डलं परैः।
व्यवहारोचितः प्रौढ़ः सोऽयं किं तिष्ठते वहिः। अथवा पितृभागश्चेत् प्रयच्छस्यस्य मण्डलात्।
वहिरेवास्त्वयं राजाप्ययमस्त्वन्तरे स्थितः। अथ किं बहुनोक्तेन मान्योयदि न तेऽस्त्वयं।
रणोभयबलबधात्पापं ते परिणंस्यति। श्रुत्वेति लेखं मार्गेशः खानदूतोपदर्शितं।
प्रत्युत्तरमयं पत्रं तस्मै दत्वाब्रवीदिति। भोभोमण्डलगोप्तारो भोक्तारो नृपसम्पदां।
सर्व्वथा हितकर्त्तारः पुराणोक्तं विचार्य्यतां। कश्मीरा पार्व्वती तत्र राजा ज्ञेयः शिवांशजः।
नावज्ञेयः स दुष्टोऽपि विदुषा भूतिमिच्छता। देशेऽस्मिंस्तपसा राज्यं प्राप्यते न पराक्रमैः।
अन्ययादमखानाद्यैः किं नाप्तं स्वकर्मोचितं। अन्ययायेतत्र चिरादनौचित्यचितं फलं।
क्रमेण येनायातोऽसौ तं त्यक्त्वा तद्बलार्थिनः। सति राज्यस्य विज्ञाय प्रवेशोदीयते कथं।
न मयायं धृतो राज्ये वालोऽप्यन्याभिषेचितः। कः शक्नोत्यधुना हन्तुं मयि सन्निहिते स्थिते।
खानोऽयं सर्व्वथा पूज्योयद्यस्मन्मतमिच्छति। अग्रेसरारुणः सूर्य्यः पूज्यते ह्युदयोन्मुखः।
श्रियः कृतघ्नतावाप्ता न सुखाय चिरं नृणां। भोगा रोगाय देहानामपथ्याशनसम्भृताः।
किं चान्यत् सैदहस्तस्थोयद्राजा विमोचितः। तद्दत्तद्रुलगः सोऽयं प्राप्यते तद्वियेर्मतं।
इति लेखं विसृज्येत्यचपातात् क्रुधान्वितः। रथ्याधिकारं जग्राह मसोदस्य ज्यहाङ्गिरः।
वहामनायकादीनां दत्वा तन्मार्गरक्षणं। श्रृङ्गाररराजानकादीन् स्वामार्थं व्यसृजद्रुतं।
अथ खानं पुरस्कृत्य नायकोऽसुखदायकः। क्रुद्धः पथोपहरणात् प्रापच्छूरपुरान्तरं।
तद्भृत्याः खशडोम्बाद्यास्तद्दिष्टाः पदे पदे। देशे मडवराज्यान्तश्चक्रुरुत्पिञ्जमञ्जसा।
एकतो नृपतेः सेना कष्टा खानस्य चान्यतः। देशाद्वयीयमस्यैव लचिता सर्व्वभक्षिका।
प्राक् सैदविसरात् खानमिश्रैः सोऽधिकोऽभवत्। पाददाहादिवाम्बाशोगदरोगो व्ययावहः।
तस्कराक्रान्तपथिकोवलवन्निहताबलः। अराजकद्वयानीशो देशः कष्टां दशामगात्।
जग्मुर्दक्षिणपारादीन् प्रमेयांस्तद्दिगाश्रिताः। उद्दोला गोधनं सर्व्वं त्यक्त्वा स्वस्पतीर्भयात्।

खेरीं चाड्डवनं राढं भ्रष्टमग्निशिखेव सा। अतापयन्महोत्साद्या प्रविष्टा कटकद्वयी।
राजसैन्यं समालोच्य प्रसुप्तं चारचक्षुषा। एकदा जेरकाद्यास्ते स्वास्कन्दं शिविरे ददुः।
प्रजागरचरन्यासशस्त्राभ्यासविवर्ज्जिताः। सर्व्वे पशूपमास्त्रासाद्दिदधुः शिविरान्तरात्।
सेनापतेस्त्रिंजाः केऽपि युद्धोद्दा भेदिताः परैः। चक्रुस्तत्कटकं त्यक्त्वा द्रोहं वैरिसमाश्रयात्। ४५५
राज्यं नश्यति छ्यति प्रतिदिनं वाह्याखसालीनका लोकः क्लिश्यति लुण्ठिदारकरणैश्चौरः स्वकं पश्यति।
सेना भ्रश्यति धीरवीरसहितान्यन्वियति स्वं रिपुः काश्मीरप्रभविष्णुषु प्रभवति दैवात् स्वभेदो यदा।
द्रोग्धंस्तानवलोक्यैव स्वस्तां ज्ञात्वा स्ववाहिनीं। सेनानीश्चकितः सैन्यात्पलायनपरोऽभवत्।
हतेऽथ विद्रुते तस्मिन् पश्चादेत्य महाभटैः। सर्व्वस्वाप्त्या जहर्षाय खानस्तत्प्रथमं जयात्।
तुरुष्कदेशाद्युद्धा खानः प्राप्तो निरर्गलः। सुभागसोदरस्तत्पश्चात् केनापि प्रचलन् हतः।
अथ मल्लशिलास्थाने तुष्टः खानो जयोन्मदः। स्वसैन्यसंग्रहं कुर्व्वन् जिगीषुः शिविरं व्यधात्। ४६०
विकरालान् भटान् त्यक्त्वा करालविषयावनौ। मुमुचुर्निष्करालम्भान् वास्तव्यांस्तस्य मन्त्रिणः।
अत्रान्तरे मार्गपतिर्गृहीत्वा बालभूपतिं। तज्जयाय बलोद्युक्तो निर्य्ययौ नगरान्तरात्।
प्राक् खेदकदनाभ्यस्तन्यस्तवस्तुविलुण्ठनाः। पुराद्दूरतमा भीताः पौरा ग्रामेषु न्यपक्षिपन्।
निष्कृष्टवस्तुभावा सा मुषितेव वराङ्गना। अभवद्राजरहिता नगरी न गरीयसी।
वैदेशिकटकाटोपकोपोत्कररटद्भटः। शुसिकोड्डारभूवाटे पाटवाच्छिविरं व्यधात्। ४६५
संस्थाप्य तत्र भूपालं त्रिधा कृत्वा स्ववाहिनीं। कल्याणपुरगं श्रुत्वा खानं योद्धुं विनिर्ययौ।
द्राभग्रामान्तसीमान्ते समासन्नोऽधिकार्त्तधीः। तस्थौ खानान्तिकं प्राप्य सखानमरुगान्तरे।
क्रमराज्यस्फुरत्प्राज्यचक्रवाटादिदुःसहं। वैदूर्य्यभट्टः पाश्चात्यां जग्राह गिरिपद्धतीं।
सपिर्वजप्रतीहारगङ्गराजसुतादयः। चतुरङ्गोपमां लीलां चण्डं चक्रुः पुरोगताः।
अथैकतः स्वकाश्मीरवैदेशिकबलान्विताः। मसोदनायकसुता योद्धुं व्यूहात्समाययुः। ४७०
फलकासिस्फुरत्पक्षा नदन्तोऽन्तिकमागताः। चेरुः पङ्क्त्या भटास्तत्र हंसा इव नभोन्तरे।
यावत्प्रहर्त्तोयोद्धुन्तांस्तावद्दीप्त्यायमागतान्। अह्लादठक्कुरव्यूहो निरोद्धः समपद्यत।
चेताङ्किकाभुजः केऽपि गर्जन्तो जलदा इव। स्फुरच्छस्त्रतडिन्मालाः सोत्फाला निर्ययुर्मृधे।
विषमा पङ्कसङ्कीर्णा शाद्वदुर्मार्गदूषिता। तेषामापततां साध्या वसनेव निजाजिभूः।
वैदेशिकभटान् दृष्ट्वा नटत्खेटकपोटकान्। चटका इव जग्मुस्ते विदूरं पाटवोज्झिताः। ४७५
न संस्तम्भयितुं सेनामशकत्तां पलायिनीं। अह्लादठक्कुरोद्दीर्णां सेतुभग्नां नदीमिव।
अहमहमिकायातजातघातप्रणार्द्दिताः। प्राणत्यागेन ते केऽपि चक्रुर्भर्त्तननिष्कृतिं।
स्रवच्छोणितसिक्ताङ्गाः शालिचित्रगताः शवाः। यागोपहारपश्रुतां ययुः कार्पिकभूमिषु।
सेना रामस्य वात्येव सा नैर्ऋतदिगागता। तत्तलोकचयं चक्रे वेगभग्नभटद्रुमा।
केऽपि काश्मीरिकास्तत्र वैदेशिकभटानले। शस्त्रज्वालासमोदीप्ते जुहुवुः श्रीफलं वपुः। ४८०

किं नामोदीरणैस्तेषां दृष्ट्वा व्यूहं समागतं । तिर्यग्भिरिव पातं खं भीत्या चैर्य्यैः पलायितुं ।
प्रमेयभाजोमुख्याये दृष्टा राजसभान्तरे । अदृष्टपूर्व्वं संत्रासं तेऽप्यशास्त्रवदाययुः ।
वीरवृत्त्या त्यजन् प्राणान् केवलं श्लाघ्यतामगात् ।
तस्य त्रिचतुरास्यकप्राणा अनुचरा रणे । दिवं यियासोर्भोगार्थं बभूवुस्ते पुरःसराः ।
हतावशिष्टान् विद्राव्य ते खानस्य महाभटाः । निवृत्ता मार्गपत्यग्रे खीयभ्रान्त्या समाययुः ।
मसोदखानः क्षत्येवं वदन्तो विजयोद्यताः । वीराहस्सनमीराद्याज्ञाता मार्गपतेर्भटैः । ४८५
पञ्चशस्तस्य सम्बन्धिसत्यास्ते नौरुजादयः । संगारभट्टाद्यान्ये च हता मार्गपतेः पुरः ।
विमुखोऽभूत् कियत्कालं यः स सामुख्यमाययौ । बालभूभृत्प्रभावेण कश्मीरकटके विधिः ।
मार्गेशस्याथवा स्तुत्यं धैर्य्यं तस्यात्र संयुगे । सन्नद्धः सबलस्तस्थौ जयस्तम्भ इवाचलः ।
पैदकमात्र पश्चाद्वेदगमिष्यस्य तत्स्थलात् । काश्मीरकटकस्यास्य नावशिष्येत किञ्चन ।
भिन्नप्रकृतिसन्धानकौशलं श्रीजयहाद्विरे । भिषजीव तदा दृष्टं भैषज्यं सान्निपातिके । ४९०

प्रागल्भ्यमप्रतिहतं प्रतिभानमोजस्तत्प्रयोगचतुरत्वमसंभ्रमश्च ।
एतानि यस्य समयेऽप्यतिसङ्कटे स्युस्तूर्णं तं प्रति समेति रणे जयश्रीः ।

खानोऽमल्करमासोऽत्र मिथ्याद्विष्यात्र संयुगे । रणात् प्रचालितान् दूरं युक्त्या सर्व्वानुपानयत् ।
मार्गेशमधुसान्निध्ये तद्रणोपवनान्तरे । ते वीरभ्रमरायेरुः स्फुरत्पत्त्रबोद्धताः ।
अथ खानस्य शिविरं गक्काधाजयदुर्मदाः । नीतावशिष्टां सामग्रीं हत्वा भूरीनलुण्ठयन् ।
एभराहिममार्गेशः सभृत्यः समराग्रगः । मसोदनायकमुखान् विमुखांस्तर्जनैर्व्यधात् । ४९५
अन्ये शृङ्गारसीहाद्याद्दृष्ट्वा तत्सैन्यमद्भुतं । भेडावनपथात्तूर्णं विद्रुताः स्वां भुवं ययुः ।
सर्व्वं राजपुरीसैन्यं रुद्धैन्यं वेष्टितं भटैः । दत्वाभयं ररक्षाजौ गक्कोगणपतिर्यथा ।
त्यक्त्वा सन्नाहसामग्रीं केऽप्येते विद्रुताद्रुतं । मुषितः स खशैर्ग्राम्यैः पृष्ठलग्नाः प्रमान्तयः ।
वृक्षानपि वने जघुररयोऽनु लगन्त्यमी । वैदेशिकैर्हृतं यत्तद्ग्रामेषु जनपीडया ।
काश्मीरिकेभ्योमुषिता निक्षेपमिव ते दधुः ।
शीतज्वरार्दिताः केचित् केचिच्छ्रान्ताबुभुक्षया । वैदेशिकाश्च काश्मीराः शतसंख्याः क्षयं ययुः । ५००

संरूढे कमपि निपातयत्यकाण्डे पाताद्यं नयति च कञ्चन सम्रुद्धिं ।
सङ्कल्पाविषयविचित्रकाकतालीवाप्यौघस्तरमिव पूरयं विधाता ।

यादृक् सुशासनः खानस्तादृशस्तस्य चेद्भटाः । भवेयुः किं न जायेत किन्तु धर्म्मानुगो जयः ।
इत्थं फतहखानेऽस्मिन् प्राप्ते कश्मीरमण्डलं । एकषष्टितमे वर्षे पुरद्वश्रावणान्तरे ।
कटकद्वयसंयोगे कल्याणपुरसन्निधौ । अत्रत्यानाञ्च वाह्यानां तत्तल्लोकक्षयोऽभवत् ॥ युगलकं ॥
मेत्रवंशनिसंयोगं मिलापं शनिजीवयोः । भौमाब्दे तत्क्षये हेतुं देशे दैवविदोविदुः । ५०५
श्रीजैननृपतेराज्ये षड्दर्शनरताः प्रजाः । दृष्टाः स्वधर्म्मनिरतानिरातङ्कानिरीतयः ।

तस्मिन् स्वर्गं गते राज्ञि नष्टाचारेऽत्र मण्डले। प्रजापचारालोकानां क्षयोऽभूदिति मे मतं।
तथाहि वणिजः केचित् स्वाचारं हिन्दुकोचितं। त्यक्त्वा पुरान्तरे चक्रुर्हेला गोमांसभक्षणं।
येनैव पितरो याता येन याताः पितामहाः। तद्धर्मेनेऽत्र तत्पुत्रास्तपन्ते मौसुलप्रियाः।
प्रत्यब्दं तिथिकार्याणि पुराणोक्तानि कानिचित्। विस्मृतानि दुराचाराः कथं न स्युर्दुरापदः। ५१०
मण्डलेऽस्मिन् दुराचारचातुर्वर्ण्यविराजिते। प्रसह्य पतिताचारविपर्यासादितीरितं।
राजाक्रान्तः परैर्मिथ्यावार्त्तयेति विस्मितः। मार्गेशस्ताजभट्टादीन् हत्वा स्वशिबिरं ययौ।
पश्चाच्चेदलगिष्यत् स नष्टांस्तान् बलवर्जितान्। न किञ्चिदवशिष्येत खानस्य चलतः पथि।
मार्गानभिज्ञो मार्गेशः सर्व्वेऽप्युभयचेतनाः। दायाददुःस्थितिं लोके काङ्क्षन्तः स्वार्थलिप्सया।
प्रेरयंस्तद्रणाद्गन्तुं मार्गेशं चाप्यदीदरन्।
सनृप सैन्यमुत्थाप्य ततो जिष्णुर्ज्यहाङ्गिरः। ज्यमालमहगास्थानं ययौ स विजयोर्जितः। ५१५
किमेते मिलिताः खानमिति तेन विसर्जिताः। ददाह ताजभट्टः स ग्रामान् माङ्क्ष्यमादगान्।
तत्तद्दग्धगृहोच्छ्वासधूमजालाकुलं नभः। धनकालोद्भवोद्योतडिद्भ्रोपमां दधौ।
कृतं यदाद्यदेशेषु काश्मीरैर्दिग्जयक्षणे। दाहलुण्ठादिकं तद्दृष्टमत्रैव मण्डले।
अकिञ्चनान् जनानस्मान् विश्वस्थे समुपागतान्। अचौरजातान् दृष्ट्वा तान् न कोऽप्याच्छादनं ददौ।
तत्रत्यास्तद्धृतं कुप्यं रूप्यं धेनूः पशूनपि। दृष्ट्वाच्छायाकुलाश्चक्रुराक्रन्दमुखरा दिशः। ५२०
सर्व्वस्वहरणं यद्वत् कृतमस्मास्वहेतुकं। युष्मास्वपि तथा भूयादचिरेण विरोधिभिः।
तत्पापफलमेतेषु त्रिषु तन्मरणक्षणं। कृताहसाहराज्याप्तौ दृष्टं लोकैर्व्विगर्हितं।
उत्पिञ्जोत्पादनाद्देशे शस्त्रनिन्त्यादिदूषणं। प्रजापापादसन्धित्सुर्मार्गेशः स न्यवर्त्तत।
सनृपो नगरं प्राप्तो विधाय विजयोत्सवं। उच्चावचान् खानपक्षगतान् सर्व्वानदण्डयत्।
एकं खानाग्रगं ज्ञात्वा घिष्टं तस्य कुटुम्बकं। अबाधत न को देहे दुष्टरोगद्रवोल्वणः। ५२५
कदाचित् सुभीतो जनयति सुखं सार्व्वजनिकं कदाचिद्वक्रोक्तः सृजति जनतामीतिचकितां।
फलव्योघं घोषं भविषु परिहृत्या विदधतो ग्रहस्येवाकाशे गतिरिह विचित्रा बत विधेः।
कश्चित्कालं दरत्रस्तः खानस्त्राणविवर्जितः। ययावकिञ्चित्करतामवग्रहद्रवाम्बुदः।
अत्रान्तरे स्थितः खानः सभैरवगलान्तरे। अचिन्तयत् पुनर्देशप्रवेशं नायकोर्जितः।
मासद्वयमतिक्रम्य काश्मीराभिमुखस्ततः। आययौ स पुनः खानः सत्राणउद्भटैर्भटैः। ५३०
तस्मिन् शूरपुरं प्राप्ते सनृपोऽथ ज्यहाङ्गिरः। निर्ययौ नगरात्तूर्णं सम्पूर्णः सैन्यसम्पदा।
प्राप्यत् स गुषिकास्थाने निषण्णः शिविरान्तरात्। गक्कराजसुतं राजौ सोऽस्त्रणोदिद्रुतं द्रुतं।
आरोहणक्षणे तस्य तुरङ्गस्यासमपद्दीम्। क्षणं स शत्रुनेत्रोऽपि नातिष्ठत्सिद्धुरः क्रुधा।
गृहीतभूरिवित्तोऽपि यथैव द्रोहितामगात्। कोऽन्यस्तिष्ठति तथैव पक्षः प्रत्यागतोऽभवत्।
स्वदेशे निर्गतो भूयो मार्गेशः शिविरान्तरात्। उपाधांयिनयास्त्रके खानज सत्रभेदमं। ५३५

अत्रान्तरे शूरपुराच्छिन्दकाद्यामडामराः। प्रविश्य नगरं रात्रौ बन्धनस्थानमोचयन्।
ते सर्वे बन्धनान्मृत्युद्वारादिव विनिर्गताः। सैफडामरमुख्यास्ते सम्प्रापुर्विजयेश्वरं।
स सैफडामरः पूर्वं बन्धने स्वप्नमैक्षत। केनाप्येतत्पदद्वन्द्वं छिन्नं शस्त्रेण तच्छिखि।
वीरस्य बन्धनं यस्य स्फूर्जत्पद्मस्य रक्षणं। सोऽस्मरः पतितं मेने वक्रेर्वस्त्रावगूहनं।
तथापि रक्षणं वक्रेरिव वस्त्रावगूहनं। जयापीडपुराद्दुर्गाद्बन्धनं नगरे कथं। १४०
इत्यपायोऽप्युपायस्य जातो मार्गपतेर्यतः। एभ्रादिभिः समार्गेयस्तावत्पश्चाद्विनिर्गतः।
शंपनायकमुख्यानां बहूनां कदनं व्यधात्। ठक्कुराद्यद्दजेराकप्रतीहारान्वयादयः।
इत्थं तत्साहसं चक्रुर्लक्षितकोशपद्मयः।

विपदि समनुभूय कोऽपि कष्टं भवति पदं नृपसम्पदां नितान्तं।

कनकमनलपातघातमाप्य शिरसि विभाति नृपस्य मौलिरूपं।

कारापञ्जरनिर्मुक्तः पक्षीवाक्षतपक्षतिः। पुनर्जातमिवात्मानममन्यत स डामरः।
पूर्वं जयपुरे दुर्गे योऽभूद्बद्धः सहोदरः। काराप्राकारमुल्लङ्घ्य रज्जुनैकोऽपि निर्गतः। १४५
रुद्धः सुतः पुनर्बद्धो नगरे बन्धनालये। निश्चिन्तितं बधस्तत्र दिष्टैर्दिविदिनान्तरे।
एवं कष्टात्ततो मुक्तः प्राप्तः खानान्तिकं क्रमात्। प्रधानपुरुषाख्यातिं प्राप्तप्रकृतिमध्यगः।
स सैफडामरस्तत्र यथासद्ममतस्थितः॥ कुलकं॥
रामो रावणवञ्चितो यदि स्वहान्नैवागमिष्यद्वनं सुग्रीवः स च वालिना कृतपदो नैव घटिष्यत्कृपा।
लङ्कां प्राप्य रिपून्निहत्य समरे जेताभविष्यत्कथं संयोगं सुखदुःखयोः प्रतनुते धातैव भूत्यै दयोः।
राज्यार्थी विच्युतो देशात् खानो वीराप्तिलम्पटः। डामरो मार्गप. क्रुद्धः सर्वनाशात्पदच्युतः।
एवमन्योन्यसापेक्षं नाभविष्यत्स्वयं यदि। प्रविश्य देशे राज्याप्तिः कथमस्य भविष्यति। १५०

राजा विभाति बहुवीरसमाश्रयेण वीरा भजन्ति च तदाश्रयणेन शोभां।

अन्योन्यसङ्गतिरसङ्गुरभङ्गिरेषां वाराङ्गनाकनकभूषणवद्विभाति।

तेन प्राप्तेन सा खानसभा तत्र व्यराजत। मुक्तालतेवाङ्गनाङ्गे नायकेन शुभात्मना।
अत्रान्तरे मार्गपतिः शङ्कितस्तत्समागमात्। सन्धित्सुः शिवरात्राद्युन्मुखे खानं व्यसर्जयत्।
रथराजानकोरिगडामरः केशवो बुधः। राजाग्रमेत्य सन्ध्यर्थं निन्ये राजपुरीपतिं।
तावद्रुदायरावचमुखाद्राज्यास्य मार्गपः। शृङ्गारसीहं तं भेदमनयद्रत्नितार्पणैः। १५५
नीत्वा मार्गपतेः पुत्रं सन्धित्सुः स बलद्वये। न्यशारयत्क्षणे क्षोभं यावद्राजपुरीपतिः।
तावन्मार्गेशपुत्रन्तं रोद्धुमन्यैर्विनिश्चितं। नामन्यत स यत्नेन सामन्तामर्षिणोऽभरन्।

यावत् प्रजासु कृतपासु विधिर्विरुद्धो दायादटुष्टितिरुपाय...याति।

देहे दुराधिनिहते भिषजां प्रयुक्त्या रोगाः कथं प्रविशन्ति कृताधिकाराः।

खानान्तरङ्गैराक्षिप्ते भिन्ने राजपुरीपतौ। अकस्मादुदभूत्क्षोभ. सर्वसैन्यभयावहः।

गक्कशृङ्गारसोद्दाद्यास्तस्ता राजपुरीं ययुः । खानोऽपि सबलोभीतोयवैा शम्बयथागतं । १४०
केचिज्जैराकसेराद्याः प्रापुर्मार्गेशसन्निधैा । ज्यस्मालटक्कुरप्रेम्णा कृतमाध्यस्थ्यमन्विदः ।
एवं चोभेण सा सेना खानस्याङ्गतरङ्गिता । यथैा सहस्रधा दीर्णा सेतुभङ्गादिवापगा ।
अथ मार्गपतिः श्रुत्वा तद्वृत्तान्तमनुद्रुतः । युयुत्सया ससैन्यस्स प्रापच्छूरपुरान्तरं ।
अत्र दूतमुखाच्छ्रुत्वा क्रमराज्यमुपद्रवं । शाहिभङ्गबलप्राप्त्या चिन्ता द्वैगुण्यमादधे ।
निवृत्य स ततोराज्ञः प्राप्तः स्वय्यपुरान्तरं । बबन्ध नौरुजे खानं युक्त्या यत्साधु तद्व्यधात् । १४५
स हि तद्दिवसे प्राप्तेऽमुष्मात् श्रीनगरं विटैः । किन्तु तत्काङ्क्षितं क्रूरं न सिद्धं पौरपुण्यतः ।
सोऽपेत्य मार्गपं तत्र ढौकितं क्रमराज्यतः । पदार्थराशैा दत्ताग्निं तद्रुषा भस्मसाद्व्यधात् ।
अन्यायतः प्रतिदिनं समुपार्ज्य वित्तं यद्दानभोगरहितं निहितं गुहान्तः ।
तत् सम्प्रयाति कृपणेषु कृतानुतापं भूपालसादनलसाद्दरिद् सुषाच्च ।
ततस्तत्सहित. प्राप्ता नगरं स ज्यहाङ्गिरः । जयेन तावन्मात्रेण नगरे स व्यजृम्भत ।
सैदान्निष्काशितान् देशात् स्वपुत्तवधकानपि । लेखैरानाययामास सोपयोग्यतया स तान् । १५०
तदन्तरे जन्मवाटे वसन् खानोबलोर्ज्जितः । मृगानिव हरिस्तत्र विदधे दुर्दशान् खशान् ।
सप्तविंशतिसङ्ख्यान् स काश्मीरविषयान् यथा । तावतीस्सिन्धुरीस्तत्र व्यधाद्दुस्थः पराक्रमैः ।
सार्द्धं मल्हानहंसैस्तत् कटकः सुभटोत्कटः । मद्रमण्डलमुल्लुण्ठ्य तुरुष्कांश्चकितान् व्यधात् ।
स मद्रमण्डलं जित्वा दत्वा राजपुरीपतेः । जिष्णुश्चैत्रे पुनः प्राप तद्युतो नायकालयं ।
गृहं दैवतवत् प्राप्तं खानं तमानयद्गुणैः । ससोदनायकोऽमुष्मिन्नाभवद्भक्तिखण्डितः । १५५
सागरस्त्यजति चेन्निजां स्थितिं पश्चिमोदयमुपैति चेद्रविः ।
चत्रियः शरणमागतेऽर्थिनि प्रायशश्चलति न स्वधर्मतः ।
स सैन्यसङ्ग्रहं कृत्वा कृयित्तकटकान्वितः । तस्थैा खानोगिरिश्रृङ्गे वैरिभङ्गविधित्सया ।
रोगैरिव भटैर्ध्वस्तसमस्तगृहवस्तुभिः । वास्तव्यानां स्थितिर्दुस्था गेहे देहे यथाभवत् ।
अत्रान्तरे बन्धनान्तर्गतं पृष्टकवाटितं । भीतोव्यापादयामास जेराकं नगरेऽध्मपः ।
तच्छ्रुत्वा राजलोकस्य सर्व्वएव विरागभाक् । आत्मासघातकत्वेन दुरुक्तिमुखरोऽभवत् । १६०
ज्यैष्ठे मासि श्रुतानिष्टो मार्गेशः कष्टनिष्ठितः । अतिष्ठत् सनृपो मल्लशिलापृष्ठेऽतिनिष्ठुरः ।
द्रङ्गमार्गनिरोधेन सर्व्वोऽप्युभयवेतनः । जनोवत्सदयं गन्तु निराशः समपद्यत ।
विंशा निर्वेवर्ण भोज्यमश्नतामत्र मण्डले । मोगिशव्यञ्जनं नाम श्रुतं हास्यावहं न कैः ।
सार्द्धं पत्ने पैत्यवस्य कयोऽभून्नगरान्तरे । दीनारपञ्चविंशत्या दुरापं नगरैरपि ।
द्वापष्टितमवर्षेऽपि कश्मीरागमनोत्सुकं । खानं श्रुत्वा मार्गपतिर्नीतिकौटिल्यमादधे । १६५
दोहिवं हाज्यखानस्य खानेसकन्धराभिधं । कम्पनाधिपतिं कृत्वा स्वामार्थं स व्यसर्जयत् ।
सहोदनायकीयं च राष्ट्रं दत्वा स्वगश्रये । यश्वराजामकश्चापि ससैन्यं सत्यमुच्यत ।

समं देशसुखेनाथ प्रालेये तनुतां गते । स्वसैन्यसहितः खानोराजपुर्य्याः समाययौ ।
प्राप्तं खानं समाकर्ण्य तं भैरवगलान्तरे । मार्गं शूरपुरे रोद्धुं मार्गेशः सनृपो ययौ ।
प्रवेशरोधः खानस्य तदूर्ध्वगलवर्त्तितः । राजदेहे स्मृतस्येव देशेऽभूच्चक्रमीलितः ।
पशुपादिष्टमार्गेण परहस्त्यावणान्तरे । ततोऽगाद्गिरिमुल्लङ्घ्य खानः काचगलान्तरात् ।
ताजभट्टादिसैन्यौघो गुसिकोड्डारभूतले । क्षुब्धं वायुरिवागत्य चक्रे खानबलार्णवं ।
ध्वनिदुन्दुभिनादेन तर्जयन् परितोजनान् । खानः सकटकोभीत्या नगरं व्याकुलं कृतं ।
उड्डीयेवागतं श्रुत्वा साश्चर्य्यो मार्गपस्ततः । ससैन्यः सनृपस्तूर्णं तद्युद्धाय समाययौ ।
उड्डामरोडामरस्य शौर्य्यश्रीगरुडामरः । रणे डामरयागेऽन्तर्भावुच्छ्रुमरुद्रवत् ।
केचित् सैदभटास्तत्र युध्यन्तः सुभटैः सह । अनिवर्त्तितया याता दिव्यस्त्रीसुखभागितां ।
श्वभ्रपातरणाघातचतानां तत्समागमे । शवानां राशयस्तत्र पतिताः समरान्तरे ।
न सैदयुद्धे नो खानागमप्रथमसङ्गरे । भटक्षयोऽभवद्यादृग्गुसिकोड्डारसङ्गरे ।
प्रमेयभाजोऽप्यासन् ये रणे मुख्यानिजोचितं । शौर्य्यं नादर्शयन् केचित् साक्षिभूता इव स्थिताः ।
पातनेनेव वृक्षस्य पक्षिशावा इव च्युताः । गताहताः क्षताश्चासन् यत्र तत्र शवव्रजाः ।
पूर्व्वापकारी यो यस्य ग्रामे वा नगरेऽभवत् । स तस्य बाधं कृतवान् दुर्ब्बलस्य बली तदा ।
ससोदनायकस्तत्र सायका युधवर्षणे । रुद्धाश्वो विजहौ प्राणान् भावि केन विलङ्घ्यते ।
कृत्वान्यान् युद्धगान् यत्र मार्गेशोऽगात् स्वरक्षया । श्रीसैफडामरो वीरयुतस्तत्रैव सोऽभवत् ।
योगेवेथः स चावाप्ददति तुष्टोभटाहतः । प्रथमं प्राहरत्तस्य मूर्ध्नि श्रीसैफडामरः ।
अलं शिरो हैधरस्य स च क्रूरा इव ग्रहाः । मुखे भुजे कपाले च प्रन्तस्तं विवधं व्यधुः ।
अथ मार्गपतेः स्वर्णवर्णमङ्गलमालिकां । सचामरां डामरेशो जयश्रियमिवासदत् ।
उपेक्षितं तं तत्रस्थैर्निजैराश्वस्तमानसं । ररक्ष केवलं शीतोजात्यश्वस्समराङ्गनन् ।
विहितारिक्षप्रसराः सचिवाः समसैकपार्श्वगताः । यत्र सुशस्त्रप्रचितामञ्जति नौकेव राजश्रीः ।
वैदेशिकभटैर्द्रोहे विहिते समरागमे । तावत्ते कत्यवाडाद्या निन्युः खानं यथागतं ।
खानोराजभटैर्व्व्यद्धोरणे मिथ्येति वार्त्तया । स सैफफडामरो युद्धात् स्वस्तवैर्य्योन्यवर्त्तत ।
तत्तद्वराश्वसामर्थ्यो रक्षन् शूरपुराध्वना । समरोड्डामरः सैफडामरः खानमासदत् ।
इत्थं तृतीयवारं स प्रविष्टोमण्डलान्तरात् । वधं कृत्वा विनिर्गत्य खानः पर्णोत्समागतः ।
अधर्म्मबहुलः कालः सर्व्वे द्रोहपरायणाः । राजा शिशुतरश्चायं स्वतन्त्रं मन्त्रिमण्डलं ।
अविधेयानिजाश्चामी खानपक्षप्रतीक्षिणः । पौरानिरनुरागाश्च निष्कोशं नृपमन्दिरं ।
सत्ता नाम न वृद्धस्य सर्व्वसामर्थ्यवर्जिता । इति सञ्चिन्तयन् शस्त्राघातजातव्ययाकुलः ।
मासौ द्वौ गमयामास मार्गेशोऽपि स्ववेश्मनि ।

दृष्ट्वा महार्घमणिमौक्तिकविद्रुमौघान् रत्नाकरं श्रयतु सोऽपि सुलाभलोभात् ।

यस्तान् महाभयकरान्मकरांस्तदीयान् वीर्य्येण वारयितुमुज्झितभीः समर्थः ।
अत्रान्तरे पुनः खानस्फटिकागारपर्व्वतात् । द्वितीयाप्तैर्भटैः सार्द्धं लब्धत्राणः समाययौ ।
तस्मिन्नभ्यन्तरे प्राप्ते मुदितैरिव पर्व्वतैः । तदग्रः पतितं दध्रे तुषारं स्मितमम्बरं ।
ग्रामान् प्रचलितान् दृष्ट्वा तद्वार्त्ताचकितस्ततः । मार्गेशोवाञ्छितं त्यक्त्वा सबलोयोद्धुमभ्यगात् ।
तावन्मितपरीवारो बहुरूपान्तराद्गतः । प्रापद्दामोदरोड्डारभूमिं डामरसंयुतः । १७०
सनृपोमार्गपः पश्चात्तनवायुरिवोर्जितः । सैन्यं न्यवेशयत्तत्र सातदैवतसन्निधौ ।
सव्यूहोजातयुद्धेहोलिशान्ते शैफडामरः । बभञ्ज मार्गपानीकं दामोदरद्वोत्थितः ।
चित्रं हैदरशाहस्य यन्न सिद्धं त्रिधागमैः । अहो हीनबलस्यापि सिद्धमस्य विधेर्व्वशात् ।
किमन्यदल्पसैन्योऽपि खानः कश्मीरकुञ्जरान् । हतविद्रुतविध्वस्तयूथान् सिंहइव व्यधात् ।
प्राग्वत्सोऽनिष्टमाशङ्क्य मार्गपः शैफडामरात् । अन्येषां वीक्ष्य ताटस्थ्यं प्रपेदे नगरान्तरं । १७५
छिन्नेषु सेतुबन्धेषु शाश्वेददैधनन्तदा । पारावारगताः पौरा दैराज्याकुलतां दधुः ।
पित्र्यजप्रतिहाराद्याः प्राप्तामडवराज्यतः । नृपपक्षं परित्यज्य खानपक्षं समाश्रयन् ।
स्वभेदजर्जरं ज्ञात्वा सैन्यं दिवा निशोऽनयत् । सेदवत् स्कन्दभवने किंकर्त्तव्यतयाकुलः ।
एकदा सर्व्वसैन्येशं कृत्वा सेयानहम्मदः । नोसराजानकयुतो द्रोहं स्वामिनि तद्व्यधात् ।
यथा चित्तं तथा कायो यस्य स्यात्साहसक्षमः । तस्य तु निरपेक्षस्य कर्त्तव्यं किं न सिध्यति । १८०
भागिनेयं नृपपदेऽप्युपेक्ष्य स्वार्थलुब्धधीः । द्रोग्धाभूद्यस्तु तेनाभूत् सर्व्वनाशस्य कारणं
नष्टसैन्यः सदैन्योऽथ मार्गेशः शरणं भयात् । ज्यष्ठालठक्कुरं प्रायात् खर्व्वाश्रमस्थितं हि
यैश्च स विरुद्धानामकरोच्छासनादिकं । तादृशीं स दशां प्रापद्धिक् चलाराजसम्पदः
सततपहानुगुणधारितसत्त्वारवर्णोऽभ्रुकोपचित्रविशविशेषभूपः ।
वद्धामभूपइव योऽभवदष्टभोगप्राप्तादशामितरवत्स धिगस्तु लक्ष्मीं ।
क्व नृपः क्व मदीयन्तत् सर्व्वस्वं क्व परिच्छदः । नास्मरत्तद्दिने किञ्चित् प्राप्तोमुनिगुहान्तरं । १८५
राजदारापहारोत्थपापभारादिवार्दितः । तद्भ्राता नाशकद्गन्तुं नावं स्त्रीसहितोऽविशत् ।
अन्ये सैन्याः सदैन्या गिरिविलविगलद्दासराधूसराभास्तिष्ठन्तादिष्टरिष्टाहतघनविलसदृष्टिनिर्नष्टचित्ताः ।
दिष्टैर्दुष्टैर्गरिष्ठैः परिचलवसनाः पृष्ठलग्नैर्निकृष्टाः कारागारान्तराले पशव इव सत्यन्ते निबद्धाविरुद्धाः ।
गर्ज्जन्तो मुमुचुः परे जनपदान् दुष्टाः स्वशादस्यवस्त्रक्लीत्या परिहृत्य सर्व्वजनवन्नमानराज्ञस्त्रियः ।
मार्गेष्वप्यनाहतादर्शवले पूर्व्वापकारस्मृतेर्योऽभूद्राज्यविपर्य्ययोऽतिभयदः कल्पान्तकालोपमः ।
सर्व्वस्वालुण्ठने तस्मिन् धनिनो दुःसहे पुरे । आसन् दरिद्राश्च तथा स्वाभाव्यादारिद्र्यभागिनः ।
ये भृङ्गाः सागरदलपुष्पफलाभिरामानश्नस्तरङ्गतरलाः सरवाः पिकाद्याः ।
ते शीर्णशुष्कसरसमूरुरुणा दिमर्त्ता किं तत्र यद्भवति कालविपर्य्ययेण । १९०
ते राजवल्लभा रम्यालाः ष्ठिवन्ति च सेवकाः । कथावशेषतां याताः [illegible]

इत्थं वर्षद्वयं सप्त मासान् भूत्वा नृपासने। नृपोऽष्टापष्टिवर्षे स ज्यास्विने भंगमाप्तवान्।
राजा मल्लदूशाहस्तु विंशप्रस्थान्तरान्ततः। आनीय फिर्यपालेन यत्तुपचे समर्पितः।
राजधान्यङ्गने राजवासे तं मनुजैः सह। विधाय वृत्तिं सम्पूर्णां ररक्षुर्डामराधिपाः।
राज्यप्राप्त्या सुखं तादृक् तस्य नासीत् सुदुःस्थितेः। यादृक् तद्भ्रंशतस्तस्य नृपमन्त्रिप्रसादतः। ११४
सैदद्वैधवधे लुण्ठिः पुरेऽभूत् त्रिगुणा ततः। खशैः कृता दाहवर्ज्जं तस्मिन् राज्यविपर्य्यये।
प्रधानवणिजः केचित् कोटिसञ्चयवञ्चिताः। क्षणमात्रात् तैरङ्कैस्तस्तुले रचितासवः।
दिनत्रयं ददामो वो मेयपणं यदि जायते। इति वैदेशिकोत्कोचसापेक्षा मन्त्रिणोऽभवन्।
काश्मीरिकायथा लुण्ठिं वहिर्यात्रागता व्यधुः। तथा वैदेशिकाश्चक्रुः काले किञ्चिं न दृश्यते।
प्रतिपदभ्रमणैः सपरिश्रमा मधुकरी तनुते मधुगोलकं।
निहितधूमतया विनिवार्य्य तां तमुपलभ्य परः सुखमश्नुते। १२०
कष्टैः षण्मासपर्य्यन्तं महद्भिस्सञ्चितं गृहे। अयत्नमपरैर्भुक्तं सर्वं तन्खानसंश्रितैः।
रत्नाकटकपूगान्तः क्षिप्तं कैरपि यद्धनं। न नीतमड्डचिम्यानक्षतिकास्तरणभ्रमात्।
सद्युम्ननिम्नकुम्भाभः पत्रिपुष्करिणीकृतैः। रचितं कैरपि द्रव्यं नीतं ताडितदर्शनात्।
सत्यं ब्रवीमि धनिकाः शृणुतास्मदुक्तं यत्सञ्चितं वसु गृहे परवञ्चनाद्यैः।
तद्भोगदानसफलं कुरुताविलम्बं नो चेद्वृथा स्मरत राज्यविपर्य्ययेऽस्मिन्।
भग्नभाण्डकरण्डाद्यैः प्रसार्य्य परितो गृहे। मुषिताः स्म इति व्याजात् खशाः कैरपि वञ्चिताः। १२५
जलान्तरश्रवागारान् शून्यानापूर्य्य वस्तुभि.। ररक्षुर्नागराः केऽपि शून्यीकृतगृहाधनं।
तैर्निवर्त्तितगर्त्तान्तःक्षिप्तैः पौरधनैर्धनैः। तस्मिन् काले प्रतिपदं सत्यार्थाभूद्वसुन्धरा।
मार्गरोधोद्यतैः सर्व्वैः क्षेपणीयास्त्रवर्षिभिः। राजानवाटिकोयैस्तैस्तत्काले साहसं कृतं।
कर्म्मस्थाननिधानसर्पसदृशप्रोत्सारणाडिण्डिमोद्दिष्टप्राक्तनसेवकाम्बुजघटाहेमन्तकालोदयः।
भूपश्यामधुगोलकस्य खरघासद्ग्धतधूमोद्गमः सोऽभूद्राज्यविपर्य्ययो नवसमोद्यानद्रुमालीमधुः।
किं स्वाचारविपर्य्ययात् किमु धनस्यान्यायतोपार्जनात् किं वा द्रोहितया सतां किमथवा सद्दर्पसाद्धर्यतः।
निःसामर्थ्यतया यथा शिशुविभोर्द्वेषेण वा मन्त्रिणां राज्ये सुस्सनभूपतेरिव बभूवायं प्रजोपद्रव.। १३०
येनादौ सैद्वैरे रणरसिकतया मोचिता बन्धनस्थास्सिद्धादेशाधिकारोव्यधित जितरिपुः स्फूर्जितश्च प्रयातः।
प्राज्यं राज्यं व्यधाद्यः फतिहनरपतेर्नाशयित्वारिचक्रं जीयाच्छ्रीडामरेन्द्रो वरसचिवपतिः सैकमेरुक एकः।

इति श्रीजैनराजतरङ्गिण्यां पण्डितश्रीवरविरचितायां फतिहशाहराज्यप्राप्तिर्नाम ... तरङ्गः ॥

॥ समाप्तेयं श्रीवरराजतरङ्गिणी ॥

## ॥ चतुर्थी राजतरङ्गिणी ॥

नमश्चराचराकारधारिणे चन्द्रमौलये । शिवाय स्वच्छस्वच्छन्दपरमात्मस्वरूपिणे ।

विलोक्य मिश्रं शिवयोः स्वरूपं सर्पाधिराजोमिलितोऽतिभक्त्या ।

गौर्य्याभुजावर्त्तनकङ्कणेन यत्रावतादो गिरिजाशिवाङ्गः ।

विरतमोहान्धतमो यदनुग्रहरोचिषा शुकस्यापि । वन्दे तं गुरुतरणिं बुद्धाश्रयहृत्सरोजदीप्तिकरं ।

वन्द्य तर्कवितर्ककौशलमतेर्वाक्यं प्रमाणान्वितं यत्काव्या नृपकीर्त्तिवस्तुरचना देदीप्यते सर्व्वतः ।

श्लोकैः सत्पदशोभनैरविरलानुप्रासयुक्तैः शुभैर्नानार्थानुगतैर्मतैः सुकविना लालित्यभावान्वितैः ।

श्रीकह्लणद्विजप्रोक्तश्रीमद्राजतरङ्गिणीं । आलोक्यौघमिताभ्यां स्वं वपुः कर्त्तुमखण्डितं । १

श्रीजोनराजविबुधश्रीवराभ्यां मनोरमं । कृतं हायष्टिवर्षान्तं ग्रन्थं राजावलिद्वयं ।

गङ्गाभगवतीतीर्थस्थाने धन्यस्वभूषितः । कविः श्रीप्राज्यभट्टाख्यः समग्रगुणभूषितः ।

राजावलिपताकां स्वां राज्ये फतिहभूपतेः । एकोननवतिं यावच्छ्लोकीचक्रे ततःपरं ।

अथ देशाद्विदोषेण दुरलुब्धकभीतितः । नायसीद्राजवृत्तान्तस्यैवालं मानसे कविः ।

तदाप्रभृति तद्वृत्तवर्णनं क्रियते मया । बुद्धाश्रयात्मजेनात्र शुकाख्येनात्मचापलात् । १०

पूर्व्वेषां राजसम्मान्यं निशम्य पृथुसम्पदां । तद्वारश्रान्तयेवाहं न कुर्व्वे कविताञ्छया ।

क पूर्व्वकविकृत्यं केदं मन्दधियामम । वर्णमात्रेण रीत्यंशः स्वर्णखण्डायते कथं ।

राजोदन्तमहं सन्तः श्रुत्वा योजनपूर्व्वकं । अनुगृह्णन्तु सद्वाक्यसुधादृष्टिनिवर्हणैः ।

...रेषु महाराजजैनुशाहकुलाङ्कुरः । श्रीमान् फतहभूपालः समासन्नभवन्महीं ।

तस्मिन् शास... ...णौं प्रजाः सर्व्वसुखावहाः । आसन् सुधर्म्मनिरता दयादाक्षिण्यभूषिताः । १५

स्तोघूतमद्यथसमेथ्यसक्तः स... ...। सोमराजानकश्चन्द्रान्वयोऽभूत्तस्य भूपतेः ।

सामान्येन महीभर्त्ता पुत्रोमल्लेकज्यङ्गिरः । पैत्रिकैर्ग्रामराष्ट्रैर्षैर्मानैनास्य नियोजितः ।
ब्राह्मणाः स्वक्रियाचारहीनाश्चासंसदा भुवं । यदेषां सोमचन्द्रोऽभूत् क्रियालोपप्रवर्त्तकः । १०
सर्व्वविज्ञानविन्मेरशेषद्दराकदेशजः । शाहकासिमस्य क्रान्तोऽस्य ह्युपदेशं विना गुरुः ।
सोमचन्द्रसदादेशाद्धृत्वा देवालयस्थितान् । भूमिं द्विजेभ्योनीत्वा तत्कृत्यांस्तृणान् यथास्तथा ।
सुफाख्येर्म्मरशेषस्य छित्वादम्भनवाञ्छया । बोधखानदति व्याजादत्युचास्तरवोऽनुगौ ।
सन्निधानं तदात्याजि दैवतैः प्रतिमासु हि । कथं विधत्ते मनुजस्तत्स्थानेषु विलुण्ठनं ।
दुराचारोऽथ साचारोभट्टोभुट्टोनटोविटः । इत्येवमासीत् तत्काले सभासाम्यं कलेर्बलात् । १५
सोमचन्द्रात्मजस्याथ दानमानौ च गौरवं । श्रषहिष्णुभिरस्थेशपुत्रैरब्दालकादिभिः ।
विभेद्य द्दामराजानं प्रतीहारादिचक्रिणः । अवधूय स्वजनकं यौनसंबन्धयन्वितं ।
श्रीजैनलाभदेनस्य पुण्यराशिरिवोच्छ्रितः । मज्जितः श्रीवितस्तान्तश्चिरकालमभूत्तु यः ।
राजानसोमचन्द्रेण स्नावितोनिर्म्मलैर्धनैः । श्रीजैनकदलः सेतुः पारावारप्रतारणे ।
वल्लाख्यमठमल्लेकपुरान्तरसमाश्रयैः । स्रोपितोवेश्मभिः साकं रात्रौ वैरिजिगोषया ॥ कुलकं ॥ २०
दग्धारण्यनिभे जाते नगरे कदले तथा । नावशिष्टं विटैर्लब्ध्या स्थानवासोजनस्य च ।
समं हृत्तः चीणकाले सोमचन्द्रस्तदुन्मणा । स्वसैन्यसंग्रहं कृत्वा निविष्टोजालद्रगडे ।
श्रतैकीयोवसन् कोऽपि ब्राह्मणोब्रह्मवर्चसा । युक्तोयेनाभवत्तस्य राजानस्यारिनिग्रहः ।
प्रतापाग्नेर्नरेशस्य पुरस्य दहनार्चिषः । राजानसोमचन्द्रेण स्वत्रपुः श्रीफलायितं ।
राज्ञा दत्ते वहिर्गन्तुं धर्मद्वारे दिनैः पथि । विप्रशापाख्यस्वर्भानुः सोमचन्द्रमयागिलत् । २५
मल्लेकालादयः पुत्रा विद्रुताः समराङ्गयात् । विधाय सोमचन्द्रस्यान्त्यक्रियां नृपशासनात् ।
मार्गेशैश्राहिमोमन्त्री स्थान् परान् समतोषयत् ।
सिद्धादेशं महातन्त्वं ज्येष्ठपुत्राय मार्गपः । मल्लेकपितृजायादान्मल्लेकाब्दालकाय च ।
अस्याधिकारं दत्वाथ विभज्यान्यप्रसेयकान् । मल्लेकलुहरादिभ्यः स्वात्मजेभ्योददौ महान् ।
द्दासराजानज्यङ्गिरप्रतीहारौ तु चक्रिणः । वाह्यानेतान् डामरांश्च राष्ट्रेशान्विदधेऽध्वपः ।
मृते प्रशान्ते सचिवे चेल्लत्पिस्तटास्तत । कर्णगोचरदुर्दण्डशिगभर्दैयदायिनः । ३०
यमेवाश्रयते रज्जुं नदीं तर्त्तुमहो नरः । छिनत्यकस्मात्तमैन विधिर्विधुरताङ्गतः ।
सोमचन्द्रवधार्थेते वाह्यानीताहि डामराः । मार्गेशेनास्य तैः सर्व्वैर्द्रोहोऽकारि नृपाज्ञया ।
नैषेतुच्छेदं कृत्वा ते प्रतीहारादिडामराः । नाशयित्वा मार्गपतिं विदेशमनयंस्ततः ।
डामरत्वसमस्तकदौलत्याद्यानुपास्पदे । अभजन्नश्चिपदवीं षट्पदा इव तेऽटवीं ।
आस्थाने डामरेन्द्रेषु सम्यङ्गिर्णयकारिषु । वलिनोदुर्बलाश्रासन्नवलावलवत्तराः । ३५
सुहृत्तं डामरेन्द्रीये शिष्टानां प्रत्यभान्न तत् । तमिस्रासकघूकानामप्रकाशइवावनौ ।
नपान्तरङ्गाः काराया चिन्तास्तैर्डामरैर्निशि । आलिमेरादयोद्रोहकर्त्तारः समयादमी ।

ज्यहाङ्गिरप्रतीहारहोसराजानकादयः । दुद्रुवुरवमानात्ते दिनैस्तान् डामरान् प्रति ।
आस्थानाभीनयोर्गाजखानमल्लेकदत्तयोः । शस्त्या गदायमेराख्योजघानोरोदयोर्द्रुतं ।
श्रुत्वा तदुत्समल्लेकोराजाग्रादगमद्वहिः । चिरं युद्धारिभीराज्ञा नीतः स्वान्तिकमादरात् ।
तद्वधाद्राजधान्यन्तर्हाहाकारोमहानभूत् । उद्भूत्पौरलोकास्तु नृपतेश्चाययस्तदा ।
डामरोहोसमल्लेकः स्वय्यभोगान्तरादथ । श्रुत्वा ज्ञातिवधं धैर्य्यान्न चचाल महाभटः ।
प्रबुध्य वैरिभिः सोऽथ डामरस्तत्र सङ्गरे । वीरः स्वःसुन्दरीयोगं समरोड्डामरोऽगमत्
शाहाभदनकुलजः खानएभ्राहिमस्ततः । ज्यहाङ्गिरप्रतीहारज्ञातेयः कुशलोमहान् ।
विभागीकृत्य राष्ट्राणि यथार्हं पञ्चपैर्दिनैः । प्रददौ होसराजानमुख्यानां नृपतेः पुरः ।
आशङ्क्य नृपतेः पार्श्वस्थं तमुत्सवमल्लिकं । अकरोद्वन्धनं नीत्वा दुर्गमे तु खशालये ।
विभवं मासमात्रन्ते गन्धर्व्वनगरोपमं । विधाय द्वेषाद्ध्वंशभीत्या चेलुरिवाधमाः ।
वृत्तान्तमुत्समल्लेकदुग्धभ्राता विश्रुत्य तत् । रावत्यदेवकोगत्वा खशालयमवेष्टयत् ।
खशैर्गङ्गामठोपान्ताङ्गीतैरुत्सवमल्लिके । विमुक्ते ह्युदभूत् कोऽपि हर्षोऽन्योन्याश्रयात्तयोः
अथाध्यश्रयतां तौ द्वौ नृपकल्पतरुं दृढं । विपत्तीव्रातपक्लिष्टौ मार्गश्रागमनोत्सुकौ ।
एकोननवतौ शुक्लाषाढादाश्वयुजावधि । बधादिवृत्तं राजानडामराणामभूदिदं ।
शरत्काले वहिर्लीला मार्गशः पुनरायया । त्रिभागीकृत्य कश्मीरान् सर्व्वेषां दत्तवानसौ
राजाधिकारान् संस्थाप्य स्वात्मजेभ्योऽभवद्भीः । योगीव कतिचित् कालं स्वदेशे विगतज्वरः ।
उत्समल्लिकराजानशृङ्गारौ निरदाह्यत् । ग्रहानब्दालमेरस्य नावर्तेऽब्दे जिगीषया ।
निरोधवैस्मदाहादि श्रुत्वा पुत्तस्य मार्गपः । भाङ्गिलात् सुय्यमार्गेण हिन्दुवाटं समागमत् ।
तस्मिन् दिगन्तरं याते मल्लेकाब्दालकोऽरिभिः । बन्धनाय निनायोग्रैर्दुर्गं लद्दखशालयं ।
उत्समल्लेकराजानशृङ्गारौ नृपसंयुतौ । विभक्तुमैच्छत् कश्मीरोत्पत्तिं वाराहमूलकं ।
तत्र राजाज्ञयानीतैस्त्रिद्वादेशाधिकारिभिः । देशोत्पत्तिविभागज्ञैस्तज्ज्ञैर्लेखककर्म्मभिः ।
कायस्थैर्बुधकश्मीरसंख्येशजुगकादिभिः । भागत्रयं विधायेोर्व्वीराष्ट्रदेशेषु सर्व्वतः ।
भागः फताहशाहस्य मल्लेकोत्सस्य चापरः । तृतीयोऽपश्च राजानशृङ्गारस्येत्यलिख्यत ।
विभज्य भक्ता देशेऽच देशोत्पत्तिः पुरा त्रिभिः । ऊष्कशुष्काकनिष्काख्यैस्तथैवैतैर्महात्मभिः ।
ततोनगरमारुह्य राजराजानडामराः । नात्यजन् हृदयादेरं गूढं नकुलसर्पवत् ।
मुख्यं मन्त्रिपदमुत्समल्लेकस्य ददौ नृपः । मिद्धादेशश्च राजानशृङ्गारस्य महत्पदं ।
आस्थानउत्समल्लेके स्थिते निर्णयकारिणि । शृङ्गालेडिकसंयोगः श्रुतोऽभूत्तच्चितस्तदा ।
कार्त्तिकेमार्त्तण्डिञ्जयंशादिनोः साभयोर्द्वयोः । प्रादात् स उत्तरं द्रष्टुं स्वाभिशामाहृताश्रयां ।
तदा प्राहिनसन्मन्त्रेशोमन्त्रिणां वरः । ससादशाहिमहितएभ्राहेमोऽध्वेश शायथौ ।
वाराहमूलं सम्प्राप्ते तत्सैन्ये राजानिधेः । उत्समल्लेकमुख्यास्ते योद्धुं स्वयपुरेऽविशन् ।

पारावारस्थितं सैन्यद्वयं वीक्ष्य नराधिपः । फताहशाहोमन्त्रीशमुत्समल्लिकमब्रवीत् ।
मन्त्रिन्नध्वाधिपेनेयं परिणीतेव भामिनी । अस्मान् कापुरुषान् ज्ञात्वा राज्यलक्ष्मीर्हृतामुना ।
श्रुत्वा तदुत्समल्लेकान्नृपमूचे महीपते । एकाकिनमबन्धुं मां दृष्ट्वा किं न करोत्ययं । ८०
कदाचिद्दृश्यते चिन्तामणिः खकुसुमादि च । राजप्रतापदग्धाहि नोत्पद्यन्ते नरर्षभाः ।
उत्तिष्ठ राजन् युध्यस्व दैवाधीना विभूतयः । श्रुत्वैवं मन्त्रिणोवाक्यं योद्धुं नृपबलं ययौ ।
अध्वेशे भवतुङ्गं तत्पथायाते ससैनिके । सबल उत्समल्लिकः कोशनस्थोन्यविचत ।
मध्ये भूत्वा गिरिं तत्र स्थितात् सैन्यद्वयाद्भटाः । रत्यान्योन्यं शरासारं पारावारादथाक्षिपन् ।
प्रयुध्य वैरिभिस्तत्र मार्गेशात्मजशिर्येकः । स्वप्राणैः पद्मनागस्य प्रादादलिं महत्तरं । ८५
हते तस्मिन् रणे तत्र शिर्यमार्गपतावतः । सन्धुलादुत्समल्लेकोजेता शिथिलतां ययौ ।
शैथिल्यमस्य दृष्ट्वा ते वीरामार्गेशसैनिकाः । सर्वाश्रमाध्वना यातस्यानुससुर्महौजसः ।
फताहशाहोराजानशृङ्गारान्वितएव तत् । श्रुत्वा स्वस्यपुराद्धिन्दुवाटं शूरपुराद्ययौ ।
अनुयातैरथाध्वेशसैनिकैरुत्समल्लिकः । अरोधि न्योवाग्रामान्ते केशरीव गुहामुखे ।
सवाब्दान् पालयित्वा क्ष्मां याते फताहभूमिपे । महम्मदशाहः सम्प्रापद्राज्यं मार्गेशसंश्रयः । ९०
मार्गेशप्रीत्या नृपतिर्भट्टान्तं स्वाततायिनं । सेदरस्कान्दरं खानं यौवराज्यपदोर्जितं ।
महामार्गपतिर्भूयोराजलक्ष्मीविराजितान् । स्वपुत्रानकरोत्कारास्थाने शत्रुनिधानतः ।
दत्तकन्योऽप्ययं जन्यदव मां घातयेत् कथं । निश्चिन्त उत्समल्लेकोयावदास्ते स बन्धने ।
मार्गेशपुत्रोवलिनं सदोषस्तं कुकर्मणा । अथ शृङ्गारबद्धाद्भ्रिमवधीत्पञ्चषैर्दिनैः ।
युद्धं भट्टार्जुनस्याजौ काराया: शेषचक्रिणः । बद्धस्य तादृग्वीरस्य तस्याभूच्चस्त्रिभिः परैः । ९५

बलिना कलिराजेण नृचन्द्रे गलिते ऽर्केऽप्युदभूद्वलान्धकारः ।
जनताप्यनिशं भृशं रुरोद कलयन्ती पितरीव पक्षपातं ।

विरते चोत्समल्लेके लोके रात्रिश्चराः खलाः । विचेरुरन्धतमसाविस्फुरद्दीर्घदृष्टयः ।
भार्यांशोद्विगुणोजातोग्राम्याणां तत्र वत्सरे । विज्ञप्तिश्रवणे मूकावधिरामन्त्रिणोऽभवन् ।
नव मासान्नवाहानि राज्यं कृत्वा महम्मदे । वहिर्याते कृतोत्साहः शाहः फतिह आययौ ।
प्रतीहारव्यहाङ्गीरस्यादान्मन्त्रिपदं नृपः । सिद्धादिशस्य राजानशृङ्गारस्य महत् पदं । १००
स्वयंभूस्पण्डचण्डांशुमहसः शौर्य्यशालिनः । काचचक्रस्य शस्त्राधिकारं राजा स्वयं ददौ ।
नूनं नाकेशचक्रेशावतारः काचमल्लिकः । आजीवमभवद्यस्य राजश्रीवलितं वपुः ।
श्रीमद्वीसनचक्रस्य क्रमराज्याजिजन्मनः । प्रोद्भूतः काञ्चनोवीरो रामोदशरथादिव ।
प्रजापुण्योदयाद्राज्ञोधार्म्मिका धीरजायत । अथवात्यल्पकालोऽस्य राज्यस्याज्ञापि भूभुजा ।
तथाहि प्रेष्यवद्रुद्धव्यापाराधिपतां नृपः । अकरोत्तासपट्टान्तर्गणनाक्षेपवारणं । १०५
मृतहिन्दुकजन्तूनामस्थीन्यादाय भूमिपः । गङ्गां यातुं समादिक्षत् म्लेच्छोपद्रवशान्तये ।

चिन्नास्थीन्यत्र स्वर्णद्यां प्रत्यायाताजनाः पथि। अकस्मादातहृष्टा तेऽयुतसङ्ख्या विपेदिरे।
चिरेण गङ्गया भुक्तान्यस्थीनीति क्षुधार्त्तया। मन्येऽस्थिप्राशलोकोऽपि निगीर्णोऽनया भुवं।
आयुःशेषं समाश्रित्य पादत्राणसमाश्रयाः। मृतागृहेषु ये प्राप्ताः केचिन्नियतियोगतः।
अस्मिन्नेकनवत्यब्दे शरत्काले च मार्गपः। मल्लोदशाहिषहितोवाङ्गिलात् पुनरराययौ। ११०
ससैन्योवाङ्गिले ग्रामे निविष्टोऽहन्महीभुजः। फताहशाहः प्रबलं बलं युद्धाय निर्ययौ।
प्रयुध्य वैरिभिर्गाढं धार्मिकोऽश्वेशनायकः। गतः स्वःकामिनीयोगमात्मजोऽत्र रणाजिरे।
कलौ धर्मस्य पादैकोवर्त्ततेऽस्मिन् भुवस्तले। महामसोदस्तम्भैः स चतुष्पादेन योजितः।
नूनं कार्कोटनागेन निगीर्णोमार्गपः क्षुधा। प्रत्यब्दं तद्गिरिस्थानाद्गमागमचिकीर्षया।
अन्येऽप्यब्दालमलेकलुहराद्याहि तत्सुताः। गतादिगन्तरं भूभृद्युक्ताव्यक्तमनोरथाः। ११५
वितस्तिः पूर्य्यते जीर्णवस्त्रे हस्तोविशीर्य्यते। इत्येवमादिकादोषाजायन्ते पापिनां विशां।
सस्यगन्तकनारीव व्याध्युपद्रवकारिणी। उदभूत् सर्व्वतोमारी जनताचयकारिणी।
मृतानां नाभवत् सङ्ख्या ग्रामेषु नगरेऽपि वा। अन्त्यकर्पटवासोऽपि येषामासी स दुर्लभं।
बान्धवानेव चक्रन्दुः प्रलापस्य कथैव का। प्राणरक्षापराः केचिदायुःशेषेण रक्षिताः।
जजृम्भे शमिते मारीदोषे देशेऽस्य दैवतः। वार्त्ता मल्लदशाहस्य कश्मीरागमनं प्रति। १२०
गत्वा मल्लदशाहस्य नौशाहारात् सलोहरात्। एस्कन्दराद्गजपतेः स प्राप महतीं चमूं।
प्रत्यायातोऽश्वपसुतैः सहितोराज्यशङ्कया। प्राशीराजपुरीदेशमिति दूतान्नृपोऽशृणोत्।
चस्मादुर्व्वार्त्तयाप्यासन् पूर्व्ववैरामहीभुजः। समस्तामन्त्रिणः शाहमल्लदागमनेप्सवः।
काचचक्रेशराजानटङ्कारौ स्वबलैर्वृतौ। गतौ प्रतीचितुं शूरपुरं नवनृपस्य तौ।
विधुरे हि विधौ मृत्यश्चालेमेरोऽस्य भूपतेः। श्रीमत्फताहशाहस्य शत्रुपक्षमथाश्रयत्। १२५
वैदेशिकोनिःशरणः शाहिभङ्गीयदत्यथौ। पुत्तरदङ्कितोराज्ञा ग्रामदेमाद्यनुग्रहैः।
प्रतीहारज्यहाङ्गेरमन्त्रिणैकेन संश्रितः। श्रीमान् फताहशाहस्य पुराद्योद्धुं विनिर्ययौ।

कोपाणकं फतिहशाहवले निविष्टे गूढेक्षणैः प्रतिभटैर्विदितारिवृत्ताः।
एत्यारिमध्यमथ शूरपुराद्युयुत्सुकामाः प्रवीरशयनान्यधिजग्मुरत्र।

फताहशाहो वीक्ष्यैतद्युद्धमस्यादथापतत्। मन्त्रिभिः प्राक्तनस्नेहात्प्रभुत्वादपि रक्षितः।
एवं समाप्तं वर्षैकं भुक्त्वा भूमिं स भूमिपः। वर्षे दानवते मासे इषे राज्यादथापतत्। १३०
ततः फतिहशाहः स निरस्तोवाह्यमण्डलं। मन्त्रिभिश्चटिकाशारगिरिमुल्लङ्घ्य लोहरं।
श्रीमान् महामहोम्मादः शाहोमहम्मदः पुनः। समं गजपतेः सैन्यैः कश्मीरानविशज्जयी।
...रद्यतमस्तेभाय्युधः सेनाजमस्य ते। जङ्गमाद्रिभ्रमं मार्गे काले धाराधिरोहणे।
वाजिनां ... हस्तिकर्णतालैव पुत्यते। पटहैश्च यमन्द्रोऽभूद्द्विगुणोनृपतेर्विशां।
बद्धा राजानटङ्कार... मार्गपं बहिः। कर्त्तुं मन्त्रिपदे राजशिना काप्युद्भूद्हृदि। १३५

नृपादेशान्महामन्त्रिपदं चक्रेशकाञ्चनः । सालेमराद्यनुज्ञातोऽप्यग्रहीत् स महाबलः ।
स्वामात्यान् देशरक्षायै स्थापयित्वा गतोभुवं । विभज्याटविकं लोकं प्रतिमुक्ते वहिर्नृपे ।
नाग्रामकोटं लुहराध्विशराजाननोसकौ । प्रविष्टौ सैन्यसन्नद्धौ शत्रुकार्य्यचिकीर्षया ।
हिमार्त्तोऽराजकोदेशोऽपरिज्ञाताश्च मन्त्रिणः । देशोद्भ्रान्तयाशेषश्चकम्पेऽन्वहमित्यतः ।
चक्रेशोविक्रलश्चर्णं वीरं मल्लेकज्यङ्गिरं । साहायकार्थमानिन्ये राज्ञघोषैः छनार्हणं । १८०
मासमात्रमुषित्वात्र कोटे तैर्वैरिणां क्रुधा । प्रभाते नगरं वीरायुयुर्युद्धचिकीर्षया ।
निर्याते काचचक्रेशसैन्ये रिपुबलं प्रति । परस्परमभूद्युद्धं वीराणां जालद्रगडे ।
युद्धा लुहरमार्गेशे याते राजाननोसकः । हत्वा रणाग्रौ स्वप्राणानाच्छिचन्नाकयोषितः ।
छित्वा तत्राङ्गुलीः काचचक्रेशस्यारथोऽथ ते । नाजोकमार्गतत्याद्याः प्रययुः प्रलभायितां ।
प्रवीरोदेवरावत्रस्खलितः समराङ्गनात् । हतोमारीनशेतोरे चक्रसैन्यैर्निरायुधः । १८५
तादृशात् समरान्मुक्तः काचचक्रोऽखिलैर्जनैः । देशरक्षाकरोऽज्ञायि राधियार्जुनसन्निभः ।
सचिवः काञ्चनश्चक्रः प्रवीरः काञ्चनश्रियं । अङ्गुल्या सह सम्प्रापच्छिन्नया तत्र संयुगे ।
सन्नोय नृपतिर्दानमानाद्यैराजमण्डलं । प्रतिमुच्यागतोऽकार्षीत् शैराज्यं राष्ट्रमण्डले ।
वर्षेण स हि मल्लेकलद्दभट्टादयोऽखिलाः । चक्रेशमन्त्रिणा कारागारच्छिप्तामहौजसः ।
अङ्गुलीछत्रनिर्देशं स्थापिते भूपतौ ततः । चतुर्नवतिवर्षेऽत्र श्रावणे काचचक्रपः । १९०
मल्लिकज्यङ्गिरप्रीत्या स्थानमेशाद्दिमं व्यधात् । मिङ्गादेशाधिकारेऽस्य सुजनं धीमतां वर ।
क्रियालतायामूलानि पूर्वं शिर्य्यद्विजन्मना । रोपितानि च कालेन सिक्तान्यस्तत्वारिणा ।
श्रीमन्निर्म्मलकण्ठेन द्विजेन्द्रेण हिमागमे ।
सोमराजानकालोद्यत्म्लेच्छोपद्रवजोमहान् । समस्य कण्ठभट्टाद्यैर्दुष्कलङ्कोनिवारितः ।
प्रलोभ्य काचचक्रेशं स्वप्राणेन धनेन च । तत्कार्य्यवस्तचक्रेशानुमतोम्लेच्छचोदितः ।
स्वुम्नाभेराद्यदोभट्टनिर्म्मशाद्यानघातयत् ।
ब्राह्मं तेजः क वो विप्राः क्वाचारोऽद्यतने युगे । इत्येव खिन्नोविन्नस्तांस्तन्मुखानवधीद्विजान् । १९५
आसूचितः सैदकाले सोमचन्द्रेण व्यञ्जतः । प्रफुल्लः काचचक्रेण मौसुलोपद्रवक्रमः ।
ततोऽब्दे पञ्चनवते श्रावणे वाह्यमण्डले । फतादशाहराजेन्दुरस्तं यातोनृपाधिपः ।
श्रुत्वा महम्मदशाहेन तद्दिने नाश्नि नास्वपि । नास्नायि,राजराजन्तं स्मारं स्मारं दिवानिशं ।
नयज्ञोदीर्घदर्शी च सत्यवाग्गुणिवत्सलः । प्रशान्तः प्रियभृत्यश्च क तादृग्लभ्यते प्रभुः ।
सम्प्राप्तं नरदेवेन जन्म वाह्येऽत्र मण्डले । प्रमयोऽस्याभवत्तत्र विधिकार्य्यं हि दुर्घटं ।
कर्णीरथमथारोप्य स्वभृत्यैर्नरनायकैः । शवीभूतइहानीतः कर्त्तुमन्त्यक्रियां दिनैः
कश्मीरेन्द्रः समारोप्य सामात्यस्तं शवं नृपं । इहन्मृताजिरे श्रीमज्जैनशाहादिभूभुजां ।
गोगर्त्तस्फटिकावर्त्तैर्भूर्त्तैः कायैरिवाश्रिते । राजोचितक्रियां कृत्वा भूगर्त्ताभ्यन्तरेऽक्षिपत् ।

चिह्नाखीन्यच स्वर्णद्यां प्रत्यायाताजनाः पथि। अकस्मादातदृष्या तेऽयुतसङ्ख्याविपेदिरे।
चिरेण गङ्गया भुक्तान्यस्थीनीति सुधार्त्तया। मन्येऽस्थिप्राप्ततोकोऽपि निर्गीर्णाह्वानया भुवं।
आयुःशेषं समाश्रित्य पादचारणसमाश्रयाः। मृताग्रहेषु ये प्राप्ताः केचिन्निर्यतियोगतः।
अस्मिन्नेकनवत्यब्दे शरत्काले च मार्गपः। मल्लोदशाहिवहितोवाङ्गिलात् पुनरायया।
ससैन्योवाङ्गिले ग्रामे निविष्टोऽभन्महीभुजः। फताहशाहः प्रबलं बलं युद्धाय निर्ययौ।
प्रयुध्य वैरिभिर्गाढं धार्म्मिकोऽश्वेशनायकः। गतः स्वःकामिनीयोगमात्मजोऽत्र रणाजिरे।
कलौ धर्म्मस्य पादेकोवर्त्ततेऽस्मिन् भुवस्तले। महामर्मोदस्तम्भैः स चतुष्पाद्येन योजितः।
नूनं कार्कोटनागेन निर्गीर्णमार्गपः क्षुधा। प्रत्यब्दं तद्गिरिस्थानाद्गमागमचिकीर्षया।
अन्येऽप्यब्दालमल्लिकलुहराद्याहि तत्सुताः। गतादिगन्तरं भूमृद्युक्ताव्यक्तमनोरथाः।
वितस्तिः पूर्य्यते जीर्णवस्त्रे हस्तोविशीर्य्यते। इत्येवमादिकादोषाजायन्ते पापिनां विशां।
सम्यगन्तकनारीव व्याध्युपद्रवकारिणी। उदभूत् सर्व्वतोमारी जनताचयकारिणी।
मृतानां नाभवत् सङ्ख्या ग्रामेषु नगरेऽपि वा। अन्त्यकर्पटवासोऽपि येषामासे स दुर्लभः।
वान्धवानेव चक्रन्दुः प्रलापस्य कथैव का। प्राणरक्षापराः केचिदायुःशेषेण रक्षिताः।
जज्ञमे शमिते मारीदोषे देशेऽथ दैवतः। वार्त्तां मल्लदशाहस्य कश्मीरागमनं प्रति।
गत्वा मल्लदशाहस्य नौशाहारात् सलोहरात्। स्कन्दराद्गजपतेः स प्राप महतीं चमूं।
प्रत्यायातोऽथ्यपसुतैः षहितोराज्यशङ्कया। प्राशीराजपुरीदेशमिति दूतान्नृपोऽशृणोत्।
पश्चाद्व्यार्त्तयाव्यासन् पूर्व्ववैरामहीभुजः। समस्तामन्त्रिणः शाहमल्लदागमनेप्सवः।
कावचक्रेश्वराजानरुङ्गारो स्ववलैर्द्दृतो। गतौ प्रतीचितुं शूरपुरं तत्रनृपस्य तौ।
विधुरे हि विधौ सत्यश्वाभिमेरोऽस्य भूपतेः। श्रीमत्फताहशाहस्य शत्रुपक्षमथाश्रयत्।
भेदेशिकोनिःशरणः शाहिभङ्गीयदत्यभौ। पुत्रवद्दर्द्धितोराज्ञा ग्रामहेमाद्यनुग्रहैः।
प्रतीहारज्यहाङ्गेरमन्त्रिणैकेन मंत्रितः। श्रीमान् फताहशाहस्य पुराचोद्धुं विनिर्ययौ।

सोपाणकं फतिहशाहवने निविष्टे गूढैश्चरैः प्रतिभटैर्विदितारिद्दत्ताः।
रत्यारिमध्यमथ शूरपुराद्युयुत्सुकामाः प्रवीरयवनान्यधिजग्मुरच।

फताहशाहो वीर्य्येतयुद्धमध्यादयापतत्। मन्त्रिभिः शाक्रमखेहाकभुलादपि रक्षितः।
एवं समाभं वर्षैकं भुक्ता भूमिं स भूमिपः। वर्षे दानवते मासे दूषे राज्यादथापतत्।
ततः फतिहशाहः स निरस्तोवाप्समण्डलं। मन्त्रिभिरटिकाशारगिरिमुलङ्घ्य लोहरं।
श्रीमान् महामहोमाहः शाहोमहम्मदः पुनः। समं गजपतेः सैन्यैः कश्मीरामविशज्जयी।
…रदत्तमत्तिभाव्यधुः सेनाजनस्य ते। तत्कस्माद्विभ्रमं मार्गे क्षामे धाराधिरोहणे।
वाजिभां … हस्तिवर्णतालेव पुत्पतेः। पटहेभ्यमस्थोऽभृद्गिगुणोभूपतेर्गिरा।
बद्धा राजामरुङ्गार… मार्गपं वहिः। कर्त्तुं मन्त्रिपदे राजयिना काण्डदभूद्धृदि।

नृपादेशान्महामन्त्रिपदं चक्रेशकाञ्चनः। आलेमेराद्यनुज्ञातोऽप्यग्रहीत् स महाबलः।
स्वामात्यान् देशरचायै स्थापयित्वा गतोभुवं। विभज्याटविकं लोकं प्रतिमुक्ते वह्निर्नृपे।
नाग्रामकोटं लुहराख्यग्रराजाननोसकौ। प्रविष्टौ सैन्यसन्नद्धौ मनुकार्य्यचिकीर्षया।
हिमार्त्तोऽराजकोदेशोऽपरिज्ञाताश्च मन्त्रिणः। देशोदुर्व्वार्त्तयाशिपश्चकम्पेऽन्वहमित्यतः।
चक्रेशोविक्रमस्थैर्यं वीरं मल्लेकव्याघ्रिरं। साहायकार्थमानिन्ये राष्ट्रघोषैः क्षतार्हणं।
मासमात्रमुषित्वात्र कोटे तैर्व्वैरिणां क्रुधा। प्रभाते नगरं वीराययुर्युद्धचिकीर्षया।
निर्याते काचचक्रेशसैन्ये रिपुबलं प्रति। परस्परमभूद्युद्धं वीराणां जालद्रगडे।
युद्ध्वा लुहरमार्गेशे याते राजाननोसकः। कृत्वा रणाग्नौ स्वप्राणनार्श्चिचक्राकयोपितः।
छित्वा तत्राङ्गुलीः काचचक्रेशस्यारयोऽथ ते। नाजोकमार्गपत्याद्याः प्रययुः प्रलभायितां।
प्रवीरोदेवरावत्रस्खलितः समराङ्गनात्। हतोमारोनशीतोरे चक्रसैन्यैर्निरायुधः।
तादृशात् समरान्मुक्तः काचचक्रोऽखिलैर्जनैः। देशरक्षाकरोऽज्ञायि राधेयार्जुनसन्निभः।
सचिवः काञ्चनश्चक्रः प्रवीरः काञ्चनश्रियं। अङ्गुल्या सह सम्प्रापच्छिन्नया तत्र संयुगे।
सन्तोष्य नृपतिर्दानमानाद्यैराजमण्डलं। प्रतिमुच्यागतोऽकार्षीत् स्वैराज्यं राष्ट्रमण्डले।
वर्षेण स हि मल्लेकलद्दभट्टादयोऽखिलाः। चक्रेशमन्त्रिणा कारागारचिप्तामहौजसः।
अङ्गुलोच्छत्रनिर्देशं स्थापिते भूपतौ ततः। चतुर्नवतिवर्षेऽत्र श्रावणे काचचक्रपः।
मल्लिकव्याघ्रिरप्रीत्या खानमेत्राहिमं व्यधात्। सिद्धादेशाधिकारेऽस्य सुजनं धीमतां वर।
क्रियालतायामूलानि पूर्व्वं शिर्य्येदिजन्मना। रोपितानि च कालेन सिक्तान्यमृतवारिणा।
श्रीमन्निर्म्मलकण्ठेन द्विजेन्द्रेण हिमागमे।
सोमराजानकालोद्गतश्चेच्छोपद्रवजोमहान्। समस्य कण्ठभट्टाद्यैर्दुष्कलङ्कोनिवारितः।
प्रलोभ्य काचचक्रेशं स्वप्राणेन धनेन च। तत्कार्य्यंवत्सचक्रेशानुमतोम्लेच्छचोदितः।
सुज्जाभेराज्ञदोभट्टनिर्मं शाद्यानघातयत्।
ब्राह्मं तेजः क वोत्रिमाः काचारोऽद्यतने युगे। इत्येव खिन्नोविचस्तांस्तन्मुखानवधोद्द्विजान्।
आसूचितः सैद्काले सोमचन्द्रेण व्यञ्जतः। अफुत्रः काचचक्रेशमैसुत्रोपद्रवक्रमः।
ततोऽब्दे पञ्चनवते श्रावणे वाह्यमण्डले। फतासाहराजेन्दुरस्तं यातोनृपाधिपः।
श्रुत्वा महम्मदशाहेन तद्दिने नाशि कास्विपि। नाहायि राजराजन्तं स्मारं स्मारं दिवानिशं।
नयज्ञोदीर्घदर्शी च सत्यवाग्गुणिवत्सलः। प्रशान्त. प्रियभृत्यश्च क तादृग्लभ्यते प्रभुः।
सम्प्राप्तं नरदेवेन जन्म वाह्येऽत्र मण्डले। प्रमयोऽप्याभवत्तत्र विधिकार्य्यं हि दुर्घटं।
कर्णीरथमयारोप्य स्वभृत्यैर्नरनायकैः। ससीभूतहृतानीतः कर्त्तुमन्त्यक्रियां दिनैः
काश्मीरेन्द्रः समारोप्य सामात्यस्तं शवं नृपं। हृहन्मृताजिरे श्रीमज्जैनशाहादिभूभुजां।
शोगर्त्तस्फटिकावर्त्तमूर्त्तैः कायैरिवाश्रिते। राजोचितक्रियां कृत्वा भूगर्त्तोभ्यन्तरेऽक्षिपत्।

कर्त्तुं राज्यमखण्डितं हठाधियोद्धर्त्तुं खमात्याम् दृढान् भर्त्तुं पामरसेवकान् हि नृपतिः किं किं न कुर्य्यात्क्रमं।
हा दैवं तदपास्तितुं प्रयततेऽनयादिवात्याहतोमूलोत्पाटनमाप्य धिङ्नृपतरुस्तूर्णं पतेदाकुलः।
क सैफडामरेन्द्रादीन् हत्वा खसचिवान्नृपः। विपत्तौ प्रमयं प्राप हाहा कालविपर्य्ययः।

॥ इति फताहशाहस्वर्थाणं ॥

तदैवमेत्य राजानमृङ्गारेण महात्मना। अन्वगामि नृपेन्द्रस्य प्रेम्णेव स्वर्गवासिनः।
तस्मिन् काले बहिश्चक्रवर्त्ती गजपतिर्दिवं। स्कन्दराख्योऽप्यगमत् सुरराजदिदृक्षया।
अभावादस्य भूपस्य राजपत्नं विशङ्क्य तं। मल्लिकज्यङ्गिरामिरखुज्याह्वदमुखान् भुवं।
एभ्राहिखानमृङ्गारभट्टादींश्चक्रनायकः। वैशाखेऽब्दे षत्सवतौ नगरस्थानरोधयत्।
सिद्धादेशातिपदवीं तदीयाश्चक्रपोददौ। दैवदृष्टस्य राजानहोसनस्य महात्मनः।
तद्गौरवं चिभिर्मासैरसहिष्णुः स चक्रिराट्। होसराजानकं कारां चिक्षायीदकुतोभयः।
मल्लेकचक्रसेरङ्गताजेमेरादिबान्धवान्। तोषयित्वा राज्यघोषैः पूर्णकामांस्तदाकरोत्।
ज्यैष्ठेऽथ सप्तनवते एभ्राह्मश्वपतेः सुताः। मल्लेकाब्दालकाद्यास्ते सन्धाय देशवासिभिः।
फतिहशाहजं खानमादायेस्कन्दराभिधं। ससैन्यमाययुर्वाह्यात् स्वंशैश्वर्य्यकाङ्क्षिणः।
श्रुतप्रवेशस्त्वकेशकाचकोऽतिबली ययौ। योद्धुं लोलपुरोद्वारं द्वाम्दयुक्तोऽश्वपान् प्रति।
दृष्ट्वा चक्रबलं भूरि जग्मुर्भीत्याल्पसैनिकाः। नौग्रामकोटं राज्यन्तो दुर्गमं प्राणरक्षया।
अथानुसस्रे चक्रेशसैन्येनाश्वपतीन् प्रति। कोटभूम्यन्तरे भूरि ससैन्यं स न्यवीविशत्।
चमूद्वयादिनिर्गत्य शरासारैरवाकिरन्। योधादिवश्च भूमिश्च गर्जन्तः समराङ्गने।
तावत्प्नीहारपतिर्ज्यहाङ्गिरः ससैनिकः। गदायमेरवहदोरमेराद्यैर्लुवरेऽविशत्।
ऊर्द्धाधः सहितं शत्रुसैन्यं वीक्ष्य स चक्रपः। मसोदचक्रं स्वसुतं व्यसृजल्लुहरं प्रति।
ताजचक्रादिसहितोवीरोमीरमसोदकः। शाहाभदेननगरं सम्प्रापारियुयुत्सया।
दृग्गोचरं गते चक्रिसुते युयुधिरे भटाः। आगच्छ प्रविशेत्युच्चैर्नदन्तः समराङ्गने।
मसोदमेरषङ्किर्मा वीरोमीरगदायकः। शरावलीं चकर्त्तास्य वैजयन्तीमिव श्रियः।
पार्थपुत्रोपमे तस्मिन् रणं चक्रिणि कुर्व्वति। अरिमध्यात् सुसन्नद्धोनासीत् कोऽपि धनुर्धरः।
मा पलायन्त समराद्वीरावीरगुणोज्झिताः। जिताः शत्रुसमूहेन व्यूहेनागम्यतामिति।
इत्युक्तेऽर्जुनराजानकैनैकेनागताभटाः। युद्धाय विविशुस्तूर्णं शलभाइव पावकं।
प्रत्यायाते ससैन्येऽस्य प्रयुध्यैतैर्महारथैः। गदायमेरः स्वनारीप्रणयिलमथाश्रयत्।
स्तरोपचक्रिणोदन्तायकः पुष्पसायकः। दृष्ट्वेव नीतस्तूर्णं स स्वस्त्रीभिः समराङ्गनात्।
सैन्यं निहतं वीक्ष्य वीरास्तदनुयायिनः। मसोदमेरं धावित्वा जघानाह्निर्ण शरेण ते।
शरनिर्भिन्न॰॰॰न्यपतन्निहतोभुवि। मसोदमेरः शत्रोधन्विनां चक्रिणः सुतः।
विशीर्णे रिपुभिर्यात्र॰॰॰लसन्निभे। अलीकिमो पदं लेभे मुक्ताहारा न कुत्रचित्।

डोमराजानकोगाजमेरः शृङ्गारभट्टकः । एते विरुद्धाम्तनाजौ बद्धाः पापिजनैर्हताः ।
प्रतीहारपतेः सेना प्रनष्टा पुरमाविशत् । दिनद्वयमयोषित्वा सा प्रयाता यथागतं ।
तादृशे तनये वीरे निहते सङ्गरेऽरिभि । काचचक्रस्य तद्दुःखात् कालुष्यमगमन्मनः ।
सेनान्यं दुःखितं वीक्ष्य ताजचक्रादयोनिजाः । अवोचन् समये चास्मिन् दैन्यं मा संश्रयेश्वर ।
निर्ययावथ चक्रेशो योद्धुं मार्गेशसैनिकान् । पारावारस्थितान् कोट्ट पुत्रशोकादविक्लवः ।,
युयुत्सौ काचचक्रेशसैन्ये रिपुबलैश्चिरं । याम्यादीनतयाभूवन् किंकर्त्तव्यतयाकुलाः ।
मार्गेशाः ख्यातवीर्य्यास्ते वैरिनिष्ठस्य चक्रिणः । पौरुषं वीक्ष्य खानेन पुनायातादिगन्तरं ।
यथागतं गतेष्वेषु ससैन्येषु नृपान्वितः । विजयी नगरं प्राप चक्रेशः शोकविक्लवः ।
वीरं धीरं गुणज्ञन्तं महायोधपुरःसरं । मल्लेकोदौलतं ज्ञात्वा चक्रेशोऽभूज्जयोज्झितः ।
समस्तं ग्रामराष्ट्रादि पुत्रसम्बन्धि धन्विने । ददौ दौलतचक्राय भ्रातृपुत्राय स प्रभुः ।
वर्षेऽष्टानवते राजपुत्रमाजग्मुरध्वपाः । हुसेनखानमादाय चटिकाशारपर्व्वतात् ।
तामसीमस्गास्थाने स्थापिते सैनिकेऽध्वपैः । मल्लेककाचचक्रस्य बलं सन्धपुरेऽविशत् ।
विज्ञातचक्रिवीर्य्यास्ते मार्गपाश्चन्यसैनिकाः । गिरिमार्गादवारोहन्नाधर्ग्रामेषु केषुचित् ।
अध्वेशसैन्यात्तद्दैन्यान्निर्गत्याशिश्रयद्द्रुतं । सोमराजात्मजएदराजानश्चक्रिणश्चमूं ।
तच्छ्रुत्वा तेऽध्वपाः प्रत्यागतास्तत्पर्व्वताध्वना । आशापिशाचिकां त्यक्त्वा मित्रद्रोहात्सुविक्लवा ।
मार्गेशवाहिनी मित्रद्रोहाख्यानशिलोच्चयात् । विशीर्णा शतधा याता सम्बद्धा वाद्यपल्लवे ।
हुसेनखानः सोऽस्वस्थोमार्गे पञ्चलमागतः । आरुह्य शिविकां तूर्णमानीतोनिजपार्श्वगैः ।
कश्मीरगानथ हत्वास्य चान्यकर्म्म स्तताजिरे । शयितः पित्रुपार्श्वेऽयोगर्त्तेऽमात्यैर्महात्मभिः ।
शस्त्रेण ये वारयितुमशक्ता वैरिणोऽभवन् । नखैरपास्तभाग्यानामुदये काचचक्रिणः ।
प्रतीहारकुलोद्भवचन्द्रोमल्लेकश्चज्ज्वरः । ज्वालाभिर्वाह्यदेशेऽत्र तत्काले पञ्चतां ययौ ।
आनीतास्त्वक्रिणा मार्गपाब्दालसुहरादयः । यौनसम्बन्धन्यायेन कश्मीरान्निविशस्ततः ।
तथाहि लुहराध्वेशः स्वसुतां परिणीतवान् । मल्लेककाचचक्राय शक्रायेव पुलोमजां ।
मल्लेकाब्दालकायाथ चक्रेशः स्वसुतां ददौ । परिणीत्यचिरोत्पन्नामिव स्नेहतरङ्गिणीं ।
श्रीमता ताजचक्रेण स्मरेणेव रतिर्यथा । उद्वाहिता मार्गपतेरब्दालस्यात्मजा तदा ।
ततः काञ्चनचक्रेण राष्ट्रधापैः क्रमागतैः । महद्भिर्दानमानैश्च मार्गेशानां कृतार्हणा ।
अन्वहं वर्द्धिते प्रेम्णि मार्गेशैः सह चक्रिणां । बन्धुना रिगचक्रेण दैवाद्दूरीकृतस्तु सः ।
काम्भोजयवनेशेन वाभोरेण विपाटितः । तदैव हस्तिनापुर्य्यामिभ्राहैमानृपेश्वरः ।
तद्द्रोणात्यरजोध्वस्तान प्राकाशन्त कुत्रचित् । आशागजपतेर्वीररत्नानामनुयायिनां ।
मार्गेशदीपयत्रे शस्नेहपूर्णाविकारितः । कर्णजपाम्बुपूरेण रिगचक्रालिमरयोः ।
तद्रूपोत्थानलज्वलन्मनसश्चक्रिणः कृताः । रिगचक्रनिरोधाख्यजलाप्यायेन शैत्यता ।

तृतीयेऽब्देऽश्वपाशो तु निचिहाशक्रिणं प्रति । आलेमेरकृताश्चामाधिरोद्धारं न्यवीविशः ।
विदित्वा तादृशेद्वृत्तं मन्त्रयित्वा महीभृता । न्यविशश्चकृप: सैन्ये योद्धुं स्वं जालद्रगवे ।
असाध्यास्मान्मदानाथैस्तङ्कटाउङ्कटारणे । न शेकुश्चक्रिसैन्यान्त: केनापि विनिवर्त्तितुं ।
शलस्थलपादडादिदेशेष्वश्वसैनिकैः । सयुध्य शतशोऽहानि निर्भयश्चक्रिपोऽभवत् ।
रात्रौ नक्रबलाघाते लहरे याटिकातलं । भूपाले काचचक्रेशोवाह्यदेशे भयाद्गतः ।
विरोधमन्वातसाया आलेमेरेण धीमता । ता: पुष्पिता: पल्लविताश्चकेशाश्वेशभूमिषु ।
छिन्दुवाटं प्रयातेऽस्मिन्नुग्रे मन्त्रिणि भूमिभृत् । साम्राज्यमकरोद्देशेऽश्वेशमन्त्रिभिराद्दृत: ।
वहिश्चक्रेश्वरेणात्र सामन्ता: करदायिन: । श्रीजैनशाहवद्रीत्या कृता: स्वबलशालिना ।
ताजचक्रादयोवीराभ्रातरोलोहरादिषु । आहवे मुग्गुलान् हत्वा चक्रु: स्वं सफलं वय: ।
दुश्चेष्टिते विचिन्त्यात्र युवराजस्य चक्रप: । खानमेस्कन्दरं तं स दुरोधाजगरमिव ।
तादृक् साहसिकं वीक्ष्य चक्रेशं भूमिपोऽनयत् । चतुर्थेऽब्दे शुचौ मासे काश्मीरास्तं दिगन्तरात् ।
पिता भ्राताथवा पुत्रोराज्ञां राज्यजिहीर्षया । शत्रु: कथितालोके किं करोत्यपरोरिपु: ।
इत्थं विदितभूपालचरितात्रश्वपाशत: । ससैन्या: प्रययुर्वाह्यदेशं कीचाश्रमाध्वना ।
शत्रुश्येनं समादाय शान्ते चक्रिपतौ नृप: । राज्यं निष्कण्टकं मेने परितोषमुपाययौ ।
खानस्कन्दरोराजभृत्यैर्नीतोनृपालयं । अपुनर्दर्शना: कुर्वन् श्यामानेत्रोत्पलैर्दिश: ।
नृपादेशादथ क्रूरानेत्रोत्पाटनमञ्जसा । श्येनादिव कुरङ्गाय व्यधूराजात्मजाय ते ।
व्यधूराजतनूजाय कुरङ्गायेव सारसा: । तत्क्षणे या व्यथा तेन प्राप्ता वक्तुं न पार्य्यते ।
तं विना नृपनिर्दैन्यांस्तान् क्रूरान् राजसेवकान् । पित्रो: शापेनु फलितोधनलुब्धस्य तस्य वा ।
ज्ञात्वाज्ञया श्मसीनानश्वेशांश्चक्रिराट् तत: । गत्वा वराहमूलान्ता ऋद्धीनगर्य्यां न्यवीविशत् ।
पारावारात् समागत्य तत्रान्योन्यबलद्वयं । व्यधाज्जनवधं घोरं जयाजयपरीक्षया ।
गिरीनुल्लङ्घ्य यातोऽथ चक्रिभ्रातृसुतोनिशि । मल्लेकैदोलतेमार्गेपश्चान्देशान्न्यवारयत् ।
असमर्थोऽध्वना यातुं सेयामेरोऽश्वपायणी: । मार्गे पञ्चलमायाताश्चलिता: केऽपि सायुधा: ।
अदाश्वेषेषु मष्टेषु यातेष्वेवं वहिर्भयात् । स महम्मदशाहोऽगान्नगरं चक्रिभिर्वृत: ।

धत्ते मुदं जडमति: शमितारिवर्क्रिस्तावच्छुदेति निलयाद्विषमोऽश्विरस्य ।
ऋद्धोदशादनुपति: स्वसुतादवाप साम्राज्यभङ्गमहहो घटना विधातु: ।

तथाहि भूभुजानेन गजाधीशनिवेशने । पुत्तरश्चाहिमाखानोनोविन्दत्वाभरत्पुरा ।
तुरुष्काहवजातेन विधूता शतधा चमू: । याता तज्जीवरक्षौघयुता नौरिव सागरे ।
तराहववधाम्मुक्ताभाविराज्यादयात्तत: । खान: स प्राप काश्मीरान् पितृस्नेहविवर्द्धित: ।
प्रादुर्बभूव राजानं प्रति राज्यजिहीर्षया । अस्मिन्नवसरे चक्रपतेर्दुष्टविपूषिका ।
राजान्तरङ्गाथेशश्चादुष्टरोगान् भिषगिव । मल्लेकलद्दभट्टादीन् कारागारे न्यपातिपत् ।

ताजचक्रालये बद्धस्ताजमेरोनिजानुगैः। विमुच्य रचितोराजे नीला चित्रोदिगन्तरं।
तदेपभ्यादिवाग्दोषोपरागादाहरोत् क्रुधा। मह्मादशाहमानुत्तं चक्रराज्ञमिनैर्दिनैः।
इत्यमेकादशाब्दान स दश मासान्दिनानि च। रचिला काश्यपीं राजा मह्माद्स्खलितोऽभवत्।
धर्मः फलति कालेन सद्यः पाकोहि सोऽभवत्। खानखान्ध्याख्यया याभूद्राज्यभ्रंशान्नृपस्य सा।
गङ्गोडाख्य खशस्थानं प्रहितोऽथ स चक्रिणा। दत्ता न्यायकखव्यादीन् क्रूरान् रचिजनाल्लिजान्। २३॥

॥ इति महम्मदशाहराज्यभ्रंशः ॥

जगत्सृष्टिस्थितिध्वंसहेतवे वृषकेतवे। भवाब्धिसेतवे ब्रह्मविष्णुरुद्रात्मने नमः।
अथ काञ्चनचक्रेण पुत्रोमहम्मदभूभुजः। एभ्राहमशाहइत्याख्यां कृत्वा राज्येऽभ्यषिच्यत।
स्वमन्त्रिपदवीं दीप्तां चक्रे चक्रेश्वरस्ततः। स्वीकृत्य राज्यतन्त्राणि इब्राहिमस्कोद्भवैर्धनैः।
नाथामदमुखैराद्यैराजयोग्यैर्न्ययोजयत्। अनुजांस्ताजचक्रेशमेयामिरादिकान् स्वकान्।
बाह्ये चाब्दालमार्गेशोदिशोऽपि मुग्गुनेश्वरं। सेवां मार्गयितुं मेर्जबाभारं प्रययौ रुषा।
आकारेङ्गितवाक्चेष्टासम्पूर्णं वीक्ष्य मार्गपं। क्षणं तुरुष्कराजोऽभूद्विस्मयानतकन्धरः।
तुरुष्कभूपेन ततोज्ञाला मन्त्रिवरस्य तं। सहस्रमह्मा वीराणां सेनास्मै प्रतिपादिता।
इत्थं प्रवृद्धां वार्त्तान्तां देशे पञ्चमहायने। वैशाखे श्रुतवांश्चक्रपतिर्विक्रमशोभितः।
स्वःक्रीडामिव कुर्वन्तु भूमौ चक्रिषु मार्गपाः। मल्लिकाब्दालनुहरमार्गेशाद्यामहारथाः।
गिरीनुल्लङ्घ्य वाह्नेलात् कश्मीरान्निविशङ्कितं। शिखालभेगमह्मादखानादिमुग्गुलैर्वृताः।
फनाहशाहजं खानं नाजीकश्चाग्रयायिनं। कृत्वा निविष्टाः सन्नद्धाः प्रतापपुरधन्वनि।
श्रुत्वैतच्चक्रपः सेनां नीलाश्वे स्वां न्यवीविशत्। सैन्यद्वयोद्धतावीराः स्वामिभक्तिमदर्शयन्।
विपक्षपक्षिभिश्छन्ने स्वेच्छसैन्यविहायसि। विहाय कम्पदं यातुं नाशकुन सपत्रिभिः।
ततश्चक्रपतिं दूतः प्राह मार्गेशवाचिकं। भोभोश्चक्रपते वाह्ये सामन्ताः करदायिनः।
हताश्चेन स्ववीर्येण सर्वैः पञ्चभिरावृतः। हतोगजपतिः श्रीमानेभ्राहिमोबलोत्कटः।
तस्य मेर्जवाभारराजस्यानुचराइमे। मया नीताः सहायार्थं सन्नद्धोऽस्तु भवान् रणे।
इत्युक्ते लेखहारेण चक्रेशोऽन्वबदद्मुं। द्विषो न देशः काश्मीराः प्रतिष्ठाना वयं न ते।
फलपाकीमतोदेशान्मुग्गुलानां महौजसां।
अथ वीरासहोजस्वामहावीर्याधनुर्धराः। एभ्राह्मखानधेरङ्गमेरमन्नेकताजकाः।
तथा मार्गेशपश्चात्तु मल्लिकनुहरादयः। रिगचक्रोयमलेकोघेच्छाशिखिभिगादयः।
कुरुपाण्डवसैन्यस्य युद्धं व्यक्तुमिवोद्यताः। निर्ययुः समरं वीराः स्ववाक्यजदर्पिताः।
रिगचक्रोऽथवीरेण शक्तिः चिता च वैरिषु। प्रवृत्ताद्भुतवीरोऽपि ताजमेरस्य मत्सरं।
मेरसेरङ्गचक्रेण प्रहिता करवालिका। रिपोर्नुहरमेरस्य याता पुष्पवनोपमां।
एवं सवीरैरन्योन्यं प्रकीर्य समरम्बरं। स्ववीर्यस्त्रगनाभ्युपत्नीगन्ध्याकुलितं कृतं।

ततः स्वसैन्य. सेनान्तस्ताजचक्रेश उद्ययौ । वातोद्धूतपताकाभिस्तर्जयन्निव वैरिणः ।
रणः प्रवृत्ते तत्र चक्रमार्गेशसैन्ययोः । आगच्छ जहि तिष्ठेति शब्दोऽभूद्धटमङ्गये । १८०

समरोद्धतमेत्य ताजचक्रमवदन्नूहरमार्गपस्तमेत्य ।

कुरु युद्धं किमतः परं किमन्यन्ननु मे स्वामिदशासु साध्यते तत् ।

तन्निशम्य चिरं युद्ध्वा वीरैर्मल्लिकताजकः । शिश्रिये वीरशयनं नाकनारीविराजितं ।
कीर्त्तिशेषं गते तस्मिन् परे चक्रिसहोदराः । मध्याममल्लिकसेरङ्गमेराद्यामुग्गुलैर्युताः ।
स्वसैन्यं निहतं दृष्ट्वा चक्रेशोऽल्पबलान्वित । खशालयं ययौ भीत्या शोकेन च समाकुलः ।
अथ मार्गेश्वराजित्वा मल्लिकाब्दालकादयः । विविशुर्नगरं लोकानाश्वासन्तोभयाकुलान् । १८५
गत्वा नृपाङ्गने सर्व्वे छत्रचामरशोभितं । प्रददू राज्यतिलकमब्देशाराजसूनवे ।
अथ नाजोकशाहेन पित्र्ये सिंहासने श्रिते । प्रहर्षाकुलिताउच्चावचाः सर्व्वेऽभवंस्तदा ।
गता जमात्यमर्गो सनृपास्तेऽथ मन्त्रिणः । मल्लिकाब्दालकस्त्वीश आलेमेरस्य चापरः ।
मार्गेशलुद्दरस्त्वीशोरिगचकस्य चापरः । विभक्तार्थं चतुर्भागैस्तैश्चतुर्भिरिदत्यभूत् ।
खशालयस्थं चक्रेशं विश्वस्तैर्मेहतात्मभिः । लेखहारस्तमाह स्म मार्गेशमुखशासितं । १९०
भोभोश्चक्रपते स्वामिभक्तिज्योत्स्ना भवादृशैः । दुर्मन्त्रिभिरमात्यानां विमला मलिनीकृता ।
यस्य वालस्य साम्राज्ये राज्यकार्य्येषु मन्त्रिणः । मद्धाजवयस्त्वमन् स वृद्धोभवता कथं ।
रवेरावरणं मूढः कुड्येन विदधाति कः । इत्थं दूतमुखाच्छ्रुत्वा मुमोच नृपतिं रुषा ।
ततोमल्लदशाह. स गत्वा लोहरमासदत् । पूर्व्वोर्व्वीशवद्रक्षाशुल्कादमपि चाग्रहीत् ।
नीतिज्ञोमन्त्रयित्वाथ मार्गेशैर्मुग्गुलैस्ततः । विसर्जयामास नृपः संमान्यैतान् स्वकम्पदं । १९५
उल्लङ्घ्य लोहरं प्रापुस्त्वरुकाः स्वनिवेशनं । मल्लादशाहं संलेभे आलेमेरश्चिरं प्रभुं ।
हेमन्तमतिवाह्याच वसन्तमिव तं नृपं । कश्मोरोपवने भेरामार्गेशानुमतोनयन् ।
राज्यं कृत्वाथ वर्षैकं दशम्यां नाजिकोनृप. । ज्येष्ठशुक्ले नृपात् प्राप यौवराज्यं महम्मदात् ।
पञ्चेऽब्दे मल्लदः शाहोऽभिषिक्तः सचिवैः शुचौ । राज्ञे खशालयान्मुक्तोभूयोजातदवाद्भुतः ।
दिनं भेरेजशाभार: स प्रयात. स्वपुत्त्रयोः । दत्वा स्वविभवं कामराणहोमायपेस्तदा । २००
सप्तमेऽब्देऽश्वपे. सार्द्धं युद्धेच्छुः काचचक्रपः । भीम्बारवामादगमत् ससैन्योऽथ दिगन्तरं ।
याति चक्रपतौ वीरे ततः पश्चिमदिग्वधू । रतिहेतुरया केतुं मूर्ध्नि नियमधार्यत ।
तदैव कार्त्तिके शुक्ले मल्लेमाख्यस्तु भूपति । मेरेजकामराणस्य कश्मीरान् जेतुमाययौ ।
शिशालभिगमल्लोदखानादिमुग्गुलैः सह । कुर्व्वन् दश दिशः पूर्णाशर्ङ्ग्रिः प्रर्सर्मलैः ।
श्रुत्वा मल्लदशाहाद्याश्चक्रेशं गोप्रमानयन् । साहाय्यकार्यमब्देशैरा ष्टधोपहताईवं । २०५
सद्वैरैर्च्चमराणां स्वेच्छामगरमाविशन् । काश्मीरिकाय दुर्गेषु स्वबलानि न्यवीविशः ।
भयात् पौरजने याते गिरिगह्वरवर्त्मसु । वीरेषु सैन्यशाज्ञ्यात् प्रनष्टेषु च तत्र तु ।

शून्यं पुरवरं दृष्ट्वा सुगुलास्ते क्रुधादहन्। गृहाणि राजधानीश्च कुददीनविलुण्ठकाः।
दुर्गेभ्यो निर्गता वीरास्तुरुष्कैराहवेच्छया। स्वेच्छया प्राणसर्वस्वं विक्रीय यमसादधुः।
ग्रामेषु नगरे राज्ये तुरुष्कैर्निष्कृपैर्हताः। सहस्रसङ्ख्या लोकानां लुलुच्यवधकारिभिः॥ ११०
ततः काश्मीरिकैर्वीरैर्मार्गेष्वाक्रमिषु ते। अर्काशुभिस्तमांसीव सन्ध्ययापासितादतः।
॥ इति तुरुष्कोपद्रवः ॥
मुक्तास्ते साहसाद्वीराः खण्टहेषु स्थितिं व्यधुः। मार्गेशानादरत्रस्तः काचचक्रोवध्विर्ययौ।
वर्षेऽष्टमे शुचौ शूरपुरात् सोऽप्याययौ पुनः। शस्त्रं प्रतिहतं ज्ञात्वा वाह्यं यातौ यथागतं।
मार्गमासेऽत्र शरदि कास्कारोयाश्च मूचराः। मेरोजहैदराद्याः श्रीमेद्खानसहोमतः।
हयारोहसहस्रैर्द्वादशभिः परिवारिताः। काश्मीरानायर्युर्नेतुं श्येनादव विहङ्गमान्। ११५
कोटाङ्गणं गमिष्यन्तश्चागच्छन्तो नृपालयं। प्रविशन्ताभवन्नीत्यं श्रुत्वा दुन्तोविपेदिरे।
तुरुष्कोपप्लवाल्लोकैः कास्कारोपद्रवोमहान्। श्रमायि सूर्य्यग्रहणं चन्द्रग्रासादिमिष्यते।
चलिते सकले जीवलोके वेश्मावलिस्ततः। शरराशिरिवोच्छ्रायशून्याभूद्भयदायिनी।
तस्यां दाहक्रियां कर्त्तुं तीव्रवह्निप्रदायकाः। सेकन्धरनहाराजधानीं रम्यामतेजयन्।
नीचावचष्टहैर्लक्षसंख्यैर्दग्धैः पुरोर्व्वरा। जाता श्मशानभूवत् सा दग्धकाष्ठभयङ्करा। १२०
राजधानीदयं तादृक् लभ्यते कुत्र भूमिपैः। सुधादार्व्विष्टकाचित्रैः कोटिसङ्ख्या व्ययीकृता
श्रीजैननगरे दिद्दामठे चाग्निं विना कृतं। राजधानीदयं भूमुत्कृतमिव तत् स्थितं।
वेतालसाधनायुक्तादिवासन् सुग्गुलाधुवं। लब्धं यत्सद्मनिहितं गुप्तं पौरधनं तु यैः।
जलावरणयुक्तासु भूपभूमिषु शिश्रियुः। काश्मीरिकाश्च मूनायाश्चाश्रयान् स्वेच्छया।
चिरोइारञ्च हाज्येऽङ्गकोट्टं चक्रधरं तथा। श्रुत्वाभ्यवाहयन् मासत्रयं चेकैः प्रयुध्य ते। १२५
दैन्यरूपेण खःमेन स्थितांश्चक्रधरान्तिके। काश्मीरिकान् प्रति कृतं युद्धं निष्फलमभ्यगात्।
बन्ध्यमप्यभवद्युद्धं कृतं काश्मीरिकान् प्रति॥ इति वा पाठः॥ ;
खिलीकृतास्तुरुष्कैस्ता भुवीमडवराज्यगाः। हत्वा फलसमृद्धिं तां हत्वा ग्राम्यजनान् क्रुधा।
ये याता नीपु तीर्त्वा संखयाश्रमार्जिभूमिषु। सवालवृद्धाः सुखिनः स्वायुःशेषेण रक्षिताः।
जलुच्योपप्लवे पूर्व्वं तथा कज्जलमङ्गरे। क्षोभोऽभूत्ताद्गृशे देशे कुकृत्यात् पापिनां विशां।
चक्राधारादेत्य भूपेन्द्रयुक्ता भीमादेवीसन्निधौ सन्निवेशं।
चक्रुस्तीर्त्वा लेदरीवामपारं चेक्रशाद्यामार्गपाश्चाहवाय। १३०
खानरस्कन्दरोमेर्जाहैदरोऽन्ये महारथाः। काश्मीरिकान् प्रति ययुः ससद्धास्तत्र संयुगे।
मार्त्तण्डपादमूले तत्राहैयुर्व्वलदयात्प्राणान्। मल्लेकालकहोसनमेरमिश्राद्याः क्रमात्मेरत्य।
फास्कारीयाः प्रवीराय केचिद्युद्धा दिवं ययुः। सफलं स्वत्यः कृत्वा मल्लेकाद्यादिभीरणे।

रे मूढाः कुरुत सदैव देवसेवां तान् सर्व्वान् भवविभवान् विहाय लोलान् ।
दृष्ट्वा तन्मरणमथालिमेरनाम्न. सङ्ग्रामे मुगुलवरैर्हि देशहेतोः ।
विद्रुरोपमिते तस्मिन्निहते दुद्रुवुर्भटाः । काश्मीरिकाः कृताश्वाघाश्चक्रेशाध्वेशनायकैः ।
कथन्धनर्त्तकायत्तनरा वेतालराक्षसाः । महामांसाशनव्ययाजन्यव्याप्तादृवाहवे ।
रणोद्याने वीरपानमदोन्मत्तेषु तेष्वथ । हतशिष्टे चमूयुग्मे स्वाश्रयेषु न्यविक्षत ।
अथ चक्रेशमार्गेशौ नृपादेशात् समेत्य तैः । मुग्गुलै. सह सन्धानमकार्ष्टां पौरुषोर्जितौ ।
नवखड्गानि वस्त्राणि कतिकसोदहसलतैः । तोक्सं तन्नापयादाय मुग्गुलाभूपतेः पुरा ।
नृपमुद्राङ्कितं पत्रं गृहीत्वा मौसुवावरैः । प्रत्यायाता. स्वसैन्ये तत्कुर्व्वन्तो हर्षनिर्भरं ।
धाटीभिः पामरानीताः स्त्रीपुमान्पुष्यदन्तिकात् । मुक्ता हसनमेराद्यैरानीताः करुणापरैः ।
ततोऽब्दे नवमे ज्यैष्ठे स्वदेशं मुग्गुला ययुः । बलात् पौरश्रियं साम्नादाय राजसुतामपि ।
इत्थं ऋतीघरोदेशे पीडाभूत् पापिनां विशां । पूर्व्वपश्चिमतः केतोरनिशन्दिवि दर्शनात् ।

॥ इति कास्कारीयोपद्रवः ॥

पक्वशालिवरस्फातिपूर्णक्षेत्रेषु सर्व्वतः । नभसस्तारकाः पेतुर्भूयः केतुरदृश्यत ।
सर्व्वद्विगीर्णेऽन्नराजि तदुपद्रवरक्षसा । उदजृम्भन्महाघोरोदुर्भिक्षोऽन्नपतेरिपुः ।
निविष्टे मण्डलेऽमुष्मिंस्तस्तत्सैनिकास्ततः । क्षुत्पिपासादयोलोकपीडकाबलवत्तराः ।
सहस्रदशभिर्निष्कैर्लभ्या मूल्येन खार्य्यभूत् । धान्यस्य गतिमादातुं कान्यस्य धनिनोविना ।
भर्तृभक्तिं सुतस्नेहं शुश्रूषां पित्रोरेव च । हित्वा स्वप्राणरक्षायै चेरुः स्त्रीपुरुषाः क्षुधा ।
भुक्त्वा द्वित्रिचतुर्व्वारं क्षुधार्त्तादिवसान्तरे । अटन्त. प्रेतरूपाद्धि दृष्ट्वा भोजनवाञ्छया ।
तत्कालेऽब्दालमल्लेक्कादयः पुण्यरतास्त्रिते । प्रत्यहं तण्डुलशतैः पक्वान्नैः पुपुषुर्जनं ।
ग्रामेषु नगरे राजमार्गेषु गणनास्तु न । क्षुत्पिपासाप्रमीतानां प्रेतानामिव देहिनां ।
भक्षितं रूप्यकुप्यादि विक्रीय व्यधुरात्मनः । प्राणसन्धारणं केचिच्छाकेनाखोटपिण्यकैः ।
उपद्रवभयादेष दुर्भिक्षोपप्लवो महान् । गलनेत्रामयाद्दुष्टविस्फोटोऽप्यतिदुःसहः ।
ज्यैष्ठान्तं दशमाब्दस्य नवमाद्वत्सरादृशं । घोरे दुर्भिक्षतमसि परितः क्रान्तमण्डले ।
गुप्तिवीजोद्भवस्नेहधूपैर्दीपै. प्रकाशयन् । श्राद्धा श्रन्ननृपामात्यः सुकासोयोद्धुमाधयौ ।
यथा गोधूमकलटा ष्यधयुस्तम्भजा भुवः । कुर्व्वन्तः स्वफलै. शेषजन्तोराराचिकामिव ।
स्वबलैर्भ्रशमाक्रान्तमवेत्याश्वाधिपः स्वयं । शाखयो बलिनं कर्त्तुं दुर्भिक्षं घोरराक्षसं ।
वितत्य महतीं सेनां प्रियङ्गुशालिकोद्रवैः । यवाश्वाभिरिवाखोटैर्जिंत्वा तं स न्यविक्षत ।

॥ इति दुर्भिक्षोपद्रवः ॥

यवराजफलैः पुष्टाजन्तवोऽतिकृशास्ततः । पुनर्जातमिवात्मानममन्यन्त दिवानिशं ।
तदा काश्यमयक्षेमः स्थितिं जमपुरे व्यधात् । मस्जिलमध्यपादेशाद्राज्ञोऽभ्यर्णं विभूषयन् ।

श्वपचाकारकश्चकपतिर्मण्डवराज्यगः। मूमीरदण्डयन्मार्गपाणां ताटस्थ्यमोचणात्।
अत्रान्तरे महान्देशो देहादुष्टैरिवामयैः। खस्त्रावामाश्रयैरेतैः पीडया जर्जरीकृतः।
तदुत्थपापसन्तापाद्वैवान्तेऽब्दे त्रयोदशे। राजा महम्मदशाहोऽभूदस्वस्थो नियतेर्बलात्।
कान्तं देहं रुजाक्रान्तं श्रान्तं वीक्ष्य च भूमिपः। मल्लेकतद्भट्टाख्यं सस्नेहं प्राह मन्त्रिणं।
राजधर्म्माङ्कैः पुण्यपापैः सम्बद्धितोऽपि सन्। तथापि कायः सापाय इति सर्व्वत्र निश्चयः।
अस्मद्वंशे महीशासः शंसदेनादयो नृपाः। श्रीजैनोल्लाभदेनश्चाप्येते पूर्व्वपितामहाः।
तद्वंश्योऽहं मदीयः कः कीदृशोमत्परो भवेत्। इति चिन्ताकुलं चेतोज्वरेणाद्यापि दह्यते।
इत्युक्त्वा विरते राज्ञि मार्गेशाब्दालकादयः। आगतास्तादृशं वीक्ष्य साश्रुनेत्राश्च मब्रुवन्।
भूपास्मदपचारेण प्रजाभाग्यैरथापि ते। कायक्लेशोऽस्ति स्वस्थैव दण्डोभूत्वापराधनः।
श्रुत्वाब्रवीन्नृपस्तेषां वचोमत्तनयाः सदा। भवद्भिः पालनीयाश्च वयं यामः पराध्वनि।
आक्रन्दोऽभून्महाराजगृहे श्रुत्वा नृपोदितं। तदह्नि निष्कोश्यश्च राज्ञा धर्म्मेण येजिताः।
प्राप्ते पुष्पाकरे मासे व्ययात्तंस्यास्य भूभुजः। दातुर्जातु विपत्तिः स्यात् कृष्णपक्षे कथञ्चन।
ज्येष्ठशुक्लादिदिवसे गुरुवारे नरार्य्यमा। वर्षान् पञ्च कृतो भूयोराज्यं कृतात्मसमायये।
तस्मिन् याते दिवं लोकः सशोकोविललाप तं। हा कं श्रयाम भवति नाकलोकमुपस्थिते।
अस्मान् कोनृपते रक्षात्त्वां विना पालयिष्यति। मृगाङ्कसुन्दराकार महासेनपराक्रम।
महम्मदमहीपाल सर्व्वान् हित्वा क यास्यसि। इति सन्तापमुखरे राजद्वारे स्थिताजनाः।
संस्थितस्य नृपस्यादुर्वाष्पैरिव जलाञ्जलीन्। कर्णीरथमथारोप्य शवं हृदम्भृताजिरे।
दत्तस्कन्धाः पितुः पार्श्वे गोगर्त्ते मन्त्रिणोऽचिपन्। केन्दुकोमलशय्यासु नृपार्हं शयनं प्रभोः।
क सर्करिलभूम्यन्तस्तमोभाम्ये विवरस्थितिः। तदह्नि शोकमूकस्य लोकस्योच्छ्वासनात्परं।
धूमादि रन्धनाभावालक्ष्यत गृहेषु तत्।

॥ इति महम्मदशाहस्वर्यागं ॥

मार्गेशेन कृतामर्षः ससप्तशोऽस्य सन्त्रिभिः। शंसशाहोऽथमित्याख्यो कृत्वा पुत्रोऽभ्यषिच्यत।
नवराज्योर्म्मितं चैतं युवानं वीक्ष्य भूमिपं। सदान्तःपानुगाः सर्व्वे तुतुषुर्गजवल्लभाः।
चिरं स्व पैतृके राज्ये स्थायादिति जनाशिषः। शृण्वन् राजगृहं प्राप शंसशाहः सहानुजः।
तस्मिन् राज्यस्थिते जैनपुरान्नगरमाययौ। फाचचक्रमतो रिगचक्रान्वस्तोमहाबलः।
दृष्ट्वा वीरं समायान्तमुखभट्टान्वितस्ततः। मार्गेशशाहस्तुनः साधात् कोषाग्रसेऽध्वशान्तिकं।
प्रविष्टोनगरं रम्यं फाचचक्रः सभाजितः। नृपेण तेन सस्नेहं परपक्षविमर्दनः।
तथा फाञ्चनचक्रेण ज्ञात्वा दूरगतान् रिपून्। सवेलागर्धमाञ्जरे निविष्टोऽरिजिगीषया।
अत्यन्तिकस्थं सहितं रिपुमाकर्ण्य मार्गपाः। चमूं निवेशयामासुश्छद्म जनगदान्तिके।
महात्मा रिगचक्रेशः फाचचक्राश्वेशयोः। गत्वा प्रेरितदूतः स साम कर्त्तुमयैष्टवान्।

नगरे काचचक्रेशः क्रमराज्ये तु मार्गपाः। सन्तु सोऽहं समस्तेपामिति सन्धिं व्यधादयं।
अथ मार्गेशसैन्यस्थानानीयान्तिकमात्मनः। जैतचक्रेशमल्लेकदौलतैभ्राह्मखानकान्।
स्वबन्धून् काचचक्रेश आरुरोह जयी पुरं। निवासमकरोद्वीरो रिगचक्रालयेषु सः।
काचचक्रे स्थिते राज्ञोऽन्तिके निर्णयकारिणि। बलं बलवतां दृष्टं शौर्य्येण तु पृथग्जने।
आगत्य रिगचक्रेश, काचचक्रान्तिकं तदा। दिनान्युषित्वा ज्ञात्वास्य स्वल्पप्रेमागमत्पुनः।
मार्गेशनिकटं गत्वावोचचक्रेशचेष्टितं। सम्मन्त्र्य वीरान् सर्व्वांस्तान् सङ्घटय्य नृपाग्रगान्।
रिगचक्रः स मार्गेशं ज्ञात्वा दुष्टमिवामयं।

कश्मीरभूमौ प्रथिता अमात्याभीमार्ज्जुनद्रोणसमाररणेषु।
मल्लेकश्रीदौलतगाजखानचक्रेशमुख्यास्तु विचारदक्षाः।

सिद्धादेशात् प्रसिद्धस्य सिद्धादेशाधिकारिणः। श्रीमन्मल्लेकराजानन्तुज्यकस्य मुखाद्यथा।
विज्ञाप्यन्तेऽत्रदेशीयैः कान्दिशीकैर्बलातुरैः। सर्व्वैर्जनपदैर्दीनैर्दुरातङ्ककलङ्कितैः।
॥ तथाहि ॥ जैनशाहे दिवं याते दुर्ब्बलाबलवत्तरैः। पीडिताः कान्दिशीकाश्च जनादुर्दण्डतोगताः
श्रीभैफडामरेन्द्रेण नृपामात्येन पालिता। लालिताथ प्रजा नित्यं दुर्व्यत्रस्यानिवारणात्।
पुण्यपापपरीपाकान्मन्त्रिभिरन्तरन्तरात्। पोषिताः शोषितालोकाः सद्विचाराविवेकतः।
भानुरिव ततश्चक्रपतिर्मल्लेककाञ्चनः। उदेत्य मन्त्रिवीथौ तां नृपादेशादभूषयत्।
विचारनिरतेऽमुष्मिन्नासीने राजमन्दिरे। बलं बलवता दृष्टं शौर्य्येण तु पृथग्जने।
वैमत्यान्महतां पापादिशाश्च ततउत्थिताः। मुग्गुलान्तकदुर्भिक्षदोषास्तस्मिन् बहिर्गते।
मार्गेशाब्द्रालकानीतोमेरेजोऽगणयत्ततः। अप्राप्तानिव प्राप्तः स कश्मीरांश्चक्रिणोभयात्।
काचचक्रेशमल्लेके हिन्दुवाटे गते दिवं। काश्मीरिकाणां वाह्यानामभूत् कलुषितं मनः।
तदाकर्ण्याथ मेरेजहैधरोऽचीकरन्महान्। कुलागतमिव स्वस्यं तदा कश्मीरमण्डलं।
चक्रेशेऽन्तर्हिते भूमौ मुग्गुलादैत्यरूपिणः। विचेरुः शारदापीठे निःशङ्कमकुतोभयाः।
मेरेजमग्रुगोलस्य कश्मीरस्याप्य चान्तिकं। आययुः परदेशेभ्यो मुग्गुलाः सरघाइव।
सत्सेपु वर्द्धमानेषु तेषु यातौतवाधिका। लोचप्रतिपदापात्ता भूर्द्धता तैर्न्नियोगिभिः।
दिवानैर्वेक्षमद्ध्ये मैर्लिखिता मुगुलाघरैः। भूमिः समयराज्ञाणां स्वल्पाप्याय मजाखपि।
इत्येव भूर्नभोमासि माध्वीवाय व्यकम्पत। द्वाविंशेऽब्दे जनाक्रोशान् हताप्यायानवेक्ष्य सा।
प्रनष्टमुग्गुले देशे भूमीकुरखिन्नोजनः। काश्मीरिकाणां विजयाद्भूयोऽभूदर्थनिष्ठया।
तुरुष्कशाहपर्यान्ते काश्मीरामप्रयशंस्तयं। वेशोभूमिर्भाजनस्य चिकित्सादण्डमद्भुतं।
दृष्ट्वा शुभोऽपि लोकोऽयं मातुषद्धृदयाहतां। दुर्ब्बामनां महावैद्याचिकित्सां शास्त्रगामिव।
दुराचारादियं भूमिर्वायुपाकेव भूरिशः। चिंशेऽब्दे चाश्वयुङ्मासे कम्पिता स्वामिनोमुङः।
स्वतन्त्राण्मद्दौदामामुके मोचप्रतिपदे। मोहाप्यतिथिधस्काराद्बोधर्म्मेण शाम्यति।

खुञ्यहाज्यकयोसेफचक्राद्यैर्मुगुलान्वितैः। साम राजपुरीराजा गाजशाहभयात् क्षतं।
नौशहारस्थिते शाहनाजीके मुगुलास्तथा। ऊरुस्ते सन्धिबन्धेन कालं दुर्गादिकर्म्मभिः।
विसृष्टोगाजभूभर्त्ता दूतैशेमुखबाचिकं। करबाङधरादीनां प्राह गत्वा सभान्तरं।
भोभो म्लेच्छपते कस्मादकस्मात् प्रबलैर्बलैः। आयाताः केन विश्वस्ता अज्ञातनृपविक्रमाः।
अथवा साकनी शैले शाहियुद्धं नु विस्मृतं। बलद्वयवधात् पापं युष्माकं परिणंस्यति।
यदि शक्ति. किमेतैः स्याद्दुर्गग्रन्थ्यादिकर्म्मभिः। विधिर्द्ददाति यद्यस्य स तत्फलमथाश्नुते।
चक्रिराजानकाद्यावास्थिताश्शंसहराद्दूतः। देशाः के मुगुलाः के वा खुञ्यहाज्योभविष्यति।
इत्युक्तो लिखहारेण खुञ्यहाज्योऽब्रवीदिदं। शासनमकुराख्यानं मुग्गुलेशस्य वश्म्यहं।
चक्रेशभूपं दातारं गुणज्ञं ध्वन्विनां वरं। विचारे नौशरोवानं कया स्तुत्या स्तुवीमहे।
काश्मीरिकाणां देशांशान् म्लेच्छानां पारितोषिकं। दत्त्वा मुग्गुलराजस्य चेतःशुद्धिर्व्विधीयतां।
अथवा देशधाटीभिः किं स्यात्प्राक्तनमेतया। युद्धेन वीरहानिः स्याज्ज्ञाता सर्व्वस्य भूमिपः।
दृष्टाः श्रुताः स्मृतानेव गाजशाहस्य मन्त्रिभाः। योद्धुं दिगन्तरं कोनु यातएतत्परः समः।
दूतात् प्रत्यागताच्छ्रुत्वा क्रोधविस्मयवान्नृप.। आरूढोऽद्रितुङ्गास्य समारूढोमहद्यशः।
श्रीमच्छृङ्गारमसेकश्शाणेमसेकइत्यपि। खानअह्मदयोसेफहभशाहादयः सुताः।
खानः स शाहिभाजोऽपि हुतशान्यैश्च मन्त्रिभि.। स्वस्वसैन्यसमुन्नद्धैः कश्मीरेन्द्रविभूषितः।
सहस्रैरश्ववाराणां वाजिभिर्व्विगराजिभि। शार्ङ्गखड्गगदाप्रासशक्तितोमरभूषितै.।
नागरअगतोफाकनामाश्मग्नअगायुधैः। पदातिलक्षैः सन्नद्धैः शत्रुसेनान्तिकेऽवसत्।
अन्तिकादन्तिकं व्यूढे निविष्टे सैन्ययोर्द्वयेः। पारावारगतायोधारणरङ्गमभूषयन्।
शामदुन्दुभिनादेन कर्णताडिय हेषकैः। गजाश्वानामग्नरअगर्जनैस्तर्जयन्निव।
अथ पत्तिसहस्रेण पुरोगेन प्रभूषितः। प्रवीरोगाजशाहोऽत्र समरारम्भमग्रहीत्।
दृष्ट्वा वीरं तमायान्तं केचिन्मुग्गुलपुङ्गवाः। मनःधैर्य्यमादाय शनैर्युद्धाय निर्ययुः।
नृपाग्रे म्लेच्छवीराणां स्वामिभक्त्या पुरोगताः। मुण्डानि चिच्छिदुर्युद्धे शरावानिव चक्रत.।
रणे वैभवधामेन प्राणदानेन तत्क्षणं। विवाहोऽजनि म्लेच्छीणां पद्मवाणेन योषितां।
वीरमतं पुरोगामामहुतस्य तपः प्रभोः। विचिन्त्य मुग्गुलाधिनुर्द्धतसेपायथागतं।
स्वप्राणवेतनैर्योद्धापरेऽप्यधरहारिणः। विजित्य कीर्त्युपचयं स्वर्यानसादनदयात्।
पत्नीनामद्भुतं शौर्य्यं वीक्ष्य म्लेच्छवनान्तरात्। धाव्यातं कृष्णकुप्याटि मद्राक्षानुपद्वीरतं।
स्वसैन्यापचयं शत्रुसैनोपचयमेव च। विचिन्त्य मुग्गुला याता वाणिजाइव वेतने।
अथ गाजपुरीराजा पापाण्डाम् व न्दापिन.। एत्य प्रत्यायथौ गाजशाहः सुविस्मोर्जितः।
नित्यजेता चिरं प्रिया राजम् सापाव्यदीवितः। शरद्मिवोजमाच्छृग्तम् काश्मीरान्नृपोऽविशत्।
वेदैः षट्शास्त्रैः पदक्रमश्रुतैर्व्वेदान्तसिद्धान्तैस्तर्कव्याकरणैः पुराणपठनैर्म्मन्त्रैः पञ्चागमैः।

शैवैर्व्वैष्णवसौरबौद्धसहितैश्चित्रैर्व्विहारैर्म्मठैर्द्राचाकुङ्कुमशस्यशालिनिवहैः पुष्पैः सुगन्धैरपि ।
पौराणश्रुतितर्कशास्त्रनिचयैः क्रिश्चाग्निहोत्राङ्कितैर्व्विप्रैर्ध्यानतपोजपादिनिरतैः स्नानार्चनाद्युत्सुकैः ।
नागैः कोटियुतैस्तथा हरिहरैर्गन्धर्व्वविद्याधरैः स्वर्गस्थाम्लतखण्डशीतलजला कश्मीरभूरुत्तमा ।
चत्वारिंशदथापि पञ्च गिरिशाः षष्टिश्च चक्रायुधा ब्रह्माणस्त्रयदृत्यनादिनिधनादाविंशतिः शक्तयः ।
नीलादीनि शतानि सप्त फणिनां तीर्थैकसाङ्कोटयोविख्यातास्च चतुर्दशोत्तमतराः कश्मीरभूमण्डले ।
अष्टादश चमूभर्त्ता योऽभवद्धस्तिनापुरे । वीरोयुधिष्ठिरभ्राता भ्राता धुर्य्यदृढार्ज्जुनः ।
स दिग्विजयरागेण भुवं जित्वाखिलामिमां । पातालमविशद्वीरशत्रुखण्डनशङ्कितः । १७५
तत्र नागपुराण्याशु जित्वानभिमुखो रणे । प्राप्य नागसुतां वीरोवर्षं तत्राभजत्सुखं ।
आगतोऽथ गते काले बहुले पुनरप्यथौ । दिग्जयाय जगामाशु स्वपुत्रेण हतोरणे ।
जीवायितस्ततस्तूर्णं परिज्ञाय स्वभार्य्यया । दृष्टश्च सुतवीर्य्येण तेनैव समुपाययौ ।
अथ कालेन नीतेऽस्मिन्नर्ज्जुने तत्सुतौ भुवं । विभज्य दधतुः सर्व्वां परीचिद्भ्रुशाहनौ ।
आभीरदेशे निवसन् सार्द्धं शतमसौ समाः । षोडशोनं शतं यज्ञे सुतानां वीर्य्यशालिनां । १८०
तेषामपि सुतास्तद्वत्तत्सुतांश्च सहस्रशः । आसंत्यज्य पुनर्योगी मातामहपुरं ययौ ।
ततस्तेऽतिबलोन्मत्ताः परस्परविरोधिनः । प्रजानां विदधुः पीडां मर्य्यादाश्च न्यवारयन् ।
आज्ञातिक्रमणात् पित्रा शप्तास्ते बलदर्पिताः । स्वनाशायाखिलान् देशान् धाटीभिः समपीडयन् ।
दृष्ट्वाकाशगतः कश्चित् सिद्धस्तज्जनपीडनं । विज्ञप्तिमकरोत्तूर्णं दयावानीश्वरं प्रति ।
अथोच्चचार नभसोवागेवमशरीरिणी । स्रष्टः सागरमध्येऽस्ति सात्त्विरेव यमोपमः । १८५
स गृहीतस्ततस्तेन रोमदेशे च वर्द्धितः । तेनासिना हयारूढः कण्टकोद्धरणं व्यधात् ।
सोचीकश्चक्रवर्त्ती स सर्व्वभूतालिजित्वरः । श्रियमाणो न केनापि दृष्टोऽभून्मित्रबन्धुभिः ।
ये लोकोत्तरकर्म्म कर्त्तुमतुलं सृष्टाः परं वेधसा तेषां तादृशमेव सोऽयं शतवाञ्जन्मावसानं तथा ।
दृष्टान्तस्तु सहस्ररश्मिरिह यत्त्रैलोक्यदीप्तिप्रदोज्ञातः केन कुतोऽभ्युदेति यदि वा कुत्रास्तमभ्येति च ।
तद्वंशजन्मा पार्थोऽभूद्दूरं गत्वा रुषा पितुः । पञ्चगह्वरभूमध्ये योगहरपुरं व्यधात् ।
तद्वंश्यः कुरुशाहोऽभूद्यः सर्व्वां दिशमुत्तरां । जित्वा स पश्चिमां चक्रे धनुर्द्देवालयं गृहं । १९०
ताहिरात्मजतस्तस्य लोचनत्रयभूषितः । यथेच्छलाभमाहात्म्ययुक्तोलोभविवर्जितः ।
त्रिकालदर्शी चादृष्टपालितोऽतिबलान्वितः । दयालुः सततं योगी वदान्यः सर्व्वशास्त्रवित् ।
तस्य प्रभावतोराज्यं कश्मीरेषूपभु[illegible] ।
कश्मीरभूमिपालानां यः स्याद्दुःखचिन्तकः । दिगन्तरीयभूपालस्ताहिराली निहन्ति तं ।
काश्मीरःपार्श्वतो तत्र राजा श्रेयोहरांशजः । इत्थेनत्प्रत्ययायैव यशाशोलोचनत्रयी ।
नास्य शत्रुरभूत् कश्चिन्नचाभो कस्य चिद्रिपुः । द्वैवीमप्यापदं लोके तपसैव न्यवारयत् । १९५
ताहिरालकुलोत्थानां नहि स्वजातियोनृपः । सोऽवश्यं प्रमदः स्वस्मादरायैव जताम्भसि ।

दिल्लिराकर्णयामास गिरं खादुत्थितामसौ । गृहाण राज्यं कश्मीरेष्विति नैवान्वमन्यत ।
शाहमेरः सुतो योऽसि तवात्यन्तनयज्ञधीः । स विहृज्य तया यस्मादात्मा पुत्त्र इति श्रुतिः ।
॥ इति ताहिरालवंशवर्णनं ॥
राज्यं नाजीकखानाय दत्वा दौलतचक्रकः । स्वयं न बुभुजे देशं निर्देशेन द्विषोपतः ।
कम्पितोऽपि च्छलोकेन नवे तस्मिन्नराधिपे । रज्यते स्म जनो नित्यं शिशिरेण मधाविव ।
नाजीकशाहे तद्राज्यं गृहीते निर्वृर्जनाः । उदयाद्रिङ्गते सूर्ये प्रातः पद्माकरा इव ।
मिलितेष्वथ सर्वेषु परस्परविरोधिषु । पुनर्ग्रामविभागेन शनैर्वैरमजायत ।
रदेरेणादयो लोका मेर्जाहैदरसेवकाः । चक्रजातिविरोधेन सदाशिरपुरेऽवसन् ।
वितस्तातीरमाश्रित्य समुद्रामठवासिनः । युयुधुर्हैदराख्येण चक्रदौलतकादयः ।
मासमेकं कृते युद्धे हैदराख्यरादिभिः । दौलतचक्रलोकेन विजयो विहितस्तदा ।
अत्रान्तरे स होमायः पातिशाहोऽभवद्भुवि । नमत्समस्तभूपालमौलिघृष्टपदाम्बुजः ।
तेन निर्वापितो राज्ञा मिथो वैरमहानलः । प्रजानां हृदयोन्माथी न दारिद्र्यदवानलः ।
अजहोमायनामा सोदरो तस्य महीभृतः । स देशं दुर्गमं शिला स्यातव्यमिति चिन्तयन् ।
किन्तु नेयामि कश्मीरदेशं पर्वतदुर्गमं । तत्र स्थितं न बाधेत मां होमायमहीपतिः ।
इत्युक्त्वा चलिते तस्मिन्नजहोमायभूरतो । कश्मीरैः सह संग्रामो बभूव नगमस्तके ।
ततः काश्मीरलोकेन पर्वतोपरिवासिना । अजहोमायसैन्यं निहतं सर्वशेनिकं ।
अथन्तु नृपतिः सम्पाति कश्मीरमण्डलं । नाजीकनृपतौ शाहाह्निन्दोहः सर्वतोऽभवत् ।
द्वितीये प्रहरे रात्रेः प्रसुप्ते सकले जने । बभूव धर्म्मोकम्पोमर्घिताभिकमानवः ।

एतादृशे कृते कार्य्ये क्रुद्धवेतालचोदिताः। गृहे दौलुतचक्रस्य पतिताश्च शिलानिशि।
अदृष्टदेवताचिह्नशिलावर्षणसङ्कुलं। राजद्वारं निशीथिन्यामभवद्दिग्मथावहं। १२५
ईदृशं प्रत्यहं केन कृतं पाषाणवर्षणं। इत्थं परस्परं लोकः कथयामास विस्मितः।
ठलमूलाभिधे ग्रामे सम्यग्ज्ञानपरायणः। अभिमन्युरिति ख्यातः साधुरासीन्महातपाः।
एकदा तद्गृहं गत्वा साधुं दौलुतचक्रकः। उवाच निर्भयं प्राज्यं कथं राज्यं भविष्यति।
इत्युक्ते तेन सोऽवादीन्निवारय मदाज्ञया। वार्षिकं ब्राह्मणकरं तेन सिद्धिर्भविष्यति।
इत्थं निवेदिते तेन साधुना म्लेच्छसत्तमः। उवाच वचनं सम्यक् शृणु वच्मि महामुने। १३०
ठलमूलाभिधं ग्राममर्पयिष्यामि तेऽधुना। विप्रदण्डं कथं म्लेच्छो वारयामि त्वदाज्ञया।
इत्थं दौलुतचक्रेन वचने कथिते सति। अभिमन्युर्बभूवासौ रोषव्याकुलमानसः।
तेनाशु ब्राह्मणकरो यदा नैव निवारितः। साधु दौलुतचक्रन्तं शशाप रोषसंयुतः।
समुद्रमध्यमासाद्य चन्द्रार्कौ ते पतिष्यतः। इति शापप्रनष्टश्रीर्ययौ दौलुतचक्रकः।
मासमेकं कृते राज्ये हमेभाभिधभूभृता। जग्राह तत्पदं लोभाद्राजखानस्ततः स्वयं। १३५
तत्प्रतापाग्निदग्धेषु सिक्ताः स्त्रीनयनाम्बुभिः। गृहेषु वैरिणां नित्यमुत्पद्यन्ते तृणाङ्कुराः।
रुद्ध्वा नवनारीणामश्रुवर्षाकुलेष्वपि। ज्वलत्यपूर्वो गेहेषु यत्प्रतापदवानलः।
अथ दिग्दाहभूकम्पान्समीक्ष्य पृथिवीभृता। पृष्टा वाक्यमिदं प्राहुर्गणकागणनापराः।
देशेऽस्मिंस्तव सम्भविष्यति महद्युद्धं समृद्धं प्रभो सङ्ग्रामेष्वपि निःसरिष्यति महावेगा च रक्तापगा।
लोकानां प्रचरिष्यति प्रतिपदं दुर्भिक्षपीडाथवा तस्मात्कार्यविचारणेन धरणीं भूपाल भोः पालय।
अथाययौ खशेनाभिर्म्मर्जेहैदरसेवकः। करभट्टारनामासौ भूयो देशजिगीषया। १४०
निशम्यैतादृशीं वार्त्तां शाजशाहिर्विनिर्ययौ। तुरङ्गमखुरोद्धृष्टचूर्णीकृतमहीधरः।
स समाश्रित्य भूपालो देशं राजविराभिधं। पदातिमार्गलोकानां समराय समादिशत्।
राजविराभिधे देशे मिलिते राजकद्वये। भीतिर्बभूव लोकानां द्विराजानामशङ्किनां।
रणे विलोक्य सर्व्वासां पत्तीनां गतिचातुरीं। बभूव वायुवत्कम्पो भीतिचञ्चलमानसः।
करभट्टारो दृष्ट्वाथ काश्मीरशरवर्षणं। स क्रुद्धः करभट्टारः पत्तिलोकविलोकनात्। १४५
अन्धकार इव प्रातः साधादरुणदर्शनात्। तस्मिन् पलायिते देशान्निर्भयो सकलो जनः।
सर्पे विनिर्गते देहात् कुटुम्बमिव तत्क्षणं। तदास्य ववृधे तेजः करैर्ज्ज्वाल मेदिनी।
विससार प्रतापश्च ग्रीष्मकाले रवेरिव। अत्रान्तरे महारोषगर्व्वगेहितमानसाः।
हन्त चक्रादयो लोकाश्चक्रुर्दुर्गमरान्तरं। सदाशिवपुरे दुर्गं कृत्वा तिष्ठत्सु वैरिषु।
दिद्दामठान्तिके तस्थौ भूपो युद्धचिकीर्षया। युद्धेऽस्मिन् हाटके स्वामिसदाशिवपुरस्ययोः। १५०
वितस्तासिन्धयोर्मध्ये वारयन्तीव सा बभौ। नदीमुखस्य भूपालो युद्धं कृत्वा महत्तरं।
सितानदीप्रवाहेषु हमेचक्रममारयत्। गते बहुविधे काले नागोचक्रप्रचोदितः।

# ॥ चतुर्थी राजतरङ्गिणी ॥

आययौ मुग्गुनुखामी श्रीकश्मीरजिगीषया । शाहश्रब्दोलमालीति नाम यस्याभवद्भुवि ।
स कश्मीरान्तरं प्राप बहुलोकसमन्वितः । तत्तदागमनं श्रुत्वा सैन्येन महता हृतः ।
आससाद स भूपालः परिहासपुरान्तिकं । कृते बहुविधे युद्धे सकले सैनिके हृते ।
शाहश्रब्दोलमाली स चचाल निजवर्त्मना । ४४५
बभूवुः समरे तत्र यवना विगतासवः । यमस्तेनाथ रक्षोघ्याजेनाधिगतासवः ।
आनीतैः समरस्थानाद्भूपालो नगरान्तरे । स्तम्भमुच्चकथासास मृतमानवमस्तकैः ।
एकदा सप्तवर्षस्य बालस्योन्मुष्णतः फलं । कृपां विहाय भूपालः करं चिच्छेद तत्क्षणं ।
चौरे मुष्णति कस्मिंश्चिन्मीनान् ग्रामनिवासिनां । बलाज्जहार भूपालः स्वर्णमुद्राशतद्वयं ।
मातुलं स्वं जिघांसन्तं यौवनस्थं प्रतापिनं । चणाज्जघान भूपालः स्वसुतं हैदराभिधं । ४५०
निहते स्वसुते तेन यौवनस्थे दुरात्मना । हतः पुत्रोऽप्यनेनेति हाहाकारो महानभूत् ।
अष्टादशाभवंस्तस्य युवराजस्य मन्त्रिणः । सुतान् जघान भूपालउन्मत्तइव राक्षसः ।
एकदा कुष्ठरोगेण बहुलेन महीपतिः । बभूव विगतोच्छ्रायो यद्गणेनेव चन्द्रमाः ।
कण्डुः कीटकृता देहे पूयशोणितनिर्गमः । नरके यानि चिह्नानि तान्यासंस्तस्य जीवतः ।
कीटोजघास मांसानि पीत्वा तत्पूयशोणिते । नरकादधिका पीडा बभूवैतस्य जीवतः । ४५५
हा तात मित्र हा पुत्र मम कष्टमुपस्थितं । इति क्रन्दितमाकर्ण्य कोनाभूद्दीनमानसः ।
इति स्पष्टमहाकुष्ठनिपीडितकलेवरः । सह संसारलोभेन प्राणांस्तत्याज भूपतिः ।
मृतस्य तस्य भूपस्य भ्राता हैसैनखानकः । निखन्य भूतले सम्यङ्निर्ममे मृतसंस्कृतिं ।
अकस्माद्भूतलं तत्र जज्वाल नरकाग्निना । धूमेनोत्पतता कुर्व्वद्दिग्भ्रितां जनसन्ततिं ।
निःश्वासइव कालेन पीड्यमानस्य भूभृतः । उत्तस्थौ सर्व्वतोधूमः सर्व्वलोकविलोकितः । ४६०
रात्रौ तद्भूतलं गत्वा पीड्यमानस्य भूभृतः । शुश्राव सकलोलोकोयमकिङ्करताडनं ।
तेनोप्तं यादृशं वीजं तादृशं लभ्यते फलं । इत्थं परस्परं लोकोवदति स्म सविस्मयः ।
वर्षद्वयान्तरे कृत्वा राज्यं पापमलीमसं । कुष्ठरोगविशीर्णाङ्गोगजशाहिर्ममार सः ।
हा कथं तेन भूपेन कृत्वा पापमहर्निशं । अल्पकालप्रसङ्गेन नाशिता वङ्गवत्सराः ।
स्वर्य्याते नृपतौ भ्राता राज्यं हैसैनखानकः । जग्राहास्तं गते चन्द्रे पूर्व्वाद्रिमिव भास्करः । ४६५
राज्यमाश्रित्य भूपालोदुर्व्विचारदवानलात् । प्रजानिर्व्वापयामास पौरजनीववतोयदः ।
सदा प्रत्यर्थिदानेन लक्ष्मीस्तेन वशीकृता । तदा प्रत्यर्थिदानेन कीर्त्तिर्दूरतरं गता ।
चिक्रीड सह कान्ताभिर्भूपः पीतनवासवः । सुखं तत्सदृशं स्वर्गे स चकार न वासवः ।
तद्गृहे गुणवद्धेव लक्ष्मीरासीदनन्यगा । तां विलोक्य तथाभूतां कीर्त्तिर्भीत्येव साचलत् ।
तदीयगृहमाश्रित्य प्राप्तसर्व्वमनोरथः । याचकोनाभवत् प्रीतोदानेन दायया चकः । ४७०
सततं यस्य पादाब्जमवलम्ब्य समस्तकः । अत्राप परमां लक्ष्मीं लोकः शोकविवर्जितः ।

तस्मिन् रचति कश्मीरदेशं नित्यं विशेषतः। अभूत्पुष्पफलोत्पत्तिपरिपूर्णा वसुन्धरा।
दुर्भिक्षचौरराजभ्योभये तेन निवारिते। अमंस्त स्वर्गमद्भुतं लोकः कश्मीरमण्डलं।
यदा यदा तेन कृतोऽविचारस्त्रासीन्न चौरस्य तदा प्रचारः।
अभून्न दानावसरे विकारस्ततोऽभवत्तस्य यशःप्रकारः।
खानेशमामनामाभून्मन्त्री तस्य महीभृतः। स निर्गते महीपाले चस्कन्द नगरं क्षणात्। १८५
[ येनापराधः कृतस्तस्मातिवेश्मिकान् राजा मुमोष। प्रत्यहं शतशोलोकान् जघान। स्वल्पापराधेऽधिकं दण्डं कृतवान्। एकस्य ग्रामस्यापराधे सति बहूंस्तमान्मुमोष। सुपात्रे किमपि न ददौ कुपात्रेषु समार्पयत्। स्वसेवकं जैतानामानमादिदेश। मत्पुत्रोहन्यतां। स स्नेहवशाद्राजपुत्रं न जघान। ततोराजपुत्रं देलावरखानोजघान लोकास्तत्रसुः। हा पाप राजन् परलोके का गतिस्तव भविष्यति। स्वसुतस्यापि कृपा न जाता। तत्सेवकानपराधरहितान् किमवधीः। ]
तदीयसैन्यमागत्य नाशयामास तत्क्षणं। होसेननृपतिः प्रातरन्धकारमिवांशुमान्।
सुखं बहुविधं तेन कृतं नित्यं महीभृता। संरचना विधानेन प्रजाः सञ्जातविस्मयाः।
विरोधे कृतवुद्धीनां वैरसंसक्तचेतसां। मल्लारखानकादीनां चकर्ष नयनानि सः।
निर्गतानां महीं जेतुं भूपः सम्प्राप पर्व्वते।
एकदा शारिकास्थाने मिलिते सकले जने। वसन्तदिवसे राजा स चकार महोत्सवं।
कुङ्कुमागुरुकर्पूरचन्दनाद्यनुलेपनैः। रराज सकलोलोकोवसन्तदिवसे तदा। १९०
विहितोत्सवदुर्लक्ष्यलक्ष्यभेदाय भूपतिः। निजसेवकलोकाय गजवाजिधनं ददौ।
भूयः श्रीपञ्चमी तत्र दिवसे पृथिवीपतिः। ददर्श मिलितं लोकं ज्येष्ठरुद्राद्यपर्व्वते।
कश्चित् कान्तां प्रतिकृतरसं चमञ्जरी जिघ्रति स्म चौवोऽन्यस्तोहर्षितसमये व्याकुलः कश्चिदासीत्।
पीत्वा कश्चिन्मधु समभवत् पुष्पसम्भूषिताङ्गः श्रीपञ्चम्यामिति कृतसुखोनिर्भवौ सर्व्वलोकः।
वराङ्गनानां नवसुन्दरीणां विलोक्य साचाद्बहुनृत्यगीतं।
ददौ समासाद्य नवीननावं सुवर्णदुर्व्वर्णवासांसि राजा।
अथापस्मारदोषोऽस्य प्रबभूव महीभृतः। कलङ्क इव चन्द्रस्य निर्मलस्य शनैःशनैः। १९५
होसेनशाहभीतांशो ग्रस्तेऽपस्माररातुणा। दुर्व्विचारान्धकारेभ्योजनोभीत्याकुलोऽभवत्।
होसेनपृथिवीपालोराज्यं संस्थाप्य सोदरे। कुतहलादिव स्वर्गं ययौ दानसमर्जितं।
मन्वर्षेष्वतीतेषु नित्यं सुखमयेषु सः। स्वर्गोऽयं कीदृशोऽस्तीति दर्शनार्थं ययाविव।
विमानितापि द्रविणव्ययेन सहैव याता चितिपस्य लक्ष्मीः।
आराधितापि प्रसभं धनेन कीर्त्तिः कथं तिष्ठति लोकमध्ये।
आलेखानाश्रिते राज्ये तुतुषुः सकलाः प्रजाः। उदयाद्रिङ्गते सूर्य्ये प्रातः कमलिनी यथा। २००
कश्मीरदेशमालोक्य सम्यग्भूपालपालितं। निनिन्द सुखितोलोकः स्वर्गं दैत्येन्द्रनाशितं।

विचारे विहिते तेन दुर्जनाविलयं ययुः । उलूकादव पूर्वाद्रिं प्रयाते दिवसेश्वरे।
तस्मिन्नवसरे चौरागुप्ता श्रावन् भयाकुलाः । मध्याह्नकाले सम्प्राप्ते विलमग्ना इवाखवः ।
प्रत्यर्थिभ्योददौ दानं महासमितिसंयुतः । चकार सफलान्नित्यं मार्गणान्निर्गतां सदा
यत्सर्वेषां दयाञ्चक्रे भीतानां धरणीपतिः । अतः संह्लादयाञ्चक्रे प्रजाः सञ्जातकौतुकाः।
अकस्माद्दरुणीभूतं बभूवाथ दिशां मुखं । भाविदुर्भिक्षसंहाररौद्रकालानलोपमं ।
उत्पातलक्षणोपेता चकम्पे च वसुन्धरा । दुर्भिक्षभारोद्वहनादसमर्थेव साभवत् ।
मार्गे मार्गे तदा तस्थुरच्छूनाः शवपङ्क्तयः । दुर्भिक्षकालमध्यस्य यमस्य पटहाइव ।
सुवर्णरजतादीनां नाभूत्तत्र प्रयोजनं । किञ्चपार्थे सुदुष्प्रापं चिन्तारत्नमिवाभवत् ।
काचिच्च खिन्ना भर्त्तारं गृहिणी स्नेहवर्जिता । जघास भोजनं गूढं पुत्त्रे दूरे निवारिते।
बुभुक्षासहिते पुत्त्रे कन्ययापि कृतार्थना । चकार भोजनं नारी प्राणांस्त्यजति भर्त्तरि ।
एकदा बहुभिर्लोकैराजद्वारि मृते गजे । अर्द्धपूर्व्वितया लोभान्मांसं नीतं पृथक् पृथक्।
एकदा कन्दुकारेण हत्वा नापितबालकं । पक्त्वा भक्ष्यप्रसङ्गेन विक्रीतं मानुषामिषं ।
विहाय स्वगृहं लोकाः पुत्त्रदारसमन्वितं । देशान्तरं तदा जग्मुः प्राणत्राणसमुत्सुकाः ।
तस्मिन्नवसरे वायुर्बभूवोत्पाटितद्रुमः । कल्पान्तकालसंहारभीतलोकविचारितः ।
वायुनोत्थापिते धूलिराशौ वलितभास्करे । मध्याह्नसमयः साक्षाद्द्विराचइवाभवत् ।
वायौ चलति चाकस्मात् सदाशिववनोत्थितः । अग्निर्जज्वाल सम्मूर्च्छन्निव मित्रदिदृक्षया ।
वितस्तातीरमुल्लङ्घ्य समुद्रामठसंयुतं । ददाह नगरं सर्व्वं वायुवेगानुगोऽनलः ।
ज्वलन्ती नगरी रेजे वितस्ताजलबिम्बिता । जलान्तर्दत्तझम्पेव दाहनिर्व्वाणहेतवे।
धूमेनोत्पातिता व्योम्नि तारकापिहिता अपि । अनेकाङ्गारकूपेण बभूवुर्द्विगुणाइव ।
धूमेन पिहितास्तारास्तत्र व्योमनि नावभुः । ज्वलन्तं वह्निमालोक्य भयेनेव पलायिताः ।
नववर्षार्जितान् भोगान् भुक्त्वा स धरणीपतिः । दुर्भिक्षपीडाविज्ञप्तिं कर्त्तुमिव ययौ दिवं ।

तस्मिन् प्रयाते त्रिदिवं नरेन्द्रे राज्यं गृहीते च तदीयपुत्त्रे ।
अन्दालयानोऽपि चकार कोपं विलव्यरतस्य महीभृतोऽपि।

यदापि म्रियते भ्राता भ्राता गृह्णाति तत्पदं । इत्थं कुलक्रमोऽस्माकं कथं राज्यं सदृच्छति।
इत्युक्ता प्रहिते दूते सेनान्दालाभिधेन तत् । युद्धं योधिसम्राहस्य सेकन्दरपुरेऽभवत् ।
अन्दालमानकोयुद्धं हत्वा हत्वारिसैनिकं । कृतकृत्येव दिवं ययौ भ्रातृदिदृक्षया ।
योधिभभूपतौ राज्ये गृहीते प्रददौ धनं । प्राकमाः कर्णमान्धात्मुपास्थिमारदवित्र।
अथ सर्व्वमहायोगदुर्व्विरेण चोदितः । मत्त लोमारखानोऽगाद्दूरं युद्धचिकीर्षया ।
मद्रदशाननामामूधीभोभसापचित्रकः । युयुधे सह तेनैव तदा हिदामठान्तिके।
महाभीषरणेरामिभिपामारामूर्च्छिताः । जगर्ज्जुर्दानवास्तत्र ज्वालाशिखराइव।

निःशोभा अभवल्लोकास्तते मह्मूदखानके । अस्तं दिनकरे याते मायं पद्माकरा इव ।
चलन्तः सादिनोऽप्यासन् वितस्ताजलविम्बिताः । विशन्त इव पातालं तत्पराभवशङ्कया ।
मासद्वयस्य सार्द्धस्य भोगान् भुक्त्वा स भूपतिः । जगाम स्वर्गलोकानां मार्गं पर्व्वतदुर्गमं ।
राज्यं मोमारखानेन श्रिते योसोभभूपतिः । चचालोदयति प्रातः सूर्य्ये चन्द्र इवाम्बुगः ।
समस्तपृथिवीपालज्यल्लालदीनभूपतेः । चरणं शरणीकर्त्तुं ययौ योसोभभूपतिः । ३३५
मोमारखानलोकस्य शनैर्व्वैरमजायत । परस्परविमर्दैन वनस्येव दवानलः ।
सपादस्येव मासस्य सुखं हत्वा स भूपतिः । उवास देवतागारे शत्रुलोकाभिरक्षितः ।
मोमारखानं निर्जित्य चक्कहैदरकादयः । राज्ये निवेशयामासुः श्रीमल्लङ्करचक्रकं ।
तस्मिंल्लङ्करभूपाले भूमिं शासति सर्व्वतः । बभूवोपद्रवो नित्यं सिंहेभ्यो ग्रामवासिनां ।
राज्ञो दोषः प्रतिग्रामं गृहद्वारादिनिर्गतः । निहतः स स सिंहेन पिशाचेनेव भक्षता । ३४०
ज्यल्लालदीनभूपालपाददर्शनहर्षितः । आययौ वत्सरे याते श्रीमान् योसोभभूपति ।
श्रीमत्खय्यपुरग्रामं वितस्ताजलदुर्गमं । शिश्रिये स महीपाल उदयाद्रिमिवांशुमान् ।
तदा लङ्करभूपालो निर्ययौ नगरान्तरात् । अनेकलोकसंयुक्तः सिंहोनगमुखादिव ।
ज्ञात्वा खय्यपुरग्रामं वितस्ताजलदुर्गमं । ययौ हैदरचक्कोऽप्यावन्यमार्गेण सत्वरं ।
ज्ञात्वा योसोभभूपालस्तच्छत्रुपुविचेष्टितं । वितस्ताजलमुल्लङ्घ्य युयुधे लङ्करेण स । ३४५
विधाय तुमुलं युद्धं सर्व्वप्राणिभयावहं । मन्त्री लङ्करखानस्य समाराब्दालमेरकः ।
नष्टे लङ्करभूपाले मिलितैर्निजसैनिकैः । अवर्द्धत स भूपालो नदैरिव महार्णवः ।
लङ्करखानो योसोभखानपादमशिश्रियत् । सभ्रातरममुं सोऽपि निर्नेवमकरोत् क्षणात् ।
ज्ञात्वा हैदरचक्कोऽसौ योसोभनृपचेष्टितं । शिश्रिये जाङ्गलं देशं पुनर्युद्धचिकीर्षया ।
युद्धं योसोभभूपालचक्कहैदरयोरभूत् । वनेषु शोणितासारदूरीकृतदवानलं । ३५०
ज्यल्लालदीनभूपस्य ययौ हैदरचक्ककः । सकाशं वसुभिर्हीनो भास्करस्येव चन्द्रमाः ।
शशास चलिते तस्मिन् देशं योसोभभूपतिः । अन्धकारे गते दूरं पद्माकरमिवोष्णगुः ।
ववर्ष वासवः सम्यग्ववौ वायुः सुखावहः । ततापतपनः साधौ तस्मिन् रक्षति मेदिनीं ।
कीर्त्तिर्दूरीकृता तेन चचार वसुधामिमां । दधे हि गुणवद्भ्येव लक्ष्मीरामोदनन्यगा ।

गुणेष्वनल्पेष्वपि तस्य राज्ञः स एव दोषः प्रकटस्तदाभूत् ।

यद्दत्तलास्त्यक्त तेन लक्ष्मीः स्थिरापि कीर्त्तिर्विहिता सुदूरे । ३५५

चन्द्रमागुणिवैरीति प्रसिद्धिं परमो गतः । साम्ययोगः कथं तस्य नृपेण गुणिबन्धुना ।

इभभरवामप्रमुखेषु तेषु रुद्रेषु योसोभमहीधरेण ।

निष्कृष्य चक्षूंषि विशेषरोषात् काश्मीरदेशे विहितो विचारः ।

ज्यल्लालदीनभूपालसेवनार्थं कृतोद्यमः । याकोभराजपुत्रोऽपि प्रहितस्तेन भस्मना ।

उपायनेषु दृष्टेषु याकोभनिहितेष्वपि। कश्मीरविजयोत्कण्ठा सम्बभूव महीभृतः।
ज्यज्ञालदीनभूपेन कश्मीरविजयार्थिना। कृताज्ञा भगवद्दासप्रमुखानां महीभृतां। ६०
तद्विज्ञाय स याकोभस्त्यक्त्वा भूपालसेवनं। प्रत्याययौ स्वकश्मीरदेशं मार्गादलचितः।
पितरं स्वं समागत्य याकोभोऽवदद्व्यथः। भगवन् भगवद्दासः प्रहितस्तेन भूभृता।
महतोऽप्यसमर्थस्य महत्त्वं याति निष्फलं। पर्व्वतसदृशाकारं कुञ्जरं हन्ति केशरी।
इति निश्चित्य सर्व्वे ते निर्गमाय जयार्थिनः। आज्ञां विदधिरे सर्व्वपर्व्वतीयदरार्पणात्।
विनिर्गते महीपाले सज्जीभूतेऽथ सैनिके। वैजयन्त्यस्तदा रेजुर्व्योमनीकृतभूरुहा.। ६५
वराहतीर्थमाश्रित्य तस्थौ योसोभभूपतिः। तदीयमन्त्रिणोऽप्यग्रे ययुर्युद्धचिकीर्षया।
उवाच सचिवान् भूपो न युद्धं कर्त्तुमर्हथ। ज्यज्ञालदीनपादाब्जं सेवनायाश्रया महे।
कथं महत्तरं जेतुं शक्तिर्नीचस्य जायते। न समीरस्य वेगोऽस्ति पर्व्वतान्मूलने क्षमः।
श्रुत्वेति सचिवा. सर्व्वे तमूचुः पृथिवीपतिं। कथमेतादृशी बुद्धिर्भवतामपि जायते।
अकृतगुरुसहायः सिद्धिं न गच्छति साधकोऽव्रजति न सुखं रोगी वैद्यप्रयोगवियोगितः।
अगणितमहायन्ता दन्ती न विन्दति चातुरी सचिववचनद्वेषी राजा न याति सुवैभवं। ७०
निशम्येति स भूपालः सचिवांस्तानवोचत। दृष्टं सैन्यं न युष्माभिर्ज्यज्ञालदीनभूपतेः।
प्राचीमेव शचीपतिः स भजते श्रीदक्षिणाशां यमः पानीयाधिपतिश्च पश्चिमदिशं वित्तेश एवोत्तरां।
एते केवलदिक्पतित्वविभवस्पर्द्धां कथं कुर्व्वते जीयात् सर्व्वदिगीश्वरो नरपतिर्ज्यज्ञालदीनाभिधः।
नास्येव समः कश्चिद्दाता भूत्वा भविष्यति। दानं समर्पितं येन पण्डितेष्वपि वैरिषु।
कर्णः सुवर्णदानेन भूमिदानेन वा बलि.। समस्तवस्तुदानेन यशः प्राप्नोति भूपतिः।
वित्ती चेन्नरवाहनो भवति तत्कार्पण्यमुच्चावचं चन्द्रश्चेत् खलु निर्मलः प्रतिदिनं दोषः कलङ्काभिधः।
तेजस्वी यदि वह्निरुद्धततमोधूमः सदा दूषकोऽराज्ञा दानयशःप्रतापनिकरैरेतेऽमुनाधः कृता.।
इत्थं ज्यज्ञालदीनस्य सेवाहेवाकतत्परे। योसोभनृपतौ सम्यक् सचिवाइदमब्रुवन्। ७५
प्रभुपादस्पृहा यस्य जीवितं तस्य निष्फलं। स एव पुरुषो धन्यो योऽद्वेष्टि रिपुणा सह।
भवन्तः सन्तु दूरस्थाः कुर्म्मस्तत्कार्य्यनिर्णयं। जाङ्गलं देशमाश्रित्य थोत्स्यामः प्रत्यहं वयं।
सहस्रकिरणोऽरविर्जगति समतापोऽज्ज्वलोगुहान्तरगतं तमो हरति नो यथा जातुचित्।
तथा नरपतिः क्षमो भवति चक्रवर्त्ती कथं विनाशयितुमुद्धतो विहितशाङ्गलासादनं।
इत्थं निशम्य भूपालः सचिवोदीरितं वचः। निर्व्वापयन्निवोवाच वचनामृतशीकरैः.।
भयं त्यजत मद्वाक्यमनुपालयताधुना। अहं ज्यज्ञालदीनस्य पदाश्यामि पदाम्बुजं। ८०
अलङ्कारभूतोऽस्ति योभूपतीनामलङ्कामदेवेन रूपे यदीये।
अहं कामतोऽस्मि ज्यज्ञालदीनमहराज्रपोऽस्ति चित्ते मदीये।
करिष्यामः कथं वैरं श्रीचक्रवर्त्तिना समं। मयैव सेवा कर्त्तव्या सुखं देशे भविष्यति।

